श्रीगणेशायनमः सीतारामंनमस्कृत्यरामाश्रमनिबंधनः व्याख्यामसरकोशस्यकुर्वेमंदमतीप्सिताम् १ ग्रंथसमाप्तिग्रंथप्रचारादिप्रतिबंधकदुरितप्रशमनायउपास्य देवतासेवारूपंमंगलमाचरन् शिष्यशिक्षायैग्रंथादौनिबध्नाति अस्यश्लोकस्यविवरणंटिप्पणीकारैःप्रचुरंकृतंतथापिकिंचित्कुर्वे यस्येति भोधीराः अनघाः धियंराति ददति धीरोज्ञानप्रदोगुरुरित्युक्तत्वात् नअघंपापंयेषांते कृतिनएवतंसेवितुंप्रभवंतीत्यर्थः यस्यरामचंद्रस्य अनघाः नअघंयेभ्यस्तेपापनिवर्तकाइत्यर्थः गुणाः सत्यशौच दयाक्षांत्यादयःसंति एतादृशः सः अक्षयः नविद्यतेक्षयोयस्य अनेननिर्गुणत्वंबोध्यते श्रियेधर्मअर्थकामसंपत्त्यै अमृताय मोक्षायच सेव्यतां भवद्भिरितिशेषः॥ कीदृशस्य अगाधस्य नगाधस्तलस्पर्शोयस्य अतिगंभीरस्याविषयानाकृष्टस्येतियावत् इत्याद्यूह्यं पुनः कीदृशस्य ज्ञानदयासिंधोः ज्ञायतेऽनेनेतिज्ञानं शास्त्रं दया

श्रीसीतारामचंद्राभ्यांनमः यस्यज्ञानदयासिंधोरगाधस्यानघागुणाः॥सेव्यतामक्षयोधीराःसश्रियेचामृतायच १ समाहृत्यान्यतंत्रा णिसंक्षिप्तैःप्रतिसंस्कृतैः॥संपूर्णमुच्यतेवर्गैर्नामलिंगानुशासनं २

निष्कारणपरदुःखप्रहरणेच्छातयोःसिंधुरिव अनेनशास्त्रसंपन्नत्वंदयापूर्णत्वंचबो ध्यते १ मूलग्रंथस्यप्रयोजनंदर्शयति समाहृत्येति मयासंपूर्णंनामलिंगानुशासनमुच्यतेइतिखंडान्वयः किंकृत्वा अन्यतंत्राणिसमाहृत्य अन्येषांतंत्राणिसिद्धांतान् तंत्रंप्रधानेसिद्धांतेइत्यत्रैववक्ष्यमाणत्वात्तान्संगृह्येत्यर्थः संपूर्णमित्यस्यन्यूनत्वदोषरहितमित्यर्थः पुनः कीदृशं वर्गैर्युक्तंप्रकरणैरित्यर्थः संक्षिप्तैः अल्पैः पुनःप्रति संस्कृतैः तंत्रोक्तशब्दतुल्यसंस्कृतैरित्यर्थः नामलिंगानुशासनमित्यस्यनामानिचलिंगानिचनमंति आख्यातार्थंप्रतिइतियोगेनसत्त्ववंतःशब्दाः लिंगइत्यस्यस्त्रीपुंनपुंस कानिअनुशिष्यंतेविविच्यबोध्यंतेस्मिन् अनेनवैनिशब्देंदुशेखरकृतशब्दानुशासनयोगरीत्यार्थोबोध्यः करणाधिकरणयोश्चेतिल्युटाग्रंथइत्यर्थः उच्यते कथ्यते २

लिंगज्ञानोपायंदर्शयति प्रायशइति प्रायशोबाहुल्येन रूपस्यभेदः रूपभेदः तेन यथा रमा इंदिरा पिनाकोजगवंपिनाकस्यपुंस्त्वं अजगवंक्लीबं धनुरित्यस्यपूर्वाज गवसाहचर्यात् नपुंस्त्वं तद्विशेषविधेः क्वचित् तद्विशेषः लिंगबोधकशब्दः तस्योपादानात्विधेः यथा भेरी स्त्री दुंदुभिः पुमान् तेनभेरीतिङ्न्तंतोन शेषिः शो- चिकभेक्लीबे क्वचिद्विशेषणेन यथा कपालोतत्परोहनुः हनोः पुंस्त्वं ३ अमरकोशे अनुक्तानांभिन्नलिंगानांभेदकथनायद्वंद्वः एकशेषश्चनकृतः अतएवदेवतादे वतामरइतिनकृतं एतदुदाहरणं देवता दैवतानि तत्रदेवतास्त्रियां देवतानिवापुंसि एतेषांअमरपदेनसाकं द्वंद्वेसति अमरपदगतमेवलिंगंस्यात् एकशेषेपिस्वरूपबो

प्रायशोरूपभेदेनसाहचर्याच्चकुत्रचित् ॥ स्त्रीपुंनपुंसकंज्ञेयंतद्विशेषविधेःक्वचित् ३
भेदाख्यानायनद्वंद्वोनैकशेषोनसंकरः ॥ कृतोऽत्रभिन्नलिंगानामनुक्तानांक्रमादृते ४

धोनस्यात् अभिन्नलिंगानांतुनोक्तौ त्रिदिवत्रिदशालयाइति पादारश्म्यंघ्रितुर्यांशाइत्यत्रपादशब्देएकशेषः स्थलांतरेउक्तानांभिन्नलिंगानांतुनोक्तौ यथा वि- द्याधरास्परोयक्षेतिमातापितरौ तथा संकरोपिनकृतः संकरोनामभिन्नभिन्नलिंगानांमिश्रता यथा स्तवइतिपुल्लिंगमप स्तोत्रंक्लीबंपठितं अग्रेचस्तुत्यादिस्त्री लिंगम् नतुस्तुतिस्तोत्रमित्यादि एवंजनुर्जननेनेत्यादिकंज्ञेयं तादृशानांक्रमंविनापाठोनकृतइतिदिक् ४ ५ ५ ५

लिंगत्रयबोधनार्थंत्रिष्विति पदंदत्तं तत्रंत्रिषु अधिकलिंगस्याभावात् न्यायसिद्धमिदं मिथुनंस्त्रीपुंसौ तत्रद्वयोरिति यथा अशनिर्द्वयोः द्विशब्दोप्युपलक्षणं अतएवाहिहली
नंप्रसवेसर्वं ह्रयहीनेक्रकुंदरेइतिसंगच्छते यन्निषिद्धंलिंगंतत्शेषलिंगकंज्ञेयं यथा वज्रमस्त्रीस्यादिति न्यायसिद्धंचेत्तत् विशेषनिषधेशेषाभ्यनुज्ञानात् तुअंतेथस्यत्वंनं
अथआदिर्यस्याथादि स्वंतंचअथादिनामपदंलिंगपदंसर्वनामपदंअव्ययपदंचपूर्वान्वयिनभवति नगरीत्वमरावती जवोथशीघ्रंपुंसित्वं तर्दूः शस्तंचाथत्रिषुद्रव्येइति
लिंगपदं तस्यतुप्रियेति शिट्पदंवातुपुंसि अथशब्दोअथोशब्दस्याप्युपलक्षणं अएवअनुक्रोशोप्यथोहसः इत्यादिसिद्धमिति ५ स्वः अव्ययं स्वरादित्वात् स्व
र्यंते स्तूयतेवा स्वशब्दोपतापयोः स्वरतिशब्दायतइतिवा स्वरति अभारथाउपतापयति इतिसिद्धांतः अव्ययोस्त्रीशब्दभेदनाशिष्याणिनिर्व्ययेत्रिषु आदौसंगलार्थंपाठ

त्रिलिंग्यांत्रिष्वितिपदंमिथुनेतुद्वयोरिति ॥ निषिद्धलिंगंशेषार्थंत्वंतार्थादनपूर्वभाक् ५ स्वरव्ययंस्वर्गनाकत्रिदिवत्रिदशालयाः ॥ सुर
लोकोद्योदिवौद्वेस्त्रियांक्लीबेत्रिविष्टपम् ६ स्वर्गः सुष्ठुअर्ज्यतेस्वर्गः अर्जअर्जने कर्माणिघञ् अर्ज्यतेऽस्मिन्निति वा ॥ नाकः नकंसुखंअकंदुःखंनत
नविद्यतेयस्मिन्नाकः प्रकृतिभावान्नलोपोन नाकस्त्रिदिवेंबरे ॥ त्रिदिवः त्रयः ब्रह्माविष्णुशिवाः दिव्यंतेऽत्रेतित्रिदिवः हलश्चेतिघञ् स्वर्गोपित्रिदिवंनद्यामिनिस दिनो
॥ त्रिदशालयः त्रिदशानांदेवानामालयः द्वंद्वसमासः ॥ सुरलोकः सुराणांलोकः ॥ द्योशब्दस्यद्यौः द्योतंतेऽस्यामितिद्यौः गोशब्दवत् गोतोणित् वृद्धिः द्यावौ द्यावः द्या
वं द्यावौ द्युः द्यावा द्योभ्यां द्योभिरिति द्यौरव्ययमेकः ॥ द्यौदिवऔत् दिवौ दिवः द्वेस्त्रियां ॥ त्रिविष्टपं क्लीबे द्यौःस्त्रीस्वर्गेचगगनेदिवंक्लीबंतयोःस्मृतं मंदिरःसौरभःवाकभव
नंस्वंदिवंनभइतित्रिकांडशेषात् त्रिविष्टपं विशंतिसुकृतिनोयस्मिन्निति विष्टपं विशेःकपन् तृतीयंविष्टपंत्रिविष्टपं अयंपुंस्यपि तथाचामरमाला पिष्टपोविष्टपोप्यस्त्री
भुवनंचत्रपंसुकृमिति इतिनवस्वर्गनामानि ६

अमराः नम्रियंते मृङ्प्राणत्यागे पचाद्यच् अमरस्त्रिदशेप्यस्तिसंहारेकुलिशेद्रुमे स्त्रीगुडूच्यमरावत्योः स्थूणादूर्वाजरायुषु॥ निर्जराः जरायाः निष्क्रांताः निर्जरः—
स्यात्पुमान् देवे जरात्यक्तेचवाच्यवत निर्जरातुगुडूच्यांचनालपर्ण्यामपिस्त्रियाम्॥ देवाः दिव्यंतीतिदेवाः पचाद्यच् देवःसुरेघनेराज्ञिदेवमाख्यातमिंद्रिये देवी
कृताभिषेकायांतेजनीस्पृक्कयोरपीतिउ०॥ त्रिदशाः तृतीयायौवनाख्यादशासदायेषां श्रीन्तापान्दशंतिवा दंशदशने॥ विबुधाः विशिष्टोबुधोयेषांते विशेषे
णबुध्यंतेवा बुधअवगमनेइगुपधेतिकः॥ सुराः सुरंति षुरप्रसवैश्वर्ययोः दीप्तौन यद्वा सुराअस्तियेषांते यद्वा शोभनंराजंते राजृदीप्तौ अन्येभ्योपिदृश्यतइतिडः सु
रान्वकुषमद्ययोः पुल्लिंगस्त्रिदिवेशेस्यात्॥ सुपर्वाणः सुष्ठुपर्वअमावास्यादि चरितमंगुल्यादि पर्वउत्सवोयेषांवा सुपर्वानाशरेवंशेपर्वधूमसुरेपिच॥ सुमनसः शोभ

अमरानिर्जरादेवास्त्रिदशाविबुधाःसुराः॥ सुपर्वाणःसुमनसस्त्रिदिवेशादिवौकसः ७ आदितेयादिविषदोलेखाअदितिनंदनाः॥ आदि
त्याऋभवोस्वप्नाअमर्त्याअमृतान्धसः ८

नंमनोयेषांते सुमनाःपुष्पमालत्योः स्त्रियांनाधीरदेवयोः॥ त्रिदिवेशाः त्रिदिवस्यईशाः॥ दिवौकसः दिवमो
कोयेषांते दिवशब्दोअदंतः॥ मंदिरःसैरिभःशक्रभवनंस्वर्दिवंनभइतित्रिकांडशेषात् द्यौः ओकोयेषांतेइतिविग्रहेदिवौकसोपि स्याद्दिवोकादिवौकाश्चदेवेचापीह
पक्षिणीइतिरंतिदेवात् दिवोकाश्चदिवौकाश्चपुंसिदेवेचचातके ७ आदितेयाः आदित्याःअपत्यानि स्त्रीभ्योढक्॥ दिविषदः दिविसीदंति वर्तंते षद्लृ विशरणग
त्यवसानेषु सुपामादिषुचेतिषत्वं द्युसदोपि तदुक्तंमाघे मनःसुयेनद्युसदान्यधीयते॥ लेखाः लेख्यंते चित्रादौ लिखअक्षरविन्यासे अकर्तरिघञ् ग्रीवाहस्त
पादेषुतिस्रोरेखाः संत्येषामितिवा लेखालेख्योसुरेलेखालिपिराजिकयोर्मता॥ अदितिनंदनाः अदितेःनंदनाः॥ आदित्याः अदितेरपत्यानि ण्यप्रत्ययः आदित्यो

भास्करेदेवे ऋभवः ऋशब्दवाच्यःस्वर्गः अदितिर्वा स्वरादित्वादव्ययं तत्रभवंति॥ अस्वप्नाः अविद्यमानः स्वप्नोयेषां॥ अमर्त्याः म्रियंतेत्रेतिमर्त्यः स्वार्थेयत् भूर्लोकः नमर्त्याः अमर्त्याः॥ अमृतंअंधोन्नंयेषांते सांतःशब्दः ८ बर्हिर्मुखाः बर्हिरग्निर्मुखंयेषांते॥ ऋतुभुजः ऋतून्ऋतुषुवाभुजंते क्विप्प्रत्ययांतं॥ गीर्वाणा गीर्बाणाइत्यपि गिरंवन्वंते स्तवप्रियत्वात् वनुयाचने कर्मण्यण् गीरेवनिग्रहानुग्रहसमर्थोबाणोःस्त्रंयेषांते॥ दानवारयः दानवानामरयः॥ वृंदारकाः प्रशस्तंवृंदंयेषां शृंगवृंदाभ्यामारकन्॥ दैवतानि पुंसिवादैवताः देवता स्त्रियां इतिदेवानांनामानिषड्विंशति ९ आदित्यादयः प्रत्येकंगणदेवताः समुदायचारिण्योदेवताः आदित्याद्वादशप्रोक्ताविश्वेदेवादशस्मृताः वसवश्चाष्टसंख्याताः षट्त्रिंशत्तुषितामताः १ आभास्वराश्चतुःषष्टिर्वाताः पंचाशदूनकाः महारा

बर्हिर्मुखाः ऋतुभुजोगीर्वाणादानवारयः॥ वृंदारकादैवतानिपुंसिवादेवतास्त्रियां॥
९ आदित्यविश्ववसवस्तुषिताभास्वरानिलाः॥ महाराजिकसाध्याश्चरुद्राश्चगणदेवताः १०

जिकनामानोद्वेशतेविंशतिस्तथा २ साध्याद्वादशविख्यातारुद्राएकादशस्मृताः विश्वेसर्वनामसंज्ञोयं विश्वः विश्वो विश्वे विशंतिकर्मस्विति विश्वे विशप्रवेशने औणादिकः क्वन्॥ वसवः वसंतीतिवसवः वसनिवासेउप्रत्ययः॥ तुषिताः तुष्यंति तुषतुष्टौ कितच् आभास्वराः आसमंताद्भासनशीलाः भासृदीप्तौ स्थेशभासेतिवरच् अनिलः अनंत्यनेन अनप्राणधारणे इलच् अनिलोनसृवातयोः॥ महाराजिकाः महतीराजिः पंक्तिर्येषांते यद्वा महाराजोदेवतायेषां महाराजेतिठञ्॥ साध्याः साध्यंसिद्धिः साधसंसिद्धौ ण्यत् सास्तियेषां मत्वर्थेच् साध्योयोगांतरेस्मृते गणदेवविशेषेचसाधनीयेचवाच्यवत्॥ रुद्राः रोदयंत्यसुरान् रुदिर्अश्रुविमोचने सेदेर्णिलुक्

विद्याधराः विद्यायाधुटिकांजनादिविषयिण्याधराः धारकाः पचाद्यच् ॥ अप्सरसः अद्भ्यः सरंति सृगतौ असुन् ॥ यक्षः यक्ष्यते पूज्यते यक्षपूजायां कर्मणिघञ् यक्षोगु ह्यकमात्रेचगुह्यकाधीश्वरेपिच ॥ रक्षांसि रक्षंत्येभ्योरक्षांसि रक्षपालने असुन् ॥ गंधर्वाः गंधंसौरभमर्वंतीतिगंधर्वाः अर्वगतौ कर्मण्यण् शकंध्वादिः ॥ किंनराः कु त्सिताः नराः ॥ पिशाचः पिशितमश्नाति पृषोदरादिः अशभोजने ॥ गुह्यकः गुहंति निधिंरक्षंति गुहसंवरणे निधिंरक्षंतियेयक्षास्तेस्युर्गुह्यकसंज्ञकाइति यद्वा गुह्यंकु त्सितंकायति कैशब्दे आतइतिकः यद्वा गुह्यं गोपनीयंकंसुखंयेषामितिवा ॥ सिद्धः सिद्धिरस्यास्तीति मत्वर्थेच् ॥ भूतः भवति इष्टंप्राप्नोति भूप्राप्तौ अमी विद्याधराद यः दश देवयोनयः देवायोनिर्येषांतेदेवयोनयः देवांशकाइत्यर्थः ११ असुराः अस्यंति क्षिपंतिदेवान् असुराः असुक्षेपणे असेरुरन् आसुराइत्यपिपाठः भज्ञाद्यण् अ

विद्याधराप्सरोयक्षरक्षोगंधर्वकिंनराः ॥ पिशाचोगुह्यकःसिद्धोभूतोमीदेवयोनयः ११ असुरादैत्यदैतेयदनुजेंद्रारिदानवाः ॥ शुक्रशि ष्यादितिसुताः पूर्वदेवाःसुरद्विषः १२ सर्वज्ञःसुगतोबुद्धोधर्मराजस्तथागतः ॥ समंतभद्रोभगवान्मारजिल्लोकजिज्जिनः १३

सुबुरमंतेवा ॥ दैत्याः दितेरपत्यानि ण्यः ॥ दैतेयाः पूर्ववत् ॥ दनुजाः दनोर्दनौवाजाताः ॥ इंद्रारयः इंद्रस्य अरयः ॥ दानवाः दनोरपत्यानि अण् ॥ शुक्रशिष्याः शुक्रस्यशि ष्याः ॥ दितिसुताः दितेः सुताः ॥ पूर्वदेवाः पूर्वंचतेदेवाश्च यद्वा पूर्वदेवाः अन्यायाद्भ्रष्टाः पूर्वदेवायेभ्योवा ॥ सुरद्विषः सुरान्द्विषंति द्विषअप्रीतौ सत्सूद्विषेतिक्विप् इत्यसु रनामदशकं १२ सर्वज्ञः सर्वंजानाति ज्ञाअवबोधने कप्रत्ययः ॥ सुगतः शोभनंगतंज्ञानमस्य ॥ बुद्धः प्रशस्ताबुद्धिरस्य यद्वा बुध्यते भतिबुध्यतीतिक्तः ॥ धर्मराजः धर्मे णराजते धर्मस्यराजेतिवा टच् ॥ तथागतः तथासत्यंगतंज्ञानंयस्य ॥ समंतभद्रः समंतंभद्रमस्यसः ॥ भगवान् भगंमहात्म्यमस्यास्ति ॥ मारजित् मारंकामंजयतीति क्विप्तुक् ॥ लोकजित् लोकंजयतीति ॥ जिनः जयतीतिजिनः जिजयेनक्प्रत्ययः १३

षडभिज्ञः षट् अभिनः ज्ञायमानानियस्यसः षट्दिव्यं चक्षुः श्रोत्रं परिचित्तज्ञानं पूर्वनिवासानुस्मृतिः आत्मज्ञानं वियद्गमनं कायव्यूहादिसिद्धिश्चेति षड्वा षड्रूपदान शीलक्षांतिवीर्यध्यानप्रज्ञाख्या अभिज्ञा आद्यज्ञानमस्येति॥ दशबलः दशबलानियस्य यदाहुः दानंशीलंक्षमावीर्यंध्यानप्रज्ञाबलानिच उपायः प्रणिधिर्ज्ञानंदशबुद्ध बलानिच॥ अद्वयवादी अद्वयंअद्वैतंवदत्यवश्यं आवश्यकेणिनिः॥ विनायकः विनयति अनुशास्ति नीञ्प्रापणे ण्वुल्दृद्धिः आय्॥ मुनींद्रः मुनिषुइंद्रः॥ श्रीघनः श्रियाघनःपूर्णः क्ष्मादिषुपाठान्नणत्वं॥ शास्ता शास्तीति शासेस्तृन्तृच्वा॥ मुनिः मन्यते अष्टादशबुद्धस्य १४ शाक्यमुनिस्तु शाकवृक्षप्रतिच्छन्नंवासोय- स्माच्चचक्रिरे तस्मादिक्ष्वाकुवंशास्तेशाक्याइतिभुविस्मृताः शाकेभवाःशाक्याः दिगादिभ्योयत् तद्वंशावतीर्णोमुनिः शाक्यश्चासौमुनिश्च शाक्यसिंहः शाक्यःसिंह

**षडभिज्ञोदशबलोद्वयवादीविनायकः॥ मुनींद्रःश्रीघनःशास्तामुनिःशाक्यमुनिस्तुयः १४ सशाक्यसिंहःसर्वार्थसिद्धःशौद्धोदनिश्चसः॥ गौतमश्चार्कबंधुश्चमायादेवीसुतश्चसः १५ ब्रह्मात्मभूःसुरज्येष्ठः परमेष्ठीपितामहः॥**

इव उपमितमितिसमासः॥ सर्वार्थसिद्धः सर्वार्थेषुसिद्धःनिष्पन्नः सर्वार्थःसिद्धोस्येतिवा सिद्धार्थोपिपर्यायः सिद्धार्थोबुद्धसर्षपावितिशाश्वतः॥ शौद्धोदनिः शुद्धोदनस्यापत्यं अतइञ्॥ गौतमः गौतमस्यअयंशिष्यः तस्येदमि त्यण्॥ अर्कबंधुः अर्कस्यबंधुः सूर्यवंशजत्वात्॥ मायादेवीसुतः मायाचासौदेवीचतस्याःसुतः मायाशब्दस्यभाषितपुंस्कत्वाभावान्नपुंवत्वं इतिबुद्धावांतरभेदस्य शाक्यमुनेर्नामसप्तकं १५ ब्रह्मा बृंहति वर्धयतिप्रजाइतिब्रह्मा बृहिर्वृद्धौ बृंहतिवर्धतेवा मनिन् प्रत्ययेनस्यादादेशः॥ आत्मभूः अत्मनः विष्णोःसकाशात् आत्म नास्वयमेववा भवतिक्विप्॥ सुरज्येष्ठः सुरेषुज्येष्ठः॥ परमेष्ठी परमेव्योम्निचिदाकाशेब्रह्मपदेवातिष्ठति किदीतिइनिः परमेरूढः तत्पुरुषेकृतिबहुलमित्यलुक्॥ पिता महः लोकपितॄणांमरीच्यादीनांवापितामहः पितृशब्दाड्डामहच्॥

हिरण्यगर्भः हिरण्यंहिरण्मयंअंडंतस्य गर्भइव तदंडमभवद्धैमंसहस्रांशुसमप्रभमितिमनूक्तेः यद्वा हिरण्यंगर्भेयस्य॥ लोकेशः लोकानामीशः॥ स्वयंभूः स्वयमेव भव
तीति भुवः संज्ञांतरयोरितिक्किप्॥ चतुराननः चत्वारिआननानियस्य १६ धाता दधाति डुधाञ्धारणपोषणयोः ण्वुल् तृचावितितृच्॥ अब्जयोनिः अब्जंयोनिर्यस्य
॥ द्रुहिणः द्रुह्यति दुष्टेभ्यः द्रुहिजिघांसायां बाहुलकादिनन् द्रुघणोपि ब्रह्मात्मभूः स्याद्द्रुहिणः द्रुघणश्चपितामहइति भागुरेः॥ द्रुघणः द्रुःसंसारवृक्षः हन्यतेऽनेनेत्यर्थः
द्रुउपपदेहंतेरप् प्रकृतेर्घनादेशः पूर्वपदात्संज्ञायामितिणत्वं॥ विरिंचिः विरचयतीतिविरिंचिः रचयप्रयत्ने पृषोदरादिः विरिंचोपिपाठः विरिंचोद्रुघणःशिंजोविरिंचिर्द्रुहिणोमन
इतिशब्दार्णवात्॥ कमलासनः कमलंआसनंयस्य॥ स्रष्टा सृजतीति सृजविसर्गे तृच् अमागमः॥ प्रजापतिः प्रजानांपतिः प्रजापतिर्नादक्षादौमहीपालेविधातरि॥ वे

हिरण्यगर्भोलोकेशः स्वयंभूश्चतुराननः १६ धाताब्जयोनिर्द्रुहिणोविरिंचिः कमलासनः॥ स्रष्टाप्रजापतिर्वेधाविधाताविश्वसृड्विधिः १७ वि
ष्णुर्नारायणः कृष्णोवैकुंठोविष्टरश्रवाः॥

धा विधात्रोवेधश्चेति असिप्रत्ययेवेधादेशेसाधुः विदधाति॥ विधाता विशेषेणविदधाति दधाते स्तृच्॥ विश्वसृट् वि
श्वंसृजति क्किप्॥ विधिः विधत्तेइति उपसर्गेघोः किः विंशतिर्ब्रह्मणः १७ विष्णुः विवेष्टि विष्लृव्याप्तौ विषेःकिच्चेतिनुः॥ नारायणः नरायणोपि नराणांसमूहोनारं नरस्यस
मूहइत्यण् तदयनंयस्य नराःअयनंयस्येतिविग्रहेनरायणोपि अयनारायणोविष्णुरूर्ध्वकर्मानरायणइतिशब्दार्णवः वसूर्नरायणपुनर्वसूविश्वरूपाइतिभिकांडशेषात्
नरस्यापत्यंवा नराज्जातानाराः शैषिकोण् आपः तत्ततानिवा अयनं नारमयनेजानानिवा अयनिप्रवर्तयतिवा अयगतौ ल्युट्॥ कृष्णः कृष्णोवर्णोस्यास्तीति मत्वर्थेच्
कर्षतिअरीनितिवा बाहुलकान्नक्॥ वैकुंठः विकुंठायाअपत्यंवा विगताकुंठानाशोस्येतिवा विकुंठंज्ञानंरुठानंवा यद्वा विकुंठानांजीवानांअयंवैकुंठः तस्येदमित्यण् नि

यंताज्ञानदोवा॥ विष्टरश्रवाः विष्टरेश्रूयते असुन् विष्टरः वृक्षः पलाशः॥विष्टरः स्थिरइतित्रिकांडशेषः वृक्षश्चात्राश्वत्थः यद्वा विष्टरोदर्भमुष्टिरिवश्रवसीकर्णावस्येति वा॥ दामोदरः दामउदरेयस्येति॥हृषीकेशः हृषीकाणामिंद्रियाणामीशः॥ केशवः कश्चईशश्चकेशौ पुत्रपौत्रोक्तः केशा ह्यन्यतरस्यां यस्यकेशौवातीति वा गतौ आतइतिकः शंभोः पितामहोब्रह्मापिनाशक्राद्यधीश्वरइतिपाद्मोक्तेः॥ माधवः मायाः लक्ष्म्याः धवः यद्वा मधोरपत्यं अण् तद्वंशत्वात्॥ स्वभूः स्वतः भवतीति क्विप् १८ दैत्यारिः दैत्यानां अरिः॥ पुंडरीकाक्षः पुंडरीकमिव अक्षिणीयस्यसः समासांतः षच्॥ गोविंदः गां भुवं स्वर्गं धेनुंवा वेदंवा अविदत् वराहरूपेणोद्धारात्गामविदत् कामधेनोश्चऐश्वर्यप्राप्तेः इंद्रेणस्वर्गस्यनिवेदनात् मत्स्यादिरूपेणवेदहरणात्॥ गरुडध्वजः गरुडः ध्वजः चिन्हमस्येति॥ पीतांबरः पीतं

दामोदरोहृषीकेशः केशवोमाधवः स्वभूः १८ दैत्यारिः पुंडरीकाक्षोगोविंदोगरुडध्वजः॥ पीतांबरोऽच्युतः शार्ङ्गीविष्वक्सेनोजनार्दनः १९ उपेंद्र इंद्रावरजश्चक्रपाणिश्चतुर्भुजः॥ पद्मनाभोमधुरिपु

अंबरंयस्य॥ अच्युतः नास्तिच्युतंस्खलनंस्वपदाद्यस्य च्युङ्गतौ॥ शार्ङ्गी शृंगस्यविकारः शार्ङ्गं धनुःयस्यास्ति अतइनिः॥ विष्वक्सेनः विषुनानाअंचति विषूची सेनायस्य विष्वक्विश्वक्स्मृतौविज्ञैर्विषुवंविशवंतथा इतिद्विरूपकोशात् विष्वक्सेनाफल्गिन्यांस्याद्विष्वक्सेनोजनार्दने॥ जनार्दनः जननंजनः जनःजन्मतत् अर्दतिजनार्दनः नद्यादिः जनाःसमुद्रस्थदैत्यभेदाः तेषांअर्दनइतिवा १९ उपेंद्रः इंद्रमुपगतः अनुजत्वात्॥ इंद्रावरजः इंद्रस्यअवरंजातः जनेर्डः॥ चक्रपाणिः चक्रंपाणौयस्य प्रहरणार्थेइतिसप्तम्याः परनिपातः॥ चतुर्भुजः चत्वारः भुजाः यस्य यद्वा भुंक्तेभुनक्तिवा भुजः इगुपधेतिकः चतुर्णांधर्मार्थकाममोक्षाणांभुजः॥ पद्मनाभः पद्मंनाभौयस्य योगविभागादच्॥ मधुरिपुः मधोरसुरस्यरिपुः॥

वासुदेवः वसुदेवस्यापत्यं ऋष्यंधकेत्यण् यद्वा वसतीनिवासः वासश्चासौदेवश्च सर्वत्रासौसमस्तंचवसत्यत्रेतिवैयनः ततोसौवासुदेवेतिविद्वद्भिःपरिगीयतइतिविष्णुपु
राणात् यद्वा वसुदेवेशकद्वांतःकरणेदिव्यतेप्रकाशतेइति शेषेइत्यण् ॥ त्रिविक्रमः त्रिषुलोकेषुगुणेषुवाविक्रमोयस्य त्रयोवाविक्रमाःपादन्यासाःयस्य २० देवकीनंदनः
देवक्याः नंदनः॥ शौरिः शूरस्यापत्यं वंशजत्वात् गणेगाढादणंबाधित्वाइञ् सौरिरपि ॥ श्रीपतिः श्रियःपतिः॥ पुरुषोत्तमः पुरुषेषुउत्तमः पुरुषेभ्योवाउत्तमः उत्तमश्चा
सौपुरुषश्चेतितत्वं॥ वनमाली आपादपद्मंयामालावनमालेतिसामनेतिकल्लिंगः सास्यास्तीति मत्वर्थेणिनिः वनंमलितुंशीलमस्येतिवा मलधारणेणिनिः॥ बलिध्वंसी
बलिमसुरंध्वंसितुंशीलमस्य बलिनापूजादिनाअविद्यांध्वंसितुंशीलमस्येतिवा॥ कंसारातिः कंसस्यारातिः॥ अधोक्षजः अधःकृतंअक्षजंऐंद्रियकंज्ञानंयेन यद्वा अधो

वासुदेवस्त्रिविक्रमः २० देवकीनंदनःशौरिःश्रीपतिःपुरुषोत्तमः॥ वनमालीबलिध्वंसीकंसारातिरधोक्षजः २१ विश्वंभरः कैटभजिद्विधुः
श्रीवत्सलांछनः॥ पुराणपुरुषोयज्ञपुरुषोनरकांतकः २२ जलशायीविश्वरूपोमुकुंदोमुरमर्दनः॥ वसुदेवोऽस्यजनकः सएवानकदुंदुभिः

क्षाणांजितेंद्रियाणांजायते प्रत्यक्षोभवति अधोक्षजंज्ञानमस्येति २१ विश्वंभरः विश्वंबिभर्ति संज्ञायांभृइतिखच् विश्वंभरोऽच्युतेशक्रे पुंसिविश्वंभराभुवि॥ कैट २३
भजित् कैटभमजैषीत् सत्सूद्विषेतिक्विप्॥ विधुः विध्यत्यसुरान् कुप्रत्ययेसंप्रसारणं॥ श्रीवत्सलांछनः श्रीयुक्तोवत्सः श्रीवत्सः आवर्तविशेषः लांछनंयस्य शौरिःश्री
वत्सदैत्यारिविष्वक्सेनजनार्दनाः इतिशब्दार्णवात्॥ पुराणपुरुषः कर्मधारयः॥ यज्ञपुरुषः यज्ञफलदःपुरुषः॥ नरकांतकः नरकवारकः२२ जलशायी॥ विश्वरूपः विश्वं
रूपयति॥ मुकुंदः॥ मुरमर्दनः इतिविष्णोर्नामानि॥ अस्यकृष्णस्यजनकःपितावसुदेवः वसुषुदिव्यतिइतिवसुदेवः पचाद्यच् दिवुक्रीडादौ सएववसुदेवएवआनकदुं
दुभिः आनकेर्दुंदुभिश्चोपलक्षितः वसुदेवजन्मनिदेवैरानकदुंदुभिवादनात् हेकृष्णपितुः २३

बलभद्रः बलंभद्रंश्रेष्ठमस्य बलेनभद्रइतिवा बलभद्रात्रायमाणाकुमार्योः पुंसिसीरिणि॥प्रलंबघ्नः प्रलंबंहतवान् मूलविभुजादित्वात्कः॥ बलदेवः बलेनदिव्यति पचाद्यच्॥अच्युताग्रजः अच्युतस्यअग्रजः॥रेवतीरमणः रेवत्याःरमणः नंद्यादित्वात्॥रामः रमते रमंतेयोगिनोऽस्मिन्नितिवा णःघञ्वा॥कामपालः कामान्पालयति पालरक्षणे कर्मण्यण्॥हलायुधः हलंआयुधंयस्य २३ नीलांबरः नीलंअंबरंयस्य॥रौहिणेयः रोहिण्याःअपत्यं ढक्प्रत्ययः॥तालांकः तालःअंकःध्वजोयस्य॥मुसली मुसलमस्तियस्य मुसखंडने कलच्॥हली हलमस्त्यस्य॥संकर्षणः संकर्षति सम्यक्कृषतिवा कर्तरिल्युः कर्मणिल्युट्वा॥सीरपाणिः सीरःपाणावस्य॥कालिंदीभेदनः कालिंद्याःभेदनः नंद्यादिः॥बलः बलमस्यास्ति अर्शआद्यच् इतिबलरामस्यसप्तदशनामानि २४ मदनः मदयतीति मदीहर्षग्लेपन

बलभद्रःप्रलंबघ्नोबलदेवोऽच्युताग्रजः॥रेवतीरमणोरामः कामपालोहलायुधः २३ नीलांबरोरौहिणेयस्तालांकोमुसलीहली॥संकर्षणःसीरपाणिःकालिंदीभेदनोबलः २४ मदनोमन्मथोमारःप्रद्युम्नोमीनकेतनः॥कंदर्पोदर्पकोऽनंगःकामःपंचशरःस्मरः २५

योः ल्युप्रत्ययः॥मन्मथः मथ्नातीतिमथः मंथविलोडने पचाद्यच् मनसःमथः मन्मथः मन्मथःकामचिंतायांकपित्थकुसुमायुधे॥मारः म्रियंतेऽनेन करणेघञ्॥प्रद्युम्नः प्रकृष्टंद्युम्नंबलंयस्य॥मीनकेतनः मीनः मकरःकेतनंध्वजोयस्य॥कंदर्पः कमित्यव्ययंकुत्सायां कुत्सितोदर्पोऽस्यकंदर्पः यद्वा कंसुखंदर्पयति॥दर्पकः ण्वुलंतः दर्पयति णिजंतः॥अनंगः नास्तिअंगमस्य यद्वानांगंज्ञानमस्मादितिवा अनंगोमदनेनंगमाकाशमनसोरपि॥कामः काम्यतेऽनेन॥पंचशरः पंचशरायस्य पंचशराःके उन्मादनस्तापनश्चशोषणस्तंभनस्तथा संमोहनश्चकामस्यपंचबाणाःप्रकीर्तिताः॥स्मरः स्मरयति उत्कंठयति स्मृआध्याने णिजंतादच् मित्वात्ह्रस्वः स्मर्यतेऽनेनेतिवा २५

शंबरारिः शंबरस्यअरिः क्लीबंतुशंबरे नीरेबौद्धव्रतविशेषयोः विशेषेपुंसिदैत्यस्यमत्स्यहरिणस्यचेतिरभसः शंबरंसलिलेपुंसिमृगदैत्यविशेषयोरितिमेदिनी ॥ मनसिजः शृंगाररूपेणमनसिजायतेस्य जनेर्डः ॥ कुसुमेषुः कुसुमानिइषवोयस्य ॥ अनन्यजः नास्त्यन्योयस्मात् अनन्यः विष्णुः तस्माज्जातः मनसोन्यस्मान्नजायतेवा जनेर्डः ॥ पुष्पधन्वा पुष्पंधनुरस्य वासंज्ञायांइत्यनङ् ॥ रतिपतिः रतेः पतिः ॥ मकरध्वजः मकरः ध्वजोऽस्य ॥ आत्मभूः आत्मनाभवति क्विप् २६ ब्रह्मसूः ब्रह्माणंसूतेपः ब्रह्माणंसूवतिचालयति षूप्रेरणे अन्तर्भावितण्यर्थः क्विप् ॥ विश्वकेतुः झषकेतुर्वा ऋष्यकेतुर्वा ऋश्यकेतुरपि विश्वस्मिन्केतुर्यस्य पताकायांद्युतौकेतुर्ग्रहोत्पातारलक्ष्मस्वितिरभसः तदुक्तंशिवपुराणे खड्गायुधोनिरुद्धः स्यात्तथावैऋष्यकेतनामिति मदनस्यनामान्येकोनविंशतिः अरविंदमशोकंचचूतंचनवमल्लिका नीलोत्प

शंबरारिर्मनसिजः कुसुमेषुरनन्यजः ॥ पुष्पधन्वारतिपतिर्मकरध्वजआत्मभूः २६ ब्रह्मसूर्विश्वकेतुः स्यादनिरुद्धउषापतिः ॥ लक्ष्मीः पद्मालयापद्माकमलाश्रीर्हरिप्रिया २७ इंदिरालोकमातामाक्षीरोदतनयारमा ॥

लंचपंचैतेपंचबाणस्यसायकाः ॥ अनिरुद्धः उषापतिः स्यात् ब्रह्मसूर्झषकेतुः स्याद्दिष्वक्सेनात्मजात्मजः इतिचतुष्टयमनिरुद्धस्येत्यन्ये ॥ लक्ष्मीः लक्षयति पश्यति नीतिज्ञं लक्षदर्शनांकयोः लक्षेर्मुट्चेतिईप्रत्ययः तस्यमुट् लक्ष्मीः संपत्तिशोभयोः ऋद्ध्यौषधौचपद्मायांवृद्धिनामौषधेपिचेति ॥ पद्मालया पद्ममालयोःस्याः ॥ पद्मा पद्ममस्त्यस्याः मत्वर्थेच् ॥ कमला कंमलयति मलधारणे कमलंसलिलेताम्रेजलजेव्योमभूषणे मृगभेदेतुकमलः कमलाश्रीवरस्त्रियां ॥ श्रीः श्रयति हरिं श्रयंत्येनामितिवा तदुक्तंव्याडिना लक्ष्मीसरस्वतीधात्रीसर्वसंपद्विभूतिशोभासु उपकरणवेषरचनाविधासुचश्रीरितिप्रथिता ॥ हरिप्रिया हरेः प्रिया ॥ इंदिरा ॥ लोकमाता ॥ मा ॥ क्षीरोदतनया ॥ रमा इत्येकादशनामानिलक्ष्म्याः ॥

कृशानुरेताः कृशानौरेतोयस्य ॥ सर्वज्ञः सर्वंजानाति कप्रत्ययः ॥ धूर्जटिः धूर्भारभूताजटिर्यस्य जटझटसंघाते सर्वधातुभ्यइन्नीत् जटिर्जटेतिद्विरूपकोशात् धूः गंगा जटिष्वस्येतिवा ॥ नीललोहितः नीलश्चासौलोहितश्च कंठेजटासुच ॥ हरः हरतीति पचाद्यच् हीरोपि हीरः कपर्दीशाभिरः इतिसंसारावर्तात् ॥ स्मरहरः स्मरंहरति हर तेइत्यच् ॥ भर्गः भर्जति भ्रस्जी भर्जने भृज्यंतेऽनेनवा भाद्यांयेनेतिवा हलश्चेतिघञ् ॥ त्र्यंबकः त्रीणिअंबकानिनेत्राणियस्य त्रिषुलोकेषुअंबकंयस्येतिवा अब-कंनयनंदृष्टिरितिहलायुधः त्रयाणांलोकानामंबकःपितेतिवा त्रीन्वेदान्अंबतेशब्दायतेवा अबिशब्दे कर्मण्यण् स्वार्थेकत्वं त्रिषुलोकेषुकालेषुवा अंबःशब्दोवेद लक्षणोयस्येतिवा यद्वा त्रयःअकारउकारमकाराः अंबाःशब्दवाचकाः यस्येतिवा ॥ तिस्रः अंबाः द्यौर्भूम्यापोयस्येतिवा ॥ त्रिपुरांतकः त्रयाणांधातूनांसुवर्णरजत

कृशानुरेताःसर्वज्ञोधूर्जटिर्नीललोहितः ॥ हरःस्मरहरोभर्गस्त्र्यंबकस्त्रिपुरांतकः ३३ गंगाधरोंधकरिपुःक्रतुध्वंसीवृषध्वजः ॥ व्योमकेशोभ वोभीमःस्थाणूरुद्रउमापतिः ॥ "अहिर्बुध्न्योऽष्टमूर्तिश्चगजारिश्चमहानटः" ३४

लोहानांपुराणि तेषामंतकः यद्वा त्रयाणांपुराणांसमाहारः तस्यअंत कः ३३ गंगाधरः धरतीतिधरः गंगायाःधरः शेषत्वविवक्षायांपचाद्यच् ॥ अंधकरिपुः अंधकस्यदैत्यस्यरिपुः ॥ क्रतुध्वंसी क्रतुंध्वंसयति सुपीतिणिनिः ॥ वृषध्वजः वृषः ध्वजःचिन्हमस्य ॥ व्योमकेशः व्योम्निकेशाःयस्य ॥ भवः भवति भवत्येवासर्वं भूप्राप्तौ पचाद्यच् भवत्यस्माद्विश्वमितिवा अप्अपादाने ॥ भीमः बिभेत्यस्मा दितिभीमः भीमादयोपादानेइतिसाधुः भीमोम्लचेतसंघोरेशंभौमध्यमपांडवइत्युक्तत्वात् ॥ स्थाणुः तिष्ठति ॥ रुद्रः रोदयति रोदर्णिलुक्चेतिरक् णिचोलुकिगु णोन ॥ उमापतिः उमायाःपतिः इत्यष्टचत्वारिंशत्शिवनामानि ३४

कपर्दः केनस्रुवेनजलेनवा परंपूर्त्तिंददाति संपदादित्वाद्भावेक्विपिराल्लोपः कस्यजलस्यपरापूरणेनदापतीतिवा दैप्शोधने रूपीतिकप्रत्ययेनसाधुः अस्यशंभोः जटाजूटः. जटानां जूटः बंधः जटाबंधस्यैकं॥ अस्यधनुः पिनाकः पिनाकादयश्चेतिसाधुः॥ अजगवं अजंछागंगच्छति यज्ञत्वेनप्रविशतीतिवा अजगः विष्णुः अस्तिशरत्वेन गोंऽस्यजगादि तिवः आजग वमपि स्वार्थेण् धनुस्त्वजगवंपुंस्यमजकावमजीजकमितिशब्दार्णवः स्थाणोर्धनुराजगवमित्यमरमालाच अजकवमित्यपि अजः विष्णुः कोब्रह्मा तौअवति शकंध्वादिः अजकौ विष्णुब्रह्माणौ शिवधनुषः द्वेनामनी॥ अस्यपारिषदाःगणाः प्रमथाःस्युः परिषदिसाधवः परिषदङ्णितियोगविभागादण् प्रमथाः प्र मथ्नंतिदुष्टान् मथविलोडने पचाद्यच् प्रमथ्यंतेमंत्रादिनाइतिवा पार्षद्याइत्यपि शिवानुचराणांद्वे ब्राह्मीत्याद्यास्तु मातरः मन्यंतेपूज्यंते लोकमातृत्वादितिमात

कपर्दोऽस्यजटाजूटःपिनाकोऽजगवंधनुः॥ प्रमथाःस्युः पारिषदाब्राह्मीत्याद्यास्तुमातरः ३५ विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा॥ रः औणा-

दिकः मांति शिवपरिवारत्वेसमाविशंतिवा॥ ब्राह्मी ब्रह्मणइयं तस्येदमित्यण् तदुक्तं ब्राह्मीमाहेश्वरीचैंद्रीवाराहीवैष्णवीतथा कौमारीत्यपिचामुंडाचर्चिकेत्यष्टमातरः भागुरि राह ब्राह्म्याद्यामातरःस्मृताइति ब्रह्माणीत्यपिपाठः ब्रह्माणंअणतिकीर्तयति अणशब्दे कर्मण्यण् ङीप् ब्रह्माण्याद्याःस्मृताःसप्तदेवतामातरोबुधैरितिहलायुधः ब्राह्म्यादि शक्तिदेवतानामेकैकं ३५ विभूतिः विशेषेणभूतिः॥ भूतिः भवनं क्तिन्प्रत्ययः॥ ऐश्वर्यं ईश्वरस्यभावः ष्यञितिसाधुः त्रीणिऐश्वर्यनामानि॥ अणिमादिकं अष्टधा अणिमादिकमु च्यते अणिमालघिमाप्राप्तिःप्राकाम्यंमहिमातथा ईशिनावशितांचैवतथाकामावशायिता अणिमा अणोर्भावः॥ लघिमा लघोर्भावः इमनिच्॥ प्राप्तिः॥ अंगुल्यग्रेणचंद्रादेः॥ प्राकाम्यं प्रकामस्यभावः मनोरथसिद्धिः॥ महिमा महतोभावः॥ ईशिता ईशिनःभावः केऽणोनल्॥ वशिता वशोऽस्यास्तीतिवशी वशिनःभावः वशित्वतल्॥ कामावशायिता का मान्वशते कामावशायिनःभावः इत्यष्टसिद्धयः॥

उमा ओः महेशस्यमालक्ष्मीः उमेतिमात्रानयसॊनिषिद्धत्वात्वा ॥ कात्यायनी कतस्यअपत्यं गर्गादियञंतात्ष्फेङीष् ॥ गौरी गौरोवर्णःअस्तियस्याः ॥ एवंकाली उमाकात्यायनी दुर्गाकालीहैमवतीश्वरी कालाकालंजरीगौरीतिवाचस्पतिः ॥ हैमवती हिमवतोपत्यं अणंतात्ङीप् हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोमयोः ॥ ईश्वरी ईष्टे ईशऐश्वर्ये वरदिदित्वात्ङीप् ईश्वराइत्यपि वरचिडाप् ईश्वरः शंकरेथीरेतत्पत्न्यामीश्वरीश्वरा इतिबोपालितः ३६ शिवा शिवयतीति शिवोवास्याअस्तिभर्तृत्वेन शिवंभद्रंशिवःशंभुः शिवागौरीशिवाभयेतिशाश्वतः पुंयोगेतु शिवी भवानी भवस्यस्त्री ॥ रुद्राणी रुद्रस्यस्त्री ॥ शर्वाणी शर्वस्यस्त्री इमेइंद्रवरुणेतिसाधवः ॥ सर्वमंगला सर्वेषांमंगला सर्वाणि मंगलानियस्याः वा मंगलासितदूर्वायांशुभायांपुंसिभूभिजे नपुंसकंतुकल्याणेपुंसिसर्वार्थदक्षिणे ॥ अपर्णा नपर्णानियस्याः तपस्यंत्यापर्णानामपित्यागात् ॥ पार्वती पर्वतस्यापत्यंस्त्री अणंतात्ङीप् ॥ दुर्गा दुःखेनगम्यतेज्ञायतेस्यां सुदुरोरधिकरणेइतिडः यद्वा दुःखेनदुर्ष्टेर्वागीयते गम्यते गैशब्दे आतश्चोपसर्गेइत्यङ् दुर्गंकोटेदुर्गमेस्याद्दुर्गातुनीलिकोमयोरितिहेमचंद्रः ॥ मृडानी मृडस्यशिवस्यस्त्री इंद्रवरुणेति साधुः ॥ चंडिका चंडति चडिकोपे ण्वुल् ॥ अंबिका अंबैवअंबिका स्वार्थेकः अंबिकापार्वतीमात्रोर्धृतराष्ट्रस्यमातरि इत्यमाद्याःनामानिसप्तदश ३७ विनायकः विनयति ण्वुल् विशिष्टोनायकोविनायकइतिवा यद्वा विगतोनायकोयस्य तदुक्तंकोशांतरे विनायकस्तुहेरंबेतार्क्ष्येविघ्नेजिनेगुरौ ॥ विघ्नराजः विघ्नानांराजाइतिविघ्नराजः समासांतष्टच् ॥ द्वैमातुरः द्वयोःमात्रोःअपत्यं मातुरुत्संख्येतिसाधुः दुर्गाचामुंडाभ्यांपालितत्वात् तदुक्तं द्वैमातुरजरासंधवारणाननयोःपुमानिति ॥ गणाधिपः गणानांप्रमथानामधिपः ॥ ७

उमाकात्यायनीगौरीकालीहैमवतीश्वरी ३६ शिवाभवानीरुद्राणीशर्वाणीसर्वमंगला ॥ अपर्णापार्वतीदुर्गामृडानीचंडिकांबिका ३७ "आर्यादाक्षायणीचैवगिरिजामेनकात्मजा" ॥ विनायकोविघ्नराजद्वैमातुरगणाधिपाः ॥

एकदंतः एकः दंतोऽस्य॥ हेरंबः हेसंग्रामेरंबते हः शंकरेहरोहंसेरणरोमांचवाजिषु इतिनानार्थरत्नमाला स्वामीतु हेउपसिरंबते रबिशब्दे पचाद्यच्॥ लंबोदरः लंबमुदरंय स्यसः॥ गजाननः गजस्यआननमिवआननंयस्य यद्वा गजआननं यस्य गजशब्दोगजमुखपरः इत्यष्टौगणपतेः॥ ३८॥ कार्तिकेयः कृत्तिकानामपत्यं स्त्रीभ्योढक्॥ महासेनः महतीसेनाअस्य॥ शरजन्मा शरेषुजन्मास्य॥ षडाननः षट्आननान्यस्य॥ पार्वतीनंदनः पार्वत्याःनंदनः॥ स्कंदः स्कंदति स्कंदेरच्॥ सेनानीः सेनांनयति सत्सूद्विषेतिक्विप् सेनानीस्यात्पुमान्कार्तिकेयेसेनापतौपुमान्॥ अग्निभूः अग्नेर्भवति क्विप्॥ गुहः गूहति सेनांरक्षति गूहसंवरणे इगुपधेतिकः गुहः षाण्मातुरेगुहा सिंहपुष्प्यांचगर्तेचपर्वतादेश्चशंकरइत्य... ३९ बाहुलेयः बहुलानांकृत्तिकानामपत्यं॥ तारकजित् तारकंजयति क्विपतुक्॥ विशाखः विशाखति शाखृव्याप्तौ पचाद्यच् विशाखायांजातइतिवा संधिवेलेत्यण् तस्यश्रविष्ठेति लुक्॥ शिखिवाहनः शिखीमयूरः वाहनंयस्य॥ षाण्मातुरः षण्णांमातॄणामपत्यं द्वैमातुरवत्॥ शक्तिधरः शक्तेःधरः॥ कुमारः कुमारयतिक्रीडति कुमारक्रीडायां पचाद्यच् कुत्सितोमारोऽस्येतिवा यद्वा कुमारयतिदुष्टान् यत्तुब्रह्मचारित्वात्कुमारइत्युक्तं तथापितस्यभार्याआसीत् तदुक्तंवायुपुराणे शतक्रतोरूपवतीदेवसेनेतियाश्रुता सामहेंद्रेणारत्यर्थंभार्यातेनोपपादिता उदीर्णसेनापतयेमहासेनायसुव्रतइति॥ क्रौंचदारणः क्रौंचस्यपर्वतस्यदारणः दृविदारणे नंद्यादित्वात्ल्युः कैलासेधनदावासेक्रौंचः क्रौंचोभिधीयते अतः क्रौंचदारणोपि सप्तदशकार्तिकेयस्यनामानि ४०

अप्येकदंतहेरंबलंबोदरगजाननाः ३८ कार्तिकेयोमहासेनःशरजन्माषडाननः॥ पार्वतीनंदनःस्कंदःसेनानीरग्निभूर्गुहः ३९ बाहुलेयस्तारकजिद्विशाखःशिखिवाहनः॥ षाण्मातुरःशक्तिधरःकुमारःक्रौंचदारणः ४०

७ ७ ७

इंद्रः इंदति इदिपरमैश्वर्ये ऋज्रेत्यादिनारन् इंद्रः शक्रादित्यभेदयोगभेदांतरात्मसु इंद्रः फणिज्जकेस्त्रीस्यात्॥मरुत्वान् मरुतःसंत्यस्य मतुपिझयइतिवत्वं॥मघवा मघवानित्यपि तृआदेशः मह्यते पूज्यते महपूजायां कनिन्॥बिडौजाः बिडति बिडभेदने इगुपेतिकः बिडंभेदकमोजोयस्य सांतःशब्दः॥पाकशासनः शासयतिशासनः ण्यंतात्ल्युः पाकस्यदैत्यभेदस्यशासनः॥वृद्धश्रवाः वृद्धेभ्यःश्रृणोति श्रुश्रवणे असुन् वृद्धेश्रवसीअस्येतिवा यद्वा वृद्धेषुपंडितेषुश्रवोयशःयस्य॥सुनासीरः सुष्ठुनासीरंसेनामुखं यद्वा सुष्ठुनासीराःअग्रेसराःयस्य णासृशब्दे बाहुलकादीरन् शुनासीरोपि शुनः वायुः शीरः सूर्यः तौस्तःयस्य अर्शआद्यचि अन्येमपीतिदीर्घः॥पुरुहूतः पुरुप्रचुरंहूतमाह्वानंयज्ञेयस्य यद्वा पुरूणिहूतानिनामानियस्य॥पुरंदरः पुरःअरीणांदारयति वाचंयमपुरंदरौचेति ४१ जि

इंद्रोमरुत्वान्मघवाबिडौजाःपाकशासनः॥ वृद्धश्रवाःसुनासीरःपुरुहूतःपुरंदरः ४१ जिष्णुर्लेखर्षभःशक्रःशतमन्युर्दिवस्पतिः॥सुत्रामागोत्रभिद्वज्रीवासवोवृत्रहावृषा ४२

ष्णुः जयनशीलः जिजयेअभिभवे ग्लाजीस्थिश्चक्स्नुः जिष्णुर्नावासवेऽर्जुने॥ लेखर्षभः लेखेषुदेवेषुऋषभः श्रेष्ठः॥शक्रः शक्नोति शक्लृशक्तौ स्फायितंचिवञ्चिरक् शक्रः पुमान्देवराजेकुटजार्जुनभूरुहे इत्युक्तत्वात्॥शतमन्युः शतंमन्यवोयज्ञाःयस्य यद्वा शतेषुदैत्येषुमन्युःक्रोधोयस्य॥दिवस्पतिः दिवः स्वर्गस्यपतिः॥ज्ञापकादलुकिकस्कादित्वात्सः॥सुत्रामा सूत्रामाइत्यपि सुष्ठुत्रायते त्रैङ्पालने मनिन्॥गोत्रभित् गोत्रान्पर्वतान्भिनत्ति क्विप्तुक्॥वज्री वज्रोऽस्यास्तीति॥वासवः वसूनिरत्नानिसंत्यस्य मत्वर्थेऽण् वसोरपत्यमितिवा दैत्यानांवासंवातिवा वागतिगंधनयोः आतइतिकः॥वृत्रहा वृत्रंहतवान् भूतेक्विप्॥वृषा वर्षति वृषुसेचने कनिन् ४२

वास्तोष्पतिः वास्तोः ग्रहक्षेत्रस्यपतिरधिष्ठाता वास्तोष्पतिगृहमधेतिनिपातनादलुक् कस्कादित्वात्षत्वं ॥ सुरपतिः सुराणांपतिः ॥ बलारातिः बलस्यासुरस्यअरातिःशत्रुः ॥ शची
पतिः शच्याःपतिः ॥ जंभभेदी जंभमसुरंभेत्तुंशीलमस्य ॥ हरिहयः हरिर्हयोयस्य त्वक्केशबालरोमाणिसुवर्णाभानियस्यतु हरिः सवर्णतोश्वस्तुपीनकौशेयसप्रभः इतिशालि
होत्रः ॥ स्वाराट् स्वः स्वर्गेराजते रोरीतिलोपेदीर्घः स्वेषुदेवेषुचधनेषुच आराजते ॥ नमुचिसूदनः नमुचेर्दैत्यस्यसूदनः ४३ संक्रंदनः संक्रंदयति क्रंदिआल्हानेरोदनेच
नंद्यादिः ॥ दुश्च्यवनः दुःखेनदुष्टंदुष्टेषुवाच्यवनमस्य यद्वा दुःसहः च्यवनोमुनिरस्य ॥ तुराषाट् तोतोर्तितुरः इगुपेतिकः तुरत्वरणे तुरंवेगवंतंसाहयति अभिभवति ण्यं
तात्सहेः क्विप् अन्येषामपीतिदीर्घः यद्वा तुरः त्वरितः सन्परबलानिसहतइति अस्मिन्पक्षेनहिवृत्तीतिदीर्घः ॥ मेघवाहनः मेघाः वाहनमस्य ॥ आखंडलः आखंडयति रव

वास्तोष्पतिःसुरपतिर्बलारातिःशचीपतिः ॥ जंभभेदीहरिहयःस्वाराण्नमुचिसूदनः ४३ संक्रंदनोदुश्च्यवनस्तुराषाण्मेघवाहनः ॥ आखंड
लः सहस्राक्षऋभुक्षास्तस्यतुप्रिया ४४ पुलोमजाशचींद्राणीनगरीत्वमरावती ॥

डिभेदने वृषादित्वात्कलच् ॥ सहस्राक्षः सहस्रमक्षीणियस्यसः
समासांतःषच् ॥ ऋभुक्षाः ऋभवः क्षीयंत्यत्र क्षिनिनिवासगत्योः ऋभुक्षः स्वर्गवज्रयोरितिविश्वः ऋभुक्षोस्यास्तीतिऋभुक्षाः अतइनिः इतींद्रनामानिपंचविंशतिः
४५ तस्यतुप्रिया पुलोमजा पुलोम्नः मुनेर्जाता पौलोम्यपि तस्यापत्यमित्यण् जातित्वात्ङीष् ॥ शची शचति शचव्यक्तायांवाचि सर्वधातुभ्यइतीन् कृदिकेति
ङीष् ॥ इंद्राणी इंद्रमणति आनयति यद्वा इंद्रस्यस्त्री पुंयोगेङीष्आनुक् स्यादिंद्राणीशतावरी चारुधारामहेंद्राणीशक्राणीजयवादिनी इतिरभसः इतित्री
णींद्रपत्न्याः ॥ नगरीतु अमरावती अमराःसंत्यस्यां मतौबह्वचइतिदीर्घः एकंनगर्याः ॥ ७ ७ ७

हयः उच्चैःश्रवाः उच्चैः श्रवसीयस्य उच्चैः शृणोतीतिवा शुधातोरसुन् उच्चैः महान्श्रवोयशोयस्येतिवा एकं इंद्राश्वस्य॥ सूतः सारथिः मातलिः मातंलाति यद्वा मतल स्यअपत्यं एकं॥ वनं नंदनं नंदयति इंद्रोद्यानेनंदनस्तुतनयेहर्षकारिणीतिहेमः अतइत्र आदिष्ट्इएकं ४५ अस्यप्रासादः वैजयंतःस्यात् वैजयंत्यः पताकाः संत्यस्य मत्व- र्थेऽण् वैजयंतोमहेंद्रस्यध्वजप्रासादयोःपुमान् वैजयंतीपताकायांजयंतीपादपेस्त्रियाम् इंद्रगृहस्यैकंनाम॥ जयंतः जयतीति झच्छिद्यांतः इतिसाधुः॥ पाकशासनिः पाकशा सनस्यापत्यं अतइञ् इंद्रपुत्रस्यद्वेनामनी॥ ऐरावतः इराउदकानिसंत्यस्मिन् इरावान्समुद्रः तस्मिन्भवः मतुबंतात् भवार्थेण् ऐरावतः॥ अभ्रमातंगः अभ्रंमेघस्तदात्म कोमातंगः शाकपार्थिवादिः यद्वा अभ्रेआकाशे मेघेवाविद्यमानोमातंगइतिवा॥ ऐरावणः इरयाउदकेनवणति वणशब्दे इरावणः इरासुरासैववनमुदकंयस्मिन्वा इरा

**हयउच्चैःश्रवाःसूतोमातलिर्नंदनंवनं ४५ स्यात्प्रासादोवैजयंतोजयंतःपाकशासनिः॥ ऐरावतोभ्रमातंगैरावणाभ्रमुवल्लभाः ४६ ऱ्हादिनी वज्रमस्त्रीस्यात्कुलिशंभिदुरंपविः॥ शतकोटिःस्वरुःशंबो**

वणेभवः तत्रभवइत्यण् ऐरावणः॥ अभ्रमुवल्लभः अभ्रमोः वल्लभः चत्वारि इंद्रहस्तिनोनामानि ४६ ऱ्हादिनी ऱ्हादतेवश्यं ऱ्हादअव्यक्तेशब्दे आवश्यकेणिनिः ङीप् ऱ्हादः अस्तिअस्याइतिवास्त्रीलिंगे॥ वज्रं वजति वजगतौ रन्प्रत्ययः पुंनपुंसकयोः अस्त्रियांवज्र कुलिशोइतिसंसारार्णवः॥ कुलिशं कुलेहस्तेशेते अन्येष्वपीतिडः कुलिर्हस्तोभुजादलइतित्रिकांडशेषः शोतनूकरणे यद्वा कुत्सितंइषत्लिशति लिशअल्पीभावे इगुपेतिकः कुलिशोनस्त्रियांप्रोक्तोदंभोलौनाझषांतरे॥ भिदुरं भिनत्ति कुरच्॥ पविः पुनाति अचइः॥ शतकोटिः शतंकोटयोधारास्य॥ स्वरुः स्वरति स्वशब्दोपता पयोः उप्रत्ययेगुणः यद्वा सुष्ठुअरुंधिधारायस्य॥ शंबः शंसुखकमस्यास्ति कंशंभ्यामितिबः यद्वा शाम्यत्यरीन्॥

दंभोलिः दंभुरोधने दंभसिरोदने अलिः समर्थः अलेरसुन् यद्वा दम्भोतिरवेदयति दंभुदंभने॥ अशनिः स्त्रीपुंसयोः अश्नाति अश्यतेनेनेतिवा अश्नातेरनिः दशवज्रस्यनामा
नि ४७ वज्राशनिरित्यपिनाम वज्राशनिंविदुर्वज्रं इतित्रिकांडशेषः अथवज्राशनिर्द्वयोरितिनामनिधानाच्च॥ व्योमयानं व्योम्नियात्यनेन करणेल्युट् व्योमयातिवा क
र्तरिसः॥ विमानः विशिष्टंमानयंत्यनेन करणेघः यद्वा विशेषेणमात्यस्मिन् अधिकरणल्युट् विगतंमानंउपमाअस्येतिवा विमानशब्दःपुंसिक्लीबेच विमानोदेवयाने
चसप्तभूमिगृहेपिच घोटकेयानमात्रेचपुंनपुंसकयोर्मनः द्वेदेवरथस्य॥ नारदाद्याः आदिशब्देनदेवलपर्वतादयः नरस्य अपत्यंनारं पानीयंददाति आतइतिकः नारंपा
नीयमित्युक्तंतत्पितृभ्यःसदाभवान् ददातितेनतेनामनारदेतिभविष्यनीतिआगमः नारंनरसमूहंद्यति कलहनेवा द्यतेःकः यद्वा नुःइदंनारं अज्ञानंद्यति दूरीकरो

दंभोलिरशनिर्द्वयोः ४७ व्योमयानंविमानोऽस्त्रीनारदाद्याःसुरर्षयः॥ स्यात्सुधर्मादेवसभापीयूषममृतंसुधा ४८ मंदाकिनीवियद्गंगास्वर्णदीसुरदीर्घिका॥

तिज्ञानोपदेशेन दोअवखंडने॥ सुरर्षयः सुराश्चतेब्रह्मपुत्रत्वादृषयश्च सुराणांऋषयइतिवा एकंनाम॥ सुधर्मादेवसभास्यात् सुधर्मा शोभ
नः धर्मोयस्यामिति नांतपक्षेधर्मादनिच्॥ देवसभा सहभांत्यस्यां इतिसभा सभाराजेतिसाधुः देवानांसभा अवस्थानगृहं इतिद्वेदेवसभायाः॥ पीयूषं पीयते पी
यइतिसौत्रोधातुः ऊषन्प्रत्ययः बाहुलकात्पक्षेगुणः स्यात्पेयूषंचपीयूषंनवक्षीरेऽमृतेपिच इतिहारावलिः पीयूषंसप्तदिवसावधिक्षीरेतथामृते॥ अमृतं नम्रियंतेऽ
नेन अमृतंयज्ञशेषेस्यात्पीयूषेसलिलेघृते अयाचितंचमोक्षेचनाधन्वंतरिदेवयोः॥ सुधा सुखेनधीयते धेट्पाने आतश्चोपसर्गे इतिकर्मण्यङ् त्रीणिअमृतस्य॥४८
मंदाकिनी मंदान् अकितुंशीलमस्याः अककअगकुटिलायांगतौ सुप्यजातौणिनिस्ताच्छील्ये णिनिः॥ वियद्गंगा वियतिवियतेवागंगा॥ स्वर्णदी स्वः स्वर्गस्यनदी संज्ञायांपूर्वप
दादितिणत्वं॥ सुरदीर्घिका सुराणांदीर्घिकेव चत्वारिदेवगंगायाः

मेरुः मिनोतिज्योतींषि उच्चत्वात् डुमिञ्प्रक्षेपणे मिपीभ्यांरुः॥ सुमेरुः अन्यप्रादिनिरासार्थंसु इति॥ हेमाद्रिः हेम्नोद्रिः॥ रत्नसानुः रत्नानिसानावस्य॥ सुरालयः सुराणांआलयः पंचमेरोः ४९ मंदारः मंदते मोदयति मदिस्तुतिमोदमदस्वप्नकांतिगतिषु आरन्प्रत्ययः मंदाआराधारायस्य सरलत्वादिनिवा॥ पारिजातकः पारिणोजातः समुद्राज्जन्यत्वेनास्यास्ति ततः ततः स्वार्थेकन्॥ संतानः सम्यक् तनोतिपुष्णाति ज्वलितिसूत्रेणनोतरुपसंख्यानात्णः॥ कल्पवृक्षः कल्प्यःसंकल्पितोऽर्थस्तस्यवृक्षः जन्यजनकभावसंबंधेषष्ठी॥ हरिचंदनं चंदयति चदिआल्हादने ण्यंतात्ल्युः नंद्यादित्वात् हरेश्चंदनं हरिचंदनमस्त्रीस्यात्त्रिदशानांमहीरुहे नपुंसकंतुगोशीर्षेज्योत्स्नाकुंकुमयोरपीत्युक्तत्वात् पंचैतेदेवतरवः तत्रहरिचंदनंक्लीबेपुंसिच ५० सनत्कुमारः सनान्नित्यंकुमारः यद्वा हंसगो

मेरुःसुमेरुर्हेमाद्रीरत्नसानुःसुरालयः ४९ पंचैतेदेवतरवोमंदारःपारिजातकः॥ संतानःकल्पवृक्षश्चपुंसिवाहरिचंदनं ५० सनत्कुमारोवैधात्रःस्वर्वैद्यावश्विनीसुतौ॥ नासत्यावश्विनौदस्रावाश्विनेयौचताउभौ ५१

द्रुहिणःसनत् इतिब्रह्मपर्यायेरप्रसः तस्यकुमारोऽपत्यं॥ वैधात्रः विधातुरपत्यं अण् सनत्कुमारोपि वैद्यसंहिताप्रणेतृत्वात्स्वर्वैद्यपर्यायसंनिधौकथनं तु सनकादेः॥ स्वर्वैद्यौ स्वः स्वर्गस्यवैद्यौ अश्विनीसुतौ अश्विन्याःसुतौ॥ नासत्यौ नसत्यंययोस्तावसत्यौ नअसत्यौनासत्यौ नभ्राण्नपादितिनञः प्रकृतिभावः॥ अश्विनौ प्रशस्ताःअश्वाःसंतिययोः यद्वा अश्विन्यांजातौ अश्वोऽस्तिजनकत्वेययोस्तौ॥ दस्रौ दस्यतःक्षिपतःरोगान् दसुउपक्षये स्फायितंचीतिरक्॥ आश्विनेयौ अश्विन्याअपत्ये स्त्रीभ्योढक् ताउभाविति द्वित्वविशिष्टत्वादेकवचनाभाव इतिगुरुचरणाः अयंचप्रायोवादः देव्यांतस्यांप्रजायेतांनासत्योदस्रएवचेतिमार्कंडेयात् नासत्याविति दस्राविति चैकवाचकस्योभयोःप्रयोगोगौणः छत्रिणोयांतीतिवत् षडश्विनोः ५१

उर्वशीसुरवाः उर्वशीमसुरवाः उरून्महतः अश्नुतेव्याप्नोति वशीकरोतीति जारभरेनिवत्साधुः॥ अप्सरसः अद्भ्यः संसरंति अत्रअप्सरसःशब्दः एकस्यामपिव्यक्तौ सरतेरसुन् अप्सराइतिभाष्यादेकवचनमपि॥ स्त्रियांबहुष्वितिस्वर्वेश्याइतिप्रोच्यंते स्वः स्वर्गस्यवेश्याः तदुक्तं घृताचीमेनकारंभाउर्वशीचतिलोत्तमा सुकेशीमंजुघोषाद्याः कथ्यंतेऽप्सरसोबुधैः अप्सराइत्यपिप्रयोगदर्शनात्प्रायोबहुत्वं॥ हाहाः हाइतिशोकव्यंजकशब्दंजहाति ओहाक्त्यागे विच्॥ हूहूः हूइतिह्वयति क्विपिसंप्रसारणेहल इतिदीर्घः एवंआद्याः एवमाद्यौयेषां॥ त्रिदिवौकसां गंधर्वाः गंधंसौरभमर्वंति अर्वगतौ आद्यशब्दात्तुंबुरुविश्वावसुचित्ररथप्रभृतयः हाहाशब्दस्यरूपंतु हाहाः हाहौ हाहाः हाहां हाहौ हाहान् हाहासांतोपि गंधर्वोवातिहाहसोरितिसंसारावर्तात् गंधर्वोहाहसिप्रोक्त इतिरत्नकोशान्च हहाइत्यादिन्हस्वः हुहुइत्यकायन्हस्व-

स्त्रियांबहुष्वप्सरसःस्वर्वेश्याउर्वशीसुरवाः॥ हाहाहूहूश्चैवमाद्यागंधर्वास्त्रिदिवौकसाम् ५२
अग्निर्वैश्वानरोवन्हिर्वीतिहोत्रोधनंजयः॥ कृपीटयोनिर्ज्वलनोजातवेदास्तनूनपात् ५३

श्च गीतमाधुर्यसंपन्नौविख्यातौचहहाहुहूइतिव्यासोक्तेः एकैकं ५२ अग्निः अंगति अगिगतौ अंगेर्नलोपश्चेतिसाधुः॥ वैश्वानरः विश्वेनराअस्य विश्वानरस्यापत्यंवा नरेसंज्ञायामितिदीर्घः ऋष्यण्॥ वन्हिः वहतिहव्यं वहतेर्निः॥ वीतिहोत्रः वीतिभक्ष्यंपुरोडाशादिहूयतेऽस्मिन् हुदानादनयोः वीतिक्तिन् कर्मणिअग्नेत्रन् वीतिरश्वोहोत्रंवहनमस्येतिवा॥ धनंजयः धनंजयति खच्सुम्॥ कृपीटयोनिः कृपीटस्यजलस्ययोनिः कृपीटमुदरेजलेइतिरत्नकोशात् कृपीटंयोनिरस्येतिवा॥ ज्वलनः ज्वलति जुचंक्रम्येतियुच्॥ जातवेदाः जातंवेदोधनंयस्मात् जातेवेदेविद्यतेवा विदसत्तायां जातंवेत्तिवेदयतेवा विदचेतनादावसुन्॥ तनूनपात् तनूः शरीरंनपातयति इत्याद्यूह्यं ५३

बर्हिः बृंहति बृहिरुद्धौ इस्नलोपः पुल्लिंगोयंबर्हिरुक्तोबृहद्भानुरित्यमरमाला शक्रोवैश्वानरोबर्हिर्बर्हिःशुष्मातनूनपात् इतिशब्दार्णवात् बर्हिःशुष्मेतिव्यस्तसमस्तंनामेति कु-
चित् तत्रसमस्तपक्षेबर्हिः कुशाः शुष्मबलमस्येतिविग्रहः बर्हिःसांतः बर्हिरिदंतः शुष्मेतिनांतः शुष्यत्यनेनेतिशुष्मा शुषशोषणे मनिन् ॥ कृष्णवर्त्मा कृष्णोधूमोव-
र्त्मास्य नांतः॥शोचिष्केशः शोचिषिज्वालाः केशाइवास्य ॥उषर्बुधः उषःसंध्यायांबुध्यते प्रकाशते उषःप्रभातसंध्यायामितिविश्वः ॥आश्रयाशः आश्रयमाधारम
श्नाति कर्मण्यण् आशयाशइतिपाठांतरं तत्र आशेरते इत्याशयः तमश्नाति प्राग्वदण् ॥बृहद्भानुः बृहंतोभानवोऽस्येति ॥कृशानुः कृशयति कृशतनूकरणे आनुक्॥
पावकः पुनाति पुञ्पवने ण्वुल्॥अनलः अनित्यनेन वृषादित्वात्कलच् अनलोवसुभेदेग्नौ ५४ रोहिताश्वः लोहिताअश्वायस्य तदुक्तं शालिहोत्रे वरुणस्त्वसिता

बर्हिःशुष्माकृष्णवर्त्माशोचिष्केशउषर्बुधः॥आश्रयाशोबृहद्भानुःकृशानुःपावकोऽनलः ५५ रोहिताश्वोवायुसखःशिखावानाशुशुक्षणिः॥हिरण्यरेताहुतभुग्दहनोहव्यवाहनः ५५ सप्तार्चिर्दमुनाःशुक्रश्चित्रभानुर्विभावसुः

नश्वान्कुबेरकुमुदीपमान् हुताशनःकिंशुकाभान्वायुर्बभ्रूस्तथारुणोदिति

रोहितोमृगोऽश्वोवाहनमस्येतिवा त्वादिरपि॥वायुसखः वायोःसखा समासांतेटचि अदंतः वायुःसखास्येतिवा अन्यपक्षेअनङिसखाइति॥शिखावान् शिखाःसंत्यस्य
मतुप्॥आशुशुक्षणिः आशुशीघ्रं आशुः व्रीहिर्वाशुक्षणोति क्षणहिंसायामिन् शुइतिपूजार्थमव्ययं॥हिरण्यरेताः हिरण्यंरेतोऽस्य हिरण्यरेताःपुंसिस्याद्दिवाकरहविर्भु
जोरित्यकारु॥हुतभुक् हुतंभुंक्ते क्विप्जांतःशब्दः॥दहनः दहति नंद्यादिः॥हव्यवाहनः हव्यंवाहयति ण्यंतात्वहेल्युः ५५ सप्तार्चिः सप्तार्चिषोयस्य कालीकरालीमनो-
जवासुलोहितासुधूम्रवर्णास्फुलिंगिनीविश्वदासाख्याः सप्तवन्हेर्जिह्वाः॥दमुनाः दाम्यति दमुउपशमे दमेरुनसच् दमुनाः दमुनसौ दमुनसइत्याद्यूह्यं दीर्घमध्योपि
दमूनाः॥शुक्रः शोभयति शुक्रंरेतोस्यास्तीतिवा ऋज्रेंद्रेतिनिपातितः अर्शआद्यच् द्वितीयपक्षे॥

चित्रभानुः चित्राभानवोऽस्य॥विभावसुः विभाप्रभावसुधनंयस्य॥शुचिः शुचिः पवित्रंकरोति शुचयति तत्करोतीतिण्यन्तादचइः यद्वा शोचति॥अपित्तं अपांपित्तमिव दाह कत्वात् चतुस्त्रिंशदग्नेः॥और्वः उर्वस्यमुनेरपत्यं अण्‌प्रण्॥वाडवः वडवायांभवः तत्रभवः॥वडवानलः वडवायाःअनलः आधाराधेयभावएवसंबंधत्वेनषष्ठ्यर्थः शोणि वाडवाग्नेः ५६ वन्हेः ज्वालकीलौ द्वयोःस्त्रीपुंसयोःस्तः ज्वलति ज्वलितिइतिणः कीलति कीलबंधे इगुपधेतिकः॥अर्चिः स्त्रीनपुंसकयोः नपुंस्यर्चिरितिवक्ष्यमाणत्वात् अर्च्यते अर्चपूजायां अर्चिःसांतः इदंतोपि॥हेतिशिखेस्त्रियां हिनोति हंतिवा हिगतौ ऊतीत्यादिनासाधुः पंचज्वालायाः॥स्फुलिंगः स्फुइतिअनुकरणं तेनलिंगति अच्॥अग्निकणः हेअग्नेः कणिकायां त्रिषु॥संतापः संतापयति तपसंतापे॥संज्वरः ज्वरयतीति उभाभ्यामपिअच् समौ समानार्थौ ५७ धर्मराजः धर्मस्यराजा टच्॥

चित्रभानुर्विभावसुः॥शुचिरप्पित्तमौर्वस्तुवाडवोवडवानलः ५६ वन्हेर्द्वयोर्ज्वालकीलावर्चिर्हेतिःशिखास्त्रियां॥त्रिषुस्फुलिंगोऽग्निकणःसंताप:संज्वरःसमौ ५७ धर्मराजःपितृपतिःसमवर्तीपरेतराट्॥कृतांतोयमुनाभ्राताशमनोयमराड्यमः ५८ कालोदंडधरःश्राद्धदेवोवैवस्वतोंऽतकः॥

पितृपतिः पितॄणांपतिः॥समवर्ती समंवर्तितुंशीलमस्य णिनिः॥परेतराट् परेतेषुमृतेषुराजते सत्सूद्विषेतिक्विप्॥कृतांतः कृतोंतोविनाशोयेन॥यमुनाभ्राता यमुनायाःभ्राता॥शमनः शमयति॥यमराट् यमेनसंयमेनराजते क्विप्॥यमः यमयति तदुक्तंविश्वे यमोदंडधरेध्वांक्षेसंयमेयमजेपिचेति ५८ कालः कलयत्यायुः कलसंख्याने कलेःअदंतेषुपाठात् मज्ञाद्यण्‌युक्तः॥दंडधरः दंडस्यधरः॥श्राद्धदेवः श्राद्धस्यदेवः अंशभावात् पितृपतित्वाद्वा॥वैवस्वतः विवस्वतोऽपत्यं॥अंतकः अंतंकरोतीति ण्यंतात् ण्वुल् इतियमस्यचतुर्दशनामानि॥ ध ध ध ध ध

राक्षसः रक्षोऽस्यस्मात् रक्षपालने असुन् स्वार्थेऽण् ॥ कौणपः कुणपं शवं भक्षयितुंशीलमस्य णः कर्तव्यः कौणंपाति पारक्षणे इत्याद्यूह्यं कौणपः ॥ क्रव्यात् क्रव्यंमांसं अत्ति विट् क्रव्यादः कर्मण्यण् क्रव्यंपक्वंभुंक्ते पृषोदरादिः ॥ अस्रपः अस्रंरक्तंपिबति आतइतिकः अस्रपः नश्रपयति क्रव्यादत्वादस्रपः ॥ आशरः आशृणाति हिनस्तीत्याशरः शृहिंसायां पचाद्यच् आशिरइतिपाठेतु आशिरोहन्तुपःशंकुः क्रव्यादोऽस्रपआशरइतिसंसारावर्तः ५९ रात्रिंचरः रात्रौचरति ॥ रात्रिचरः चरेष्टः रात्रेः कृतिविभाषेति मुम्विकल्पः ॥ कर्बुरः वर्णेन कर्वति कर्वहिंसायां कुरच् कर्बुरइतिपाठांतरेतु तदाह नैर्ऋतःकर्बरः क्रव्यात्कर्बुरोयातुरक्षसी इतिशब्दार्णवः कृणाति कृहिंसायां घुरच् ॥ निकषात्मजः निकषाया आत्मजः ॥ यातुधानः यातूनिरक्षांसिदधातिपुष्णाति युचल्यक्रूवा स्वजातिपोषकत्वात् यातूनिधीयंतेऽस्मिन्निति वा ल्युट् जातुधानइत्यपि तत्रेत्थं

राक्षसःकौणपःक्रव्यात्क्रव्यादोऽस्रपआशरः ५९ रात्रिंचरोरात्रिचरः कर्बुरोनिकषात्मजः ॥ यातुधानःपुण्यजनोनैर्ऋतोयातुरक्षसी ६० प्रचेतावरुणःपाशीयादसांपतिरप्पतिः ॥ श्वसनःस्पर्शनोवायुर्मातरिश्वासदागतिः ६१

जातुकदाचिद्धानंसन्निधानमस्येति ॥ पुण्यजनः पुण्यश्चासौजनश्च ॥ नैर्ऋतः निर्ऋतेरपत्यं ॥ यातु ॥ रक्षः यातुरक्षसीनपुंसके पंचदशराक्षसस्य ६० प्रचेताः प्रचेतयति चितीधातोरसुन् प्रकृष्टंचेतोऽस्येतिवा प्रचेताःपाशनिपुणेपुंसिकृष्णेचवाच्यवत् इत्यु० ॥ वरुणः व्रियते वृणोतिवा वृञ्वरणे उनन् वरुणस्तरुभदेप्यप्रतीचीपतिसूर्ययोरित्यु० ॥ वरणोपि ॥ पाशी पाशोस्यास्ति मत्वर्थेऽच् तदुक्तंविश्वे पाशीपाशधरेयतावित्ति ॥ यादसांपतिः षष्ठ्याअलुक् ॥ अप्पतिः अपांपतिः पंचवरुणस्य ॥ श्वसनः श्वसित्यनेन श्वसप्राणने करणेल्युट् ॥ स्पर्शनः स्पृशति स्पृशस्पर्शने बहुलमन्यत्रापीतियुच् ॥ तदुक्तंविश्वे स्पर्शनोमारुतेस्पर्शदानयोःस्पर्शनंमतमिति ॥ वायुः वाति वागतिगंधनयोः उण्प्रत्ययेयुक् ॥ मातरिश्वा मातरिअंतरिक्षेश्वयति संचरति श्वन्नुक्षन्निति निपातनात्सप्तम्याअलुक् श्वयतेः कनिन् इत्याद्यूह्यं सदागतिः सदागतिरस्य ॥ ६१ ॥

पृषदश्वः पृषन्मृगभेदोऽश्वोवाहनमस्य यद्वा पृषतामंबुकणानामश्वइवेति गंधवहः वहति पचाद्यच् गंधस्यवहः गंधवाहः कर्मण्यण् ॥ अनिलः अनित्यनेन इलच् ॥ आशुगः आशुगच्छति डप्रत्ययः ॥ समीरः सम्यगीर्ते गच्छति ईरयतिमेरयतिवा ण्यंताद्वाअच् ईरगतौ ॥ मारुतः म्रियंतेऽनेन मृग्रोरुतिरित्यौणादिकः ॥ मरुत् मरुतशब्दोपिनोध्य तदुक्तंविक्रमादित्यकोशे मरुतःस्पर्शनःप्राणःसमीरोमारुतोमरुदिति मारुतःश्वसनःप्राणःसमीरोमरुतोजगदितिसंसारावर्ताच्च अतएवजगत्प्राणोपृथगपि तदुक्तंरुद्रकोशे जगत्स्याद्विष्टपेक्लीबंवायौनाजंगमेत्रिष्विति जगतोंऽफवनेरप्यातादिदंशोभेदेजलेपिचेतिविश्वश्च ॥ जगत्प्राणः जगतांप्राणः एकत्वात् ॥ समीरणः ण्यंतात्ल्युः ६२ नभस्वान् नभोऽस्यास्त्याश्रयत्वेनास्ति मतुपिमत्वं ॥ वातः वाति वातिरपि तदुक्तंसाहसांके वायुर्मरुत्वान्श्वसनःपवनोमरुतोनिलः नभस्वान्क्षिपणुर्वातिशुषिनोनघरोवहइति

पृषदश्वोगंधवहोगंधवाहानिलाशुगाः ॥ समीरमारुतमरुज्जगत्प्राणसमीरणाः ६२ नभस्वद्वातपवनपवमानप्रभंजनाः ॥ प्रकंपनोमहावातोझंझावातःसवृष्टिकः ६३ प्राणोपानःसमानश्चोदानव्यानौचवायवः ॥ शरीरस्थाइमेरंह

पवनः पुनाति बहुलमन्यत्रापीतियुच् ॥ पवमानः पवते पूङ्जोःशानन् आनेमुक् ॥ प्रभंजनः प्रकर्षेभनक्ति भंजआमर्दने युच् विंशतिर्वातस्य ॥ प्रकंपनः नंद्यादिः ॥ महावातः इयंमहावायोः ॥ सएवसवृष्टिकः झंझावातइत्युच्यते ६३ प्राणः अपानः समानः उदानः व्यानः इमेशरीरस्थावायवःस्युः तत्र हृदिप्राणोगुदेपानः समानोनाभिमंडले उदानःकंठदेशेस्याद्व्यानः सर्वशरीरगः अन्नप्रवेशनंमूत्राद्युत्सर्गोऽन्नविपाचनं भाषणादिनिमेषादितद्व्यापाराः क्रमादमीत्युक्तत्वात् प्राणोऽत्र्यारुतेबालेकाव्येजीवेऽनिलेविले पुलिंगेपूरितेवाच्यलिंगेपुंभूम्निचासुषु एकैकं ॥ रंहः रमतेऽनेन रमतेरसुन् हुगागमश्च रंहत्यनेनवा रहिगतौ असुन् ॥ ५ ५ ५ ५

नरः तरंत्यनेन तॄप्लुवनतरणयोः असुन्॥रयः रीणात्यनेन रीगतिरेषणयोः एरच्। रयंत्यनेनवा रयगतौ॥स्यदः स्यंदतेऽनेन स्यदोजवे ६४ जवः जुधातोरप् रंहआदयःसवेग गतिवचनाः पंचवेगस्य॥शीघ्रं शिघ्रति व्याप्नोति शिघिआघ्राणे शघ्रादयश्चेतिरंगंतोनिपातः॥त्वरितं त्वर तेस्म इत्वरासंभ्रमे गत्येनिक्तः कर्तरि॥लघु लंघते लघिगतौ कुम त्ययेनलोपः॥क्षिप्रं क्षिपति क्षिपप्रेरणे रक्॥अरं ऋगतौअच् तदुक्तंशाश्वते अरमंगेरथांगस्यशीघ्रशीघ्रगयोरपि॥द्रुतं द्रवतिस्म द्रुगतौ गत्येनिक्तः॥सत्वरं सहत्वरयाव र्तते॥चपलं चोपति चुपमंदायांगतौ कलप्रत्ययेउकारस्यअत्॥तूर्णं॥अविलंबितं विलंबतेस्म लबिअवस्रंसने अकर्मकत्वात्कर्तरिक्तः नञ्समासः॥आशु अश्नुते अ शूव्याप्तौ उण्प्रत्ययः एवमेकादशात्वरितस्य॥तत्रशीघ्रादयस्तद्धर्मवचनाएव अएवशीघ्रंपचतीतिप्रयोगोनतुजवंपचतीति वस्तुतस्तु वेगाख्यागुणपरारंहःप्रभृतयः

स्त्वरसातुरयःस्यदः ६४ जवोथशीघ्रंत्वरितंलघुक्षिप्रमरंद्रुतं॥सत्वरंचपलंतूर्णमविलंबितमाशुच ६५ सततेनारताश्रांतसंततावि॒रतानिशं॥नि त्यानवरताजस्रमप्यथातिशयोभरः ६६ अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरं॥ शीघ्रादयस्तुकालाल्पत्वपराइति ६५ सततं संतन्यतेस्म तनुविस्तारे लो पःसमोवाहिततत‍योः क्तः॥अनारतं आङ्पूर्वेरमिविरामेअविद्यमानंआरतंयस्मिन्॥अश्रांतं श्रमेः क्तः नञासमासः॥संततं ॰ अनिशं नास्तिनिशायस्मिन्॥नि त्यं त्यप्नेः॥अनवरतं नास्त्यवरतंयत्र॥अजस्रं नजस्यति जसुमोक्षणे रप्रत्ययः॥सततमजस्रशब्दावव्ययावपिनित्यपर्यायौस्तः सततंक्रियांतेरव्यवधानं॥अतिशय स्तुपौनःपुन्यंइतिभेदः इतिनवकं॥अतिशयः अतिशेते पचाद्यच्॥भरः भरति भृञ्भरणे पचाद्यच् ६६ अतिवेलं अतिक्रांतंवेलांमर्यादां क्रांताद्यर्थेद्वितीययेतिसमासः॥ भृशं भृशते भृशुभ्रंशुअधःपतने इगुपेतिकः॥अत्यर्थं भृशंअर्थोनिवृत्तिर्विषयोवा तमतिक्रांतमत्यर्थं॥अतिमात्रं मात्रास्तोकंतामतिक्रांतं॥उद्गाढं उद्गाहतेस्म गाहूवि लोडनेक्तः॥निर्भरं निःशेषेणभरोऽत्र॥

तीव्रं तीवति तीवरस्थौल्ये बाहुलकात्रक्॥ एकांतं एकांतोनिश्चयोऽत्रेति ॥ नितांतं नितान्त्यतिस्म तमुकांक्षायांक्तः॥ गाढं बाढं दृढं इमेक्तांताः शीघ्रादि शीघ्रंत्वरितमित्या
रभ्य दृढशब्दपर्यंतंक्लीबेनपुंसकलिंगेयदुक्तंतत्तु असत्वेद्रव्यवृत्तित्वाभावेएवज्ञेयं यथा शीघ्रंकृतवान् शीघ्रंजुहोति भृशंमूर्खः मृशंपाति ६७ एषांशीघ्रादीनांमध्येयत्सत्व
गामिद्रव्यवृत्तितत्त्रिषु तस्यद्रव्यस्ययल्लिंगंतदेवास्येत्यर्थः यथा शीघ्राजरा शीघ्रोमृत्युः शीघ्रंगमनं अतिशयभरयोरसत्ववचनत्वेपिपुंस्त्वमेव पुल्लिंगनिर्देशात् तदुक्तं र
भसे गाढैकांतनितांतानिपुमानतिशयोभरइति क्वचिद्भेद्यगामीतिपाठस्तस्य विशेष्यगामीत्यर्थः॥ कुबेरः कुत्सितंबेरंशरीरंयस्य कुष्ठित्वात् कुत्सायांकुइतिशब्दोयंशरीरंबे
रमुच्यते कुबेरःकुशरीरत्वान्नाम्नातेनैवसोंकितइतिवायुपुराणं यद्वा कुंबति कुबिच्छादने कुंबेर्नलोपश्चेत्येरक्॥ त्र्यंबकसखः त्र्यंबकस्यसखा समासांतः टच्॥ यक्षराट्

तीव्रैकांतनितांतानिगाढबाढदृढानिच ६७ क्लीबेशीघ्राद्यसत्वेस्यात्त्रिष्वेषांसत्वगामियत्॥ कुबेरस्त्र्यंबकसखोयक्षराट्गुह्यकेश्वरः ६८ मनुष्य
धर्माधनदोराजराजोधनाधिपः॥ किन्नरेशोवैश्रवणःपौलस्त्योनरवाहनः ६९ यक्षैकपिंगैलविल

यक्षेषुराजेति क्विप्॥ गुह्यकेश्वरः गुह्यंकायंति गुह्य
कानामीश्वरः ६८ मनुष्यधर्मा मनुष्यस्येवधर्मोऽचारःश्मश्रुलोमत्वादिरस्य धर्मादनिच्॥ धनदः धनंदयते देङ्पालने आतडनिकः॥ राजराजः राज्ञांयक्षाणांराजा रा-
जेतिटच् यक्षेचंद्रेचराजास्यादितित्रिकांडशेषः॥ धनाधिपः धनानामधिपः॥ किन्नरेशः किन्नराणामीशः॥ वैश्रवणः विश्रवसोऽपत्यं शिवादिगणेस्याविश्रवणर
वणादेशौनिपातितौ॥ पौलस्त्यः पुलस्तेर्गोत्रापत्यंपुमान् गर्गादियञ्॥ नरवाहनः नरोवाहनमस्य ६९ यक्षः ईंलक्ष्मीं अक्ष्णोति व्याप्नोति अक्षूव्याप्तौ कर्मण्यण् यक्षते यक्षपूजायां
यजतिशिवं इज्यतेलोकेनवा कर्मणिघञ्॥ एकपिंगः एकंपिंगमस्य॥ ऐडविडः इडविडोऽपत्यं इलयोरेकत्वस्मरणादैलविलोपि इडविलायाअपत्यमितिवाविग्रहः इडविडाअस्तिमात्
त्वेनास्येतिवा॥

श्रीदः श्रियंदयते ददाति वा आत इति कः॥ पुण्यजनेश्वरः पुण्यजनानामीश्वरः सप्तदश कुबेरस्य॥ अस्येति प्रत्येकं संबध्यते अस्य कुबेरस्य उद्यानं चैत्ररथं स्यात् उद्यांति यस्मिन्
अधिकरणे ल्युट् चित्ररथेन निवृत्तं तद्धितोण् एकं॥ अस्य पुत्रो नलकूबरः स्यात् नलः कूबरो युगंधरो यस्य त्रिकांडशेषे तु पुत्रौ तु नलकूबरावित्युक्तं तत्तु नासत्याविनिवत् औप
चारिकं बोध्यं नलकूबरमणिग्रीवयोस्तत्पुत्रयोः पुराणप्रसिद्धत्वात् नलकूबरमणिग्रीवाविति रव्यातौ श्रियाश्चिताविति प्राग्वत् एकं ७० अस्य स्थानं कैलासः केजले लासो ल
सनमस्य केलासः स्फटिकः तस्यायं कैलासः तस्येदं इत्यण् यद्वा केलीनां समूहः कैलं तेन आस्यते भ आस उपवेशने हलश्चेति घञ्॥ अस्य पूर्नगरं अलका अलति भूषयं
ति अलभूषणादिषु क्वुन् क्षिपकादित्वादित्त्वं न॥ अस्य विमानं पुष्पकं पुष्प्यति पुष्प विकसने पुष्पमिव इवार्थे कन् इत्येकैकं॥ किंनरः किंचित्कुत्सितो वा नरः एवं किंपु

श्रीदः पुण्यजनेश्वरः॥ अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूबरः ७० कैलासः स्थानमलका पूर्विमानं तु पुष्पकं स्यात्॥
स्यात्किन्नरः किंपुरुषस्तुरंगवदनो मयुः ७१ निधिर्ना शेवधिर्भेदाः पद्मशंखादयो निधेः॥ ॥इति स्वर्गवर्गः

रुषः॥ तुरंगवदनः तुरंगस्येव वदनमस्य कस्यचिन्नरमुखाश्वकायत्वात् कस्यचिदश्वमुखं नरशरीरत्वात्॥ मयुः मिनोति डुमिञ् प्रक्षेपणे उप्रत्यये मीनातीत्यात्वं न
चत्वारि किन्नरमात्रस्य ७१ निधिः नितरां धीयते धाञः किः नितरां दधाति पोषयत्यनेन निधीयते वा धि धारणे संपदादिः आगमानित्यत्वान्न तुक्॥ शेवधिः शेक
स्यायं मोह्य वा वधिः तत्पुरुष इत्यलुक् इत्याद्यूह्यं द्वे सामान्यनिधेः नाम्नी पुंसि॥ पद्मः पद्मा लक्ष्मीरस्मिन्नस्ति मत्वर्थेच्॥ शंखः तदुक्तं शब्दार्णवे पद्मोऽस्त्रियां
महापद्मः शंखो मकरकच्छपौ मुकुंदकुंदनीलाश्च खर्वश्च निधयो नवेति इत्यादयो निधेर्भेदाः एकैकं इति स्वर्गवर्गः ६ ९

द्यौः द्योतनेइतिद्यौः द्यौः द्युदिवूशब्दः॥अभ्रं आपोअभ्रंतिअस्मात् अपादानेघञ् यद्वा अभ्रनिस्थैर्यंगच्छति अभ्रवभ्रमभ्रमरगत्यार्थाः अच् यद्वा नभ्राजते मृज्वदी मो डः॥व्योम व्ययति व्येञ्संवरणे नामन्सीमन्निनिसाधुः॥पुष्करं पुष्यति पुषपुष्टौ पुषः किन्इतिकरच्॥अंबरं अंबः शब्दः तंराति आनइतिकः॥नभः नह्यते मेघैः णह्बंधने असुन् भादेशः तदुक्तंविश्वे नभोव्योम्निनभामेघेश्रावणेचपतद्ग्रहे घ्राणेमृणालसूत्रेचवर्षासुचनभास्मृतइति॥अंतरिक्षं द्यावापृथिव्योरंतरीक्ष्यते ईक्षदर्शने ह्रस्वः कर्मणिघञ् अंतरीक्षमपि ह्रस्वोनक्रियते॥गगनं गच्छंत्यनेनास्मिन् गुच्छगादेशः॥अनंतं नास्त्यंतोस्य॥सुरवर्त्म सुराणांवर्त्म॥खं खन्यते खनुअवदारणे डः खर्वं त्यस्मिन्निति वा खर्वगतौ १ वियत् विविश्वत एतिव्याप्नोति इणःशतृ वियच्छति यमेःक्विप् नविरमतिवा॥विष्णुपदं विष्णोःपदं आस्पदंस्वरूपंवा आसमंतात्काशंतेसू-

द्योदिवौद्वेस्त्रियामभ्रंव्योमपुष्करमंबरम्॥ नभोंतरिक्षंगगनमनंतंसुरवर्त्मखं १ वियद्विष्णुपदंवातुपुंस्याकाशविहायसी॥विहायसोपिनाकोपिद्युरपिस्यात्तदव्ययं २ "तारापथोंतरिक्षंचमेघाध्वाचमहाबिलं" इतिव्योमवर्गः दिशस्तुककुभः काष्ठा

र्यादयोःस्व कास्मिन्दासो अधिकरणेघञ्॥विहायः विशेषेणहाययति गमयति विमानादीन् हयगतौ ण्यंतादसुन् विजहातिशुवंवा विदुर्विहायसंव्योमपक्षिणश्चविहायसइतिशाश्वतः विहायाः शकुनौपुंसिगगनेपुन्नपुंसकमित्युक्तत्वाच्च॥विहायसः॥नाकः॥द्युः इत्येकोनविंशतिराकाशस्य तत्र द्योदिवौस्त्रीलिंगे आकाशविहायसीक्लीबपुंसोः विहायसनाकोपुंसि द्युरव्ययं अलिंगमित्यर्थः शेषंक्लीबं इतिव्योमवर्गः॥ ॥दिशः दिशत्यवकाशं दिशअतिसर्जने ऋत्विगितिक्विन्॥ककुभः ककते ककलौल्ये बाहुलकादुभः यद्वा कुंवायुंस्कुभ्नाति विस्तारयति स्कुंभुइतिसौत्राद्धातोः क्विप् अत्रपदेपृषोदरादित्वात्स्वलोपः केनादित्येनजलेनवाकुत्सितानिभानिनक्षत्राण्यत्रेति टाप्यस्येइदं॥काष्ठाः काशते क्थन्॥

आशाः आसमंतादश्नुते व्याप्नोति अच्॥ हरितः हरंतितमयंत्यनया इतिः पंचकंदिशां॥ ताः पूर्वदक्षिणपश्चिमाः क्रमेणप्राच्यवाचीप्रतीच्यःस्युः यथा पूर्वादिक्प्राची प्राग्भ्ये प्रशब्दोऽग्र प्रांचति प्राप्नोतिसूर्यं अंचुगतिपूजनयोः ऋत्विगिति क्विन्॥ दक्षिणादिग्वाची अन्होमध्यं अंचत्यस्यां अपाचीइत्यपि स्वामिमते अपांचतिसूर्यं॥ पश्चिमादिक्प्रतीची प्रतिपश्चादिनांतेंचतिसूर्यं एकैकं॥ याउत्तरादिक्साउदीची उद्ध्वंतरत्यत्र तृप्लुवनतरणयोः अधिकरणेऽप् इत्याद्यूह्यं एकं॥ दिश्यं दिग्भवे दिशिभवंतत्रस्यात् दिगादिभ्योयत्प्रत्ययः तन्निषुवाच्यलिंगं यथा दिश्योहस्ती मत्यात्वजस्त्वंन एवंस्त्रियां क्लीबेच १ इंद्रादयोऽष्टौक्रमात्पूर्वादीनांदिशापतयः एकैकं २

आशाश्चहरितश्चताः॥ प्राच्यवाचीप्रतीच्यःस्ताः पूर्वदक्षिणपश्चिमाः॥ उत्तरादिगुदीचीस्यादिश्यंतुत्रिषुदिग्भवे १ “अवागपवमवाचीनमुदीचीनमुदग्भवं॥ प्रत्यग्भवंप्रतीचीनंप्राचीनंप्राग्भवंत्रिषु १ ” इंद्रोवन्हिःपितृपतिर्नैर्ऋतोवरुणोमरुत्॥ कुबेरईशःपतयः पूर्वादीनांदिशांक्रमात् २ ऐरावतः पुंडरीकोवामनःकुमुदोंऽजनः॥ पुष्पदंतःसार्वभौमःसुप्रतीकश्चदिग्गजाः ३ करिण्योऽभ्रमुकपिलापिंगलानुपमाःक्रमात्॥

ऐरावताद्यष्टौ क्रमाद्दिग्गजाः यथा ऐरावतः स्युत्पादितं॥ पुंडरीकः पुंडरीकवर्णयोगात् मत्वर्थेच्॥ वामनः खर्वत्वात्॥ कुमुदः कुमुदंरक्तोत्पलं तत्तुल्यवर्णत्वात् पूर्वोच् कुमुदः कैरवेरक्तपद्मेः स्त्रीकुंभिकोषध्याविल्वकत्त्वात् कौमोदतेवा मुदहर्षे इगुपधेतिकः॥ अंजनः अंजनवर्णत्वात् अच्॥ पुष्पदंतः पुष्पमिवदंतायस्य॥ सार्वभौमः सर्वस्यांभूमौविदितः तत्रविदितइत्यण्॥ सुप्रतीकः शोभनाःप्रतीकाः अवयवाः यस्य सुप्रतीकोदिग्गजेशेभेशोभनावयवेत्रिषु इत्युः० एकैकं ३ अभ्रमुः नभ्राम्यपि अभ्रआकाशएवमातिइतिवा मामाने औणादिकः कुः॥ कपिला कपिलवर्णत्वात्॥ पिंगला पिंगलवर्णत्वात् उभयत्रमत्वर्थे॥ अनुपमा नास्त्युपमायस्याः॥

ताम्रकर्णी ताम्रौकर्णौयस्याः नासिकेतिङीष्॥शुभ्रदंती शुभ्रौदंतौयस्याः उक्तएवङीष्॥अंगना अंगति अभिगतौ युच्॥अंजनावती अंजनमस्त्यस्याः मतौबह्वच इतिदीर्घः क्रमेणऐरावतादीनांहस्तिनीनामैकैकं ४ दिशोर्मध्येदिग्द्वयमध्यभागे अपदिशं क्लीबाव्ययं क्लीबंचलत्वअव्ययंच॥विदिक् दिग्भ्यांविनिर्गता स्त्रियां तदुक्तम-मरमालायां यान्यासामंतरालानिप्रदिशोविदिशश्चताइति ५ अभ्यंतरं अभिगतमंतरं॥अंतरालं अंतरंलाति आतइतिकः आङ्प्रश्लेषोवा हे अंतरावकाशस्य॥च क्रवालं चक्राकारेणवलते वलसंवरणे अन्येषामितिदीर्घः इत्याद्यूह्यं॥मंडलं मंडयति मडिभूषायां कलच् मंडं भूषांलातीतिवा आतानुपेतिकः हे मंडलाकारेणपरिण तसमूहस्य॥अभ्रं अपोबिभर्ति मूलतिकः अभ्रतिवा अभ्रगतौ अच् नञ्भ्रश्यंत्यापोस्मादा डः अभ्रंमेघेचगगनेधातुभेदेचकांचनइत्युक्तत्वात्॥मेघः मेहति मिहि

ताम्रकर्णीशुभ्रदंतीचांगनाचांजनावती ४ क्लीबेव्ययंत्वपदिशंदिशोर्मध्येविदिक्स्त्रियाम् ५ अभ्यंतरंत्वंतरालंचक्रवालंतुमंडलम्॥-
अभ्रंमेघोवारिवाहस्तनयित्नुर्बलाहकः ६ धाराधरोजलधरस्तडित्वान्वारिदोंबुभृत्॥ घनजीमूतमुदिरजलमुग्धूमयोनयः ७ सेचने पचा

द्यच् कुत्वं॥वारिवाहः वारिवहति कर्मण्यण्॥स्तनयित्नुः स्तनयति स्तनगदीदेवशब्दे इत्नुचिणेरय्॥बलाहकः पृषोदरादिः बलाकाभिर्हीयते गम्यते ओहाङ्गतौ कर्मणि कुन् पृषोदरादिः इत्याद्यूह्यं ६ धाराधरः धाराणांजलस्यचधरः धाराधरोसिमेघयोरित्युक्तत्वात्॥जलधरः अच्॥तडित्वान् तडितःसंत्यस्मिन् मतुप् भस्यात्तदः॥ वारिदः वारिददाति कः॥अंबुभृत् अंबुबिभर्ति क्विप्तुक्॥घनः हन्यतेवायुना अपकुर्त्वंच घनंस्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोरित्युक्तत्वात्॥जीमूतः जीवनंज लंमूतंबद्धमनेन मूङ्बंधने पृषोदरादिः जियाववयोहान्यासूतोबद्धइतिवा॥जलमुक् जलंमुंचति मुच्लृमोक्षणे क्विप्॥धूमयोनिः धूमोयोनिरस्य इतिपंचदशमेघस्य ७

कादंबिनी कदंबस्यविकाशः कादंबोऽस्त्यस्याः ॥ मेघमाला द्वेमेघवृंदस्य ॥ मेघभवे अभ्रियं अभ्रेभवं तत्त्रिषु तद्यथा अभ्रियाआपः अभ्रियः धारा संपातः अभ्रिय मुदकं घप्रत्ययः एकं ॥ स्तनितं स्तनगदद्देवशब्दे ॥ गर्जितं गर्जशब्दे ॥ रसितं रसशब्दे रसितादिच इमेक्तेनसाधवः आदिनाध्वनितन्हादरासादयः मयंमेघनिर्घोषे स्यात् ८ शंपा शंस्करवंपिबति कः ॥ शतन्हदा शतंन्हदाअर्चींषि अगाधजलाशयावा संत्यस्याइतिवा ॥ न्हादिनी न्हादते न्हादोस्त्यस्याइतिवा न्हादिनीवज्रत डितोरित्युक्तत्वात् ॥ ऐरावती इराआपः संत्यस्य इरावान् मेघः नस्येयं तस्येदमित्यण् तदंतान्ङीष् ॥ क्षणप्रभा क्षणंप्रभाऽस्याः ॥ तडित् ताडयति तडआघाते ताडे णिलुकृचेतिसाधुः डलयोरभेदात् तलिदपि ॥ सौदा मनी सुदाम्नाअद्रिणाएकदिक्अण् सुदाम्निमेघेभवा सौदामिनीत्यपिपाठः सुदामातुपुमान्वारिधरपर्वतभेदयोरि

कादंबिनीमेघमालात्रिषुमेघभवेऽभ्रियम् ॥ स्तनितंगर्जितंमेघनिर्घोषेरसितादिच ८ शंपाशतन्हदान्हादिन्यैरावत्यःक्षणप्रभा ॥ तडित्सौदा मनीविद्युच्चंचलाचपलाअपि ९ स्फूर्जथुर्वज्रनिर्घोषोमेघज्योतिरिरंमदः ॥ इंद्रायुधंशक्रधनु

त्युक्तत्वात् ॥ विद्युत् विशेषेणद्योतते द्युतदीप्तौ क्वि प् ॥ चंचला चंचुगतौ धञ् चंचंलाति कः चंचलातुतडिल्लक्ष्म्योश्चंचलश्चपलेतलइत्युक्तत्वात् ॥ चपला चोपति चुपमंदायांगतौ चपलाकमलाविद्युत्पुंश्चलीपिप्पलीषु च नपुंसकंतुशीघ्रेस्याद्वाच्यवत्तरलेचलइत्युक्तत्वात् दशविद्युतः ९ स्फूर्जथुः स्फूर्जनं टुओस्फूर्जावज्रनिर्घोषे अथुच् ॥ वज्रनिर्घोषः अशनिशब्दः वज्रनिष्पेष इत्यपिपाठे निष्पेषशब्दः तदुत्थपरः पिष्लृसंचूर्णने संघट्टनमात्रपरइत्यन्ये द्वेवज्रध्वनेः ॥ मेघज्योतिः मेघअन्योन्यसंघट्टनेनमेघाग्निः सूत्यत्वसादौज्योतिः पतति त्यर्थः ॥ इरंमदः इरयाजलेनमाद्यतिदीप्यतेवा उग्रंपश्येरंमदेतिसाधुः अबिंधनत्वात् द्वेमेघज्योतिषः वीजइतिप्रसिद्धस्य ॥ इंद्रायुधं इंद्रस्यायुधं ॥ शक्रधनुः शक्रस्यधनुः

ऋजुरोहितं ऋजुचतद्रोहितंच रोहः संजातोऽस्यइतच् ऋजुअवक्रं तदुक्तंविश्वे रोहितंरुधिरेप्रोक्तंऋजुशक्रशरासने रोहितोमीनमृगयोर्भेदेरोहितकद्रुमइति इति श्रीणिमेघप्रतिफलितारविरश्मयोधनुराकारेणभांतितस्यधनुषः १० वृष्टिः वर्षणं वृषुसेचने क्तिन् ॥ वर्षं द्वयंमेघवर्षणस्य ॥ तद्विघाते वृष्टिविघातेअवग्राहः अवेग्रहे लियञ् पक्षेअप् ॥ अवग्रहः एतद्द्वयंस्यात् ॥ धारासंपातः धाराणांसंपातः संभूयपतनं घञ् ॥ आसारः सरतेर्भावेघञ् तदुक्तंविश्वे आसारःस्यात्प्रसरणेधाराव र्षेसहद्बलइति हेमहारवेः शीकरइत्येकं अंबुकणानां शीकृसेचने अरन् दंत्यादिरप्ययं ११ वर्षोपलः ॥ करका कृणोति कृञ्हिंसायां संज्ञायांवुन् पुंस्यपि तदु

स्तदेवऋजुरोहितं १० वृष्टिर्वर्षंतद्विघातेऽवग्राहावग्रहौसमौ ॥ धारासंपातआसारःशीकरोंबुकणाःस्मृताः ११ वर्षोपलस्तुकरकामेघ च्छन्नेऽह्निदुर्दिनम् ॥ अंतर्धाव्यवधापुंसित्वंतर्द्धिरपवारणं १२ अपिधान तिरोधानपिधानाच्छादनानिच ॥ हिमांशुश्चंद्रमाश्चंद्रइंदुः कुमुदबांधवः १३

क्तं वर्षोपलस्तुकरकाकरकोपिचदृश्यते द्वेयत्प्रथमवृष्टौमेघादिकंकठिनंसदुपलवत्पततितस्य ॥ मेघच्छन्नेऽह्निदुर्दिनं रात्रेरप्युपलक्ष णं ॥ दुर्दिनंजलदध्वांतमितिरत्नकोशः एकं ॥ अंतर्धा ॥ व्यवधा उभयत्राप्यङ् ॥ अंतर्द्धिः अपवारणंस्यात् पुंसि १२ अपिधानं ॥ तिरोधानं ॥ पिधानं ॥ आच्छादनं अ ष्टकमाच्छादनस्य इमेसर्वेल्युटासाधवः ॥ हिमांशुः हिमाअंशवोयस्य ॥ चंद्रमाः चंद्रंकर्पूरंसादृश्येनमातितुलयति माधातोरसुन् सचाडित् चंद्रमाल्हादंमिमीते नि र्मिमीतेइतिवा केवलादसुन् कार्लंमिमीते माश्चासौचंद्रश्च चंद्रमाइतिच ॥ चंद्रः चंदयति चदिआल्हादने रक् हिमांशुश्चंद्रमाश्चंद्रःशशीचंद्रोहिमद्युतिरिति शब्दार्णवः ॥ इंदुः उनत्ति उंदीक्लेदने ॥ कुमुदबांधवः कुमुदानांबांधवः १३

विधुः विशेषेण धयंत्येनं सुराः धेट् पाने बाहुलकात्कुः तदुक्तं विश्वे विधुः शशांके कर्पूरे हृषीकेशे च राक्षसइति॥ सुधांशुः सुधायुक्ता अंशवोयस्य॥ शुभ्रांशुः शुभ्रा अंशवोयस्य॥ ओषधीशः ओषधीनामीशः॥ निशापतिः निशायाः पतिः॥ अब्जः अब्धौ जातः डः॥ जैवातृकः जीवयति अंतर्भावितण्यर्थः आतृकन् तदुक्तं रभसे जैवातृ-कः पुमान्सोमे कृषकायुष्मतोस्त्रिष्विति॥ सोमः अमृतं सूते मन् सूयते जायते इतिश्रुत्युक्तेः सूयते यज्ञांगस्थानं वा करोति सूते अमृतं वा सोमइतिवा षुञ् अभिषवे षूप्रेरणे वेति सोमादि नामन् सीमन् सोमन् इत्यादि॥ ग्लौः ग्लायति ग्लैहर्षक्षये डौः॥ मृगांकः मृगांकोस्य॥ कलानिधिः कलानिधीयंतेत्र डुधाञ् किः १४ द्विजराजः द्विजानां राजा राजेति टच् तदुक्तं विश्वे द्विजराजः शशधरे सौपर्णे नंतभोगिनोनि॥ शशधरः शशस्य धरः॥ नक्षत्रेशः नक्षत्राणामीशः॥ क्षपाकरः क्षपां करोति विशांतिचंद्रस्य

विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः॥ अब्जो जैवातृकः सोमो ग्लौर्मृगांकः कलानिधिः १४ द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः॥ कला तु षोडशो भागो बिंबोस्त्री मंडलं त्रिषु १५ भित्तं शकलखंडे वा पुंस्यर्धोर्धं समेंशके॥

चंद्रमंडलस्य षोडश भागः कलासंज्ञः कलयति कलसंख्याने पचाद्यच् कल्यते वा एकं॥ बिंबः बिंबेति शोभते वीगत्यादौ तदुक्तं हेमे बिंबं तु प्रतिबिंबे स्यान्मंडले बिंबिकाफलइति॥ मंडलं मंडयति मडी भूषायां तदुक्तं विश्वे स्यान्मंडलं द्वादशराजके च देशे च बिंबे च कदंबके च कुष्ठभेदे प्युपसूर्यकेपि भुजंगभेदे शुनि मंडलः स्यादिति द्वे रविचंद्रमंडलस्य १५ भित्तादि चतुष्कं शकलस्य तत्र भित्तं भिद्यते स्म॥ शकलं शकोति शक्यते वा शक्लृ शक्तौ कलच् तदुक्तं विश्वे शकलं त्वचि खंडे च रागवस्तुनि वल्कलइति॥ खंडं खंड्यते कर्मणि घञ् खडि भेदने एते उभे क्लीबपुंसोः वर्तेते॥ अर्धः पुंस्येव यथा कंबलस्यार्धः खंडः वाच्यलिंगोपि यथा अर्धशाटी अर्धः पटः अर्धपटं अर्धमित्येकं समे विभागे नपुंसकमेव ऋधु वृद्धौ करणे घञ्॥

चंद्रिका चंद्रोऽस्त्यस्याः ठन् अतइनिठनौ ॥ कौमुदी कुमुदानामियं अण् ॥ ज्योत्स्ना ज्योतिरस्त्यस्यां निपात्यते तदुक्तंविश्वे ज्योत्स्नानंचांतरेऽपिस्यात्ज्योत्स्नायुक्तनिशास्मृ-
तेति अयंचंद्रप्रभायां ॥ प्रसादः भावेघञ् प्रसीदतिस्म गत्यर्थेनिक्तः ॥ प्रसन्नता प्रसन्नस्यभावः पदद्वयंनैर्मल्यस्य १६ कलंकः कंब्राह्मणंकलयति हीनतांगमयति ज्ञापय-
तिवा लकिगतौ अण् ॥ अंकः अंक्यतेनेन अकिलक्षणे घञ् ॥ लांच्छनं लांछ्यतेनेन तदुक्तं हैमे लांछनंलक्ष्मचिन्हयोरिति ॥ चिन्हं चाहयति चाह्यतेऽनेनवा चहपरिक-
ल्कने कन् चिन्हंलक्ष्मपताकयोरितिहैमः ॥ लक्ष्म लक्षणं लक्षयति लक्षदर्शनांकनयोः मनिन् षट्कं चिन्हस्य ॥ सुषमेत्येकंपरमायाः शोभायाः परमा शोभा शोभतेऽनया
अकर्तरीतिकर्मणिघञ् ॥ कांतिः क्तिन् ॥ द्युतिः द्योततेऽनया द्युतदीप्तौ इन् ॥ छविः छ्यति छिनत्ति असारमितिवा छोछेदने छिदिरद्वैधीकरणे चत्वारिशोभामात्रस्य १७ अवश्या

चंद्रिकाकौमुदीज्योत्स्नाप्रसादस्तुप्रसन्नता १६ कलंकांकौलांछनंचचिन्हंलक्ष्मचलक्षणं ॥ सुषमापरमाशोभाशोभाकांतिर्द्युतिश्छविः १७ अव
श्यायस्तुनीहारस्तुषारस्तुहिनंहिमं ॥ प्रालेयंमहिकाचाथहिमानीहिमसंहतिः १८ शीतंगुणेतद्वदर्थाःसुषीमःशिशिरोजडः ॥ तुषारःशीतलः
शीतोहिमःसप्तान्यलिंगकाः १९

यः अवश्यायते शैत्यमापाद्यते श्यैङ्गतौ णः ॥ नीहारः निन्हियते हृञ्हरणे घञ् ॥ तुषारः तोषयति आरन् ॥ तुहिनं तोहति तु
हिरदुहिरअर्दनेऽपितुह्योन्ह्रस्वश्चेतिइनन् ॥ हिमं हंति हिनोति वर्द्धते हिगतौवृद्धौ ॥ प्रालेयं प्रलीयते ऽचेति ॥ महिका मह्यते महपूजायां मिहिकेतिपाठे मिहसेचने सप्त
हिमस्य ॥ हिमानी ङीष्आनुक् ॥ हिमसंहतिः हेमहतोहिमस्य एवंउक्तलिंगाःअवश्यायादयः १८ शीतशब्दः नपुंसकलिंगकः गुणेस्पर्शविशेषेएवभवति नतुगुणिनि ॥
सुषीमः सुषिमइत्यपि ॥ शिशिरः ॥ जडः ॥ तुषारः ॥ शीतलः ॥ शीतः ॥ हिमः एतेसप्ततद्वदर्थाः तद्वान्शीतगुणवानर्थोयेषांतेऽन्यलिंगकाः विशेष्यलिंगाः तुषारहिमश
ब्दौनिरूढलक्षणयागुणिन्यपिवर्तेतेइत्युभयत्रपठितौ १९

ध्रुवः ध्रुवति स्थिरोभवति ध्रुगतिस्थैर्ययोः अच् डित्वाद्गुणाभावः ध्रुवःशंखेहरेविष्णौवटेचोत्तानपादजे वसुयोगभिदोः पुंसिध्रुवंरवेजस्रतर्कयोरित्युक्तत्वात्॥औत्तानपादिः उत्तानपादस्यापत्यं अतइञ् ३ध्रुवस्य॥अगस्त्यः अगंविंध्यंस्त्यायति आतोनुपेतिकः अगस्तिरपि अगमस्यतीति तदुक्तंशब्दार्णवे अथागस्त्यः कुंभयोनिरगस्तिः कलशीसुतइति॥कुंभसंभवः कुंभात्संभवोऽस्य॥मैत्रावरुणिः मित्रावरुणयोअपत्यं मैत्रावरुणोऽपि अण् और्वशेयागस्त्यमैत्रावरुणास्त्वाग्निमारुताइतिनाममालात् ३णिअगस्त्यस्य॥अस्यैवसधर्मिणी पत्नी लोपामुद्रास्यात् नमुदंराति आतइतिकेनलोपः अमुद्रालोपे धर्मलोपेअमुद्रा ह्यर्थेनत्वमतइत्यर्थः समानोधर्मोऽस्त्यस्याः इनिः सादेशः एकं २० नक्षत्रं ॠषति ॠषीगतौ सप्रत्ययेषस्यकः॥ॠक्षं भं भानि डः तदुक्तंएकाक्षरे भंनक्षत्रेगभस्तौस्त्रीपुंसिस्याद्रघुनंदने त्वमरोक्तः प्र

**ध्रुवऔत्तानपादिःस्यादगस्त्यः कुंभसंभवः॥मैत्रावरुणिरस्यैवलोपामुद्रासधर्मिणी २० नक्षत्रमृक्षंभंतारातारकाप्युडुवास्त्रियां॥दाक्षायण्योऽश्विनीत्यादितारा अश्वयुगश्विनी २१ राधाविशाखापुष्येतु**

कीर्तिनइति॥तारा तरंत्यनया भिरादिः नक्षत्रेनेत्रमध्येचतारास्यात्तारइत्यपीतिव्याडिः नक्षत्रेचाक्षिमध्येचतारकंतारकापिचेतिविश्वः॥उडु स्त्रीनपुंसकयोः अपिशब्दात्तारकापितथा उडुः उडू उडवइत्यादि धेनुवत् यद्वा उक्तोधंडयते उनाशंकनाडीयतेवा उमत्ययः तदुक्तंहैमे उसंबुद्धौरुषोक्तौचशिववाचीह्नव्ययं उमशेडुतिषट् नक्षत्रमात्रस्य॥अश्विनीत्यादितारः सप्तविंशतितारकाः दाक्षायण्यउच्यंते दक्षस्यापत्यानि उदीच्यामिनिफिञ् एकं॥अश्वयुक् अश्वंयुनक्ति क्विप्॥अश्विनी अश्वः अश्वरूपमस्त्यस्याः इनिः द्वेअश्विन्याः २१ राधा राध्नोतिकार्यमनया राधसंसिद्धौ गुरोश्चहलः इत्याद्यूहां॥विशाखा विशाखति शाखृव्याप्तौ अच् विशाखोयाचकेस्कंदेविशाखाभेकटिल्लुकेइतिहैमः द्वे॥ पुष्यः पुष्णातिकार्याणि पुष्यसिइतिक्यप्॥

सिद्ध्यः मासनक्षत्रयोर्भेदे सिद्ध्यंत्यस्मिन् ॥ तिष्यः तुष्यंत्यस्मिन् तुषतुष्टौ सूर्यंतिष्येतिसाधुः अयंपुष्ये ॥ श्रविष्ठा श्रवणंश्रवः प्रसिद्धः श्रवोऽस्त्यस्याः मतुप् इष्ठन् ॥ धनिष्ठा एव मतिशयेनधनवती साश्रविष्ठयासमेत्यन्वयः द्वेधनिष्ठायाः ॥ प्रोष्ठपदाः प्रोष्ठोगौः तस्येवपादायासां ॥ भाद्रपदाः पूर्वद्वे उत्तरेद्वे च एवंचतुःसंख्याकत्वात् बहुत्वं स्त्रियः स्त्री लिंगाः स्यः २२ मृगशीर्षं आकृत्यामृगस्यशीर्षमिव ॥ मृगशिरः मृगःशिरोऽस्य रूपभेदात्क्लीबत्वं ॥ आग्रहायणी अग्रेहायनमस्याः मार्गशीर्षमारभ्यवर्षप्रवृत्तेः स्वार्थे ष्ण् आग्रहायणीपौर्णमासी तद्योगान्नक्षत्रमपितथा अयंमृगशीर्षस्य ॥ तच्छिरोदेशे या पंचतारकानिवसंति ताः इल्वलाः इलस्वप्नेक्षेपणेच वलच् इल्वकाइतिपाठेतु इल्वंति प्रीणयंति इन्विव्याप्तोप्रीणनेच एकं २३ बृहस्पतिः बृहतांपतिः तत्बृहतोरितिसाधुः ॥ सुराचार्यः सुराणामाचार्यः ॥ गीष्पतिः कस्कादिः गिरांपतिः ॥ धिषणः

सिद्ध्यतिष्यौश्रविष्ठया ॥ समाधनिष्ठाःस्यःप्रोष्ठपदाभाद्रपदाःस्त्रियां २२ मृगशीर्षंमृगशिरस्तस्मिन्नेवाग्रहायणी ॥ इल्वलास्तच्छिरोदेशेतारकानिवसंतियाः २३ बृहस्पतिःसुराचार्योगीष्पतिर्धिषणोगुरुः ॥ जीवआंगिरसोवाचस्पतिश्चित्रशिखंडिजः २४

प्रशस्ताधिषणा

स्य अर्शआद्यच् यद्वा धृष्णोति ञिधृषाप्रागल्भ्ये अत्रपक्षेक्यः धिषादेशः ॥ गुरुः गृणात्युपदिशति गृशब्दे कृग्रोरुच्चेतिकुः उत्वादेशः तदुक्तंहैमे गुरुर्म हत्यांगिरसेपित्रादौधर्मदेशके अलघौदुर्जरेचापीति ॥ जीवः जीवयति अच् मृतसंजीवनमंत्रज्ञत्वात् तदुक्तंहैमे जीवःस्यात्त्रिदशाचार्ये द्रुमभेदेशरीरिणीति ॥ आंगिरसः अपत्यार्थेअण् ॥ वाचस्पतिः पतिशब्देपरेसत्वविधानादलुक् ॥ चित्रशिखंडिजः तदुक्तंहारावल्यां ऋषयःसप्तधामद्भिः स्मृताश्चित्रशिखंडिनइति तदंतर्ग तादंगिरसोजातत्वाच्चित्रशिखंडिजोजातः नवबृहस्पतेः २४

श्रीरामचंद्रायनमः श्रीगोपालकृष्णायनमः श्रीपार्वतीरमणा०

शुक्रः शोचति शुक्रशोके रक् माहेश्वरशुक्रद्वारानिर्गतत्वात् ॥ दैत्यगुरुः ॥ काव्यः कोतुमवश्यमाख्यातुमर्हः ओरावश्यकेइतिण्यत् कवेरपत्यं कुर्वादिभ्योण्यइतिवा ॥ उशनाः वशेः कनसिः ॥ भार्गवः भृगोरपत्यं ऋष्यण् ॥ कविः कुवते अचइः षट्कं शुक्रस्य ॥ अंगारकः अंगति ईर्यति पीनत्वात् कर्मण्यण् अंगारइव इवार्थेकन् अंगतिवा अगिगतौ ॥ कुजः कोः पृथिव्याः जातः ॥ भौमः भूमेरपत्यं अपत्यर्थेअण् भौमोमंगलदैत्ययोरितिहैमः ॥ लोहितांगः लोहितानि अंगानियस्य ॥ महीसुतः मह्याः सुतः पंच मंगलस्य ॥ २५ ॥ रौहिणेयः रोहिण्या अपत्यं ढक् रौहिणेयोभवेद्बलेरेवतीरमणेबुधइतिविश्वः ॥ बुधः बुध्यते इगुपेतिकः ॥ सौम्यः सोमइव शाखादिः त्रयंबुधस्य ॥ सौरिः सूरस्यार्कस्यापत्यं इञ् सौरोपि इदमर्थेण् ॥ शनैश्चरः शनैश्चरति पचाद्यच् पंगुत्वात् शनिसौरिशनैश्चराइतिरभसाच्छनिरपि शनैश्चरेमंदइति वाचस्पतिः द्वे ॥

शुक्रोदैत्यगुरुःकाव्यउशनाभार्गवःकविः ॥ अंगारकःकुजोभौमोलोहितांगोमहीसुतः २५ रौहिणेयोबुधःसौम्यः
समौसौरिशनैश्चरौ ॥ तमस्तुराहुःस्वर्भानुःसैंहिकेयोविधुंतुदः २६ सप्तर्षयोमरीच्यत्रिमुखाश्चित्रशिखंडिनः ॥

तमः अस्तत् ताम्यति तमांसिगुणतिमिरसैंहिकेयाइतित्रिकांडशेषः अदंत पुल्लिंगोपि पचादिः स्वर्भानुस्तुतमोराहुरितिपुंस्कांडे रत्नकोशामरमालयोर्दर्शनात् ॥ राहुः रहति गृहीत्वात्यजति चंद्रार्कौ रहत्यागेण्वादिः ॥ स्वर्भानुः स्वराकाशेविपरीतलक्षणयाभाति ॥ सैंहिकेयः सिंहिकायाअपत्यं स्त्रीभ्योढक् ॥ विधुंतुदः विधुंतुदति ॥ तुदव्यथने विध्वरुषोस्तुदः पंचराहोः ॥ मरीच्यत्रिमुखाः सप्तर्षयश्चित्रशिखंडिसंज्ञाः चित्रःशिखंडः चूडाविशेषोस्त्येषामितिव्युत्पत्त्याप्रत्येकंसप्तापिचित्रशिखंडिनः एकं मुखशब्दात्पुलहपुलस्त्यादयःसप्तर्षयःज्ञेयाः सप्तचते दिक्संख्येतिसमासः तेच मरीचिरंगिराअत्रिःपुलस्त्यःपुलहःक्रतुः वसिष्ठश्चेतिसप्तैतेज्ञेया

श्चित्रशिखंडिनः ॥

राशीनामुदयोलग्नमित्युच्यते अश्नुवते व्याप्नुवंति अशव्याप्तौ इण् प्रत्यये रुट् लगति ष्ठक्वौ निसूत्रे लग्नेतिनिपात्यते फले लग्नं राश्युदये क्लीबं सक्तलज्जितयोस्त्रिषित्युक्तत्वा त् एवं ॥ तेतुमेषवृषादयः स्युः मेषोवृषो मिथुनं कर्कटः सिंहकन्यके तुलाच वृश्चिकोधन्वमकरः कुंभमीनकौ २७ सूरः सुवति प्रेरयति कर्मणिलोकं षूप्रेरणे क्रन् शूरो पि तत्र शवति शूगतौ क्रनिदीर्घश्च तदुक्तंविश्वे शूरश्चारुभटे सूर्येइति शूरयतीतिवा शूरविक्रांतौ अच् ॥ सूर्यः सरति सृगतौ सुवतिप्रेरयतिकर्मणि लोकानितिवा षू प्रेरणे राजसूयेतिनिपातः सूर्योः कर्पणेतपनेरुभातुनार्योषधीभिदोरित्युक्तं ॥ अर्यमा इयर्ति श्वन्नुक्षन्पूषन्नितिनिपानितः ॥ आदित्यः अदितेरपत्यं दित्यदित्यैनिण्यः द्वादशात्मा द्वादशात्मानोमूर्तयोयस्य ॥ दिवाकर. दिवादिनंकरोति दिवाविभेतिटः एवंभास्करादिषु ॥ ब्रध्नः तिमिरंबध्नाति बंधबंधने नक्ब्रधादेशः ॥ प्रभाकरः । विभा

राशीनामुदयोलग्नंतेतुमेषवृषादयः २७ सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः ॥ भास्कराहस्करब्रध्नप्रभाकर
विभाकराः २८ भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ॥ विकर्तनार्कमार्तंडमिहिरारुणपूषणः २९

करः २८ भास्वान् भासः संत्यस्य मतुप् ॥ विवस्वान् विविधंवस्ते आच्छादयति वसआच्छादने क्विप् विवोरश्मिः अस्यास्तीति मतुपितसोऽइति मत्वात् नरुत्वं ॥ सप्ता श्वः सप्ताश्वायस्य ॥ हरिदश्वः हरितोऽश्वायस्य हरिल्लक्षणं इंद्रनामसूक्तं ॥ उष्णारश्मिः उष्णारश्मयोयस्य ॥ विकर्तनः विशेषेणकर्तनंयस्य विश्वकर्मणायंत्रोल्ली- ढत्वात् विकर्तयति भक्तरोगानितिवा कृतीछेदने ण्यंतात्ल्युट् ॥ अर्कः अर्च्यते अर्चपूजायां कर्मणिघञ् कुत्वं यद्वा अर्च्यते अर्कस्तवने ॥ मार्तंडः मृतेंडेभवः श कंध्वादिः मार्तंडः क्रोडसूर्ययोः ॥ मिहिरः मेहति मिहसेचने किरच् मिहिरः सूर्यबुद्धयोः मीहिरइत्यपि ॥ अरुणः ऋच्छति उनन् ॥ पूषा पुष्णाति पुषतिवा पुषपुष्टौ पुषद्व- द्वौवा श्वन्नितिनिपातितः २९

द्युमणिः दिवोमणिरिव दिवउल्॥तरणिः तरंत्यनेनसंसारं तरतेरनिः तदुक्तंरभसे तरणिर्द्युमणौपुंसिकुमारीनौकयोःस्त्रियामिति॥मित्रः मेद्यति ञिमिदास्नेहने क्त्रन्॥ चित्रभानुः चित्राभानवोऽस्य चित्रभानुःपुमान्वैश्वानरेचाहस्करेपिचेत्यः॥विरोचनः विरोचते रुचदीप्तौ अनुदात्तेतश्चेतियुच् विरोचनःमल्हादस्यतनयेऽर्केग्निचंद्रयोरित्युक्तत्वात्॥विभावसुः विभैवसूयस्य तदुक्तं विभावसुःपुमान्सूर्येहारभेदेचपावकेइति॥ग्रहपतिः ग्रहाणांपतिः॥त्विषांपतिः अलुक् सत्वविधानात्ज्ञापकात्॥अहर्पतिः अन्हःपतिः अहरादीनांपत्यैतिवारेफः ३० भानुः भाति॥हंसः हंति हंतेःसः॥सहस्रांशुः सहस्रमंशवोयस्य॥तपनः तपतेर्ल्युट् तपनोरुष्करेपिस्या

द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः॥विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ३० भानुर्हंसः सहस्रांशुस्तपनःसवितारविः॥ "कर्मसाक्षीजगच्चक्षुर्लोकबंधुस्त्रयीतनुः॥प्रद्योतनोदिनमणिःखद्योतोलोकबांधवः १ इनोभगोधामनिधिश्चांशुमाल्यब्जिनीपतिः॥" माठरः पिंगलोदंडश्चंडांशोःपारिपार्श्वकाः ३१

द्भास्करेनिरयांतरे तापयतिवा ण्यंतात्ल्युट् तापनोपि तपनस्तापनोरविरितिसंसारावर्तात्॥ सविता सूयति षूप्रेरणे तृच्॥रविः रूयते स्तूयते रवतेवा रुशब्दे रुङ्गतौवा अच्इः समभिंशत्सूर्यस्य॥माठरः मठति पचाद्यच् सएवमाठः मठमदनिवासयोःमठस्यापत्यमितिवा शिवाद्यण् आदिवृद्धिः मठत्यनेनमठः तंराति रादाने आतइतिकेऽभ्य्यणिवृद्धिः मठरस्यापत्यमितिवा॥पिंगलः पिंगलोवर्णोस्यास्ति अर्शआद्यच् पिंगंवर्णंलातिवा कप्रत्ययः॥दंडः दंडोस्यास्ति दंडयतीतिवा मत्वर्थेच् कृत्वतोतु पचाद्यच् इतिचंडांशोः॥पारिपार्श्वकाः पार्श्वेइति परिपार्श्वं परिपार्श्ववर्तंते विभक्त्यर्थेव्यधीभावात्ठक् उक्तंसौरतंत्रे शक्रोस्यवामपार्श्वेतुदंडारव्योदंडनायकः वन्हिस्तुदक्षिणेपार्श्वेपिंगलोवामभागतः यमोऽपिदक्षिणेपार्श्वेभवेन्माठरसंज्ञयेति एकैकं ३१

सूर्यसूतः सूर्यस्यसूतः॥ अरुणः अरुणोवर्णोस्यास्ति मत्वर्थेअच्॥ अनूरुः अविद्यमानावूरूयस्य॥ काश्यपिः कश्यपस्यापत्यं बाह्वादित्वादिञ्॥ गरुडाग्रजः गरुडस्याग्रजः पंचसूर्यसारथेः॥ परिवेषः परितोविष्यतेःनेन विष्लृव्याप्तौ घञ् परिवेषःस्यात्परिधौपरिवेष णइतिमूर्धन्यांतेरुद्रः परिवेशोपि विशप्रवेशने वेष्टनेपरिवेशः स्याद्भानोश्चविधुमंडले इतितालव्यांतेरभसः॥ परिधिः परिधीयतेःनेन उपसेनिकिः॥ उपसूर्यकं उपगतंसूर्यं उपसूर्यं प्रादिसमासेस्वार्थेकः॥ मंडलं मंडने मडिभूषायां कलच् मंडलंपरिवेशश्चपरिधिश्चोपसूर्यकमितिभागुरिः परिवेषसाहचर्यात्परिधिःपुंसि चत्वारिचंद्रसूर्ययोरुत्पातादिजातमंडलस्य ३२ किरणः कीर्यते कॄविक्षेपे क्यः॥ उस्रः वसंनिरसाअस्मिन वसनिवासे रक्प्रत्ययेसंप्रसारणं॥ मयूखः माङः ऊखप्रत्ययेमयादेशः॥ अंशुः अंशयति अंशविभाजने चुरादेर्मृगेनिसूत्रेणकुः

सूर्यसूतोरुणोःनूरुःकाश्यपिर्गरुडाग्रजः॥ परिवेषस्तुपरिधिरुपसूर्यकमंडले ३२ किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः॥ भानुःकरोमरीचिःस्त्रीपुंसयोर्दीधितिःस्त्रियां ३३

यतउक्तंविश्वे अंशुर्लेशेरवौरश्माविति॥ अंशुः सूत्रादिसूक्ष्मांशेकिरणेचंडदीधितौ॥ गभस्तिः गम्यतइतिगः डप्रत्ययेविलोपः ज्ञेयवर्गः नंबभस्ति दीपयति भसभर्त्सनदीप्त्योः क्तिच्॥ घृणिः जिघर्ति घृक्षरणदीप्त्योः घृसेचनेवा घृणिपृश्नीतिनिप्रत्ययेगुणाभावः॥ धृष्णिः धृष्णोति -ञिधृषाप्रागल्भ्ये वृष्णिरितिपाठे वृषुसेचने पृश्निरितिपाठेतु स्पृशति पृषुसेचनेवा एभ्योनित्यप्रत्ययेगुणाभावः॥ भानुः भाति॥ करः कीर्यते कॄविक्षेपे कर्मणिअप्॥ मरीचिः म्रियतेतमोःस्मिन् मृङ्प्राणत्यागे इचिप्रत्ययः मरीचिःस्त्रीपुंसयोः द्वयोर्मरीचिःकिरणोभानुरुस्रःकरःपदमितिशब्दार्णवः मरीचिर्मुनिभेदेनागभस्तावनपुंसकमितिमेदिनीच॥ दीधितिः दीधीते दीप्यते दीधीङ्दीप्तिदेवनयोः क्तिच् नितुत्रेतिनेट्निषेधः अग्रहादीनामितिनिषेधात्यीवर्णयोरितीकारलोपः दीधितिः स्त्रियामितिलिंगानुशासनात् काकाक्षिन्यायेनदीधितिरित्यत्रस्त्रियामितिसंबध्यते उत्तरत्रापि एकादशकिरणानां ३३

प्रभा प्रभाति आतइतिकः॥ रुक् क्विप्॥ रुचिः रोचते रुचदीप्तौ इन् सचकित् रुचिर्दीप्तौचशोभायामभिष्वंगाभिलाषयोरिति॥ त्विट् त्वेषति त्विषदीप्तौ क्विप्॥ भा भादीप्तौ दशिग्रहणात् डः ग्रप् भाशुभ्यलंकृतौदीप्तौस्त्रियांभाः किरणेद्युतावितिनानार्थरत्नमाला भा विश्वपावत् सांतच्छेदे भासृदीप्तौ क्विप्॥ छविः छ्यति छिनत्तिवातमः॥ द्युतिः द्योततेनया द्युतदीप्तौ इन् सचकित् इत्याद्यूह्यं दीप्तिः दप्यतेनया दिपीदीप्तौ क्तिन्॥ रोचिः रोचतेऽनेन रुचदीप्तौ इस्॥ शोचिः इस् तत्रदीप्त्यं तानिस्त्रियांस्युः रोचिः शोचिः सांतेक्लीबे रोचिः रोचिषी रोचींषि एवं शोचिः॥ प्रकाशः॥ द्योतः उभयत्रभावेकरणेवाघञ् इत्येकादशप्रभामात्रस्य॥ प्रकाशः द्योतः आतपः अच् इतित्रयंसूर्यप्रभायाइत्येके ३४ कोष्णं ईषदुष्णं ईषदर्थेइतिकादेशः॥ कवोष्णं॥ मंदोष्णं मंदंचतदुष्णंच॥ कदुष्णं चत्वारिईषदुष्णस्य तत्र

स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः॥ रोचिःशोचिरुभेक्लीबेप्रकाशोद्योतआतपः ३४ कोष्णंकवोष्णंमंदोष्णंकदुष्णंत्रिषुतद्वति॥
तिग्मंतीक्ष्णंखरंतद्वन्मृगतृष्णामरीचिका ३५ इतिदिग्वर्गः कालोदिष्टोप्यनेहापि कवोष्णंकदुष्णइतिकवकत् आदेशाभ्यांसाधू तद्वति धर्मिणि

त्रिषुवाच्यलिंगमित्यर्थः इदंधर्मपात्रेरुपभेदात्क्लीबत्वे॥ तिग्मं तिजेर्मक्॥ तीक्ष्णं स्नक् उभयत्रकुत्वं तदुक्तंरभसे तीक्ष्णंसामुद्रलवणेविषहोहाजिमुष्कके क्लीबंयवाग्रकेपुंसि तिग्मार्थत्यागिनोस्त्रिषु॥ खरमिंद्रियंराति अभिभवति रादाने आतइतिकः तद्वत्कोष्णंधर्मेक्लीबंधर्मिणित्रिषु त्रीणि अत्युष्णस्य॥ मृगतृष्णा मृगाणांतृष्णास्त्यस्यां अर्शआद्यच्॥ मरीचिका मरीचिरिव इवेप्रतिकन् द्वयंमृगजलस्य॥ मरुदेशादौसिकतासु प्रतिच्छुरिताः सूर्यकिरणाः जलाकारेणभ्रांतेरित्यर्थः ३५ इतिदिग्वर्गः कालः कल्यते कलसंख्यानेशब्देच कर्मणिघञ् कलयतिसर्वमितिवा ण्यंतादच् कालोमृत्यौमहाकालेसमयेयमकृष्णयोरितिकोशांतरात्॥ दिष्टं दिशति दिशअतिसर्जने क्तिच् क्तो इतिक्तः दिष्टंदैवेपुमान्कालेइतिकोशांतरात्॥ अनेहा नाहंतिनागच्छति नाहन्यतइतिवा सांतः असुन्प्रत्ययांतत्वात्॥

समयः सम्यगेति इण्गतौ पचाद्यच् चत्वारिकालस्य ॥ अथ पक्षतिः पक्षात्तिरितिसाधुः ॥ प्रतिपत् इमेद्वेप्रथमातिथेः स्तः तदाद्याः प्रतिपदाद्यास्तिथयः स्युः पक्षस्यमूलं त दुक्तंकोशांतरे पक्षतिस्तुभवेत्पक्षमूलेन्चप्रतिपत्तिथाविति प्रतिपद्यतेउपक्रम्यतेअनयामासादिः अतसातत्यगमने इथिन् पृषोदरादिः तिथिशब्दस्तुद्वयोः स्त्रीपुंस- योः पक्षतिप्रतिपच्छब्दौतुस्त्रियामेव १ घस्रः घसत्यंधकारं घस्लृअदने स्फायितंचीतिरक् घस्रस्तुदिवसोहिंस्रे इत्युक्तत्वात् ॥ दिनं दीयते क्षीणंभवति दीङ्क्षये दि वादिः नकिबाहुलका न्हस्वः ॥ अहः नञिजहातेरितिकनिन् ॥ दिवसः दीव्यंत्यत्र असच्प्रत्ययः ॥ वासरः वासयति वसेर्ण्यंतादरः तदुक्तंकोशांतरे वासरस्तुपुमान्नागप्र भेददिनयोरपीति पंचदिवसस्य ॥ प्रत्यूषः प्रत्यूषति रुजतिकामुकान् ऊषरुजायां इगुपेतिकः प्रत्यूषोहर्मुखेवसौ इत्युक्तत्वात् प्रत्युषइत्यन्यत्र उषः प्रत्युषसिक्लीबं

समयोप्यथपक्षतिः ॥ प्रतिपद्द्वे इमेस्त्रीत्वेतदाद्यास्तिथयोद्वयोः १ घस्रोदिनाहनीवातुक्लीबेदिवसवासरौ ॥ प्रत्यूषोहर्मुखंकल्यमुषःप्रत्युषसी अपि २ प्रभातंचदिनांतेतुसायंसंध्यापितृप्रसूः ॥

वंपितृप्रसांचयोषितीत्युक्तत्वात् ॥ अहर्मुखं अन्होमुखं शेसाःपिइतिरः ॥ कल्यं कलयतिचेष्टां कलेर्यक् का ल्यमप्यन्यत्र प्रज्ञाद्यणिसाधुः तदुक्तं कोशांतरे कल्यंप्रभातंक्लीबंस्यात्कल्योवाग्श्रुतिवर्जिते सज्जनीरोगदक्षेषुकल्याणवचनेपिच उपायवचनेपिस्यात्त्रिषुमध्येतुयोषि ति ॥ उषः ओषत्यंधकारं उषदाहे उषःकिदित्यसिः ॥ प्रभातं षड्कंप्रभातस्य कल्यंतालव्यांतं भातुंप्रवृत्तंप्रभातं आदिकर्मणिक्तः ॥ दिनांतः दिनस्यांतः स्यतिसमापय- तिदिनं सायः स्यतेःशाद्ध्वेतिणः सायःकांडेदिनांतेचेतिकोशांतरात् एकंदिनांतस्य ॥ संध्या सम्यक्ध्यायंत्यस्यां ध्यैचिंतायां आतश्चोपसर्गे संध्यापितृप्रसूनद्यंतरयो र्युगसंधिष्वित्युक्तत्वात् अन्यत्रापिसंधीयतेशुसंधीयतेस्यां दधातेरङ् तदुक्तंशब्दार्णवे संध्यापितृप्रसूसंधाइति ॥ पितृप्रसूः पितृन्प्रसूते क्विप् द्वेसंध्यायाः ॥

माण्हः अपराण्हः मध्यान्हादयः समासांताः हविअन्हादेशेणत्वं ॥ त्रिसंध्यं तिसृणांसंध्यानांसमाहारस्त्रिसंध्यं पक्षेत्रिसंध्यी आवंतोवेतिस्त्रीत्वं एकं दिनाद्यंतमध्या नि ॥ शर्वरी शृणातिचेष्टाः शृहिंसायां ष्वरचिडीष् तदुक्तंकोशांतरे शर्वरीयामिनीस्त्रियोरिति शार्वरीइत्यपिपाठः शब्दार्णवेउक्तं शर्वरीशार्वरीशर्येति मज्ञाद्यणिसा धुः ३ निशा नितरांश्यति तनूकरोतिव्यापारान् शोतनूकरणे आतश्चोपसर्गेइतिकः निशादारुहरिद्रायांस्यात्त्रियामाहरिद्रयोरितिकोशांतरात् ॥ निशीथिनी निशी थोःस्त्यस्यां मत्वर्थेइनिः ॥ रात्रिः रातिसुखं रादाने राशदिभ्यांत्रिप् अन्यत्रपाठेरात्री तदुक्तंशब्दार्णवे रात्रीरात्रिस्तमस्विनीति ॥ त्रियामा त्रयोयामायस्याः यद्वा त्रीन् धर्मादीन्यापयति निरवकाशीकरोति काममधानत्वात् अंतर्भावितण्यर्थात्यातेर्मन् ॥ क्षणदा क्षणमुत्सवंनिव्यापारस्थितिंवाददाति क्षणदोत्पणकेरात्रौक्षणदाक्षण

प्राह्णापराह्णमध्यान्हास्त्रिसंध्यमथशर्वरी ३ निशानिशीथिनीरात्रिस्त्रियामाक्षणदाक्षपा ॥ विभावरीतमस्विन्योरजनीयामिनीतमी ४ त मिस्त्रातामसीरात्रिर्ज्योत्स्नीचंद्रिकयान्विता ॥

दंजलइत्युक्तत्वात् ॥ क्षपा क्षपयतिचेष्टां क्षैक्षये ण्यंतात्भितः अच् ॥ विभावरी विभातिनक्षत्रादिभिः क्वनिप् तदुक्तंकोशांतरे विभावरीनिशाराव्योः कुट्टन्यांवक्रयोषिति ॥ तमस्विनी तमोस्त्यस्यां ॥ रजनी रजंत्यनुरक्ता भवंनिरागिणोः स्यां क्षिपेःकिच्चेतिचादनिः अन्यत्ररजनिरपि र जनीनीलिनीरात्रिहरिद्राजतुकासुचेत्युक्तत्वात् ॥ यामिनी निंदितायामायस्याः निंदायांइनिः भीतिहेतुत्वात् ॥ तमी नाम्यंत्यस्यां तमुग्लानौ इन्डीष् तमिःपक्षेकृदिकारा दितिङीषभावे पचाद्यचि तमापि द्वादशरात्रेः ४ या नामसी तमोयुक्ताराभिःसा तमिस्त्रास्यात् तमोबहुलं अस्तियस्यां ज्योत्स्नादित्वादण् तामसीनिशिदुर्गायांतामसो भुजगेरवगेइत्य॰ ॥ तमिस्त्रा ज्योत्स्नातमिस्त्रेतिसाधुः तमिस्त्रंतिमिरेकोपेपुंसिस्त्रीतुतमस्ततौ कृष्णपक्षनिशायांचेत्य॰ एकं ॥ याचंद्रिकयाचंद्रप्रकाशेनान्विताथुक्तारा त्रिः साज्योत्स्नी ज्योत्स्ना अस्तियस्यां प्राग्वत् ज्योत्स्नाचंद्रमसः प्रभेत्यक्त॰ ॥

आगामिवर्तमानेअहनीयुक्तेयस्यामितिबहुव्रीहिः पूर्वापरदिनाभ्यांयुक्तायांरात्रौपक्षिणी तदुक्तंकोशांतरे आगामिवर्तमानाहर्युक्तरात्रावपिपक्षिणीति एकंनाम ५ बह्व्यो
निशाः गणरात्रंस्यात् गणानांबह्वीनांरात्रीणांसमाहारः एकं रात्रिसमुदायस्य॥ प्रदोषः दुष्यति दुषवैकृत्ये पचाद्यच् मारंभोदोषायाः प्रादिसमासः प्रारब्धादोषायस्मि
न्निति दोषेत्यव्ययमप्यस्ति नक्तंदोषाचरजनावित्युक्तत्वात्॥रजनीमुखं रजन्यामुखमिव द्वेरात्रेः पूर्वभागस्य॥ अर्धरात्रः निशीथः स्यात् निशेरतेऽस्मिन् शीङ् स्वप्ने
निशीथयोपी येनिथक् निशीथस्तु पुमानर्द्धरात्रेस्यादपिमात्रकइत्युक्तत्वात् द्वेरात्रिमध्यमभयस्य॥ यामः याति यामापणे मन् तदुक्तंकोशांतरे यामस्तुपुंसिप्रहरे
संयमेपिमर्दार्नेनइति॥ प्रहरः प्रन्हियते दंडादिरस्मिन् पुंसिसंज्ञेतिघः द्वे अहोरात्राष्टमांशस्य ६ प्रतिपत्पंचदश्योर्यदंतरंसंधिः स्यात् तदुक्तंरुद्रे दर्शप्रतिपदोः सं

आगामिवर्तमानाहर्युक्तायांनिशिपक्षिणी ५ गणरात्रंनिशाबह्व्यः प्रदोषोरजनीमुखं॥ अर्धरात्रनिशीथौद्वौद्वौयामप्रहरौसमौ ६ सपर्वसं
धिः प्रतिपत्पंचदश्योर्यदंतरं॥ पक्षांतौपंचदश्यौद्वेपौर्णमासीतुपूर्णिमा ७ कलाहीनेसानुमतिः पूर्णेराकानिशाकरे॥ धोग्रंथिप्रस्तावयोरपि

पर्वकांडेविजानीयादित्युक्तप्रतिप्रपीति संधिमभिनीयजेनेत्यादौप्रसिद्धः मएव पर्वसंधिरित्येकंनाम॥ द्वे अमापूर्णिमेपक्षांतौ पक्षस्यांतौ॥ पंचदश्यौ पंचदशी
अमापि॥ पौर्णमासीतु पूर्णिमास्यात् एकंनाम पूर्णः मासोऽस्यां स्वार्थेणिङीप् यद्वा माश्चंद्रः पूर्णोमाः तस्येयं पूर्णचंद्रस्यपूरणंतेननिर्वृत्तापूर्णिमा भावप्रत्ययां
तात्तेननिर्वृत्तमित्यर्थेइमप् द्वे श. कृ. पक्षांत्यतिथावित्यर्थः ७ सापूर्णिमा कलाहीनेचंद्रेसतिअनुमतिरित्युच्यते एकं अनुमन्यतेअनुमतिः क्तिच् तदुक्तं अथानु
मतिरूनेंदुपूर्णिमानूनयोरपि सैवपूर्णिमैव पूर्णेनिशाकरेसति राका रातिशर्मणी एकं तदुक्तंश्रुत्यां यापूर्वापौर्णमासीसाऽनुमतिर्योत्तरासाराकेति॥ ७

अमावास्या अमासहवसतोस्यांचंद्रार्कौ॥अमावस्या अमावस्यदित्विसाधू॥दर्शः दृश्यते शास्त्रेणेति पुंसीतिथः कृष्णपक्षांत्यतिथेः चत्वारिनामानि॥अमाव
सी अमावासी अमामासी तदुक्तंशब्दार्णवे अप्यमावस्यमावासीचामामास्यप्यमामसीति नामैकदेशेनामग्रहणेअमापि ८ साअमावास्यादृष्टेंदुश्चेत् सिनी
वालीस्यात् दृष्टइंदुर्यस्यां सिनीचंद्रकलासाअस्तियस्यां मत्वर्थेइनिः सिनींवलति कर्मण्यण् ङीप् एकं॥उदयेअमायोगात् नष्टेंदुकलाअमाकुहूः नष्टाइंदुकलाय
स्यां कुहयति कुहविस्मापने कूप्रत्ययः तदुक्तंकोशांतरे कुहूःस्त्रीकोकिलालापनष्टेंदुकुलदर्शयोरिति एकं तदुक्तंश्रुत्यां यापूर्वाऽमावास्या सिनीवाली योत्तरा-
साकुहूरिति अयमर्थः चतुर्दश्याअंतिमप्रहरः अमावास्यायाअष्टौप्रहराश्चेति नवप्रहरात्मकश्चंद्रक्षयकालःशास्त्रप्रसिद्धः तत्राद्यप्रहरद्वयेचंद्रस्यसूक्ष्मता अंतिम

अमावास्यात्वमावस्यादर्शःसूर्येंदुसंगमः ८ सादृष्टेंदुःसिनीवालीसानष्टेंदुकलाकुहूः॥उपरागोग्रहोराहुग्रस्तेत्विंदौचपूष्णिच ९ सोपप्लवोपरक्तौ
द्वावग्न्युत्पातउपाहितः॥एकयोक्त्यापुष्पवंतौदिवाकरनिशाकरौ १०

प्रहरद्वयेकृत्स्नक्षयः अतोऽमावास्यायाआद्यप्रहरःसिनीवालीसंज्ञः अंत्यप्रहरद्वयंकुहू
संज्ञं मध्यमप्रहरपंचकंदर्शसंज्ञमिति राहुग्रस्तेइंदौपूष्णिचतस्यग्रासस्यउपरागः तदुक्तंकोशांतरे उपरागस्तुपुंसिस्याद्राहुग्रासेर्कचंद्रयोः दुर्नयेग्रहकल्लोलेव्यसनेपिनिगद्य
ते ग्रहोनिग्रहनिर्बंधग्रहणेष्वुरणोद्यमे सूर्यादौपूतनादौचसैंहिकेयोपरागयोरिति द्वेग्रहइति॥सोपप्लवः सहोपप्लवेन बहुव्रीहौसहस्यसः॥उपरक्तः उपरज्यतेस्म भूतेक्तः
इतिद्वेराहुग्रस्तस्येंदोः सूर्यस्यवा॥अग्न्युत्पातः॥उपाहितः अग्नेरुत्पातः उपआसन्नमाहितंफलंयस्य इतिद्वेवह्निकृतोपसर्गस्य धूमकेत्वाख्यस्यो त्पातस्यच एकयो-
क्त्याः पृथग्वचनेन पुष्पवंताविन्युक्तौसूर्याचंद्रमसौज्ञेयौ एकयोक्त्येतिवचनात्पुष्पवंतइति पुष्पवानितिवासूर्यः चंद्रोवा नक्तव्यः यथारोदसीइत्येकयोक्त्या द्यावापृ

थिव्यौ उच्येते पुष्पवंतशब्दोमतुबंतोः कारांतश्च अदंतपक्षेबाहुलकात् झच् अवंतइतिपुष्पशब्देच शकंध्वादित्वात् पररूपम् १० अष्टादशनिमेषाः अष्टादश अक्षि स्पंदकालाः यदा भवंतितदा एकाकाष्ठा स्यात् काशते काष्ठादारुहरिद्रायांकालमानप्रकर्षयोः स्याद्दिशिस्थानमात्रेचकाष्ठमाख्यातमिद्रियइतिविश्वः ॥ त्रिंशत्काष्ठाः यदाभवंतितदा एकाकला कलयति कलसंख्याने ॥ ताः कलाः त्रिंशद्यदा भवंतितदा एकः क्षणः क्षणोति क्षणुहिंसायां क्षणःसर्वोत्सवेऽपस्यात्तथामानेप्यनेहसः ॥ तेक्षणाः द्वादशयदाभवंति तदाएकोमुहूर्तः अस्त्रियां ११ तेयदा त्रिंशन्मुहूर्त्ताभवंति तदाएकोः होरात्रः अहश्चरात्रिश्चतयोः समाहारः रात्र्यान्हाहाः पुंसि इति अयमेवविग्रहः साधुः अन्यथा अजभावप्रसंगात् ॥ तेः होरात्राः पंचदशासंख्याकाः यदा भवंति तदापक्षः पक्ष्यते पक्षपरिग्रहे कर्मणिघञ् तदुक्तंविश्वे

अष्टादशनिमेषास्तुकाष्ठात्रिंशत्तुताः कला ॥ तास्तुत्रिंशत्क्षणस्तेतुमुहूर्तोद्वादशास्त्रियां ११ तेतुत्रिंशदहोरात्रः पक्षस्तेदशपंचच ॥
पक्षौपूर्वापरौशुक्लकृष्णौमासस्तुतावुभौ १२ द्वौद्वौमाघादिमासौस्यादृतुस्तैरयनंत्रिभिः ॥ अयनेद्वेगतिरुदग्दक्षिणार्कस्यवत्सरः १३

पक्षोमासार्धकेगेहपार्श्वसाध्यविशेषयोः केशादेः परतोवृंदेबलेसखिसहाययोः चुल्लीरंध्रेपतत्रेचराजकुंजरपार्श्वयोः पूर्वापरौशुक्लकृष्णौ पक्षौज्ञेयौ तौपक्षौ एकः मासः मस्यतेपरिमीयतेयमनेन कर्मणिकरणेवाघञ् यतःशुक्लादिक्रमेणप्रायशोमासप्रवृत्तिः सातुचांद्रमानेन १२ माघादिमासौद्वौद्वौ एकः ऋतुः इयर्ति ऋच्छतिवा अर्तेश्चेतितुः त्वात्कित्वं सचहेमंतादिसंज्ञकइत्यर्थः माघादिशब्दस्तुअयनारंभपरः तैः त्रिभिः ऋतुभिः अयनंस्यात् अयतेः कर्तरि अयगतौ ल्युट् तद्द्वेधा अर्कस्यउदग्गतिः उत्तरायणं दक्षिणागतिः दक्षिणायनं एवंअयनद्वयंवत्सरः स्यात् १३ ७ ७ ७

समरात्रिंदिव कालेतुलामेषावच्छिन्ने तुलासंक्रांतौमेषसंक्रांतौच विषुवत् ॥ विषुवं रात्रिश्चदिवाचरात्रिंदिवं तत्समंयस्मिन् विषुनानारूपंगमनंतदस्यास्तीति विषुमा स्येव्ययंततोमतुप् संज्ञायामितिषत्वं विषुणोपि विषुवं विषुवान्रात्रिवासरइति पुंस्कांडेबोपालितः रात्रिंदिवशब्दअचतुरविचतुरेत्यादिनासाधुः ॥ पुष्ययुक्ता पुष्य नक्षत्रयुक्तापौर्णमासीपौषीप्रोक्ता सापौषीयस्मिन्मासेस्यात् समासः नाम्नापौषः सास्मिन्पौर्णमासीतिइत्यण् मघायुक्तापौर्णमासीयत्रससमाघः सआद्योयेषां ते परेपौषादन्येएकादशमासाएवंयुक्तरीत्याज्ञेयाः एकैकं ॥ मार्गशीर्षः मार्गशीर्षीपौर्णमासीअस्मिन् अण् ॥ सहाः ॥ मार्गः ॥ आग्रहायणिकः अग्रेहायनमस्याः त तःस्वार्थेण् आग्रहायणीसास्तियत्रेत्यर्थेण् चत्वारिमार्गशीर्षस्य १४ पौषः पुष्ययुक्तापौर्णमास्यस्मिन् ॥ तैषः तिष्येणयुक्तापौर्णमास्यस्मिन् प्राग्वदण् ॥ सहस्यः

समरात्रिंदिवेकालेविषुवद्विषुवंचतत् ॥ "पुष्ययुक्तापौर्णमासीपौषीमासेतुयत्रसा ॥ नाम्नासपौषोमाघाद्याश्चैवमेकादशापरे १"
मार्गशीर्षेसहामार्गआग्रहायणिकश्चसः १४ पौषेतैषसहस्यौद्वौतपामाघेथफाल्गुने ॥ स्यात्तपस्यःफाल्गुनिकःस्याच्चैत्रेचैत्रिकोमधुः १५

सहसिबलेसाधुः तत्रसाधुरितियत् त्रीणिपौषस्य ॥ तपाः तपंत्यस्मिन् असुन् तदुक्तंहैमे तपश्चांद्रायणेधर्मेपुमान्शिशिरमाघयोरिति ॥ माघः मघयायुक्तापौर्णमास्यस्मि न् प्राग्वदण् द्वेमाघस्य ॥ फाल्गुनः फलेगुकुचेत्युनन् ततः स्वार्थेण्वृद्धिः ॥ तपस्यः ॥ फाल्गुनिकः फलतिनिष्पादयति फलनिष्पत्तौ तदुक्तंगोवर्धनानंदे फल्गुनस्त्वर्जुने मासेनक्षत्रेफल्गुनीस्मृतेति फाल्गुनस्त्वर्जुनेमासेफाल्गुनीचास्यपौर्णिमेतिधरणिश्च फल्गुनीभिर्युक्तापौर्णमासीसास्मिन्नस्ति विभाषाफाल्गुनीतिठक् तपसिसाधुः तदुक्तं तपस्यसंज्ञमासेतत्पूर्णिमायांतुफाल्गुनी इति त्रीणि ॥ चैत्रः चित्रयायुक्तापौर्णमास्यस्मिन् ॥ चैत्रिकः विभाषाफाल्गुनीतिठक् ॥ मधुः मनज्ञाने फलिपाटीत्युः धश्चांतादेशः मधुपुष्परसेक्षौद्रेमद्येनातुमधुद्रुमे वसंतदैत्ययोश्चैत्रेस्याज्जीवंत्यांतुयोषितीति त्रीणि चैत्रस्य १५

वैशाखः विशाखयायुक्ता पौर्णमास्यस्मिन् सास्मिन्पौर्णमासीत्यण्॥ माधवः मधुमकरंदः सोस्मिन्नस्ति मधोर्अर्चेतिञः॥ राधः राधाविशाखवात्तद्युतीपौर्णमासीराधी सास्मिन्न-
स्ति अण्प्राग्वत्॥ त्रीणि॥ ज्येष्ठः॥ शुक्रः तदुक्तं त्रिकांडशेषे शुक्रःस्याद्भार्गवेज्येष्ठेमासेवैश्वानरेपुंमानिति॥ विरहिणः शोचंत्यस्मिन् शुच्शोके ऋज्रेंद्रेतिरन्चस्यकुः द्वे
॥ शुचिः शोचंतिविरहिणोऽस्मिन् इगुपधात्इतीन्॥ आषाढः आषाढयायुक्तापौर्णमास्यस्मिन् अण्प्राग्वत् तदुक्तंरुद्रे आषाढोयतिनांदंडेमासेमलयपर्वतइति स्या
दाषाढेत्सपादकइतिशब्दार्णवश्चेति द्वे॥ श्रावणः श्रवणेनयुक्ताश्रावणीपौर्णमासीयस्मिन् सास्मिन्इत्यण् तदुक्तंहैमे श्रावणोमासिपाषंडेदध्यात्यांश्रावणामतेति
॥ नभाः विरहिणोनभ्यंतिनभ्नति नभंतेवा नभहिंसायां धनुर्धरेभिधुनसः क्लीबंव्योम्निपुमान्घने ग्राणश्रावणवर्षास्वबिसतंतोपतद्रुहइत्युक्तत्वात्॥ श्रावणिकः

वैशाखेमाधवोराधोज्येष्ठेशुक्रःशुचिस्त्वयं॥ आषाढेश्रावणेतुस्यान्नभाःश्रावणिकश्चसः १६ स्युर्नभस्यप्रोष्ठपदभाद्रभाद्रपदाःसमाः॥ स्यादा
श्विनइषोप्याश्वयुजोपिस्यात्तुकार्तिके १७ बाहुलोजौकार्तिकिको

विभाषाफाल्गुनीश्रवणेतिवक् त्रीणि १६ नभस्यः नभाःअ
स्यंतत्रसाधुः यत्॥ प्रोष्ठपदः प्रोष्ठपदाभिर्युक्ताप्रोष्ठपदी सास्मिन् सास्मिन्नित्यण्॥ भाद्रः भद्राभिर्युक्ताभाद्री सास्मिन्॥ भाद्रपदः भद्रपदाभिर्युक्ताभाद्रपदी सा
स्मिन् चत्वारि नवत्रीणिअणंतानि॥ आश्विनः अश्विन्यायुक्तापौर्णमास्यस्मिन्॥ इषः इषगतौ संपदादिः ततोमत्वर्थेच्॥ आश्वयुजः अश्वयुजायुक्तापौर्णमास्यस्मि
न् अश्विनोऽश्वयुजश्चेषइत्यमरमाला त्रीणि॥ कार्तिकः कृत्तिकाभिर्युक्तापौर्णमास्यस्मिन् अत्राप्यण् १७ बाहुलः बहुलाःकृत्तिकाः तदण् तद्युतश्च यस्मिन्॥ ऊर्जः
ऊर्जयति उत्साहयतिजिगीषून् ण्यंतादच् तदुक्तंहैमे ऊर्जःस्यात्कार्तिकेबलइति॥ कार्तिकिकः विभाषफेतिवकिआदिवृद्धिः चत्वारि॥ ७ ७

अथऋतूनाह हेमंतः एकः हिनोति वर्द्धयति बलं हिगतौ वृद्धौ च झच् अंतादेशे नुट् गुणः॥ शिशिर इत्यन्यः शशप्लुतगतौ शशंति धावंति यस्मिन् पथिकाः अजिरशिशिर इति निपातः तदुक्तं विश्वे शिशिरः स्यादृतोर्भेदे तुषारे शीतले त्रिषु वदिति सचास्त्रियां एकैकं॥ वसंतः वसंत्यत्र मदनोत्सवाः वसतेर्झच् अंतादेशः॥ पुष्पसमयः स्पष्टं॥ सुरभिः सुष्टु रभंते रभसयुक्ता भवंत्यत्र रभराभस्ये इन् त्रीणि॥ ग्रीष्मः ग्रसते रसान् ग्रस अदने मक् ग्रीआदेशे षुक् ग्रीष्म ऊष्मर्तुभेदयोरित्युक्तत्वात्॥ उष्मकः ऊषति रुजति ऊषरुजायां अन्येभ्य इति मनिन् यवादित्वात्कन् मकि अदंतः ऊष्मकः १८ निदाघः नितरां दह्यंते ऽत्र दह भस्मीकरणे हलश्चेति घञ् न्यंक्वादित्वात्कुत्वं निदाघो ग्रीष्मकाले स्यादुष्णस्वेदांबुनोरपि॥ उष्णोपगमः उष्णं उपगमं अत्र॥ उष्णः ओषति उषदाहे नक् तदुक्तं मेदिन्यां उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिंगक इति॥ ऊष्मागमः ऊष्मातापः आगमोऽत्र उषरुजायां मनिन् ऊष्मापि ऊष्मातपनिदाघयोरिति नानार्थे बोपालितः॥ तपः तपति पचाद्यच् तपोकारांतः पुंसि इति समग्रं ग्रीष्मस्य॥ प्रावृट् वर्षणं वृट् प्रकृष्टा वृड् अत्र वृषु सेचने नहिवृतीति दीर्घः॥ वर्षाः वर्षं वर्षणं अत्रास्ति मत्वर्थे अच् हे वर्षर्तोः तत्र प्रावृट् शब्दः षांतः स्त्रियां वर्षाशब्दस्तु स्त्रीलिंगो नित्यं बहुवचनांतः॥ शरत्स्त्रियां एकं शीर्यंते ऽस्यां पाके नौषधयः शॄ हिंसायां शॄदृभसोऽदिः भागुरिमते टापि शरदा च तदुक्तं विश्वे शरद्वत्सरशरदा प्रावृट् प्रावृषया सहेति १९ अमी हेमंतादयः षडपि ऋतवः मार्गादीनां मार्गशीर्षादिमासानां युगैः युग्मैः क्रमात्स्युः पुंसि च॥ संवत्सरः संवसंत्यृतवोऽत्र वसनिवासे सरप्रत्ययः सस्य तः॥ एवं वत्सरोऽपि॥ अब्दः आप्यते आप्लृ व्याप्तौ दन् प्रत्यये न्हस्वत्वं च तदुक्तं अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमानिति॥

हेमंतः शिशिरोः स्त्रियां॥ वसंते पुष्पसमयः सुरभिर्ग्रीष्म उष्मकः १८ निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः॥ स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत् स्त्रियां १९ षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात्॥ संवत्सरो वत्सरोऽब्दो

हायनः हश्चेतिण्युट् तदुक्तं हायनोनस्त्रियांवर्षेपुंस्यब्धिव्रीहिभेदयोरिति तत्रहायनांताअस्त्रियां॥शरत् शृणाति शॄहिंसायां शागवत्॥समाः स्त्रियांबहुत्वेच समां-समांविजायतइतिसूत्रात्समायांसमायामितितत्रभाष्याच्चेतिएकत्वंदृश्यते तथा सहमांतिसहवर्तंतेऋतवोऽस्यामिति माम्माने बिदादित्वंकल्पनीयं उक्तंच समाः संवत्सरेस्त्रियामिति २० नृणांमासेनपितॄणामेकः अहोरात्रः स्यात् अहश्चरात्रिश्चेतिसमाहारद्वंद्वे अहःसर्वैतिअच्रात्रान्हेतिपुंस्त्वं तत्र शुक्लपक्षोऽहः कृष्णोरात्रिः॥तथा नृणांवर्षेण देवानामयंदैवोऽहोरात्रः उत्तरायणंदेवानांदिनं दक्षिणायनंरात्रिः मानुषाणांयच्चतुर्युगंतद्दैवंयुगंज्ञेयं एवंदेवानांयुगसहस्रद्वयेन ब्रह्मणोऽयंब्राह्मोऽहोरात्रः अयंनिष्कर्षः उक्तदेवताहोरात्राणांषष्ट्यधिकैस्त्रिभिरहोरात्रशतैर्दिव्यंवर्षं दिव्यैर्द्वादशभिर्वर्षसहस्रैर्मानुषंचतुर्युगं तच्चदेवानामेकंयुगं तत्सहस्रंब्रह्मणोदिनं

हायनोऽस्त्रीशरत्समाः २० मासेनस्यादहोरात्रः पैत्रोवर्षेणदैवतः॥दैवेयुगसहस्रेद्वेब्राह्मःकल्पौतुतौनृणां २१ मन्वंतरंतुदिव्यानांयुगानामेकसप्ततिः॥संवर्तःप्रलयःकल्पःक्षयःकल्पांतइत्यपि २२

नतुभूतानांस्थितिकालः तावत्येवरात्रिर्भूतानांप्रलयकालइति॥अतः नृणांतौद्वेदैवेयुगसहस्रेकल्पौक्तः कल्पयतःस्थितिंप्रलयंच कृपूसामर्थ्ये पर्यंतात्पचाद्यच् कल्पःशास्त्रविधौन्यायेसंवर्तेब्रह्मणोदिनइत्युक्तं० २१ दिव्यानांयुगानांयाएकसप्ततिः एकाधिकासप्ततिः साचकिंचिदधिकेतिबोध्यं तन्मन्वंतरं मनोरंतरमवकाशइतिविग्रहः तैश्चतुर्दशभिर्ब्रह्मणोदिनंभवतीत्यर्थः एकं॥संवर्तः संवर्ततेजगदत्र हलश्चेतिघञ् तदुक्तंहैमे संवर्तःप्रलयेस्कद्राविति॥प्रलयः प्रलीयतेऽत्र लिङ्श्लेषणे एरच् एवमेव कल्पः कल्पते विरुद्धलक्षणयाक्षीयतेऽत्र पुंसीतिघः तदुक्तं कल्पोविकल्पेकल्पाद्रौसंवर्तेब्रह्मवासरे शास्त्रेन्यायेविधाविति हेमचंद्रात्॥क्षयः क्षीयंतेप्राणिनोऽत्र क्षिक्षये एरच्॥कल्पांतः कल्पस्यांतोऽवधिः पंचप्रलयस्य

पंकं पच्यते दुःखमनेन पचिव्यक्तीकरणे विस्तारे वा करणे घञ् पकोर्थे कर्दमः इति हैम ॥ पाप्मा आप्नोति व्याप्नोति लोकान् आप्लृ व्याप्तौ नामन् सीमन्निति सूत्रेण निपातितः ॥ पापं पात्यस्मादात्मानं पा रक्षणे पानीविपः यद्वा पिबति भक्षयति कर्तारं पापाने ॥ किल्बिषं कलयति क्रीडयति विषयेषु किलश्वैत्यक्रीडनयोः टिषच् बुगागमश्च ॥ कल्मषं कलयति वशीकरोति कलं स्व्याने कल्मषेनि पृषोदरादिः नदुक्तं कलुषं त्वाविलेपापे किल्बिषं पापरोगयोरित्यु॰ ॥ वृजिनं वृज्यते वृजी वर्जने इनच् नदुक्तं कोशांतरे वृजिनं कल्मषे क्लीबं केशेना कुटिले त्रिष्विति ॥ एनः एत्यधोऽनेन एतिगच्छति प्रायश्चित्तेनवा इण् गतौ असुन् नुडागमः ॥ अघं अधिगतो पचादिः अघं दुःखेव्यसनेनसोरिनि हैमः ॥ अंहः अमति गच्छति अमगत्यादिषु यद्वा अहति अहि गतौ असुन् ॥ दुरितं दुष्टमितगमनमनेन ॥ दुष्कृतं दुष्टं कृतकरणम्

अस्त्री पंकं पुमान्पाप्मा पापं किल्बिषकल्मषं ॥ कलुषं वृजिनैनोघमंहो दुरितदुष्कृतं २३ स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ॥ मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः २४ स्यादानंदथुरानंदः शर्मशातसुखानि च ॥

नेन इदं दुष्कृतिषत्वं नप्रपंकं क्लीबपुंसोः पाप्मान कारांतः पुंसि द्वादश २३ धर्मं धरति विश्वं धृञ् धारणे अर्तिइत्यादिनामन् नदुक्तं रभसे धर्मोः स्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ अहिंसोपनिषन्न्याये धनायुर्यमसोमपद्दति ॥ पुण्यं पुनाति पुनातेर्यत् णुदृह्रस्वश्च ॥ श्रेयः अतिशयेन प्रशस्तं प्रशस्यस्य श्रः ईयसुन् नदुक्तं श्रेयो मुक्तौ शुभे धर्मे निप्रशस्ते च वाच्यवदिति ॥ सुकृतं सुष्ठुकृतं ॥ वृषः वर्षति फलं वृषु सेचने इगुपधकिः एतेषु धर्ममस्त्रियां पच सुकृतस्य ॥ मुत् ॥ प्रीतिः प्रीञ् तर्पणे ॥ प्रमदः मदी हर्षे अप् प्रमदः संमदे मतइत्यु॰ ॥ हर्षः हृष तुष्टौ घञ् ॥ प्रमोदः ॥ आमोदः उभयत्र घञ् ॥ संमदः पुंसीति घः २४ आनंदथुः द्वितोथुच् ॥ आनंदः शृणात्यशुभं शॄ हिंसायां मनिन् ॥ शर्म श्यति दुःखं शो तनूकरणे तन् ॥ शातं दंत्यादिर्वा ॥ सुखं शोभनानि खान्यनेन एतेषु द्वादश नामसु प्रीति साहचर्यान्मुदपि स्त्रियां दकारांतः ॥

श्वः श्रेयसं श्व आगामि श्रेयोऽत्र श्वसोवसीयः श्रेयसः इत्यच् ॥ शिवं शेतेनेन शीङ् स्वप्ने निपातनात् ह्रस्वश्च तदुक्तं विश्वे शिवं च मोक्षे क्षेमे च महादेवे सुखे जले शि वो योगांतरे वेदे गुग्गुलौ बालके हरे पुंडरीके द्रुमे कीले इति ॥ भद्रं भंदते भदि कल्याणे रन् तदुक्तं हेमचंद्रे भद्रः शिवे खंजरीटे वृषभे च कदंबके करिजातिविशेषेनाक्लीबं मंगलमुस्तयोरिति भद्रं भद्रं शिवं तथेति त्रिकांडशेषश्च ॥ कल्याणं कल्ये प्रातः काले अण्यते अण शब्दे अकर्तरीति घञ् वा कल्याणं हेम्नि मंगल इत्युक्तत्वात् ॥ मंगलं मंग ति मंग्यते वा मगि सर्पणे मंगेरलच् ॥ शुभं शोभते शुभ शोभायां इगुपेति कः शुभो योगे शुभं भद्रे इत्यु० २५ भावुकं भवनशीलं लषपतपद इत्युकञ् भूप्राप्तौ ॥ भविकं भव त्येवन् भवो भद्रमिस्ति तयोरित्यजयः ॥ भव्यं भव्यगेयेति यत् भवो भद्रमिरत्रास्ति ॥ कुशलं कुत्सितं शलते संवृणोति शल चलने च पचाद्यच् ॥ क्षेमं क्षपत्यशु

श्वःश्रेयसंशिवंभद्रंकल्याणंमंगलंशुभं २५ भावुकंभविकंभव्यंकुशलंक्षेममस्त्रियाम् ॥ शस्तंचाथत्रिषुद्रव्येपापंपुण्यंसुखादिच २६ मत ल्लिकामचर्चिकाप्रकांडमुद्धतल्लजौ ॥ प्रशस्तवाचकान्यमू

भं क्षिक्षये मन् अस्त्रियामिति क्षेमशस्तमात्रान्वयि ॥ शस्तं शस्यतेस्म शंसुस्तुतौ क्तः अदितोवे तिनेट् द्वादश कल्याणमात्रस्य पापपुण्यशब्दौ सुखादिशब्दाश्च श्वःश्रेयसादिशिवभद्रशस्तांतशब्दजातं द्रव्ये विशेष्ये वर्तमानं त्रिषुवाच्यलिंगमिति बोध्यं तत्र पापास्त्री पुण्यो घटः श्वःश्रेयसं गांगं जलं इत्यादि २६ मतल्लिका मतं अलति ण्वुल् क्वुन् वा पृषोदरादित्वादस्य लः प्रशस्तः कुलालः कुलालमतल्लिका ॥ मचर्चिका प्रशस्तः दंडः दंड मचर्चिका मंथांसुं चर्चति ण्वुल् ॥ प्रकांडं प्रशस्तः घटः घटप्रकांडं प्रगतं कांडं अवसरो ऽस्मात् रसो वा ॥ उद्धः प्रशस्तः दंडः दंडोद्धः संघोद्धोद्ध इति साधुः उद्धो हस्तपुटे वन्हौ श्लाघायां देहजानिल इति हेमः ॥ तल्लजः लजति पचाद्यच् तद्वत् लजः प्रशस्ता मृत् मृत्तल्लजः पंच प्रशस्तवाचकानि स्युः एते पंच नित्यं द्रव्ये एव लिंगांतरेण सामानाधिकर

पर्येपिस्वलिंगंनत्यजंति मतल्लिकादीनांरूढिशब्दत्वात्प्रशंसावचनैश्चेतिकृष्णसर्पवाप्यश्वादिवदेतेनित्यसमासाः प्रकांडः पुंस्यपि अस्त्रीप्रकांडोविटपेतरुस्कंधप्रशस्तयो
रितिरभसः तदुक्तंचमेदिन्यां प्रकांडोनस्त्रीविटपेमूलशाखांतरेतरोः॥ अयः एत्यनेनसुखं इण्गतौ घः शुभावहोविधिरुच्यते शुभंआवहति पचादिः दैवमित्यर्थः अ
योकारांतः एकं २७ दैवं देवादागतं ततआगतइत्यण्॥दिष्टं दिश्यते उपदिश्यतेस्म कर्मणिक्तः॥भागधेयं भागेतिधेयः॥भाग्यं भज्यते भजसेवायां ण्यत् कुत्वं भाग्यंक
र्मशुभाशुभं॥नियतिः स्त्री नियम्यतेऽनया क्तिन् नियतिर्नियमेदैवेइतिविश्वः॥विधिः पुंसि विधीयतेऽनेन उपसर्गेघोः किः डुधाञ् धरणपोषणयोः॥ हेतुः हिनोति व्याप्नो
ति कार्यं हिगतौ कमिमनीतितुन्॥कारणं पर्यंतात्करणेल्युट् कार्यतेऽनेन॥ बीजं विशेषेणजायतेऽनेन यद्वा बीजयते व्येञ्संवरणे डेदीर्घः इत्यादिप्रकारः इत्याद्यूह्यं हेतु

न्ययः शुभावहोविधिः २७ दैवंदिष्टंभागधेयंभाग्यंस्त्रीनियतिर्विधिः॥ हेतुर्नाकारणंबीजंनिदानंत्वादिकारणं २८ क्षेत्रज्ञआत्मापुरुषःप्र
धानंप्रकृतिःस्त्रियां॥

र्ना प्रथंहेतुमात्रस्य॥निदानंतु आदिकारणंस्यात् नितरांदीयते साधारणतयाजन्यतेऽनेन डुधाञ् कर्मणिल्युट् निदानंकारणेशुद्धौ
तपसांफलयाचने आदिर्मुख्यंकारणं एकंउपादानकारणस्य २८ क्षेत्रज्ञः क्षीयतइतिक्षेत्रंशरीरंतज्जानाति ज्ञाअवबोधने आतोनुपसर्गेकः तदुक्तंहैमे क्षेत्रज्ञावात्मनि
पुणाविति॥ आत्मा अतति अतसातत्यगमने आङ्पूर्वात्मनिन्॥पुरुषः पुरति पुरअग्रगमने पुरःकुषन् पूरुषोपि पूरयतिवा पूरीआप्यायने पुरिशुयोनेसौवा पुरुष
स्त्वात्मनिनरेपुन्नागेचेतिहैमः प्रथमात्मनः॥प्रधानं प्रधत्तेसर्वमात्मनीति अधिकरणेकरणेवा प्रकर्षेणधानमनेनवा तदुक्तंहैमे प्रधानंप्रकृतौबुद्धावुत्तमेपरमात्मनि म
हामात्रेति॥प्रकृतिः प्रकृष्टाकृतिकार्यमस्याः इत्याद्यूह्यं तदुक्तंरभसे प्रकृतिर्गुणसाम्येस्यादमात्यादिस्वभावयोः योनौलिंगेपौरवर्गइति हैसत्वादिगुणसाम्यावस्थायाः॥

धीः ध्यायंत्यनया ध्यायतेः क्विप् संप्रसारणं हलइतिदीर्घश्च ॥ प्रज्ञा प्रज्ञायतेऽनया ज्ञाअवबोधने आतश्चोपेत्यङ् तदुक्तंशब्दार्णवे प्रज्ञाश्रद्धाधराज्ञप्तिः पंडासवेदनंविदेति ॥ शेमुषी शेः मोहस्तंमुष्णाति मुषस्तेये शीङोविच् मूलविभुजेनिमुषेः कः ॥ मतिः मन्यतेऽनया मनज्ञाने क्तिन् ॥ प्रेक्षा प्रकृष्टमीक्षणं गुरोश्चेत्यः टाप् ॥ उपलब्धिः उपलभ्यतेऽनया डुलभष्प्राप्तौ क्तिन् ॥ चित् चितीसंज्ञाने संपदादिः तानः ॥ संवित् विदेः क्विप् ॥ प्रतिपत् पद्यतेः क्विप् संपदादित्वात् एतौदांतौ ॥ ज्ञप्तिः ण्यासश्रंथेति-प्रासेबाहुलकात्क्तिन् ॥ चेतना ण्यासश्रंथेतियुच् अनादेशः चतुर्दशबुद्धेः १ या धारणावतीधीः सामेधा मेधते संगच्छते सर्वमस्यां मेधृसंगमे गुराश्चेत्यकारः एकं ॥ यन्मानसंकर्म इदमहंकुर्यामितिमनसोव्यापारः ससंकल्पः क्लृपूसामर्थ्ये भावेघञ् एकं ॥ चित्ताभोगः चित्तस्यमनसआभोगः आङ्पूर्वात् भुजेर्घञ् कुत्वं तदेकप्रवणता

धीःप्रज्ञाशेमुषीमतिः ॥ प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः १ धीर्धारणावतीमेधासंकल्पः कर्ममानसं ॥ चित्ताभोगोमनस्कारश्चर्चा संख्याविचारणा २ अध्याहारस्तर्कऊहोविचिकित्सातुसंशयः ॥ संदेहद्वापरौचाथसमौनिर्णयनिश्चयौ ३

पूर्णतावा आभोगोवरुणछत्रे पूर्णतायत्नयोरपीत्युक्तत्वात् ॥ मनस्कारः मनसः कारोव्यापारविशेषः डुकृञ् भावेघञ् अतः कृकेतिसः हेमनसः सुखादौतत्परतायाः ॥ चर्चा चर्चअध्ययने चिंतिपूजीतियुच् बाधकोङ् ॥ संख्या ॥ विचारणा संख्येत्यड्तं भयंप्रमाणैरर्थपरीक्षणस्य २ अध्याहारः अध्याहरणं ॥ तर्कः अपूर्वोत्प्रेक्षणं तर्कोवितर्क्यकाक्षायामूहवर्णविपर्ययोरितिहैमः ऊहःऊहनं ऊहवितर्के घञ् भयंतर्कस्य त्रिषुभावेघञ् ॥ विचिकित्सा कितेःसन्नंतादकारः ॥ संशयः शीङोच् ॥ संदेहः दिहउपचये संदेहनं भावेघञ् ॥ द्वापरः द्वौपराप्रकारौयस्य सर्वनामत्वात्पूर्वनिपाते पृषोदरादित्वादात्वं भयंसंशयज्ञानस्य ॥ निर्णयः निर्णयनं णीञ्प्रापणे एरच् ॥ निश्चयः चिञ्चयने अप् द्वेनिश्चयज्ञानस्य ३

मिथ्यादृष्टिः मिथ्येत्यपह्नवेनदृष्टिः॥नास्तिकता नास्तिपरलोकइतिमतिर्यस्यतस्यभावः ठगंतात्तल् हेपरलोकाभाववादिज्ञानस्य॥ व्यापादः पदेर्ण्यंताद्धञ्॥ द्रोहचिंतनं द्रोहस्यचिंतनं द्वे अन्यद्रोहचिंतनस्य॥सिद्धांतः सिद्धोंऽतोनिश्चयोयस्मिन्॥राद्धांतः राद्धः सिद्धोंऽतोनिश्चयोयस्मिन् द्वेसिद्धांतस्य॥ भ्रांतिः भ्रमेः क्तिन् भ्र मोंबुनिर्गमेभ्रांतोकुंद भ्रमणयोरपीत्यक्तत्वात्॥ मिथ्यामतिः मिथ्येत्यव्ययंतेनकर्मधारयः॥भ्रमः त्रयमयथार्थज्ञानस्य ४ संवित् संवेदनं विदज्ञाने संपदादिः॥ आगूः धूर्वत् आगू. गमेर्ईप्रत्यये वधूवत आग्वौ आग्व. इति एनौस्त्रियां धूर्वदपिपक्षे आगुरौ आगुरइत्यादि गुरीउद्यमनेक्विप् हलिचेतिदीर्घः॥प्रतिज्ञानं ल्युट्॥ नियमः नियमोयंत्रणायांचप्रतिज्ञानिश्चयेव्रतइत्युक्तत्वात् यमः समुपेतिअप्॥आश्रवः आश्रवोंगीकृतौक्लेशेनान्यवहृचनेस्थितइत्युक्तत्वात्॥एवंसंश्रयप्रतिश्रवौ आङ्

मिथ्यादृष्टिर्नास्तिकताव्यापादोद्रोहचिंतनं॥ समौसिद्धांतराद्धांतौभ्रांतिर्मिथ्यामतिर्भ्रमः ४ संविदागूःप्रतिज्ञानंनियमाश्रवसंश्रवाः॥
अंगीकाराभ्युपगमप्रतिश्रवसमाधयः ५ मोक्षेधीर्ज्ञानमन्यत्रविज्ञानंशिल्पशास्त्रयोः॥ मुक्तिः कैवल्यनिर्वाण

संप्रतिपूर्वेभ्यः अप्॥ अंगी
कारः अंगीतिच्व्यंतं अव्ययं कृञोघञ्॥अभ्युपगमः ग्रहवृदृ इत्यप्॥ प्रतिश्रवः॥ समाधिः उपसेतिभावेकिः तदुक्तंरभसे समाधिर्नासमर्थने ध्यानेवैरस्यनियमेकाव्यस्यच गुणांतरेइति दशांगीकारस्य॥ मोक्षेतद्विषयेयाधीः तज्ज्ञानं ल्युट् एकं॥अन्यत्रमोक्षात् शिल्पशास्त्रयोः धीः विज्ञानं अन्येतु मोक्षनिमित्तंशिल्पशास्त्रयोर्धीः ज्ञानमुच्यते अन्यनिमित्तंयाधीः सा विज्ञानं विज्ञानंकर्मणिज्ञानेइतिहैमः॥ मुक्तिः मोचनं मुच्लृमोक्षणे क्तिन् तदुक्तंहैमे मुक्तिर्मोचनमोक्षयोरिति॥ कैवल्यं केव लस्यभावः ष्यञ्॥निर्वाणं निर्वाणंमोक्षनिर्वत्यविधानेकरिमज्जनइतिहैमः॥

श्रेयः अतिशयेनप्रशस्यं ईयसुनिश्चादेशः श्रेयोमुक्तौशुभेधर्मेऽतिप्रशस्तेतुवाच्यवत्॥ निःश्रेयसं नितरांश्रेयो समासांतोच् निश्रेयसंतुकल्याणमोक्षयोः शंकरेपुमा-
नित्य०॥ अमृतं अविद्यमानंमृतंमरणमत्र अमृतंयज्ञशेषेस्यात्पीयूषेसलिलेघृते अयाचितेचमोक्षेचनाधन्वंतरिदेवयोरित्यक्तत्वात् ६ मोक्षः मोक्षअवसाने एरच् घ
ञ्वा मोक्षोनिःश्रेयसेवृक्षविशेषेमोचनेमृतावितिहेमः॥ अपवर्गः अपवर्गस्त्यागमोक्षयोः क्रियावसानेसाफल्येइतिहेमः अष्टकंमोक्षस्य॥ अज्ञानं ज्ञानविरुद्धं॥ अ
विद्या विद्याविरुद्धा॥ अहंमतिः अहमितिविभक्तिप्रतिरूपकमव्ययं अहंकारार्थकं अहंमतिः अहंप्रधानामतिः त्रयंअज्ञानस्य॥ रूपं रूपयति विमोहयति रूप
विमोहने अच् इत्याद्यूह्यं रूपंतुश्लोकशब्दयोः स्पर्शावकाशसौंदर्येनाणकेनाटकादिषु ग्रंथावृत्तौस्वभावेचेतिहेमः॥ शब्दः शप्यते आक्रुश्यते शपआक्रो

श्रेयोनिःश्रेयसामृतं ६ मोक्षोपवर्गोऽथाज्ञानमविद्याहंमतिः स्त्रियां॥ रूपंशब्दोगंधरसस्पर्शाश्चविषयाअमी ७ गोचराइंद्रियार्थाश्चहृषीकं
विषयींद्रियं॥

शे दन् शब्दोक्षरेयशोगीत्योर्वाक्येखेश्रवणेध्वनावितिहेमः॥ गंधः गंधयति गंधअर्दने अच् गंधःसंबद्धलेशयोः गधकामोदगर्वेष्वितिहेम॥ र
सः रस्यते रसआस्वादने चुरादेरेरच् घञ्वा रसोगंधरसेजले शृंगारादौविषेवीर्येतिक्तादौद्रवरागयोः देहधातुप्रभेदेचपारदस्वाद्योः पुमानितिहेमः॥ स्पर्शः स्पृशसं
स्पर्शने घञ् तदुक्तंहेमे स्पर्शोवृगोक्षरेदानेस्पर्शनेस्पर्शकेरुजीति एतेपंचविषयाइति गोचराइति इंद्रियार्थाइतिचत्रयः विसिन्वंति निबध्नंतींद्रियाणि षिञ्बंधने प
चाद्यच् परिनिवौतिषत्वं तदुक्तंहेमे विषयोयस्ययोज्ञातस्तत्रगोचरदेशयोः शब्दादौजनपदेचेति गावइंद्रियाणिचरंत्येषु गोचरसंचरेतिनिपातितः इंद्रियैरर्थ्यंते अर्थ
याच्ञायां कर्मणियत्र् त्रीणि ७ हृषीकं हृष्यंत्यनेन हृषुअलीके अलिहृषीतिईकन् सचकित्॥ विषयि विषयोःस्यास्ति॥ इंद्रियं इंद्रस्यात्मनोलिंगं इंद्रियंतुचक्षु
रादिषुरेतसीतिहेमः त्रीणि इंद्रियाणांचक्षुरादीनां विषयिनामं॥

कर्मेंद्रियंतुपाय्वादिस्यात् आदिनावागादि कर्मसाधकमिंद्रियं पायतिशोषयति पैशोषणे कृवापेतिउण् सुगागमः तच्च पायूपस्थंपाणिपादौवाक्चेतींद्रियसंग्रहः उ त्सर्गआनंदादानगत्यालापाश्चतत्क्रियाइति॥ मनोनेत्रादिधींद्रियमुच्यते धीसाधनमिंद्रियं आदिनाश्रोत्रादि तच्च मनः कर्णौतथानेत्रंरसनाचत्वचासह नासिकाचे तिषड्तानिधींद्रियाणिप्रचक्षतइति कामंदीये एकं॥ अथरसभेदानाह तुवरः तवीति हिनस्तिरोगान् तुइतिसौत्रः घरच् दीर्घादिरपि वरेः ष्मक्ष्मणिमृंगाभ्यांराहि तेगविवृतूवरः कालेमासेरसायेचवरसेपुंव्यंजनेन्युतइत्युक्तत्पलिनी॥ कषायः कषतिकंठं कषहिंसायां बाहुलकादायः कषायःसुरभौरसे रागवस्तुनिनिर्यासेक्रोधादिषु विलेपने इतिहैमः द्वे तुरटइतिख्यातस्य॥ मधुराद्याः पृथक्ज्ञेयाः एवंतुवराद्याः षडपिरसाउच्यंते मधुरः मधुमाधुर्यंयस्यास्ति मत्वर्थेरः मधुरस्तुप्रियेस्वादौर

कर्मेंद्रियंतुपाय्वादिमनोनेत्रादिधींद्रियं ८ तुवरस्तुकषायोस्त्रीमधुरोलवणःकटुः॥ तिक्तोम्लश्चरसाःपुंसितद्वत्सुषडमीत्रिषु ९

सेचरसवत्यपि मधुराम धुरापुर्याम्यष्टिभेदमधूलिषु मधुकर्कटिकायांचमिश्रेयाशतपुष्पयोरितिहैमः सतुजलादौप्रसिद्धः एकं॥ लवणः लुनातिजाड्यं लूञ्छेदने नंद्यादिः एवंलवणादौप्रसिद्धः एकं॥ कटुः कटत्यावृणोति तीक्ष्णतयासुरवं कटेवर्षावरणयोः कटिवटिभ्यांचेत्युः तदुक्तंहैमे कटुकार्येमत्सरेचदूषणेचकटूरसे तिक्ते प्रियंगुस्तूरभिकटुकाराजिकास्वपीतिहैमः सतुमरीचादौप्रसिद्धः तिक्तः तेजयतिस्म तिजनिशाने णिजभावेणत्येतिक्तः तिक्तस्तुसुरभौरसे तिक्तातुकटुरोहिण्यांतिक्तपर्पट कौषधइतिहैमः निंबादौप्रसिद्धः॥ अम्लः अम्यतेशब्दयतेभोक्तृभिः अविशब्दे तिंतिड्यादौप्रसिद्धः अम्लोरसेम्लवेतसइतिहैमः॥ रसः रसआस्वादने अदंतः र स्यते आस्वाद्यते कर्मणिघञ् अमीतुवरादयःषट् रसशब्दवाच्याः पुंसिच तत्रतुवरकषाययोरस्त्रीत्वस्योक्तत्वात् तद्वत्सुरसवत्सुवर्तमानास्त्रिषु वाच्यलिंगाइत्य- र्थः ९

विमर्दोत्थे माल्यादिगंधे घर्षणसमुद्भवे चंदनादिगंधेच जनमनोहरेपरिमलः मल्यते कर्मणिघञ् मलधारणे संज्ञापूर्वकोविधिरनित्यः इत्यादूत्त्वं एकं॥ विमर्दग्रहणे नजातिमाल्यादेर्निरासइत्यर्थः॥ योनिनिर्हारी अत्यंतसमाकर्षिसगंधआमोदउच्यते आसमंतान्मोदयतीति मुदहर्षे ण्यंतादच् आमोदोगंधहर्षयोरित्य॰ कस्तूरिकायामामोदः कर्पूरेसुरववासनः बकुलेस्यात्परिमलश्चंपकेसुरभिस्तथेतिशब्दार्णवश्च एकं॥ आगुणात् गुणेशब्दादयः पुंसीत्यंतः मागतः परंवाच्यलिंगत्वमधिक्रियते १० समाकर्षी समाकर्षत्यवश्यंमनः आवश्यकेणिनिः यद्वा समाकर्षशीलः सुपीतिणिनिः एवंनिर्हारी निर्हरत्यवश्यंमनो हृदूरगामिगंधस्य॥ सुरभिः सुष्टुरमतेऽत्र इन्॥ घ्राणतर्पणः घ्राणंतर्पयति इष्टगंधः इष्टोगंधोऽस्य तदुक्तंरभसे इष्टगंधःसुगंधोस्यात्रिषुक्लीबंतुवालुके इति॥ सुगंधिः सुष्टुगंधोस्य समासांतइकारः सुगंधिःस्यादिष्टगंधेत्रिषु

विमर्दोत्थेपरिमलोगंधेजनमनोहरे॥ आमोदःसोऽतिनिर्हारीवाच्यलिंगत्वमागुणात् १० समाकर्षीतुनिर्हारीसुरभिर्घ्राणतर्पणः॥ इष्टगंधः सुगंधिःस्यादामोदीमुखवासनः ११ पूतिगंधिस्तुदुर्गंधोविस्रंस्यादामगंधियत्॥ शुक्लशुभ्रशुचिश्वेतविशदश्येतपांडुराः १२

क्षीरेनपुंसक

मिति चत्वारीष्टगंधस्य॥ आमोदी आमोदयति सुपिणिनिः॥ मुखवासनः मुखंवासयति नंद्यादिः इयंमुखंवासयतितस्यतांबूलादेः ११ पूतिगंधिः पूयते पूयति पूतिर्दुष्टोगंधोऽस्य पूयीविशरणे दुर्गंधेच क्तिन्॥ दुर्गंधः दुष्टोगंधोऽस्य द्वे अनिष्टगंध युक्तस्य॥ यदामगंधितद्विस्रंस्यात् विस्यति विसप्रेरणे बाहुलकाद्रक् विस्रंसतेवा आमोऽपक्वमलस्तस्येवगंधोयस्यतत् उपमानाच्चेतिसमासातइः॥ शुक्लः शोकति मनोऽस्मिन् ऋज्रेंद्रेतिसाधुः॥ शुभ्रः शोभतेरक्॥ शुचिः शुचेरिक्॥ श्वेतः श्वितावर्णे घञ्॥ विशदः शद्लृ शातनेअच् विशीर्यते शद्लृशातने विशदःपांडुरेव्यक्ते इतिहैमः॥ श्येतः श्यायतेरितन् पांडुरः पंडतेमनोस्मिन् पडिगतौ बाहुलकादुरोदीर्घश्चेतिसा

अवदातः अवदायतेस्म दैप्धातोः कर्मणिक्तः अवदातंतुविमलेमनोज्ञेसितपीतयोरितिहैमः॥सितः सिनोति मनः षिञ्बंधने अंजिधृसीतिक्तः सितस्त्ववसितेबद्धेसितातुशर्करेपिचेतिहैमः॥गौरः गुरीउद्यमे ऋज्रेंतिसाधुः तदुक्तंहैमे गौरः श्वेतेरुणेपीतेविशुद्धेचंद्रमस्यपि निर्देशेगौरंतुश्वेतसर्षपेपद्मकेसरइति॥अवलक्षः घञ् भागुरिमतेतु वलक्षः॥धवलः॥अर्जुनः अर्ज्यते यर्यंतादुनन्॥हरिणः हरति मनः हृरतेरिनन् तदुक्तंहैमे हरिणोपांडुसारंगोहरिणीचारुयोषिति स्वर्णप्रतिमायांचहरितावृत्तभेदयोरिति॥पांडुरः नगपांसुपांडुभ्योरेइतिरः पांडुत्वमस्यास्तीति॥पांडुः पंड्यते ज्ञायते पडिगतौ पृषोदरादिः पांडुःकुंतीपतौसितेइतिहैमः तदुक्तंशब्दार्णवे श्वेतस्तुसमपीतोसौरक्तेतरजपारुचिः वलक्षस्तुसितःशावःकदलीकुसुमोपमः अर्जुनस्तुसितःकृष्णलेशवान्कुमुदछविः पांडुस्तुपीतभागार्द्धःकेतकीधूलिसन्निभइति षोडशनामानिशुक्लस्य तत्रार्जुनांतानित्रयोदशनामानिशुक्लस्य हरिणादीनित्रीणिपीतमिश्रशुक्लस्येतिकेचित्॥ईषत्पांडुः धूसरः धुनोतिचेतः धूविधूनने कृधूमदिभ्यःकसः बाहुलकात्षत्वाभावः इत्याद्यूह्यं यद्वा धूसंराति धू सकांतिकरणेण्यंतादरच् तदुक्तंशब्दार्णवे धूसरीकिन्नरीभेदेनारवरेत्रिषुपांडुरे धूसरस्तुसितःपीतलेशवान्बकुलछविरिति हेईषत्धवलस्य १३ कृष्णः कर्षतिमनः कृषेवर्णेनक्प्रत्ययः तदुक्तंहैमे कृष्णःकाकेपिकेवर्णेविष्णौव्यासेर्जुनेकलौ कृष्णातुनील्यांद्रौपद्यांपिप्पलीद्राक्षयोरपि कृष्णंतुमरिचेलोहेइति॥नीलः नीलति नीलवर्णे इगुपधेतिकः नीलोवर्णेमणौशैलेनिधिवानरभेदयोः नील्यौषध्यांलांछनेइतिहैमः॥असितः नसितः विरुद्धार्थेनञ्॥श्यामः श्यायतेमनोःस्यात् श्यैङ्गतौ मक्॥कालः कल्यते कलसंख्याने घञ् कालपादेकृष्णसर्पेमहाकालकृतांतयोः मरणानेहसोःकालीका

अवदातःसितोगौरोवलक्षोधवलोऽर्जुनः॥हरिणःपांडुरःपांडुरीषत्पांडुस्तुधूसरः १३ कृष्णोनीलासितश्यामकालश्यामलमेचकाः

लिकासीरकीटयोरितिहैमः॥ श्यामलः श्याममस्यास्तीति मत्वर्थेलच् तदुक्तंहैमे श्यामलःपिप्पलेश्यामेइति॥ मेचकः मेचति मिश्रीभवतिवर्णांतरेण मचमुचिकल्कने वुन् उपधायाइत्वेगुणः मेचकःश्यामलेकृष्णोतिमिरेबर्हिचंद्रकइतिहैमः मेचकःकृष्णनीलःस्यादतसीपुष्पसन्निभइतिशब्दार्णवश्च समनील्यादिगतवर्णस्य॥ पीतः पीयते पिबतिवर्णांतरमितिवा कर्मणिकर्तरिवाक्तः तदुक्तंरभसे पीतंपानेहरिद्रायांस्त्रियांगौरेभिधेयवत्॥ गौरः गुरते उद्यमतेमनोऽस्मिन् गुरी उद्यमने इगुपधेतिकेस्वार्थेअण् गौरश्वेतेरुणेपीतेविशुद्धेचंद्रमस्यपि गौरंतुविशदेश्वेतसर्षपेपद्मकेसरइतिहैमः॥ हरिद्राभः हरिद्रेवाभादीप्तिर्यस्य श्रोणिपीतस्य॥ पालाशः पत्रस्यपलाशस्यायं तस्येदमित्यण् तदुक्तंरभसे पत्रंपलाशंनारस्तःशटीहरितकिशुकेइति पलाशोपिस्यात्॥ हरितः हरति हरतेरितन्॥ हरित् इति

पीतोगौरोहरिद्राभःपालाशोहरितोहरित् १४ रोहितोलोहितोरक्तःशोणः कोकनदछविः॥
अव्यक्तरागस्त्वरुणः

हरितास्त्रीचदूर्वायांहरिद्वर्णयुतेन्यवत् श्रोणिशिरीषादिपत्रगतवर्णस्य १४ रोहितः रोहति रुहजन्मनिप्रादुर्भावेच इतन् रेफस्यलोवा॥ लोहितः तदुक्तंहैमे लोहितंमंगलेनदे वर्णभेदेलोहितंतुकुंकुमेरक्तचंदने गोशीर्षेरुधिरेयुद्धेइतिहैमः॥ रक्तः रंजतिस्म रंजरागे क्तः यद्वा रज्यतेस्म रचभतियत्ने तदुक्तंहैमे रक्तंनील्यादिरंजिते कुंकुमेसृज्यनुरक्तेप्राचीनामलकेरुणेइति श्रोणिरक्तस्य॥ यः कोकनदछविः सशोणः कोकनदंरक्तोत्पलमिव छविर्यस्य शोणयति शोणृवर्णे पचाद्यच् तदुक्तंरभसे शोणःकृशानौस्योनाकेलोहिताश्वेनदेपुमानिति योऽव्यक्तरागः किंचिद्रक्तः सोऽरुणः ऋच्छति ऋगतौ ऋतेरुनन् तदुक्तममरमालायां अरुणःकृष्णलोहितइति अरुणोऽव्यक्तरागेर्केसंध्यारागेर्कसारथौ निःशब्देकपिलेकुष्ठभेदेनागुणिनित्रिषु अरुणातिविषाश्यामामंजिष्ठात्रिवृतासुचेतिरभसश्च एकं॥

यः श्वेतमिश्रो रक्तः स पाटल इत्येकं नाम पाटयति पटगतौ ण्यंतात् कलच् वृषादित्वात्॥ श्यावः श्यायते श्यैङ् गतौ बाहुलकात् वः॥ कपिशः कपिर्वर्णविशेषः सोऽस्यास्तीति मत्वर्थे शः कपिर्मर्कटः तद्वद्वर्णत्वादितिवा कपिशस्त्रिषु श्यामे स्त्री माधव्यां सिल्हके पुमान् है धूसरारुणवर्णस्य॥ धूम्रः पृषोदरादिर्धूम्रः॥ धूमलः धूमं लाति लादाने ला आदाने॥ कृष्णलोहितः कृष्णाभिश्रितः लोहितः त्रीणि कृष्णयुक्त लोहित वर्णस्य॥ कडारः कडं मृच्छति ऋगतौ कर्मण्यण् कडवर्णे इलच् बस्यपः॥ कपिलः कपिं वर्णं लाति आतइतिकः तदुक्तं विश्वे अनले वासुदेवे च कपिलः परिकीर्तितइति॥ पिंगः पिंगति पिजिवर्णे घञ् कुत्वं॥ पिशंगः पेशाति पिश अवयवे अंगच्॥ कद्रुः कंदति कदि आह्वाने रोदने च औणादिकः तदुक्तं रभसे कद्रुस्त्रिषु स्वर्णपिंगे नागानां मातरि स्त्रियां॥ पिंगलः पिंजति पिजिवर्णे घञ् कुत्वं पिंगं लाति लाति तदुक्तं रभसे पिंगलः कपि-

श्वेतरक्तस्तु पाटलः १५ श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते॥ कडारः कपिलः पिंगपिशंगौ कद्रुपिंगलौ १६ चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे॥

लेबभ्रौ रुद्रे कैपारिपार्श्वके कपौ मुनौ निधेर्भेदे पिंगला कुमुदस्त्रियामिति शब्दार्णवे तु सितपीतहरिद्रक्तः कडारस्तृणवन्हिवत् अयं नद्रक्तपीनागः कपिलो गोविभूषणः हरितांशोऽधिके सोऽतु पिशंगः पद्मधूलिवत् पिशंगस्त्वसितावेशात् पिंशो दीपशिखादिषु पिंगलस्तु परच्छायः पिंगेशः कुंगरकंडवदिति पिं गागोरोचनापाडुरिति कान्यश्च षट्कं पिंगलवर्णस्य अयं अत्यंत गौर बालकस्य केशेषु प्रसिद्धः १६ चित्रं चीयते चीञ् चयने त्रः चित्तं त्रायतेवा आतइतिकः॥ किर्मीरः कर्मीर इत्यपि किरतेरीरन् मुट् च॥ कल्माषः कलश्चासौ माषश्च कल्माषः कर्बुरे कृष्णो इति मूर्धन्यांते रभसः कल्माषो राक्षसे कृष्णो शबलेऽपीति हैमः॥ शबलः शपेः कलः बादेशश्च॥ एतः एति वर्णान् एते षट् कर्बुरे विचित्रवर्णस्य तदुक्तं मेदिन्यां कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः कर्बुरा कृष्णवृंतायां शबले पुनरन्यवदिति॥

शक्लादयः गुणेगुणमात्रेवर्तमानाः पुंसि॥ चित्रंतु रूपभेदान्नपुंसकं॥ यथाःस्यपटस्यचित्रंरूपं तद्वतिगुणवतिवस्तुनिवर्तमानागुणिलिंगाः अभिधेयलिंगाः गुण
वचनेभ्योमतुपोलुक् इतिगुणिनिवर्तमानत्वंतत्प्रत्याख्यानेगुणगुणिनोरभेदान्निर्वाहः इतिमहाभाष्यादवगंतव्यं यथा शक्लाशाटी शक्लःपटः शक्लंवस्त्रं १७
॥ ॥इतिधीवर्गः॥ ॥ब्राह्मी ब्रह्मणइयं ब्राह्मोजातावितिटिलोपःङीप्॥ भारती बिभर्ति अतच्स्वार्थेअण् भरतस्येयमितिवा तस्येदं॥ भाषा भाष्य
ते भाषव्यक्तायांवाचि गुरोरित्यः॥ गीः गृशब्दे संपदादिः भागुरिमते गिरापि॥ तदुक्तंशब्दार्णवे ब्राह्मणीवचनवाग्वजल्पितंगदितंगिरेति गीर्भणितिर्गिरितित्रि
कांडशेषश्च॥ वाक् उच्यते वचपरिभाषणे क्विब्वचीतिक्विप्॥ वाणी वणशब्देइञ्॥ सरस्वती सरोस्त्यस्याः मतुप्॥ व्याहारः व्याहरतेर्घञ्॥ उक्तिः वचपरिभाष

गुणेशक्लादयः पुंसिगुणिलिंगास्तुतद्वति १७ इतिधीवर्गः ब्राह्मीतुभारतीभाषागीर्वाग्वाणीसरस्वती॥ व्याहारउक्तिर्लपितं
भाषितंवचनंवचः १ अपभ्रंशोपशब्दःस्या च्छास्त्रेशब्दस्तुवाचकः॥ तिङ्सुबंतचयोवाक्यंक्रियावाकारकान्विता २

णे क्तिन्॥ लपितं लप
व्यक्तायांवाचि॥ भाषितं क्तांतावेतौ॥ वचनं वचेर्भावेल्युट् असुनिः॥ वचः त्रयोदशनामानिवचनस्य तत्रसरस्वत्यंतानिसमाधिष्ठातृदेवतायाः केचित्तुब्राह्म्याद्या
स्त्रयोदशपर्यायाइत्याहुः गीः रेफांता १ यः अपशब्दः अपभ्रष्टःशब्दः गावी गोणीत्यादिः सः अपभ्रंशःस्यात् संस्कृतादपभ्रश्यति भ्रंशुअधःपतने घञ्च एवं॥ शा
स्त्रेव्याकरणादौयोवाचकःसाधुः सशब्दइतिव्यवह्रियते यथा घटोस्ति ओतप्रोततंतूनांवाचकः पटइतिच॥ तिङ्सुबंतचयः तिङंतसुबंतपदसमूहोवाक्यं वचेर्ण्यत् वचो
शब्देतिकुत्व तिङंतचयोयथा पचति भवति दृशिक्रियासत्तेति पचति भवति पाकोभवतीत्यर्थः॥ सुबंतचयस्तु प्रकृतिसिद्धमिदंहिमहात्मनामित्यादिभवतीत्यध्याहार

स्य भाष्यकृतोमते आवश्यकत्वाभावात् सः वाक्यं क्रियेत्यादिवाशब्दः समुच्चये यद्वा वाशब्दः चेदित्यर्थेक्रियाचेत्कारकान्वितेत्यर्थः इदंशब्देंदुशेखरेऽस्ति कारका
न्वितक्रियाबोधकं भोभिक्षोभिक्षामभिरक्षेत्यादितिङ्सुप्चयात्मकमपिवाक्यमित्यर्थः २ श्रुतिः श्रूयते श्रुश्रवणे श्रूयतेधर्मोऽनयेतिवा कर्मणिकरणेवाक्तिन् श्रुतिः
श्रोत्रेचतत्कर्मण्याम्नायवार्तयोः स्त्रियामितिरभसात्॥ वेदः विदंत्यनेनधर्मं विदज्ञाने हलश्चेतिघञ्॥ आम्नायः आम्नायते अभ्यस्यते कर्मणिघञ् म्नाअभ्यासे आ
मनति उपदिशति धर्माधर्माविनिवा शाब्दोतिणःयुक्॥ त्रयी चत्वारिवेदस्य अत्रलिंगसंकरेदोषाभावः स्त्रीतिविशेषविधानात् त्रय्याव्याख्यायमानत्वाच्च त्रयाणां
त्रयीत्यंतच्चतुष्टयं वेदसामान्यस्यनाम॥ त्रयीशब्दोवेदसामान्येभिवेद्यावर्ततेच यथा द्विजशब्दोब्राह्मणेत्रिवर्णेच समस्तपदेतु त्रय्याप्रोक्तोधर्मस्त्रयीधर्मइत्यादिवि

श्रुतिः स्त्रीवेदआम्नायस्त्रयीधर्मस्तुतद्विधिः॥ स्त्रियामृक्सामयजुषीइतिवेदास्त्रयस्त्रयी ३ शिक्षेत्यादिश्रुतेरंगमोंकारप्रणवौसमौ॥ इतिहासःपुरावृत्त

ग्रहः॥ तद्विधिः तस्यास्त्रय्याविधिर्वैदिकोविधिर्यज्ञादि. धर्मःस्यात् स्मृत्युक्तोविधिर्धर्मएव तदुक्तं विधानमृग्यजुःसाम्नांत्रयीधर्मंविदुर्बुधाइति यच्चाहगौतमः
श्रुतिस्मृतिविहितोधर्मइति त्रयीशब्ददर्शनपूर्वकवेदभेदानाह ऋक् अस्याभ्यर्च्यंतेस्तूयंतेदेवाःअनया ऋचस्ततो संपदादिः क्विया॥ साम तदुक्तंविश्वे सामक्लीब
मुपायस्यभेदेवेदांतरेपिचेति स्यतिपापं॥ यजुः इज्यतेअनेन अर्तीत्यसुन् इतित्रयोवेदास्त्रयीप्रोक्ता त्रयोऽवयवायस्याः ३ श्रुतेः अंगं शिक्षेत्यादि अंग्यते ज्ञाय
तेऽनेन अगिगतौ घञ् शिक्षाकल्पोव्याकरणंनिरुक्तंज्योतिषांगतिः छंदोविचित्तिरित्येषःषडंगोवेदउच्यते तत्रकल्पः कल्पसूत्रं एकं॥ ओंकारः अवतेर्मन् तस्यटिलोपःऊ
ठ्कार॥ प्रणवः प्रणूय ते स्तूयते णुस्तुतौ ङ्॥ इतिहासः इतिहेतिपारपर्योपदेशोव्ययतदास्तेऽस्मिन् आसउपवेशने अधिकरणेघञ्॥ पुरावृत्तं पुरावृत्तं आख्यानंख्यंतात्म्या
घञ् पूर्वाचरितप्रतिपादकप्रबंधस्यमहाभारतादेः ङ्॥

उदात्तः उत्‌उच्चैरादीयते उच्चार्यतेस्म॥ अनुदात्तः॥ स्वरितः इतित्रयःस्वराःस्युः चतुर्थःप्रचितोनोक्तोयतोऽसौछांदसःस्मृतः स्वरंति शब्दायंते स्वृशब्दोपतापयोः पचादिः यद्वा स्वर्यते अर्थोणिभिः घः यद्वा स्वेनराजंते राजृदीप्तौ अन्येष्वपीतिडः स्वरोनासासमीरेस्यान्मध्यमादिश्रिकस्वरे उदात्तादावकारादौस्वड्रादौच ध्वनौपुमान् इतिविश्वमेदिन्यौ एकं ४ आन्वीक्षिकी अनुश्रवणोत्तरमीक्षणं परीक्षणमन्वीक्षा सा प्रयोजनमस्याः प्रयोजनमितिठक् तर्कविद्यायांगौतमादिप्रणीतायां एकं॥ अर्थशास्त्रेतु अर्थस्यभूम्यादेः शास्त्रंतत्रदंडनीतिः दंडोनीयते बोध्यतेऽनयासा करणेक्तिन् यद्वा दंडंनयति दंड्यान्प्रतिप्रापयति क्विप् बृहस्पत्यादिप्रणीताइत्यर्थः एकं॥ आख्यायिका आचष्टेच-क्षिङ् ख्याञ्॥ उपलब्धार्था उपलब्धोज्ञातोऽर्थोयस्याः अनुभूतार्थप्रतिपादकस्यवासवदत्तादेः द्वयं॥ यत्पंचलक्षणं तत्पुराणंकथ्यते पंचलक्षणानियथा सर्गश्चप्र

मुदात्ताद्यास्त्रयःस्वराः ४ आन्वीक्षिकीदंडनीतिस्तर्कविद्यार्थशास्त्रयोः॥ आख्यायिकोपलब्धार्थापुराणंपंचलक्षणं ५ प्रबंधकल्पनाकथाप्रवल्हिकाप्रहेलिका॥ स्मृतिस्तुधर्मसंहितासमाहृतिस्तुसंग्रहः ६

तिसर्गश्चवंशोमन्वंतराणिच वंशयौनुचरितंचैवपुराणंपंचलक्षणं पुराभवं सायं चिरंइत्यादिवत् श्रेणट्युट्युलौपूर्वकालेकेसूत्रेतुड्भावोनिपातितः यद्वा पुराअतीतानागतावर्थावणति अणशब्दे कर्मण्यण् ५ प्रबंधकल्पनाकथास्यात् कथवाक्यप्रबंधेचिनिपूजिइतिअड् प्रबंधस्यवाग्जालस्यकल्पनारचना एकंनाटकरामायणादेः॥ प्रवल्हिका प्रवल्हते आच्छादयति ण्वुल्॥ प्रहेलिका प्रहेलयति अभिप्रायंसूचयति हलगावकरणे ण्वुलिगुणः हेदुर्विज्ञानार्थस्यप्रश्नस्य यदुक्तंनवीनैः पानीयंपातुमिच्छामित्वत्तःकमललोचने यदिदास्यसिनेच्छामिनोदास्यसिचदेहिमेइति व्यक्तीकृत्यकमप्यर्थंस्वरूपार्थस्यगोपनात् यत्रबाह्यार्थसंबद्धंकथ्यतेसाप्रहेलिकेत्यर्थः॥ यामन्वादिभिःकथिताधर्मसंहिता सास्मृतिः धर्मबोधार्थंरचिताधर्मसंहितेत्यर्थः धात्रः ४ के

भूम्यादेश्चैवसस्थाने क्वचिदयमेवपाठः

हिः वेदार्थस्मरणपूर्वकं रचितत्वात्स्मृतिरित्यर्थः स्मरतेः क्तिन् एकं ॥ समाहृतिस्तु संग्रहः स्यात् ग्रहवृदृत्यप् तदुक्तं प्राचीनैः विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः नि
बंधोयः समासेन संग्रहं तं विदुर्बुधाः इति संग्रहग्रंथस्य ६ या समासार्था सा समस्या स्यात् अस्यक्षेपणे ण्यत् संज्ञापूर्वको विधिरनित्य इति वृद्ध्यभावः समासः पूरणसा
कांक्षो ऽर्थो यस्याः कविशक्तिपरीक्षणार्थमपूर्णतयैव पठ्यमानेत्यर्थः यथा शतचंद्रं नभस्तलं तत्पूरणं यथा दामोदरकराघातविह्वलीकृतचेतसा दृष्टं चाणूरमल्लेनेति सम
स्यात्समासार्थेति पाठे तु अपरिपूर्णार्थेत्यर्थः ॥ किंवदंती वदेर्झच् अंतआदेशः गौरादिः ॥ जनश्रुतिः जनेभ्यः श्रूयते कर्मणि क्तिन् द्वे लोकप्रवादस्य ॥ वार्ता वृत्तिर्लोकवृत्तिर
स्त्यस्यां वृत्तेश्चेति णआदिवृद्धिः टाप् ॥ प्रवृत्तिः प्रवर्तते व्याप्नोति तदुक्तं हैमे प्रवृत्तिर्वृत्तवृत्तांतप्रवाहेषु प्रवर्तन इति ॥ वृत्तांतः वृत्तोऽनुवर्तनीयो गवेषणीयोंऽतः समाप्तिर्यस्य

समस्या तु समासार्था किंवदंती जनश्रुतिः ॥ वार्ता प्रवृत्तिर्वृत्तांत उदंतः स्यादथाह्वयः ७ आख्याह्वे अभिधानं च नामधेयं च नाम च ॥ हूतिराकारणा
ह्वानं संहूतिर्बहुभिः कृता ८ विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखं ॥ वृत्तांतस्तु प्रकरणे कार्त्स्न्ये वार्ताप्रकारयोरिति हैमः ॥ उदंतः उद्गतोंऽतो यस्य उदंतः

साधुवार्तयोरिति चत्वारि प्रमाणलोकवृत्तकथनस्य ॥ आह्वयः आह्वयंति प्रसारणित्वात् डः तैर्यायते घञर्थे कः ७ आख्या आख्यानं एवं आह्वा उपसर्गे आतश्चेति अङ् अ
भिधानं अभिधीयते कर्मणि ल्युट् इत्यायूह्यं ॥ नामधेयं भागरूपनिधेयः ॥ नाम नाम्निति साधुः षट् नाम्नः ॥ हूतिः क्तिन् ॥ आकारणा युच् ॥ आह्वानं ल्युट् त्रीणि आह्वान
स्य ॥ या बहुभिः कृताहूतिः सा संहूतिः उपसर्गबलात् एकं ८ विवादः विरुद्धो वादः ॥ व्यवहारः विनानार्थे ऽव संदेह हरणं हार उच्यते नानासंदेहहरणाद्व्यवहार इति स्मृतइति
कात्यायनः हर्यंत्र्यणादि विभिन्ननानाविप्रवादस्य ॥ उपन्यासः उपन्यसनं अस्यतेर्घञ् ॥ वाङ्मुखं वाचो मुखमिव मुखमुपक्रमः द्वे वचनोपक्रमस्य ॥

उपोद्घातः उपसमीपे उद्धननं ज्ञापनं ॥ उदाहारः उदाहरणं उभयत्र भावे घञ् हैमः कृतिसिद्ध्यर्थचिंतनस्य तदुक्तं चिंताप्रकृतसिद्ध्यर्थामुपोद्घातंप्रचक्षतइति वक्ष्यमाणोप योग्यार्थवर्णनस्येत्यन्ये ॥ शपनं शपआक्रोशे ल्युट् अथप्रत्ययेशपथः तदुक्तंहैमे शपथः कारआ क्रोशेशपनेचश्रुतादिभिरितिद्वयं ९ प्रश्नः यजेतिनङ् शादेशः ॥ अनुयोगः युजेर्भावेघञ् ॥ पृच्छा प्रच्छेर्भावेअर्थेकेसप्रसारणटाप् त्रीणिप्रश्नस्य ॥ प्रतिवाक्य उत्तर अप् द्वे उत्तरस्य ॥ मिथ्याभियोगः मिथ्याचासावभियोगश्च ॥ अभ्याख्यानं आयणा कार्यः अभ्या शतंमेधारयसीत्यादिमिथ्याविवादस्य द्वे ॥ मिथ्याभिशासन १० अभिशापः अभिशपनं द्वे मिथ्यारोपस्यसुरापानादिविषयस्य घञ् ॥ अनुरागजःशब्दः प्र णादः प्रणदनं घञ् तदुक्तंशब्दार्णवे प्रणादस्तु पुमांस्तारशब्देचश्रवणामये ॥ अनुरागकृतेशब्दे प्रणादःसीत्कृतंनृणामिति एकं ॥ यशः अशोरसुन् प्रकृतेर्युट् ॥ कीर्तिः -

उपोद्घातउदाहारःशपनंशपथःपुमान् ९ प्रश्नोऽनुयोगः पृच्छाचप्रतिवाक्योत्तरेसमे ॥ मिथ्याभियोगोऽभ्याख्यानमथमिथ्याभिशंसनं १० अभिशा
पः प्रणादस्तुशब्दस्यादनुरागजः ॥ यशःकीर्तिःसमज्ञाचस्तवःस्तोत्रंस्तुतिर्नुतिः ११ आम्रेडितंद्विस्त्रिरुक्तमुच्चैर्घुष्टंतुघोषणा ॥ काकुःस्त्रियांविकारोयः
शोकभीत्यादिभिर्ध्वनेः १२

कीर्त्यते कृतसंशब्दन ऊतियूतीतिसाधुः कीर्तिःप्रसादयशसोर्विस्तारेकर्दमेपिचेतिहैमः ॥ समज्ञा सम्यैः सर्वैर्ज्ञायते ज्ञाअवबोधने घञर्थेकः स मज्येतिपाठेतु अजगतौ संज्ञायांक्यप् त्रीणिकीर्तेः ॥ स्तवः स्तूयतेऽनेन अप् ॥ स्तोत्र ॥ स्तुतिः णुस्तुतौ उभयत्रक्तिन् ॥ नुतिः चत्वारिस्तुतेः ११ द्वि. द्विवार त्रिः त्रिवारंचोक्तं आम्रेडितंस्यात् आम्रेड्यते आधिक्येनोच्यतेस्म म्रेडुउन्मादे यथा सर्पःसर्पइति एकं ॥ उच्चैर्घुष्टं उच्चैर्घुष्यतेस्म कर्मणिक्तः ॥ घोषणा घुषेण्यंताद्युच् द्वे उच्चैर्घोष- स्य ॥ शोकभीत्यादिभिः ध्वनेः योविकारः सा काकुः कक्यते ककलौल्योपतापयोः बाहुलकादुण् आदिनाकामक्रोधादेर्ग्रहः एकं १२

अवर्णः वर्ण्यते वर्णवर्णने घञ् वर्णःप्रशंसा तद्विरुद्धोऽवर्णः आक्षेपः आक्षेपोभर्त्सनाकृष्टिकार्यालंकृतिषुस्मृतइत्यकत्वात्॥निर्वादः वदतेर्घञ् तदुक्तंरभसे निर्वादःस्या ल्लोकवादपरिनिष्ठितवादयोरिति परीवादः उपेतिदीर्घः परीवादोऽपवादेस्याद्वीणावादनवस्तुनोः परिवादइत्यपि उपेतिदीर्घाभावे॥अपवादः अपवादस्तुनिंदायामाज्ञावि श्रंभयोरपि॥उपक्रोशः क्रुशआव्हाने घञ्॥जुगुप्सा गुपेर्निंदायांसन्॥कुत्सा कुत्सअवक्षेपणे॥निंदा तदुक्तंविश्वे निंदास्यादपवादेपिकुत्सायामपियोषितीति॥गर्ह णं गर्हगल्हकुत्सायां दशनिंदायाः अपवादवदिति वचनव्यत्ययेन अवर्णादीनामुपक्रोशस्यचैकलिंगत्वंज्ञापितं १३ पारुष्यं परुषोनिष्ठुरभाषणं तस्यभावःपारुष्यं ष्यञ्स्त्रि यां पारुष्यंपरुषत्वेचदुर्वाक्येपुंसिगीष्पतावितिविश्वः॥अतिवादः अतिक्रम्यउक्तिरतिवादः घञ् द्वेअप्रियवचसः॥अपकारगीः अपकारार्थगीः रे चोरोऽसि त्वांघात -

अवर्णाक्षेपनिर्वादपरीवादापवादवत्॥उपक्रोशोजुगुप्साचकुत्सानिंदाचगर्हणे १३ पारुष्यमतिवादःस्याद्भर्त्सनंत्वपकारगीः॥यःस
निंदउपालंभस्तत्रस्यात्परिभाषणं १४ तत्रत्वाक्षारणायःस्यादाक्रोशोमैथुनंप्रति॥स्यादाभाषणमालापःप्रलापोऽनर्थकंवचः १५

यिष्यामीत्यादि तद्भर्त्सनमुच्यते भर्त्सतर्जसंतर्जने ल्युट् एकं॥उपालंभोद्विधा गुणाविष्करणपूर्वकोनिंदापूर्वकश्च यः सनिंदः निंदयासहितः उपालंभः तत्रपरिभाष णमित्येकं॥आद्योयथा महाकुलीनस्यतवकिमुचितमिदं॥द्वितीयस्तु बंधकीकृतस्यतवोचितमेवेदमिति तत्रयोद्वितीयःसपरिभाषणं भाषव्यक्तायांवाचिल्युट् १४ मैथुनंप्रति परस्त्रीजारसंयोगनिमित्तेनयआक्रोशस्तत्रआक्षारणेत्येकं क्षरतेर्ण्यंतात्युच् क्लीबमपि आक्षारणं ल्युट्॥आभाषणं ल्युट्॥आलापः लपेर्घञ्॥अनु लपनं द्वे अन्योन्यसंबोधनपूर्वकभाषणस्य॥यत्अनर्थकंवचः सप्रलापः अत्रापिघञ् तदुक्तंहैमे विप्रलापोविरुद्धोक्तावनर्थकवचस्यपीति १५ ५

अनुलापः॥ मुहुर्भाषा मुहुः पुनः पुनः भाषणं द्वे वारंवारभाषणस्य॥ विलाप ॥ परिदेवनं दिवु परिदेवने ल्युट् द्वे रोदनयुक्तभाषणस्य॥ विप्रलापः विरुद्धः प्रलापः॥ विरोधोक्तिः विरोधस्य उक्तिः द्वे अन्योन्यविरुद्धवचनस्य॥ मिथः अन्योऽन्यं युक्तिप्रयुक्तिसहितं यद्भाषणं स संलापः संपूर्वकः रपलपव्यक्तायां वाचि इति धातुः अस्मात् घञ् वा पदान्तस्येति पूर्वसवर्णः आलापस्तु एकेनापि क्रियते १६ सुप्रलापः सुष्ठु प्रकृष्टं लपनं घञ्॥ सुवचनं द्वे शोभनवचनस्य॥ अपलापः घञ्॥ अपलपन॥ निन्हवः निन्हवनं न्हुङ् अपनयने ऋदोरप् द्वे गोपनकारिवचनस्य॥ संदेशवाक् संदेशस्य वाक् वाचिकं स्यात् वाचोव्याहृतार्थायां इति ठक् द्वे दूतमुखात् संदेशवचनस्य॥ उत्तरे वक्ष्यमाणाः वाग्भेदाः रु

अनुलापो मुहुर्भाषा विलापः परिदेवनम्॥ विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः १६ सुप्रलापः सुवचनमपलापस्तु निन्हवः॥ संदेशवाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे १७ रुशती वागकल्याणी स्यात्कल्या तु शुभात्मिका॥ अत्यर्थमधुरं सान्त्वं संगतं हृदयंगमं १८ निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं प्रिये॥

शत्यादयः सम्यगंतास्त्रि लिंगाः स्युः यथा रुशन्शब्दः रुशद्वचनं या वागकल्याणी सा रुशती आच्छीनद्योर्नुम्विकल्पः रुश हिंसायां शत्रंतात् ङीप् एकं तांतं॥ या वाक् शुभात्मिका सा कल्या स्यात् कलासु साधुः काल्यापि एकं तालव्यांतं॥ यदतिशयेन मधुरं तत् सान्त्वं सान्त्वयति सान्त्वसामप्रयोगे ण्यन्ताद्घञ् एकं॥ संगतं संगच्छते स्म क्तः कर्तरि॥ हृदयंगमं हृदयं गच्छति गमश्चेति खच् द्वे युक्त्यामिलितवचनस्य १८ निष्ठुरं नितिष्ठति कुरच्॥ परुषं पिपर्ति पूरयति अलंबुद्धिं करोति पृ पालनपूरणयोः उषच् तदुक्तं हैमे परुषं कठोरं रुक्षे स्यान्निष्ठुरवचस्यपीति द्वे कर्कशवचनस्य॥ ग्राम्यं ग्रामे भवं ग्रामाद्यखञौ इति यत्॥ अश्लीलं श्रियं लाति आत इति कः कपिलकादित्वाल्लत्वं तद्भिन्नं द्वे शिथिलवचनस्य अश्रीकारकभंडादिवचस इत्यर्थः॥ प्रिये सत्ये सूनृतं स्यात् प्रीणाति प्रीञ् तर्पणे इगुपेति कः सुष्ठु नृत्यंत्यनेन घञर्थे कः सत्ये इत्यत्र तत्र साधुः सत्यः साधु तदुक्तं रभसे सूनृतं मंगलेपि स्यात्प्रियसत्येवचस्यपि एकं॥

यत्परस्परेणपराहतं मातामेवंध्येतिवत्पूर्वापरविरुद्धंतत्र संकुलं .क्लिष्टं चेतिनामद्वयं संकोलति कलसंस्त्याने इगुपेतिकः संकुलंत्रिषुविस्पष्टवाचिव्यामेइत्यरूकत्वात् क्लि
श्यतेस्म क्लिशूविबोधने क्तेक्तः १९ यत्लुप्तवर्णपदंवचः तद्ग्रस्तंइत्येकं ग्रसुअदने लुप्तोवर्णःपदंवा यत्रवाक्येपदेवा ग्रस्यतेस्म ग्रस्तंग्रासीकृतेपिस्याल्लुप्तवर्णपदोदितेइ-
त्य०॥ यत्त्वरितोदितंनिरस्तं असुक्षेपणे क्त. एकंस्यात् त्वरितमुदितं निरस्यतेस्म निरस्तःप्रेषितशरेसंत्यक्तेत्वरितोदिते निष्ठ्यूतेचप्रतिहतेइतिहैमः॥ सनिष्ठीवंलालायुक्तं
तदंबूकृतमुच्यते अंबूइतिच्व्यंतं सनिष्ठेवमपि यञिगुण. एकंश्लेष्मनिर्गमसहितवचसः॥ यदनर्थकं जरद्गवादिवाक्यंतदबद्धंस्यात् अर्थान्नअइतिकप् अवध्यमपि तदुक्तं
अवध्यमवधार्हेस्यादनर्थकवचस्यपीति २० अनक्षरं अवाच्यंस्यात् वचेण्यत् वचोशब्देतिनकुत्वं नप्रशस्तानिअक्षराणियस्मिन् द्वेवक्तुमनर्हस्यवचसः॥ मृषार्थकं मृषार्थोय

सत्येथसंकुलक्लिष्टेपरस्परपराहते १९ लुप्तवर्णपदंग्रस्तंनिरस्तंत्वरितोदितं॥ अंबूकृतंसनिष्ठीवमबद्धंस्यादनर्थकं २० अनक्षरमवाच्यं
स्यादाहतंतुमृषार्थकम्॥ अथम्लिष्टमविस्पष्टंवितथंत्वनृतंवचः २१ सत्यंतथ्यमृतंसम्य

स्यवंध्यासुतोयातीतिवत् आहतंस्यात् एकं आहन्यते
स्म आहतंगुणितेचापिताडितेचमृषार्थके॥ सोल्लुंठनं उल्लुंठनेनसहितं लुठिआलस्येप्रतिघातेच॥ सोत्प्रासं उत्प्रासःउपहासः तत्सहितं द्वे सोपहासादिवचनस्य॥ भणितं भणतेःक्तः
॥ रतिकूजितं रतौकूजितं द्वेरतिसमयेशब्दस्य इति सोल्लुंठनंतुसोत्प्रासंभणितंरतिकूजितं इतिक्वचित्पठ्यते॥ म्लिष्टं म्लेछतेस्म म्लेच्छअव्यक्तेशब्दे क्षुब्धस्वांतेतिनिपातितः
तदुक्तंमेदिन्यां म्लिष्टंत्रिष्वव्यक्तवाचीति द्वे अव्यक्तवचनस्य॥ अविस्पष्टं नविस्पश्यतेस्म स्पशबाधनस्पर्शनयोः क्तः॥ पदनृतंवचः तद्वितथमित्युच्यते विगतंतथासत्यंयस्मा
त् नञ्ऋतं एकं २१ सत्यं तदुक्तंरभसे सत्यंकृतेचशपथेतथ्येचत्रिषुतद्वतीति॥ तथ्यं सत्येसाधु॥ ऋतं अर्यतेस्म ऋगतौ क्तः॥ सम्यक् समंचति संगच्छते अंचुगतौ क्विन् सम्य
क् सम्यङ् पुंसि स्त्रियां समीची॥

अनुलापः॥ मुहुर्भाषा मुहुः पुनः पुनः भाषणं द्वे वारंवारभाषणस्य॥ विलापः॥ परिदेवनं दिवुपरिदेवने ल्युट् द्वे रोदनयुक्तभाषणस्य॥ विप्रलापः विरुद्धः प्रलापः॥ विरोधोक्तिः विरोधस्य उक्तिः द्वे अन्योन्यविरुद्धवचनस्य॥ मिथः अन्योऽन्यं युक्तिप्रयुक्तिसहितं यद्भाषणं स संलापः संपूर्वकः रपलपव्यक्तायांवाचि इति धातुः अस्मात् घञ् वा पदांतस्येति पूर्वसवर्णः आलापस्त्वेकेनापि क्रियते १६ सुप्रलापः सु शुभ्रं प्रलपनं घञ्॥ सुवचनं द्वे शोभनवचनस्य॥ अपलापः घञ्॥ अपलपनं॥ निन्हवः निन्हवनं न्हुङ् अपनयने कर्मणिघञ् द्वे गोपनकारिवचनस्य॥ संदेशवाक् संदेशस्य वाक् वाचिकं स्यात् वाचोव्याहृतार्थायां इति ठक् द्वे दूतमुखात् संदेशवचनस्य॥ उत्तरे वक्ष्यमाणाः वाग्भेदाः रु

अनुलापो मुहुर्भाषा विलापः परिदेवनम्॥ विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः १६ सुप्रलापः सुवचनमपलापस्तु निन्हवः॥ संदेश-वाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे १७ रुशती वागकल्याणी स्यात्कल्या तु शुभात्मिका॥ अत्यर्थमधुरं सान्त्वं संगतं हृदयंगमं १८ निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं प्रिये॥

शत्यादयः सम्यगंतास्त्रि लिंगाः स्युः यथा रुशन्शब्दः रुशद्वचनं या वागकल्याणी सा रुशती आच्छीनद्योर्नुम् विकल्पः रुश-हिंसायां शत्रंतात् ङीप् एकं नांतं॥ या वाक् शुभात्मिका सा कल्या स्यात् कलासु साधुः काल्यापि एकं तालव्यांतं॥ यदतिशयेन मधुरं तत् सान्त्वं सान्त्वयति सान्त्वसामप्रयोगे ण्यंतादच् एकं॥ संगतं संगच्छते स्म क्तः कर्तरि॥ हृदयंगमं हृदयं गच्छति गमश्चेति खच् द्वे युक्त्यामिलितवचनस्य १८ निष्ठुरं नितिष्ठति कुरच्॥ परुषं पिपर्ति पूरयति अलं बुद्धिं करोति पृपालनपूरणयोः उषच् तदुक्तं हैमे परुषं उनरुक्षे स्यान्निष्ठुरवचस्यपीति द्वे कर्कशवचनस्य॥ ग्राम्यं ग्रामे भवं ग्रामाद्यखञौ इति यत्॥ अश्लीलं श्रियं लाति आतइति कः कपिलकादित्वाल्लत्वं तद्भिन्नं द्वे शिथिलवचनस्य अश्लीकारकभंडादिवचस इत्यर्थः॥ प्रिये सत्ये सूनृतं स्यात् प्रीणाति प्रीञ्तर्पणे इगुपेति कः सुष्ठु नृत्यंत्यनेन घञर्थे कः सत्ये त्यत्र तत्र साधुः सत्सु साधु तदुक्तं रभसे सूनृतं मंगलेऽपि स्यात्प्रियसत्ये वचस्यपि एकं॥

यत्परस्परेणपराहतं मातामेवंध्येतिवत्पूर्वापरविरुद्धंतत्र संकुलं .क्लिष्टं चेतिनामद्वयं संकोलति कलसंस्त्याने इगुपेतिकः संकुलंत्रिषुविस्पष्टवाचिव्यामेइत्युक्तत्वात् क्लि
श्यंतेस्म क्लिशूविबोधने भूतेक्तः १९ यत्लुप्तवर्णपदंवचः तद्ग्रस्तंइत्येकं ग्रसुअदने लुप्तोवर्णःपदंवा यत्रवाक्येपदेवा ग्रस्यतेस्म ग्रस्तंग्रासीकृतेपिस्याल्लुप्तवर्णपदोदितेइ-
त्य०॥ यत्त्वरितोदितंनिरस्तं असुक्षेपणे क्तः एकंस्यात् त्वरितमुदितं निरस्यतेस्म निरस्तःप्रेषितशरेसंत्यक्तेत्वरितोदिते निष्ठ्यूतेचप्रतिहतेइतिहैमः॥सनिष्ठीवंलालायुक्तं
तदंबूकृतमुच्यते अंबूइतिव्यक्तं सनिष्ठेवमपि घञिगुणः एकंश्लेष्मनिर्गमसहितवचसः॥यदनर्थकं जरद्गवादिवाक्यंतदबद्धंस्यात् अर्थान्निर्गतइतिकप् अबध्यमपि तदुक्तं
अबध्यमबधार्हेस्यादनर्थकवचस्यपीति २० अनक्षरं अवाच्यंस्यात् वचेण्यत् वचोशब्देतिनकुत्वं नप्रशस्तानिअक्षराणियस्मिन् द्वेवक्तुमनर्हस्यवचसः॥मृषार्थकं मृषार्थोय

सत्येथसंकुलक्लिष्टेपरस्परपराहते १९ लुप्तवर्णपदंग्रस्तंनिरस्तंत्वरितोदितं॥अंबूकृतंसनिष्ठीवमबद्धंस्यादनर्थकं २० अनक्षरमवाच्यं
स्यादाहतंतुमृषार्थकम्॥अथम्लिष्टमविस्पष्टंवितथंत्वनृतंवचः २१ सत्यंतथ्यमृतंसम्य

स्यवंध्यासुतोयातीतिवत् आहतंस्यात् एकं आहन्यते
स्म आहतंगुणितेचापिताडितेचमृषार्थके॥सोल्लुंठनं उल्लुंठनेनसहितं लुठिआलस्येप्रतिघातेच॥सोत्प्रासं उत्प्रासःउपहासः तत्सहितं द्वेसोपहासादिवचनस्य॥भणितं भणतेःक्तः
॥रतिकूजितं रतौकूजितं द्वेरतिसमयेशब्दस्य इति सोल्लुंठनंतुसोत्प्रासंभणितंरतिकूजितं इतिक्वचित्पठ्यते॥म्लिष्टं म्लेछतेस्म म्लेच्छअव्यक्तेशब्दे क्षुब्धस्वांतेतिनिपातितः
तदुक्तंमेदिन्यां म्लिष्टंत्रिष्वव्यक्तवाचीति द्वेअव्यक्तवचनस्य॥अविस्पष्टं नविस्पश्यतेस्म स्पशबाधनस्पर्शनयोः क्तः॥यदनृतंवचः तद्वितथमित्युच्यते विगतंतथासत्यंयस्मा
त् नऋतं एकं २१ सत्यं तदुक्तंरभसे सत्यंकृतेचशपथेतथ्येचत्रिषुतद्वतीति॥तथ्यं सत्येसाधु॥ऋतं अर्यतेस्म ऋगतौ क्तः॥सम्यक् समंचति संगच्छते अंचुगतौ क्विन् सम्य
क् सम्यङ् पुंसि स्त्रियां समीची॥

वागभेदास्तु त्रिषूत्तरइतिवचनदृत्तित्वेनसत्यादीनांत्रिलिंगत्वमुक्तं यथा सत्यः पुमान् सत्या स्त्री सत्यमपत्यं॥इदानींवक्तृवृत्तित्वेनएषांत्रिलिंगत्वमाह अमूनि तद्वृति सत्य
वतित्रिषु यथा सत्या स्त्री सत्यः पुरुषः सत्यंवचः अलमिति॥शब्दः शब्दनं शब्दशब्दकरणे घञ्॥निनादः णदअव्यक्तेशब्दे घञ्॥निनदः अप्॥ध्वनिः ध्वनशब्दे
इः॥ध्वानः घञ्॥रवः रवणं रुशब्दे अप्॥स्वनः २२ स्वानः घञ्॥निर्घोषः घुषधुष्टौ॥निर्ह्रादः ह्रादअव्यक्तेशब्दे॥नादः॥निस्वानः एतेघञंताः॥निस्वनः॥आरवः॥
आरावः विभाषाङिरुप्लुवोः॥संरावः॥विरावः समदशशब्दमात्रस्य॥वस्त्रपर्णानांस्वनिते मर्मरः मृङ्प्राणत्यागे अरन् मुगागमश्च तदुक्तंहैमे मर्मरोवस्त्रभेदेचशु

गमूनित्रिषुतद्वृति॥शब्देनिनादनिनदध्वनिध्वानरवस्वनाः २२ स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः॥आरवारावसंरावविरावाअथ
मर्मरः २३ स्वनितेवस्त्रपर्णानां भूषणानांतुशिंजितम्॥निक्काणोनिक्वणः क्काणः क्वणः क्वणनमित्यपि २४ वीणायाः क्वणितेप्रादेः प्रक्काणः
प्रक्वणादयः॥ कोलाहलः कलकलस्तिरश्चांवासितंरुतम्॥ स्त्रीप्रतिश्रुत्प्रतिध्वानेगीतंगानमुभेसमे २५ इतिशब्दादिवर्गः

स्त्रपर्णध्व
नौतथा पुंसिस्त्रियांपुनः भोक्तामर्मरीपीतिदारुणीति २३ भूषणानांनूपुरादीनांस्वनितेशिंजितमित्येकं शिजिअव्यक्तेशब्दे क्तः॥निक्काणः घञ्॥निक्वणः अप्॥क्काणः॥क्वणः
॥क्वणनं ल्युट् पंचवीणादिस्वनितस्य २४ प्रादेरुपसर्गात्परेप्रक्काणः प्रक्वणइत्यादयस्तेवीणायाएवक्वणितेनान्यत्र आदिग्रहणादुपक्वणादयः॥कोलाहलः कोलनंकोलः एकी-
भावस्तमाहलति हलविलेखने अच् कलशब्दे॥कलकलः कलादपिकलः द्वे बहुकृतस्पष्टशब्दस्य॥तिरश्चां रुतंवाशितंस्यात् तिरोंचतिसे तिर्यंचः वाशृशब्दे वाशितकारि-
णीनार्योवाशितंभवितेरुतेइत्युक्तत्वात् एकं प्रतिश्रुत् प्रतिप्रथमशब्दंलक्षीकृत्य श्रूयतेप्रतिश्रुत्॥प्रतिध्वानः द्वे प्रतिशब्दस्य॥गीतं॥गानं क्तल्युटौ तद्यथा गीतंवेश
ब्दगानयोरितिहैमः २५ इतिशब्दादिवर्गः

अथस्वरभेदानाह निषादः निषीदंतिमनोयस्मिन् षदॢविशरणगत्यावसादनेषु हलश्चेतिघञ् तदुक्तंविश्वे निषादःस्वरभेदेऽपिचंडालेधीवरांतरइति॥ ऋषभः ऋषति ऋषीगतौ अभच् ऋषभस्त्वौषधांतरे स्वरभिद्वृषयोःकर्णरंध्रकुंभारपुच्छयोरित्युक्तत्वात्॥ गांधारः गंधारदेशेभवः तत्रभवः गांधारोरागसिंदूरस्वरेषुनीवृदंतरइतिमेदिनी॥ षड्जः षड्भ्योजातः सयथा नासांकंठमुरस्तालुजिह्वांदंतांश्चसंस्पृशन् षड्जःसंजायतेयस्मात्तस्मात्षड्जइतिस्मृतः॥ मध्यमः मध्येभवः सयथा तद्वदेवोत्थितोवायुरुरःकंठसमाहतः नाभिप्राप्तोमहानादोमध्यस्थस्तेनमध्यमः॥ धैवतः धीमतामयं तस्येदं मतुपोवकारः संज्ञात्वात्॥ पंचमः पंचानांपूरणः तदुक्तंमेदिन्यां पंचमोरागभेदःस्यात्स्वरभेदेचपंचमी पांडवानांचपत्न्यांस्त्रीपंचानांपूरणेत्रिष्विति वायुःसमुद्गतोनाभेरुरोहृत्कंठमूर्धसु विचरन्पंचमस्थानप्राप्त्यापंचमउच्यतइति तज्जन्यत्वात्स्वरःपंचम

निषादर्षभगांधारषड्जमध्यमधैवताः॥ पंचमश्चेत्यमीसप्ततंत्रीकंठोत्थिताःस्वराः १ काकलीतुकलेसूक्ष्मेध्वनौतुमधुरास्फुटे॥ कलोमंद्रस्तुगंभीरे

इत्यर्थः पूरणेडट्तस्यमट् इत्यमीसप्तस्वरास्तंत्रीतःकंठाच्चोच्चरंति वंशमुरजादयस्तुअनुकरणमात्रोपयोगिनइतिभावः नारदः षड्जंरौतिमयूरस्तुगावोनर्दंतिर्षभं अजाविकौचगांधारंक्रौंचोनर्दतिमध्यमं १ पुष्पसाधारणेकालेकोकिलोरौतिपंचमं अश्वस्तुधैवतंरौतिनिषादंरौतिकुंजरइति २ एकैकं॥ सूक्ष्मेकलेकाकलीत्येकंस्त्रियां-ईषत्कलःकाकली ईषत्कलः ईषदर्थेचेतिकोःकादेशः गौरादिः काकलिरपि अत्रपक्षेकलेरिनिःकृदिकारादिःतिङीषविकल्पः अतएवसाधूदितंकाकलीभिःकुलीनाइत्यभिनंदप्रयोगःसंगच्छते॥ मधुरास्फुटे ध्वनौ॥ कलः मधुरःश्रुतिसुखवः सचासावस्फुटोऽव्यक्ताक्षरश्च तादृशौ कलनं कलसंख्याने घप्रत्ययः कडत्यनेन कडमदे डलयोरेकत्वस्मरणं तद्यथा कलास्यान्मूलरेवृद्धौशिल्पादावंशमात्रके षोडशांशेचचंद्रस्यकलनाकालमानयोः कलंशुक्रेत्रिषुजीर्णेचाव्यक्तमधुरध्वनौ एकं॥ गंभीरे ध्वनौमंद्रः मंदते मदिस्तुत्यादिषु स्फायितंचीतिरक्॥

अस्फुटैर्ध्वनिर्नोनारइत्येकं नारयत्यतिक्रामयत्यन्यान्छब्दान् पचाद्यच् एकं॥ मंद्रः कलमंद्रतारास्त्रिषु २ यः समन्वितलयः सएकतालः स्यात् सम्यगन्वितोनुगतोलयो नृ-त्यगीतादिसाम्यंयत्र एकःसमस्तालोमानमस्येत्येकतालः एकं॥ वीणा वेतिज्ञायते स्वरोःस्यां रास्नासास्नेत्यादिनासाधुः॥ वल्लकी वल्लते वल्लुसंवरणे क्वुन् गौरादिङीष्॥ विपंची विपंचयति विस्तारयति शब्दं पचिविस्तारे पचाद्यच् गौरादिङीष् विपंचीकेलिवीणयोरित्युक्तत्वात् अयंवीणायाः॥ सातु वीणातु सप्तभिः तंत्रीभिरुपलक्षिता परिवा-दिनी परिवदतिस्वरान् सुप्यजातौ इनिणिनिः ३ यद्वीणादिकंवाद्यं वादनीयं ततंतमुच्यते तन्यते तनप्रत्ययस्यकित्वान्नलोपः आदिनासौरंध्रीरावणहस्तकिन्नर्यादि एकं॥ यन्मुर जादिकंमृदंगादिकंतदानद्धंस्यात् आदिनापटहादि आनह्यतेस्म मुरवेचर्मणाबद्धातेस्म णहबंधने कर्मणिक्तः॥ वंशादिकं वंशः वेणुः आदिर्यस्य आदिशब्दात् शंखादि

नारोत्यच्चैरूमयस्त्रिषु २ समन्वितलयस्त्वेकतालोवीणातुवल्लकी॥ विपंचीसातुतंत्रीभिःसप्तभिः परिवादिनी ३ ततंवीणादिकंवाद्यमानद्धं मुरजादिकं॥ वंशादिकंतुसुषिरं कांस्यतालादिकंघनम् ४ चतुर्विधमिदंवाद्यंवादित्रातोद्यनामकम्॥

सुषिरंस्यात् सच्छिद्रमस्यास्ति ऊषसुषी-तिरः तदुक्तंमेदिन्यां सुषिरंवंशादिवाद्येविवरेपिनपुंसकम् सुषिरोनस्त्रियांगर्तेवन्हौरंध्रान्वितेत्रिषु एकं॥ स्त्रम्यैं सुषिरामिवेतिप्रयोगाद्दंत्यादिमाच्यास्तु तालव्याद्यपी-त्याहुः॥ कांस्यतालादि कांस्यमयस्तालः आदिनाघंटादिघनंस्यात् निबिडत्वात् हन्यतेहनहिंसागत्योः मूर्तौघनइत्यप् घनः सांद्रेदृढेदार्ढ्येविस्तारेमुद्गरेंबुदे संघेसु स्तेघनंमध्यनृत्यवाद्यप्रभेदयोरितिहेमः ४ इदंततादिचतुर्विधंवाद्यादि वादित्रं वाद्यतेध्वन्यते आसमंतात् तुद्यते तुदव्यथने आतोद्यंनामयस्य ततंचैवावनद्धंच घनंसुषिरमेवच चतुर्विधंतुविज्ञेयमातोद्यंलक्षणान्वितमितिभरतात् वादित्रेणिभन् आतोद्येण्यत्॥ ७ ७

मृदंगाः मद्यंते मृदस्मोदे अंगच् मृदंगमस्येति मृदंगोघोषवाद्ययोरितिहैमः मुरजाः मुराद्वेष्टनाज्जाताः मुरंवेष्टनंजातमस्येतिवा बहुत्वाद्बहुवचनं मुरसंवेष्टने पंचम्या
मिनिङः ३मृदंगस्य॥भेदास्त्रयः अंक्यः अंकेउत्संगेभवः भवार्थेयत्॥आलिंग्यः आलिंग्यते लिगिगतो ण्यत्॥उर्ध्वकः उर्ध्वंःकायति शब्दायते कैशब्दे
सुपीतियोगविभागेनकः तदुक्तं हरीतक्याकृतिस्त्वंक्योयवमध्यस्तथोर्ध्वकः आलिंग्यश्चैवगोपुच्छोमध्यदक्षिणवामगाइति ५ यशः पटहोढक्कास्यात् यशोऽर्थः पटहः ढ
गिति कायति कैशब्दे सुपीतिकः आतइतिवा २ढक्कायाः शाकपार्थिवादिः॥भेरी बिभेत्यस्यारवात् रन्प्रत्ययेगौरादिङीष् वंक्र्यादयश्चेतिरिप्रत्ययेभेरिरपि स्त्री॥दुंदुभिः
दुंदुइतिशब्देनभाति यद्वा द्यासुभातिशब्देन उभपूरणे पृषोदरादिः पुमान्स्यात् ३दुंदुभेः भेर्यानकदुंदुभीत्यपिपाठः॥आनकः आनित्यनेनवादितेन कुन् आनयति भा

मृदंगामुरजाभेदास्त्वंक्यालिंग्योर्ध्वकास्त्रयः ५ स्याद्यशः पटहोढक्काभेरीस्त्रीदुंदुभिः पुमान्॥आनकः पटहोस्त्रीस्यात्कोणोवीणादि
वादनम् ६ वीणादंडःप्रवालःस्यात्ककुभस्तुप्रसेवकः॥ णयति सोत्साहान्करोतियोधान् ण्वुल् तदुक्तंविश्वे आनकःपटहेभेर्यांमृदंगेध्वनदंबुदइति॥पटहः
पटेनहन्यते डः तदुक्तंमेदिन्यां पटहोनासमारंभेआनकेपुंनपुंसकमिति अस्त्रीतिपूर्वान्वयि २॥वीणादिवाद्यतेयेन धनुराद्याकृतिनासकोणःस्यात् कुण्यतेयेन कुणशब्दोपक
रणयोः हलश्चेतिघञ्॥द्वयोस्तुकोणोवीणादेर्वादनंसारिकाचसेतिशब्दार्णवः कोणोवाद्यप्रभेदेस्याद्वीणादीनांचवादने एकदेशेगृहादीनामस्त्रेचलगुडेपिचेतिमेदिनी को
णोवीणादिवादने लगुडेस्त्रोलोहितांगे इतिहैमश्च एकं ६ वीणायाः दंडःप्रवालः एकं प्रकर्षेणवल्यते वलसंवरणे कर्मणिघञ् प्रवालोविद्रुमेवीणादंडेऽभिनवपल्लवेइतिहैमः
॥ककुभः कम्बकुत्सने भाति अंतर्भावितण्यर्थोत्कः॥प्रसेवकः प्रसेव्यते षेवृसेवने कुन् ककुभोरागभेदेपिवीणांकेऽर्जुनपादपे इत्यक० २वीणादंडादधःस्थितशब्दगांभी

र्यश्चचर्मावनद्धदारुमयभांडस्य वीणाप्रांतस्यवक्रकाष्ठविशेषस्येत्यन्ये॥ अस्याः वीणायाः कायः तंत्रीरहितोदंडादिसमुच्चयः कोलंबकः स्यात् कुलसंस्त्याने बहुलंअं
बच् कन्॥ वीणाप्रांतेतंत्र्योनिबध्यंते तत् निबंधनं उपनाहइत्युच्यते निबध्यंतेऽनेनास्मिन् बंधबंधने हलश्चेतिघञ् उपनह्यतेऽनेनास्मिन् नहबंधने अत्रापिघञ् ठे
७ डमरुः डमइतिशब्दमियर्ति अर्तेः कुः॥ सएवमहान्मड्डुः डुमरुजोइत्यस्यपृषोदरादिः॥ डिंडिमः डिंडीतिशब्दंमिनोति प्रकाशयति डमत्ययेसाधुः॥ झर्झरः झर्झ
शब्दंराति तदुक्तंरभसे झर्झरःस्यात्कलियुगेवाद्यभांडेनदांतरे झल्लरीझर्झरीचह्रुडुक्केशान्चक्रेचवाद्यकेइति केचिदित्थं डमरुः कापालिकादीनांवाद्यं डिंडिमः दवडी
इतिप्रसिद्धः झर्झरः झागडइतिप्रसिद्धः॥ मर्दलः मृदंगसदृशोवाद्यभेदः मर्दसुपमर्दंलाति आतइतिकः एकं॥ पणवः पणंव्यवहारंवाति अन्येगोमुखहुडुकादयः

कोलंबकस्तुकायोस्यादुपनाहोनिबंधनम् ७ वाद्यप्रभेदाडमरुमड्डुडिंडिमझर्झराः॥ मर्दलःपणवोऽन्येचनर्तकीलासिकेसमे ८ विलं
बितंद्रुतंमध्यंतत्वमोघोघनःक्रमात्॥

एतेषांवाद्यभेदानांपृथगेकैकं॥ नर्तकी नृत्यति नृतीगात्रविक्षेपे शिल्पिनिष्वुन् ङीष्॥ नर्तकः नर्तकः केवलेपोट
गलश्चारणयोर्नटे नर्तकीलासिकायांचकरेणवामपियोषितीति॥ लासिका लसश्लेषणक्रीडनयोः ण्वुल् अकादेशः क्रियोपाधिकतयावाच्यलिंगत्वात्पुंस्त्वनिर्दे
शस्यौत्सर्गिकत्वान्नर्तकोलासकः समावितिवक्तव्ये स्त्रीनिर्देशोङीष् टापोर्विवेकः तदुक्तंहेमे लासकोकेकिनर्तकाविति हैनर्तक्याः ८ यत् विलंबितनृत्यादि
कंतत्तत्वस्यात् ततनंतत् तदस्यास्ति तनूविस्तारे संपदादिः मत्वर्थेवः विलंबितेकरचरणादयोयत्र लंबिअवस्रंसने एकं॥ यद्द्रुतं शीघ्रं नृत्यादिकंतत् ओघइत्युच्यते
उचसमवाये घञ् पृषोदरादिः द्रवंति शीघ्रंगच्छंत्यत्र द्रुगतौ उभयत्रक्तोऽधिकरणे एकं॥ यन्मध्यंतद्घनमितिप्रोक्तं मूर्तौघनः तन्नविलंबितंनापिद्रुतमित्यर्थः एकं॥

कालक्रियामानंतालः स्यात कालक्रिययोर्मानंनियमहेतुरित्यर्थः गीतवाद्यपादादिन्यासानांक्रियांकालयोः एकं ॥ साम्यं लयः स्यात् लीङ्श्लेषणे एरच् तालः करतलेंगुष्ठमध्यमायांच संमिते गीतकालक्रियामानेकरस्फाले द्रुमांतरे वाद्यभांडेचेतिमेदिनी ९ तांडवं तांडवंतृणभिन्नाट्यभेदयोरितिहैमेमेदिन्यौ अस्त्रियांतांडवमित्यन्वयः तंडुनाप्रोक्तं तेन-प्रोक्तंइत्यण् ओगुणः ॥ नटनं नटअवस्कंदने ल्युट् ॥ नाट्यं छंदागोइनिञ्यः नाट्यंतौर्यत्रिकेलास्येइत्युक्तत्वात् ॥ लास्यं लास्यंतौर्यत्रिकंमतं नृत्येचेतिविश्वः लसश्लेषण क्रीडनयोः ण्यत् ॥ नृत्यंच ऋदुपधाच्चेतिभावेक्यप् ॥ नर्तनं षट्नृत्यस्य ॥ नृत्यगीतवाद्यमितीदंत्रयंमिलित्वा तौर्यत्रिकमितिनाट्यमितिस्यात् तूर्यमुरजादि तत्रभवं तौर्योपल-क्षितंत्रिकमितिविग्रहः इदमेवंनृत्यादित्रयंनाट्यमित्यर्थः नटस्येदं द्वे १० यः पुरुषः स्त्रीवेषधारी नर्तकः नृत्यति तस्मिन् ॥ भ्रकुंसः भ्रुकुंसः भ्रूकुंसः भ्रुवोर्भ्रुवावाकुं

तालः कालक्रियामानंलयः साम्यमथास्त्रियाम् ९ तांडवंनटनंनाट्यंलास्यंनृत्यंचनर्तने ॥ तौर्यत्रिकंनृत्यगीतवाद्यंनाट्यमिदंत्रयं १०
भ्रकुंसश्चभ्रुकुंसश्चभ्रूकुंसश्चेतिनर्तकः ॥ स्त्रीवेषधारीपुरुषोनाट्योक्तौगणिकाज्जुका ११ भगिनीपतिरावुत्तोभावोविद्वानथावुकः

सोभाषणमस्याः भ्रुवाकुंसयतिवा अयंस्यात् पटपुटेतिदंडकेपठितात् ण्यंतादेरच् तदुक्तंशब्दार्णवे भ्रकुंसश्चभ्रुकुंसश्चभ्रूकुंसवदितिइकोन्हस्वइतिसूत्रे ङ्यङुल्वे नि वार्तिकस्यव्याख्याहृयात् साधुत्वं नाट्योक्तावित्यधिकारः मागंगहारात् ॥ या गणिका सा अज्जुकाज्ञेया अर्जअर्जने बहुलंउकन् रस्यज्जः एकं ११ भगिन्याः पतिः आवुत्तइत्युच्यते एकं आपनंआप् संपदादिः ततोतेर्डः ॥ योविद्वान् सभावइत्युच्यते भावयतिपरिभावयति तदुक्तंविश्वे भावः सत्तास्वभावादि प्रायश्चेष्टात्मजन्मसु क्रियालीलापदार्थेषुबुधजंतुविभूतिष्विति एकं ॥ जनकस्तु आवुकइत्युच्यते अवति अवरक्षणे उकण् जनकः पितृनृपयोरित्युक्तत्वात् ॥

युवराजस्तु कुमारः भर्तृदारकः इयं कुमारयति क्रुमारक्रीडायां अच् कुमारंश्वानुचारके युवराजेशिशौस्कंदेशक्रेवरुणपादपे कुमारंजात्यकनकेकुमारंत्वपराजिते इ तिहैमः भर्तुराज्ञोदारकः षष्ठ्युल् हे १२ राजा भट्टारकः भटति भटपरिभाषणे क्विप् भट्चासौतारकश्च पृषोदरादित्वात् टः भट्टंस्वामित्वमृच्छति नदुक्तंहैमे भट्टा रकोनृपेनाट्येवाद्येदेवतयाधनर्द्धाति॥देवः दीव्यति अच् नदुक्तंहेमचंद्रे देवत्स्वषीकेदेवस्तुनृपतौतोयदेस्तुरे इयंराज्ञः॥तत्सुता भर्तृदारिका तस्यसुता भर्तुराज्ञो दारिका एकं॥कृताभिषेकायांदेवी स्येकं नदुक्तंहेमचंद्रे देवीकृताभिषेकायांतेजनीस्टक्कयोरपीति॥इतरासुराज्ञीषु भट्टिनी तदुक्तंरभसे भट्टिनीद्विजभार्यायांनाट्ये

जनकोयुवराजस्तुकुमारोभर्तृदारकः १२ राजाभट्टारकोदेवस्तत्सुताभर्तृदारिका॥देवीकृताभिषेकायामितरासुतुभट्टिनी १३
अब्रह्मण्यमवध्योक्तौराजशालस्तुराष्ट्रियः॥अंबामाताथबालास्या

न्यांराजयोषितीति एकं अत्रविशेषःशब्दार्णवे गणिकानुचरैरज्जुकेति नाम्नानृपेणसा युवराजस्तुसर्वेणकुमारोभर्तृदारकः भट्टारकोवादेवोवावाच्योभृत्यजनेनसः ब्राह्मणेनतुनाम्नैव राजन्नित्यृषिभिः स च वयस्यराजन्निविदूषक इत्येवंवदेत् अभिषिक्तातुराज्ञासौदेवीत्यन्यातुभोगिनी भट्टिनीत्यपरैरन्यास्वैर्गोस्वामिनीतिसेति १३ अवध्योक्तौअब्रह्मण्यंस्यात् अवध्यस्य वधानर्हस्यब्राह्मणादेः ब्र ह्मणिसाधु तत्रसाधुरितियत् ततोनञ्समासः एकं॥राजशालः राष्ट्रियउच्यते राष्ट्रेधिकृतः राष्ट्रावारेतियः एकं॥अंबा अंब्यते शब्द्यते अंबिशब्दे कर्मणिघञ् शलोश्वेति अकारोवा नात्योक्ताविव्यधिकारस्यप्रायिकत्वादंबादीनांकेषांचिदन्यत्रापिप्रयोगः॥माता द्वे॥बाला वासूरिति द्वेकुमार्याः वासयतेस्वगृहे बहुलकाण्यंतादुः॥ १४

आर्यः अर्तुंयोग्यः ऋगतौ ण्यत् कर्तव्यमाचरन्काममकर्तव्यमनाचरन् तिष्ठतिप्रकृताचारेसतुआर्यइतिस्मृतः इतिवसिष्ठः॥ मर्षणात्सहनान्मारिषः हिंसानिवारकत्वा
द्वा रिषहिंसायां इगुपेतिकः माशब्देनसमासः मारिषःशाकभिद्यार्येनाट्योक्तोपुंसिभाषितइतिमूर्धन्यांतेरभसः मार्षश्च तदुक्तं आर्येमारिषमार्षकाविति शब्दार्णवात्
हे आर्यस्य १४ या ज्येष्ठाभगिनीसा अत्तिका अत्ता माता सेवअतिका संज्ञायांकन् अत्तिकाचांतिकानथेतिद्विरूपकोशाद्ंतिकापि अंतिकंनिकटेवाच्यलिंगस्त्रीशोभ
नौषधे चुल्यांज्येष्ठभगिन्यांचनाट्योक्त्यांकीर्त्यतंतिकेतिरभसः एकं॥ निष्ठा नियतंस्थानं निष्ठा आनश्चोपेत्यङ् उपसेतिषः॥ निर्वहणं वहेर्ल्युट् अनादेशेणत्वं निय
तंस्थानमितिभावविवरणं निष्ठोत्कर्षव्यवस्थयोरित्य॰ निबर्हणंतुनिष्ठास्त्रीसंहारश्चसमापनइतिशब्दार्णवः समेइतिसमानार्थे नतुसमानलिंगे शब्दार्णवेलिंगभेददर्शि

हासूरार्यस्तुमारिषः १४ अत्तिकाभगिनीज्येष्ठानिष्ठानिर्वहणेसमे॥ हंडेहंजेहलाह्वानेनीचांचेटींसखींप्रति १५ अंगहारोंगविक्षेपोव्यंजकाभि
नयोसमौ॥ निर्वृत्तेत्वंगसत्वाभ्यांद्वेत्रिष्वांगिकसात्विके १६

नात् द्वे॥ मुखप्रतिमुखगर्भविमर्शनिबर्हणाख्याःपंचनाटकेसंधयः तत्रपंचमस्यसंधेः प्रस्तुतकथास
मापेरित्यन्ये नीचांप्रत्याह्वाने हंडे॥ चेटीं प्रति हंजे॥ सखीं प्रति हला त्रीण्यव्ययानि हिंडते हिडिगत्यनादरयोः बहुलं एप्रत्ययः इतोकारः हंडेइत्यप्रकृत्यजोपि हलाशब्द
श्चाबंतोपि सखीपर्यायः वालावास्यःसखीहलेतिस्त्रीकांडेबोपालितात् हलविलेखने बाहुलकादाप्रत्ययः १५ अंगस्यस्थानात्स्थानांतरंनयनं अंगहारः हरतेर्घञ् अंगुल्यादिवि
न्यासः अंगविक्षेपः अंगानां क्षिपप्रेरणे घञ् द्वे नृत्यविशेषस्य॥ व्यंजकः व्यनक्ति अंजूव्यक्त्यादौ ण्वुल्॥ अभिनयः पचाद्यच् द्वे हस्तादिभिर्मनोगतार्थप्रकाशनस्य॥ अंगसत्वा
भ्यांभ्रूविक्षेपादिमनोवृत्यादिचताभ्यां निर्वृत्ते निष्पन्ने आंगिकसात्विकसंज्ञकेस्तः निर्वृत्तेसद्यूनादिभ्यइतिठक् यथाह स्तंभः स्वेदोथरोमांचःस्वरभंगोथवेपथुः वैवर्ण्यम
श्रुप्रलयइत्यष्टौसात्विकागुणाः इमेद्वे अपित्रिषु १६

शृंगारादयोऽष्टौरसाः नाटकेपिनावंनएव नेचयथा शृंगारः शृंगंप्राधान्यंइयर्ति कर्मण्यण् तदुक्तंहैमे शृंगारोगजमंडने स्मरेतेरसभेदेचशृंगारंनागसंभवेइति॥वीरः॥ करुणः॥अद्भुतः॥हास्यः॥भयानकः॥बीभत्सः॥रौद्रः एतेअष्टरसाः रस्यंते रसआस्वादने चुरादेरदंतात्कर्मणिघञ् तदुक्तंविश्वे रसोगंधरसेजले शृंगारादौविषे वीर्येतिक्तादौद्रवरागयोरिति चकारात्शांतोपिनवमः॥वात्सल्यं दशमः॥शृंगारः शुचिः शोचत्यऽनेन उत्तमयुवप्रकृतिकत्वेनजुगुप्सारहितत्वात् तदुक्तंहेमचंद्रे शुचिःशुद्धे सितेऽनले ग्रीष्माषाढानुपहतेषूपधाशुद्धमंत्रिणि शृंगारेचेति॥उज्ज्वलः उच्चैर्ज्वलति प्रकाशते अच् ज्वलितिकसन्तेभ्यो णः तत्रानुपसर्गादित्यनुवृत्तेः तदुक्तंहैमे उज्ज्वलस्तु विकासिनि शृंगारेविशदेदीप्तेपीति त्रीणिशृंगारस्य १७ उत्साहवर्धनः उत्साहेनवर्धते दृधुवृद्धौ उत्साहंवर्धयतीतिवा नंद्यादिः॥वीरः वीरयति

शृंगारवीरकरुणाद्भुतहास्यभयानकाः॥बीभत्सरौद्रौचरसाःशृंगारःशुचिरुज्ज्वलः १७ उत्साहवर्धनोवीरः कारुण्यंकरुणाघृणा॥कृपादया नुकंपास्यादनुक्रोशोप्यथोहसः १८

शूरवीरविक्रांतौ यद्वा विशेषेणईर्ते ईरयतिवा ईरगतौ कोऽज्वा वीरोजिनेभटेश्रेष्ठवीरंशृंग्यांनतेपिचेत्यक्तत्वात् द्वीरसस्य॥कारुण्यं करुणः तस्यभावः ब्राह्मणादित्वात्ष्यञ्॥करुणा करोतेरुनन् तदुक्तंहैमे करुणातुकृपायांस्यात्करुणोरसवृक्षयोरिति॥घृणा घ्रियंतेऽनया घृसेचने नक्बहुलम् तदुक्तंहैमे घृणातुस्याज्जुगुप्सायांकरुणायामिति॥कृपा कृपणं कृपकृपायां भिदादौकृपेः संप्रेतिसाधुः कृपोद्रोण श्यालकःस्याद्द्रोण पत्न्यांकृपीस्मृतेति॥दया दयते रक्षत्यनया दयदानगतिहिंसारक्षणेषु भिदादिः अनुकंपागुरोश्चेत्यकारः अनुकंपनं कपिकिंचिच्चलने॥अनुक्रोशः अनुक्रोशत्यने न क्रुशआव्हानेरोदनेच हलश्चेतिघञ् सप्तकरुणस्य॥हसः हसनं हसेहसने स्वनहसोर्वेत्यप् १८

हासः घञ् तदुक्तंशब्दार्णवे तत्रहासोहसोहास्यंघर्घरंहासिकास्त्रियामिति॥ हास्यं त्रयंहासस्य॥ बीभत्सं बीभत्सास्त्यत्र मत्वर्थेच् बीभत्सोनार्जुनेक्रूरेघृणात्मविकृते त्रिष्वित्युक्तत्वात्॥ विकृतं विकरणंकृतं जुगुप्साप्रभवत्वात् विकृतंत्रिषुबीभत्सेरोगितेसंस्कृतेपिचेतिविश्वः वैकृतोपि तदुक्तंशब्दार्णवे विकृतोवैकृतोप्याग्रहायण्या मग्रहायणमिति द्वेबीभत्सस्य इदंद्वयंरसेपुंसिनद्वृत्तित्रिषु॥ विस्मयः विस्मायनं ष्मिङ्‌ईषद्धसने एरच् तदुक्तंहैमे विस्मयोद्भुतदर्पयोरिति॥ अद्भुतं आश्चर्यार्थेव्ययं अत् त स्यभवनं आदिशुवोडुनच्॥ आश्चर्यं आङ्चर्यते अभिनीयते आश्चर्यमनित्येइतिसाधु॥ चित्रं चित्रयति चित्रचित्रकरणे पचादिः चत्वारिअद्भुतस्य॥ भैरवं भीरोरिदं तस्येदमित्यण् दूर्वायांभैरवः पुंसिशंकरेभीषणेत्रिष्वित्युक्तत्वात् १९ दारुणं दारयति चित्तं दृभयेउनन्॥ भीषणं भीषयते ल्युः॥ भीष्मं बिभेत्यस्मात् भीष्मोरुद्रेच्गांगे

हासोहास्यंचबीभत्संविकृतंत्रिष्विदंद्वयं॥ विस्मयोद्भुतमाश्चर्यंचित्रमप्यथभैरवं १९ दारुणंभीषणंभीष्मंघोरंभीमंभयानकं॥ भयंकरंप्र तिभयंरौद्रंतूग्रममीत्रिषु २० चतुर्दशदरस्त्रासो

येराक्षसेचभयंकरइतिहैमः॥ घोरं घोरयति घुरभीमार्थशब्दयोः॥ भीमं तदुक्तंहैमे भीमोवृकोदरेघोरेशंकरेम्य-म्लवेतसेइति भीइतोमकिषुगभावः॥ भयानकं बिभेत्यस्मात् भियःआनक् तदुक्तं भयानकःस्मृतोव्याघ्रेरसेराहौभयंकरे॥ भयंकरं भयंकरोति मेघइतिखच्॥ प्रतिभयं प्र तिगतंभयमस्मिन् प्रतिभयंभयेभीष्मेइतिहैमः। नवभयानकस्य॥ रौद्रं रुद्रस्येदंअण् रौद्रोभीष्मेरसेतीव्रेरौद्रीगौर्यामितिहैमः॥ उग्रं उचसमवायेरन् द्वेरौद्रस्य॥ अमीअ द्भुताद्याश्चतुर्दशशब्दारसेपुंसि शृंगारवीरेत्यादिश्लोकेपुंस्त्वदर्शनात् अभिन्नलिंगानामेवद्वंद्वप्रतिज्ञानात् तद्वृत्तितुत्रिषुवाच्यलिंगाः २७ रसानुक्तातदनुगुणत्वेनोच्चाव चान्भावानभिधत्ते दरः दीर्यत्यस्मात् दृभये अप् दरःस्याद्भयगर्तयोरित्युक्तत्वात्॥ त्रासः त्रसीउद्वेगे घञ् तदुक्तंहैमे त्रासोभयेमणेर्दोषेइति॥ ६७

भीतिः त्रिभीभये क्तिन्॥भीः॥साध्वसं साधूनस्यति पचादिपाठसामर्थ्यादजेवएनेनेदमयुक्तं अणःप्रसंगात् इत्यक्तिः परास्तापाठवैय्यात्॥भयं भियेत्यपि तत्रैत्यं स्याद र्त्तनमृतीयाचगर्हाचाथभयंभियेतिशब्दार्णवः बाहुलकादङिभियाइतिसाधु षट्भयस्य॥मनसः विकारः भावउच्यते भावयति करोतिरसानिति पिचोच् एकं॥यः भाव बोधकः चित्तविकारप्रकाशकः कटाक्षादिः सः अनुभावउच्यते अनुभावयतीति प्रागवत्साधु तदुक्तंहैमे भावोऽभिप्रायवस्तुनोरिति अनुभावःप्रभा॰वेस्यान्निश्चयेभा वसूचनइतिविश्वः एकं॥२१॥गर्वः गर्वमानेघञ्॥अभिमानः अभिसर्वतोमानः अभिमानोर्थादिदर्पेज्ञानेप्रणयहिंसयोरित्यक्तत्वात्॥अहंकारः अहमितिकरणं त्रीणि गर्वस्य॥चित्तसमुन्नतिःमानःस्यात् मननं मनुअवबोधने घञ् चित्तस्यसमुन्नतिः परस्मादुत्कर्षचिंतनेनोन्नत्यंमानः तदुक्तंहैमे मानंप्रमाणेप्रस्थादौमानश्चित्तोन्नतौ

भीतिर्भीः साध्वसंभयं॥विकारोमानसोभावोऽनुभावोभावबोधकः २१ गर्वोऽभिमानोऽहंकारोमानश्चित्तसमुन्नतिः॥अनादरः परिभवः परीभाव स्तिरस्क्रिया २२ रीढावमाननावज्ञाऽवहेलनमसूर्क्षणं॥मंदाक्षंह्रीस्त्रपाव्रीडालज्जासापत्रपान्यतः २३

ग्रहइति एकं गर्वादयः पंचापिपर्यायाइतियुक्तं॥अनादरः नआदरः॥परिभवः अप्पक्षेपघञ्॥परीभावः उपसेतिबहुलंदीर्घः॥तिरस्क्रिया तिरस्करणं २२ रीढा रेहणं रिहबंधे क्तः॥अवमानना मनेर्ण्यंतात् अ वमाननं॥अवज्ञा आतश्चोपेत्यङ् अवज्ञानं॥अवहेलनं हेन्ह अनादरेघञ्॥अ सूर्क्षणं सूर्क्षेतिनञ्पूर्वोत्र नवअनादरस्य॥मंदाक्षं मंदमंक्षंवागाघत्र॥ह्रीः ह्रीलज्जायां संपदादिक्विप् त्रपले षिल्वादङ्॥त्रपा तदुक्तंहैमे त्रपालज्जाकुरस्योरिति॥व्रीडा व्रीडलज्जायां अकारप्रत्ययः॥लज्जा घञिव्रीडोपि गंडूषगर्जभुजजामरहारकील- ज्वालाझलारमसवर्तकगर्दशंगा व्रीडादयश्चवरटश्चवराटकश्चउत्कंठवाणकरकाश्चसमामयाश्चेतिरत्नापुल्लिंगकथनेरभसः सालज्जाऽन्यतःपरस्मात्चेत् अपत्रपा अपत्रपा

अहंतः एकं २३

क्षांतिः क्षमूसहनेक्तिन् दीर्घः निजेः क्षमायांइनिसन् अप्रत्ययः टाप् ॥ तितिक्षा हेपराभ्युदय सहनस्य ॥ परस्यविषयेपरकीयधनेस्पृहा ॥ अभिध्या परस्वविषयविषयिणीच्छेत्यर्थः ॥ अभिचारेणध्यानंअभिध्या आतश्चेत्यङ् एकं ॥ अक्षांतिः नक्षमणं क्तिन्नंतेननञासमासः ॥ ईर्ष्या ईर्ष्यण्यं ईर्ष्यईर्ष्यायां गुरोरित्यः हेपरोत्कर्षासहिष्णुत्वस्य ॥ गुणेषुदोषारोपः असूयास्यात् कंड्वादियगंतादकारः तदुक्तंशब्दार्णवे असूयात्वभ्यसूयाचेति एकं ॥ वैरं वीरस्यकर्म वैरमैथुनीतिनिर्देशाद्युवादित्वं ॥ विरोधः विरोधनं ॥ विद्वेषः विद्वेषणं रुधिर्आवरणे द्विषअप्रीतौ उभयत्रघञ् त्रयंवैरस्य ॥ मन्युः मनज्ञाने मनिजनीतियुः तदुक्तंहैमे मन्युर्दैन्येक्रतौक्रुधीतिहैमः ॥ शोकः शुचशोके घञ् ॥ शुक् क्विप् स्त्रियां चांतः त्रीणिशोकस्य ॥ पश्चात्तापः पश्चात्तपनं ॥ अनुतापः अनुतपनं तपसंतापे घञ् ॥ विप्रतीसारः विप्रतिसरणं सृगतौ घञिदीर्घः त्रयंपश्चात्तापस्य २५ कोपः कुपक्रोधे ॥

क्षांतिस्तितिक्षाभिध्यातुपरस्यविषयेस्पृहा ॥ अक्षांतिरीर्ष्यासूयातुदोषारोपोगुणेष्वपि २४ वैरंविरोधोविद्वेषोमन्युशोकौतुशुक्स्त्रियां ॥ पश्चात्तापोनुतापश्चविप्रतीसारइत्यपि २५ कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधौस्त्रियौ ॥ शुचौतुचरितेशीलमुन्मादश्चित्तविभ्रमः २६ प्रेमाना प्रियताहार्दं

क्रोधः क्रुधकोपे ॥ अमर्षः मृषतितिक्षायां नञ्समासः ॥ रोषः रुषहिंसायां चत्वारोघञंताः ॥ प्रतिघः डेन्यंकादिः प्रतिहननं प्रतिघोरुट्प्रतीघातावितिहैमः ॥ रुट् रुद्धक्रुधौ तदुक्तंशब्दार्णवे क्रोधोमामःक्रुधारुषेति तत्ररुट्षांता स्त्रियौस्त्रीलिंगे रुट्क्रुधौटाबंतावपि सप्तक्रोधस्य ॥ शुचौ शुद्धे चरितेआचरणे शीलं शीलसमाधाने ण्यंतात्घञ् तदुक्तंविश्वे शीलंस्वभावेसद्वृत्तेइति एकं ॥ उन्मादः उन्मदनं मदीहर्षे घञ् ॥ चित्तविभ्रमः चित्तस्यविभ्रमोनवस्थानं २६ प्रेमा प्रियादिमनिन् इमान् प्रेमास्त्रीस्नेहमर्मणोरित्युक्तत्वात् ॥ प्रियता प्रियस्यभावः ॥ हार्दं हृदयस्यकर्म युवादिः ॥

७ ७ ७

प्रेम प्रयणं प्रीञ् तर्पणे मनिन् प्रेमनान्नक्लीबं ॥ स्नेहः स्नेहनं ष्णिह प्रीतौ घञ् स्नेहप्रेम्णिघृतादिकइत्युक्तत्वात् पंचस्नेहस्य ॥ दोहदं दोहमभिलाषंददाति अयमिच्छा मात्रवाच्यपिविशेषेणगर्भिणीच्छायांप्रयुज्यते तत्र दोहदोगर्भलक्षणे अभिलाषेतथागर्भेइतिहेमः ॥ इच्छा इषेःशेनिपातः ॥ कांक्षा कांक्षेः अकारः ॥ स्पृहा ॥ ईहा ईह चेष्टायां अकारः ॥ तृट् ॥ वांछा ॥ लिप्सा लभेः सन् अकारः ॥ मनोरथः मनसोरथइव २७ कामः कामनं कमुकांतौ कामःस्मरेच्छयोःपुमान् रेतस्यपिनिकामेच काम्येपि स्यान्नपुंसकमित्युक्तत्वात् ॥ अभिलाषः लषणं लषकांतौ घञ् ॥ तर्षः ॥ दोहदादितर्षांतानिद्वादशस्पृहायाः ॥ सतर्षः महाश्रेच्छुलालसा ललई सायां औणादिरसच् द्वयोः स्त्रीपुंसयोः उपाधिः ॥ धर्मचिंता धर्मस्यचिंता उपाधिःपुंसि द्वे धर्मचिंतनस्य ॥ आधिः आधीयतेदुःखमनेन उपसर्गउपसेतिकिः ॥ मानसीव्यथा मनसिभवा आधिःपुंसि द्वे मनःपीडायाः २८

प्रेमास्नेहोऽथदोहदं ॥ इच्छाकांक्षास्पृहेहातृड्वांछालिप्सामनोरथः २७ कामोऽभिलाषस्तर्षश्चसोत्यर्थंलालसाद्वयोः ॥ उपाधिर्नाधर्मचिंतापुंस्याधिर्मानसीव्यथा २८ स्याच्चितास्मृतिराध्यानमुत्कंठोत्कलिकेसमे ॥ उत्साहोध्यवसायःस्यात्सवीर्यमतिशक्तिभाक् २९

चिंता चिंतनं अकारः चितिस्मृत्यां युच् बाधनार्थेचिंतिपूजीति अङ्वा चिंतातुस्मृतिराध्यानंस्मरणंसस्पृहेपुनः उत्कंठोत्कलिकेतस्मिन्नभिध्यात्वभयोरपीतिशब्दार्णवः ॥ स्मृतिः स्मरणं स्मृआध्याने नदुक्तंहैमे स्मृतिःस्मरणधीच्छास्मृशास्त्रेइति ॥ आध्यानं ध्यैचिंतायां ल्युट् त्रीणिस्मरणस्य ॥ उत्कंठा कठिशोकेअकारः ॥ उत्कलिका कलेर्वुन् द्वे उत्कंठायाः ॥ उत्साहः उत्सहनं षहमर्षणे घञ् ॥ अध्यवसायः अध्यवसानं स्यतेर्घञ्युग् द्वे उत्साहस्य ॥ येनकृत्लाअसाध्यसाधनेप्युद्यतोभवतिसउत्साहः ॥ निशक्तिभाक् सातिशक्तिश्चेद्वीर्यमुच्यते वीरसाधुः अतिशयशक्तिवीर्यइतित्वमरमालायांस्त्रीत्वम् एकम् २९ ७ ७

कपटः केमूर्ध्निपटइवाच्छादकः यद्वा पटतीनिपटः अच् कस्यब्रह्मणोपिपटः व्यापकः पटगतौ॥व्याजः व्यजति क्षिपत्यनेन अजगतिक्षेपणयोः हलश्चेतिघञ् तदुक्तं विश्वे-
व्याजःशाठ्यःपदेशयोरिति॥दंभः दंभत्यनेन दंभुदंभने घञ् दंभः कल्ककैतवयोरितिहेमचंद्रः॥ उपधिः उपधीयते आरोप्यतेऽनेन उपसेतिकिः उपधिर्व्याजचक्रयोरित्यज
त्वात्॥ छद्म छाद्यतेऽनेन छदअपवारणे नस्वः मनिन्॥ कैतवं कितवस्यकर्म युवादिः तदुक्तंहैमे कैतवंद्यूतदंभयोः कैतवः कितवेशत्राविति॥कुसृतिः कुत्सितासृ
तिः सृगतौ क्तिन् कुगतीतिसमासः॥निकृतिः निकृष्टागतिः क्रियापरप्रतारणरूपा यद्वा पराभीष्टस्यनिकर्तनं कृतीच्छेदने इक्कृष्यादिभ्यः तदुक्तंविश्वमेदिन्योः
निकृतिर्भर्त्सनेक्षेपेशठेशाठ्येपिचस्त्रियामिति॥शाठ्यं शठति शठकैतवे शठस्यकर्म ष्यञ् नवकपटस्य॥कपटमपि प्रमादः मदीहर्षे भावेघञ् प्रमादःसंपदेमत्ते-

कपटोऽस्त्रीव्याजदंभोपधयश्छद्मकैतवे॥ कुसृतिर्निकृतिःशाठ्यंप्रमादोनवधानता ३० कौतूहलंकौतुकंचकुतुकंचकुतूहलं॥स्त्रीणांविलास
बिब्बोका

स्त्रियामुन्मदयोषितीत्युक्तत्वात्॥अनवधानता नअवधानमस्यतस्यभावः तल् हेअविमृश्यकृत्यस्य ३० कौतूहलं कुतूंच
र्मनिर्मितस्नेहपात्रंहलति हलविलेखने मूलविभुजेतिसाधुः प्रज्ञाद्यण्॥कौतुकं आध्यातम्यादिः आदित्वादिः॥कुतुकं कुतुकायति केशब्दे आतोनुपेतिकः॥कुतूहलं
कुतुजनि चत्वारिकौतुकस्य॥नम्ररामानयनवदनभ्रूप्रभृतीनांयःकश्चिद्दुत्पद्यतेविशेषः सविलासः लसश्लेषणेघञ् तदुक्तंकोशांतरे विलासोहारभेदेस्याल्लीलायाम-
पिपुंस्ययं यादसांबंधनोपायेमृगाणामपिपक्षिणां तेषामेवचविभ्रमोहेनोःमावरणेपिचेति॥बिब्बोकः विपूर्वात्विपूर्वात् वा वा धातोर्मृगय्वादित्वात्
कुः ततः ओकउचः केऽइतिओकशब्देनषष्ठीसमासः बिब्बोकोऽभिमतप्राप्तावपिगर्वादनादरइत्युक्तत्वात्॥ ७ ७

विभ्रमः भ्रमु अनवस्थाने घञ् वित्तवृत्त्यनवस्थानं शृंगाराद्विभ्रमो मतः विभ्रमो रत्नवृक्षेपि प्रवालेपि पुमानयमिति कोशाच्च ॥ ललितं सकलांगसमीचीनविन्यासो ललितं स्मृतं अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितमिति कोशाच्च ललईप्सायां लडविलासे भावेक्तः डलयोरैक्यं ३१ हेला नन्वापीत्थं स्याद्भावसूचको हावो हेलास्यैवानुभावनं प्रोद्धेयास्फुरनेहेलेतिवा ॥ लीला प्रियस्यानुकृतिर्लीलाश्लिष्टावाग्वेषचेष्टितैः लीलाकेलिर्विलासश्च शृंगारभावजक्रिया इति शब्दप्रकाशार्थादन्येपिज्ञेयाः अमीस्त्रीणां शृंगारभावजाः शृंगाररससमुद्भूताः क्रियाश्चेष्टा षडमीहावाःस्फुः एवैकं अन्येपिज्ञेयाइत्युक्तं तेचयथा लीलाविलासोविच्छित्तिर्विभ्रमः किलकिंचितं मोट्टायितं कुट्टमितं बिब्बोकोललितं तथा विहृतं चेतिमंतव्यादश स्त्रीणां स्वभावजाइतिनाटकरत्नकोशः विच्छित्तिः छिदिर्द्वैधीकरणे क्तिन् मंडनानादरन्यासो विच्छित्ती रूपदर्पतः ॥ किलकिंचितं हर्षरुदितगीतादिव्यामिश्रं किलकिंचितं ॥ मोट्टायितं मृशादिभ्यइतिक्यङ् क्तः मोट्टायितं प्रियं स्मृत्वा सांगभंगं विजृंभणं ॥ कुट्टमितं कुट्ट छेदने घञ् इमप् दुःखोपचारः सौख्येपि हर्षात् कुट्टमितं मतं ॥ विहृतं वक्तव्य भाषणे व्याजो ह्रिहृतं दर्शितेंगितम् ॥ द्रवः द्रु गतौ अप् द्रवो विद्रवमर्मणो रित्युक्तत्वात् ॥ केलिः केलृ केलनं किल क्रीडायां केलृ चलने वा इन् केलिः पुंसि भिन्नलिंगानां द्वंद्वाभावात् ॥ परीहासः परिहासः घञ् दीर्घः ॥ क्रीडा क्रीडनं क्रीड् विहारे गुरोश्चेत्यकारः क्रीडाकेलिप्रकारेस्यात् खेलाज्ञानकयोरपीत्युक्तः ॥ लीला लीलेत्यत्र खेलतिकेचित् खेलृ चलने अकारः ॥ नर्म नृ नये मनिन् षट् क्रीडायाः ३२ व्याजः घञ् वीभावोन ॥ अपदेशः अपदेशनं दिश अतिसर्जने घञ् ॥ लक्ष्यं लक्ष्यते लक्ष आलोचने ण्यत् लक्ष्यं स्यादपदेशोपिशरव्योपि नपुंसकमित्युक्तं व्याख्यायां च नना लक्ष्यक्लीबं व्याजशरव्ययोरितिमूर्धन्यांतेरभसश्च ॥ अभीप्सितार्थसिद्ध्यर्थमयथार्थानुष्ठानं व्याज इत्यर्थः श्रीपास्वरूपाच्छादनस्य ॥

विभ्रमो ललितं तथा ३१ हेलालीलेत्यमी हावाः क्रियाः शृंगारभावजाः ॥ द्रवकेलिपरीहासाः क्रीडालीला च नर्म च ३२ व्याजोऽपदेशो लक्ष्यं च

क्रीडा ॥ खेला अकारः ॥ कूर्दनं त्रयंबाललीलायाः ॥ घर्मः जिघर्त्यंगमनेन घृक्षरणदीप्त्योः निपातः ॥ निदाघः निदह्यतेऽनेन घञ् ॥ स्वेदः घञ् स्विद्यत्यनेनांगं तदुक्तंहैमे स्वे-
दोघर्मेस्वेदनेचेति त्रयंस्वेदस्य ॥ प्रलयः एरच् प्रलयोमृत्युकल्पांतमूर्छापायेष्वपुंस्ययमित्युक्तः० ॥ नष्टचेष्टता नष्टाचेष्टायस्यतस्यभावः तस्यभावस्त्वतलौ द्वे परिस्पंदनाशस्य
३३ अवहित्था अबहिःस्थितिः स्थइतियोगविभागात्कः पृषोदरादिः ॥ आकारगुप्तिः आकारस्यशोकादिजनितमुखम्लान्यादेर्गोपनं गुपेःक्तिन् द्वौसमौ ॥ संवेगः ओविजे
र्घञ् ॥ संभ्रमः भ्रमुचलनेघञ् संभ्रमः साध्वसेपिस्यात्संवेगादरयोरपीत्युक्तत्वात् द्वेहर्षादिनाकर्मसुत्वरणस्य ॥ सोत्प्रासः उत्प्रासनं असुक्षेपणे घञ् उत्प्रासेनाधिक्षे
नक्षेपणेनवा सहितः आच्छुरितकमुच्यते आच्छुरणं परछेदनं छुरछेदने भावेक्तः स्वार्थेकः स्यादाच्छुरितकंहासंनखराघातभेदयोरित्युक्तः० एकं परस्परामर्षजनकहास-

क्रीडाखेलाचकूर्दनं ॥ घर्मोनिदाघःस्वेदःस्यात्प्रलयोनष्टचेष्टता ३३ अवहित्थाकारगुप्तिः समौसंवेगसंभ्रमौ ॥ स्यादाच्छुरितकंहासः सोत्प्रासःस
मनाक्स्मितं ३४ मध्यमःस्याद्विहसितंरोमांचोरोमहर्षणं ॥ क्रंदितंरुदितंक्रुष्टंजृंभस्तुत्रिषुजृंभणं ३५ विप्रलंभोविसंवादौ

स्य सः हासः मनाक् ईषच्चेत्स्मि
तंस्यात् ष्मिङ् ईषद्धसने क्तोभावे ईषद्विकसितैर्दंतैः कटाक्षैः सौष्ठवान्वितं अलक्षितद्विजद्वारंउत्तमानांस्मितंभवेत् ३४ सः हासःमध्यमश्चेदनल्पाधिकस्तर्हिविहसितंस्यात् हसह
सनेभावेक्तः प्रस्तावोत्थंसानुरागमाहुर्विहसितंबुधाइतिकोशांतरात् एकं ॥ रोमांचः रोम्णामंचनंपूजनं घञ् अचेःपूजायामितिरट् विधानात्वार्तिकमतेनकुत्वं ॥ रोमहर्षणं रो
म्णांहर्षणं पुलककंटकरोमक्रियारोमोद्गमाश्चात्रैव द्वेरोमोद्गमस्य ॥ क्रंदितं क्रदिरोदनेक्तः ॥ रुदितं रुदिर् अश्रुविमोचनेक्तः ॥ क्रुष्टं क्रुशरोदनेक्तः ॥ त्रीणिरोदनस्य ॥ जृंभः
घञ् ॥ जृंभणं भावेल्युट् द्वेजृंभिकायाः जांभईइतिख्यातायाः तत्रजृंभस्त्रिषु ३५ विप्रलंभः विशेषेणप्रलंभनं डुलभष्प्राप्तौ घञ् ॥ विसंवादः विरुद्धंसम्यग्वदनं घञ्
द्वेवंचनायुक्तभाषणस्य अंगीकृतासंपादनस्येतिवा ॥

रिंगणं रिगिगतौ भावेल्युट् रिंखणमपि॥स्खलनं स्खलसंचलने ल्युट् हे स्खलमपि दे स्खलनस्य बालानां हस्तपादगमनस्येत्यन्ये॥निद्रा निद्राणं द्राकुत्सायांगतौ आतश्चोपसर्ग इत्यङ्॥
शयनं शीङ्स्वप्ने भावेल्युट् शयनेस्फरतेनिद्राशयनयोश्चनपुंसकमित्यु०॥स्वापः ञिष्वप्शये घञ् स्वापःशयननिद्रयोरित्यु०॥स्वप्नः स्वपोनन् तदुक्तंकोशांतरे स्वप्नःस्वा
पेप्रसुप्तस्यविज्ञानेदर्शनेपुमानिति॥संवेशः संवेशनं विशप्रवेशने घञ् पंचनिद्रायाः ३६ तंद्री स्पहि गृहित्यत्र तंद्रेतिनिपातितात्स्करोति प्यंतादच्ङ्ः तंद्रीतंद्रस्तंद्रेति द्वि-
रूपकोशः॥प्रमीला गुरोश्चहलइतिअकारः प्रमीलनं मीलनिमेषणे हूं अत्यंतप्रमादेनासर्वेंद्रियासामर्थ्यस्य॥भ्रकुटिः कुटकौटिल्ये इन्प्रत्ययः॥भ्रुकुटिः भ्रुवोः कुटिः॥भ्रू
कुटिः पृषोदरादित्वाहकारे भ्रूकुटीत्यपि क्रयंक्रोधादिजनितभ्रूवक्रतायाः भ्रकुंसबंधौरूप्यं इदमागुक्तं॥असौम्य अक्षिणासरोपेचसकोपि अदृष्टिरित्येकं निरुक्त्वा दृष्टिः ते

**रिंगणंस्खलनंसमे ॥स्यान्निद्राशयनंस्वापःस्वप्नःसंवेशइत्यपि ३६ तंद्रीप्रमीलाभ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियां॥अदृष्टिःस्यादसौम्येक्षिण**
**संसिद्धिप्रकृतीत्विमे ३७ स्वरूपंचस्वभावश्चनिसर्गश्चाथवेपथुः॥कंपोःथक्षणउद्धर्षोमहउद्धवउत्सवः ३८ इतिनाट्यवर्गः**

क्रूरायोनिच्च असौम्ये
असुंदरेवा क्रूरदृष्टिरित्यर्थः॥ संसिद्धिः संसेधनं षिधुसंराद्धौ॥प्रकृतिः इमेइतिद्वयोःस्त्रीत्वबोधनार्थमुक्तं उभाभ्यांकिन् ३७ स्वरूपं स्वंरूपयति॥स्वभावः स्वस्यैवभावः॥निस
र्गः भावेघञ् पंचस्वभावस्य॥वेपथुः टुवेपृकंपनेट्वितोथुच्॥कंपः हे कंपस्य॥क्षणः क्षणोतिदुःखं क्षणुहिंसायां पचाद्यच् तदुक्तंहैमे क्षणःकालविशेषेस्यात्पर्वण्यवसरेऽपि
व्यापारविकलत्वेचपरतंत्रत्वमध्ययोरिति॥उद्धर्षः उद्धर्षयति हृषुअलीके ण्यंतादच् उद्गतोहर्षोत्रेतिवा॥महः महनं महपूजायां पुंसिसंज्ञायामितिघः यद्वा महति अच् तदुक्तंको
शांतरे महीनद्यंतरेभूमौमहउत्सवतेजसोरिति॥उद्धवः उद्धुनोतिदुःखं धूञ्कंपने पचाद्यच् तदुक्तंकोशांतरे उद्धवोयादवभिदिमहेचक्रतुपावके॥उत्सवः उत्सवति षूप्रेरणे अ
च् उत्सवोमहउत्सेकेइच्छाप्रसरकोपयोरित्युक्तत्वात् महोऽदंतः ३८ इतिनाट्यवर्गः ७

अधोभुवनं अधश्चतद्भुवनंच अधोपि अधोःव्ययंस्यात्पाताले इतित्रिकांडशेषात् ॥पातालं पतंत्यत्रपापात् पतिचडिभ्यामालञ् पातालंवडवानले रसातलेपैंतिहैमः ॥बलिसद्म बलेः सद्म॥रसातलं रसायास्तलं॥नागलोकः नागानांलोकः पंचपातालस्य॥कुहरं कुंहरति हरतेरनुमनैच् यद्वा कुहविस्मापने कुहंराति रादाने आतइतिकः तदुक्तं कोशांतरे कुहरंगव्हरेछिद्रेक्लीबंनागांतरेपुमानिति॥शुषिरं शोषणं शुषशोषणे ऊषशुषमुष्केतिरः शुषिरंवंशादिवाद्येविवरेपिनपुंसकमित्युक्तत्वात्॥विवरं विवृणोति वृञ्वरणे अच् यद्वा विव्रियते विगतोविरोस्माद्वा वीनांपक्षिणांवरंवा विवरंदूषणेगर्तेइत्यने०॥बिलं बिलतिभिनत्ति बिलभेदने बिल्यतेवा इगुपेतिकः घञर्थेइतिवा तदुक्तंकोशांतरे बिलंछिद्रेगुहायांचपुमानुच्चैःश्रवोहये इत्यने०॥छिद्रं छिद्यते छिद्रभेदने घञ्॥यद्वा छिद्यते छिदिरद्वैधीकरणे रक्॥निर्व्यथनं॥रोकं रोचतेत्र

**अधोभुवनपातालबलिसद्मरसातलं॥नागलोकोऽथकुहरंशुषिरंविवरंबिलं १ छिद्रंनिर्व्यथनंरोकंरंध्रंश्वभ्रंवपाशुषिः॥गर्तावटौभुविश्वभ्रेसरंध्रेशुषिरंत्रिषु २ अंधकारोऽस्त्रियांध्वांतं**

रुचदीप्तौ हलश्चेतिघञ्॥रंध्रं रंधयति रंधहिंसासंराध्योः बाहुलकात्रक् नुमपि रंध्रंतुभूषणेछिद्रेइतिविश्वमेदिन्यौ॥श्वभ्रं श्वभ्रयति श्वभ्रगतौ पचाद्यच् शोभनमभ्रंव्योमात्रवा तालव्यादि॥वपा उप्यतेऽत्र भिदाद्यङ्॥शुषिः शुष्यत्यत्र शुषशोषणे किः शुषिरपि शुषिः शुष्यत्यत्र बहुलंकिः एकादश छिद्रमात्रस्य भुविगर्तावटौद्वौशब्दौसमौवर्तेते गिरति गॄनिगरणे हसिमृइतितन् स्त्रियांटाप् तदुक्तंहैमे गर्तोवटेकुकुंदरइति गर्तस्यापि शकटशरगर्तश्रृंगाइतिस्त्रीपुंसप्रकरणेरभसात् अवत्यस्मात् अवरक्षणादौ शकादित्वाटन् अवटिरितीदंतोपि हेमूरंध्रस्य शुषिरभित्येकं सरंध्रेरंध्रयुक्तेवस्तुनि शुषिरमपि तत्त्रिषुवाच्यलिंगं २ अंधकारः अंधंकरोति अंधदृष्ट्युपघाते घञ् कृञःकर्मण्यण् अंधकारः क्लीबपुंसोः॥ध्वांतं ध्वन्यते ध्वनशब्दे क्षुब्धस्वांतेतिनिपातः॥

नमिस्रं तमोस्त्यत्र ज्योत्स्नेनिनिपातः नमिस्रास्त्याश्रयत्वेनास्येतिवा मत्वर्थेच् क्षेपेतमिस्रंतिमिरंकोपेस्त्रीतुनमस्रतो कृष्णपक्षनिशायांचेतिविश्वमेदिन्यौ॥तिमिरं तिम्य ति तिम् आर्द्रीभावे किरच्॥तमः ताम्यत्यनेन तमुग्लानौ असुन् तमसमपि तदुक्तंत्रिकांडशेषे तमसंतुनिशाचर्मेइति पंचांधकारस्य॥गाढे ध्वांते तमसि अंधतमसमपि त्येकं अंधंचतत्तमश्च अवसमंधेभ्यइत्यच्॥क्षीणध्वांतेः वतमसमित्येकं अवहीनंतमः अत्राप्यच् एकं ३ विष्वक्तमः सर्वत्रव्यापितमः संतमसंस्यात् अत्राप्यच् समंता त्तमः॥नागाः नगेभवाः तत्रभवइत्यण् इत्याद्यूह्यं तदुक्तंहेमे नागरंगेसीसपत्रेस्त्रीबंधेकरणांतरइति॥काद्रवेयाः कद्र्वा अपत्यानि स्त्रीभ्योढक् हे नागानां॥तदीश्व रः तेषामीशः॥शेषः शिष्यते शिष्लृविशेषणे कर्मणियत्र तदुक्तंहेमे शेषोःनंतेवधेसीरिण्युपयुक्तेतरेपिच शेषोनिर्माल्यदानेस्यादिति॥अनंतः नअंतोऽस्य अनंतः

तमिस्रंतिमिरंतमः॥ध्वांतेगाढेंधतमसंक्षीणेवतमसंतमः ३ विष्वक्संतमसंनागाः काद्रवेयास्तदीश्वराः॥शेषोःनंतोवासुकिस्तुसर्पराजोःथगो नसे ४ तिलित्सःस्यादजगरेशयुर्वाहसइत्युभौ॥

केशवेशेषेपुमान्विरवधौत्रिष्विति इयंअनंतस्य॥वासुकिः वसुरत्नंकेमूर्ध्नियस्य वसु कायतिवा केशब्दे आतइतिकः वसुकः तस्यापत्यं अतइञ्॥सर्पराजा सर्पाणांराजा हेनागराजस्य॥गोनसः गोरिवनासिकायस्य अत्र नासिकेत्यच् नसादेशः गोनासेगोन सावितित्रिकांडशेषः गोनसोमंडलीबोडइतितुविक्रमादित्यः ४ तिलित्सः तेलति तिलगतौ तिलति तिलस्नेहने संपदादिः तिलमेति इण्गतौ क्विप् तुक् अग्रेषोनकर्मणिकः इत्याद्यूह्यं द्वयंगोनसइतिप्रसि०॥अजगरः गिरति गृनिगरणे अच् अजस्यगरः अजोनित्योगरोविषयस्येतिवा॥शयुः शेते शीङ्स्वप्ने भृमृशीत्यूः॥वाहसः वहति वहप्रापणे वहियुभ्यांणित् इत्यसच् वाहसःस्यादजगरेःवुनिर्याणनिषण्णयोरितिहेमः इतित्रयंअजगरस्य आरद्वयिख्यात०॥ ७ ७

अलगर्दः लगति लगेसंगे क्विप् अर्दयति अर्दगतौ अच् लग्चासावर्दश्च तद्भिन्नोअलगर्दः लक्वासावर्दश्च लग्नः सन्पीडक इत्यर्थः निर्विषत्वात्तद्भिन्नो लगर्द इत्याद्यूह्यं अलगर्द्द इत्यपि ॥ जलव्यालः जलस्थोव्यालः हे जलसर्पस्य पाणसर्पविरोलं इत्यादि प्र० ॥ राजिलः राजिः रेखास्यास्ति सिध्मादित्वाल्लच् यद्वा राजिं लाति लादाने आत इनिकः तदुक्तं कोशान्तरे निर्मुक्तो निर्विषः सर्पो राजिलः परिकीर्तित इति राजील इत्यपि ॥ डुंडुभः डु डु इत्यनुकरणशब्दः तं भणति तेन भीतो निवा अन्येभ्यो इति डः पञ्चे-कः तवर्गतृतीयादिरपि हेर्निर्विषस्य हि मुखसर्पस्य मालुंड डुलोंडे इति ख्यातस्य ५ मालुधानः मालुरोषधी तत्र धानमस्य मालुधानश्चित्रसर्पे महापद्मेचं हृश्यत इत्यत लिनी तदुक्तं च विश्वे मालुधानो मातुलाहो मालुधानीलतान्तर इति ॥ मातुलाहिः मातुलयति मूलविभुजादिः मातुलश्चासावहिश्च हे खड्गाकारचित्रसर्पस्य आधेलें दिव

अलगर्दो जलव्यालः समौ राजिलडुंडुभौ ५ मालुधानो मातुलाहिर्निर्मुक्तो मुक्तकंचुकः ॥ सर्पः पृदाकुर्भुजगो भुजंगोऽहिर्भुजंगमः ६ आशीविषो विषधर

इड्डिति ख्यातस्य ॥ निर्मुक्तः निर्गतः मुक्तोयस्य ॥ मुक्तकंचुकः हे त्यक्तकंचुकस्य मुक्तः कंचुकोयेन तदुक्तं कोशान्तरे निर्मुक्तस्त्यक्तसंगे स्यान्मुक्तकंचुक भोगिनीति ॥ सर्पः सर्पति सृप्लृगतौ अच् ॥ पृदाकुः पर्दते पर्दकुत्सिते शब्दे काकुः सम्प्रसारणं अल्लोपश्च पृदाकुर्वृश्चिके व्याघ्रे सर्पे चित्रकयोः पुमानिति उक्तत्वात् ॥ भुजगः भुजः सन्गच्छति भुजेन कौटिल्येन गच्छति वा डः तदुक्तं हैमे भुजंगः सर्परिंगयोरिति खषिंगम् ॥ अहिः आहन्ति आङि हन्तेः इन् डित् तदुक्तं कोशान्तरे अहिर्वृत्रासुरे सर्पे पुंसीति ॥ भुजंगमः खच् डित् वाच्यः ६ आशीविषः आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति तत्र विषमस्य पृषोदरादिः आशीर्विषोपि केचित्त्वाकारान्तमाशीशब्दमाहुः आशीमिव कलाभिदोशीनि राजशेखरः ॥ विषधरः विषस्य धरः अजन्तेन समासः ॥

चक्री चक्रमस्यास्तीति॥ तदुक्तं हैमे चक्रीकोकेकुलालेःहौवैकुंठेचक्रवर्तिनीति॥ व्यालः व्याडति अडउद्यमे व्याङ्पूर्वः डलयोरेकत्वस्मरणात् व्यालोपि व्यालोदुष्टगजेसर्पेखलेश्वापदसिंहयोरितिविश्वमेदिन्यौ॥ सरीसृपः कुटिलंसर्पति नित्यंकौटिल्येइतियङ् अच्॥ कुंडली कुंडलंकुंडलाकारतास्यास्ति मत्वर्थेइनिः कुंडलंकर्णभूषायांपाशेपिवलयेपिचेत्यक्तत्वात्॥ गूढपात् गूढापादाअस्य पृषोदरादिः यद्वा गूढंपादयति पदगतौ ण्यंतात्क्विप्॥ चक्षुःश्रवाः चक्षुःश्रवः कर्णोस्य॥ काकोदरः काकस्येवोदरमस्य॥ फणी फणाःस्यास्ति व्रीह्यादिः ७ दर्वीकरः दर्व्याकरः फणएवास्यप्रहारकत्वात् दर्वीफणंकरोतीतिवा॥ दीर्घपृष्ठः दीर्घंपृष्ठमस्य॥ दंदशूकः गर्हितंदशति लुपसदेतियङ् यजजपदशामितिऊकः तदुक्तंकोशांतरे दंदशूकस्तुपुल्लिंगोराक्षसेचसरीसृपइति॥ बिलेशयः बिलेशेते

चक्रीव्यालःसरीसृपः॥ कुंडलीगूढपाच्चक्षुःश्रवाःकाकोदरःफणी ७ दर्वीकरोदीर्घपृष्ठोदंदशूकोबिलेशयः॥ उरगःपन्नगोभोगीजिह्मगःपवनाशनः ८ "लेलिहानोद्विरसनोगोकर्णःकंचुकीतथा॥ कुंभीनसःफणधरोहरिर्भोगधरस्तथा १ अहेःशरीरंभोगःस्यादाशीरप्यहिदंष्ट्रिका"

अधिकरणेशेतेरित्यच् शयवासेतिअलुक् तदुक्तंहैमे बिलेशयोमूषकेःहौ इति॥ उरगः उरसागच्छति उरसोलोपश्चेतिसाधुः॥ पन्नगः पन्नंपतितंयथातथागच्छति सर्वत्रपन्नयोरितिडः तदुक्तंकोशांतरे पन्नगश्चौषधीभेदेतथैवपवनाशिनि॥ भोगी भोगः शरीरंवक्रगतिर्वाऽस्यास्ति इनिः भोगीभुजंगमेपिस्याद्ग्रामणीनृपेपुमानित्युः॥ जिह्मगः जिह्मंकुटिलंगच्छति डः तदुक्तंविश्वे जिह्मगोहोऽन्वमंदगेइति॥ पवनाशनः पवनोऽशनमस्य पंचविंशतिःपवनाशनस्य ८ "लेलिहानः लिहआस्वादने यङंतात्लुट्शानच्॥ द्विरसनः गोकर्णः कंचुकी कुंभीनसः फणधरः हरिः भोगधरः इत्याद्यष्टौसर्पमात्रस्य अहेःशरीरंभोगःस्यात् आशीरपिअहिदंष्ट्रिकास्यात् इतिसार्द्धपद्यस्यक्षेपकत्वान्नव्याख्यातं॥"

यहिषास्थ्यादिअहिभवंतन् आहेयंत्रिषुस्यात् अहेर्भवं कुलकुक्षिइतिअहेर्ढञ् आदिनाकंचुकादिग्रहणं स्त्रियां आहेयी टिड्ढेतिङीप् ॥स्फटायांतु द्वयोः स्त्रीपुंसयोः फणास्या
त् स्फुटति स्फुटविकसने अच् पृषोदरादिः फणति फणगतौ अच् द्वयोरित्यनेनस्फटापिसंबध्यते इतिगुरुचरणाः फटापि कंचुकनिर्मोकौसमौ कंचुकश्चनिर्मोकश्च कंच्यते
क्वचिदीप्तिबंधनयोः बाहुलकादुकन् कंचुकोवारबाणेस्यान्निर्मोकेकवचेपिच वर्धापकगृहीतांगस्थितवस्त्रेचचोलके कंचुक्यौषधिभेदेचेतिविश्वमेदिन्यौ निश्चयेनमुच्यत
इति कर्मणिघञ् द्वैसर्पत्वचः निर्मोकोमोचनेव्योम्निसन्नाहेसर्पकंचुकइत्युक्तः॥ क्ष्वेडः क्ष्वेडते मोहयति अच् क्ष्विद्यत्यनेनवा ञिक्ष्विदास्नेहनमोचनयोः हलश्चेतिघञ् पृषोद
रादिः क्ष्वेडावंशशलाकायांसिंहनादेचयोषिति लोहितार्कैगर्णफलेघोषपुष्पेनपुंसकं दुरासदेचकुटिलेवाच्यलिंगः प्रकीर्तितइत्युक्तत्वात्॥गरलं गरंलाति लादाने आतइतिकः न

भिष्वाहेयंविषास्थ्यादि स्फटायांतुफणाद्वयोः॥समौकंचुकनिर्मोकौ क्ष्वेडस्तुगरलंविषं ९ पुंसिक्लीबेचकाकोलकालकूटहलाहलाः॥सौरा
ष्ट्रिकःशौक्लिकेयोब्रह्मपुत्रःप्रदीपनः १० दारदोवत्सनाभश्च दुर्गहैमे गरलंपन्नगविषेतृणेफलकमानयोरिति॥विषं वेवेष्टिकायं विष्लृव्याप्तौ इगुपधेतिकः

पुल्लिंगमपि पुंसिक्लीबेचेतिविषेणापिसंबध्यते कैरपि इत्युक्तत्वात् अयंविषमात्रस्य॥काकोलः ईषत्कोलति कलसंस्त्याने अच् ईषदर्थेइतिकोः कादेशः त्वंविषब्रह्मणः पुत्र
सत्यधर्मेव्यवस्थितइतियाज्ञवल्क्येनोक्तं॥कालकूटः कालमपिकूटयति कूटपरिदाहे ण्यंतात्कर्मण्यण् कालस्यकर्मणोमृत्योर्वा कटोराशिरिवेतिवा॥हलाहलः हल इव
आहलति अच्॥सौराष्ट्रिकः सुराष्ट्रेभवइति ठञ्॥शौक्लिकेयः शक्लिदेशेभवः दृतिइतिसूत्रेयोगविभागात्ढञ्॥ ब्रह्मपुत्रः ब्रह्मणः पुत्रः॥प्रदीपनः प्रदीपयति जठराग्निं॥
दारदः दरदिदेशेभवः अण् दारदोविषभेदेस्यात्पारदेहिंगुलेपुमानित्युक्तत्वात्॥वत्सनाभः वत्सान्नभ्नाति णभहिंसायां कर्मण्यण् वत्सस्यनाभिरिवनाभिरस्येतिवा॥

अष्टौकाकोलाद्यानवस्थावरविषभेदाः नत्रकाकोलादित्रयंक्लीबपुंसोः॥ वत्सनाभः बच्छनागइतिलोकेप्रसिद्धः काकोलःकालमेचकः कालकूटः पृथुमालिदेत्यरक्तोद्भवः हलाहलस्तालपत्राकृतिः हलाहलंहालहलं हलाहलमित्यपितत्पर्यायाः नदुक्तंचद्विरूपकोशे हलाहलंहालहलंवदंत्यपिहलाहलमिति गोनासगोनसौ हालाहलंहालहलंविषमितित्रिकांडशेषः॥ विषवैद्यः विद्यामधीते वेत्तिवा तदधीते तद्वेद इत्यण् विषस्यवैद्यः॥ जांगुलिकः जांगुलींविषविद्यां अधीतेवेदवा वसनादिभ्यष्ठनितिठक् जांगुल्यादीव्यतीतिवा परीक्षितंसमश्नीयाज्जांगुलीभिर्विषग्नतइत्यत्र॰ द्वे विषहारवैद्यस्य॥ व्यालग्राही व्यालंगृण्हाति कर्मण्युपपदे णिनिः॥ अहितुंडिकः अहेस्तुंडंमुखंतेनदीव्यतीतिठक् व्यालग्राहोऽहितुंडिकइत्यमरमाला द्वे सर्पग्राहिणः गारुडीइतिख्या॰ ११ इतिपातालभोगिवर्गः नारकः॥ नरकः नरति नृणातिवा नृनये ऋज्रा

विषभेदाअमीनव॥ विषवैद्योजांगुलिकोव्यालग्राह्यहितुंडिकः ११ इतिपातालभोगिवर्गः स्यान्नारकस्तुनरकोनिरयोदुर्गतिःस्त्रियां॥ तद्भेदास्तपनावीचीमहारौरवरौरवाः १ संहारःकालसूत्रंच

दिभ्यःसंज्ञायामितिवुन् नरकः पुंसिनिरयेदैत्यानिमभेदयोरितिविश्वमेदिन्यौ प्रज्ञाद्यणिनारकः॥ निरयः निर्गतोअयात्॥ दुर्गतिः दुष्टागतिः चत्वारिनरकस्य॥ तस्यनरकस्यभेदानाह तपनः तपति तप्यादिः॥ अवीचिः नविद्यतेवीचिःसुखमत्र तपनोरुष्करेपिस्याद्भास्करेनिरयांतरे वीचिः स्वल्पतरंगेस्यादवकाशेसुखेपिचेतिविश्वः अवीचिस्तुतरंगेस्यान्नरकेपिनिगद्यतइतिहेमः॥ महारौरवः महतोरुरोरयं रुरुर्नामप्राणिविशेषः तस्येदमित्यण्॥ रौरवः रौरवोनरकेघोरे इतिहेमः १ संहारः सम्यक्हारोऽत्र हारः हरणं संघातइत्यपिपाठः तत्रेत्थंम्र सम्यक्घातोऽत्र॥ कालसूत्रं कालान्यपोमयानि सूत्राण्यत्र॥ ७ ७ ७ ७ ७ ७ ७

अ॰ को॰

इत्याद्याः नरकभेदाः आद्यशब्देनतामिस्त्रांधतामिस्त्रासिपत्रवनाद्यः जलवद्भासमानोप्यश्मपृष्ठरूपत्वान्नवीचयोयत्रसोः वीचिरित्यर्थः ॥ नारकाः नरकेभवाः तत्रभवइ
त्यण् ॥ सत्वाः इण्गतौ गत्यर्थेक्तः ॥ प्रेता प्रेतोभूतांतरे पुंसिमृतेस्याद्वाच्यलिंगकइत्युक्तत्वात् एकं प्रेतानांसिंधुः नदीवैतरणीज्ञेया विगतस्तरणिर्यत्रतत्रभवा विग
तातरणिर्नौर्यत्रवा वितरणेनदानेनलंघ्यते इतिवा शेषेइत्यण् प्रेतानदीवैतरणीस्मृतेतित्रिकांडशेषः एकं ॥ नारक्यलक्ष्मीः अशोभानिर्ऋतिः स्यात् एकं निर्गताऋति
र्घृणायस्याः तदुक्तंरभसे ऋतिर्गतौघृणायांचश्रद्धायांचशपेपिचेति ऋतिःसौत्रः इक्कृष्यादिभ्यः कृपायांचेत्येके इतिकौमुद्यां निर्ऋतिःस्यादलक्ष्म्यांस्त्रीदिशांपालांत
रेपुमानित्यः २ विष्टिः विशतिक्लेशं विशप्रवेशने विशप्रवेशनेक्तिच् यद्वा विष्णाति विषविप्रयोगे तदुक्तंहैमे विष्टिः कर्मकरेमूल्ये भद्राजूप्रेरणेषुचेति ॥ आजूः आजव

त्याद्याःसत्वास्तुनारकाः ॥ प्रेतावैतरणीसिंधुःस्यादलक्ष्मीस्तुनिर्ऋतिः २ विष्टिराजूःकारणातुयातनातीव्रवेदना ॥ पीडाबाधाव्यथादुःखमामनस्यंप्रसूतिजं ३

ति जुगतौ क्विप्वचीत्यादिनासाधुः आअज्यतेचेतिगुरुचरणाः तदुक्तंशाश्वते आजूर्वेननयोर्विष्टिः कर्मकृत्कर्मणोरपीति द्वे नरकेहठात्प्रक्षेपस्य भद्राख्यकरणस्येत्यन्ये
॥ कारणा कृञ्हिंसायां ण्यंताद्युच् कारणंकरणेहेतुर्बंधयोश्चनपुंसकमित्युः ॥ यातना यतनिकारादौण्यंताद्युच् ॥ तीव्रवेदना तीव्राचासौवेदनाच विदवेदनादौण्यंतात्युच्
त्रीणि नरकदुःखस्य ॥ पीडा पीडअवगाहने ण्यंताद्युच् तदुक्तंहैमे पीडार्तिमर्दनोत्तंसकृपासुसरलद्रुमइति ॥ बाधा बाधृविलोडने गुरोरित्यः बाधादुःखेनिषेधेचेतिहै-
मः आबाधेतिवाछेदः तत्र आबाधावेदनादुःखमितिहलायुधः ॥ व्यथा दुःखं दुर्निंदितंखनति डः इत्याद्यूह्यं ॥ आमनस्यं अमनसोभावइतिष्यञ् मानस्यादि-
त्यमितिवा प्रसूतिजमामनस्यंकृच्छ्रकष्टंकलाकुलमितिवाचस्पतिः आमनस्यमपि ॥ प्रसूतिजं प्रसूतेर्जातं ३ ५

कष्टं कषति कषहिंसायां क्तः कष्टेनुगहनेक्तच्छे इत्यक्तः ॥ कृच्छ्रं कृंतति कृती छेदने रक् कृतेश्छः ॥ आभीलं आसमंताद्बिभेत्यस्मात् आनड्रोनेकः आभीलम्भीषणे कृच्छ्रे पीतिहैमः नवदुःखस्य अत्रनवापिदुःखस्येत्येके पीडा द्वित्रिषु मनःपीडायाः आमनस्याद्द्वयं वैमनस्यस्य कष्टादित्रयंशरीरपीडायाइतिभेदः एते षांमध्येयद्दुःखादिकंभेद्यगामिविशेष्यवृत्तितत्त्रिषु यथासेयंसेवादुःखाचबहुरूपा सोयंदुःखःस्कृतोगुणः सर्वंदुःखंविवेकिनइतिभेद्यगामित्वाभावेनदुक्तंलिंगमेव इतिनरकवर्गः समुद्रः समुन्दति उंदीक्लेदने रक्नलोपः समीचीनाउद्राजलचरविशेषायस्मिन्निति वा सहमुद्रयामर्यादयावर्ततइतिवा वोपसर्जनस्येसहस्यसः ॥ अब्धिः आपोधीयंतेत्र कर्मण्यधिकरणेचेतिकिः ॥ अकूपारः कुं पृथिवीमपिपर्ति पृपालनपूरणयोः कर्मण्यण् अन्येषामपीतिकुशब्दस्यदीर्घः नञ्समासः इत्याद्यूह्यं ॥ पारावारः पारमावृणोति वृञ्वरणे अण् पारापारावस्यास्तइतिवा मत्वर्थेच् तदुक्तंकोशांतरे पारावारः पयोराशौपारावारं तटद्वयइत्युक्तत्वात् पारापारइत्यपि पारअपारमस्य सरित्पतिः सरितांपतिः ॥ उदन्वान् उदकानिसंत्यत्र उदन्वानुदधौचेतिसाधुः ॥ उदधिः उदकानिधीयंतेत्र ॥ सिंधुः स्यंदंतेआपोत्र स्यंदूप्रस्रवणे स्यंदेःसंप्रसारणं धश्चेत्युक्तः सिंधुर्वमथुदेशाब्धिनदेनासरितिस्त्रियामितिविश्वमेदिन्यौ ॥ सरस्वान् सरोनीरंगतौवास्त्यस्मिन् नसौमत्वर्थे सरोनीरेतडागेचेतिरुद्रः सरस्वांस्तुनदेवाद्धौनान्यवद्रसिकेस्त्रियामित्युक्तत्वात् ॥ सागरः सगरस्यराज्ञोयं तस्येदं ॥ अर्णवः अर्णांस्यत्रसंति अर्णसोलोपश्चेति ॥ रत्नाकरः रत्नानामाकरः ॥ जलनिधिः जलानिनिधीयंतेत्र कर्मणीतिकिः जलानांनिधिरितिवा ॥ यादःपतिः यादसांजलजंतूनांपतिः ॥ अपांपतिः पंचदशसमुद्रमात्रस्य ॥

स्यात्कष्टंकृच्छ्रमाभीलंत्रिष्वेषांभेद्यगामियत् इतिनरकवर्गः समुद्रोब्धिरकूपारः पारावारःसरित्पतिः ॥ उदन्वानुदधिःसिंधुःसरस्वान्सागरोर्णवः १ रत्नाकरोजलनिधिर्यादःपतिरपांपतिः ॥

नस्यसमुद्रस्यप्रभेदाः क्षीरोदः क्षीरमुदकंयस्य उत्तरपदस्येत्युदादेशः॥एवं लवणोदः तथाःपरेस्यूः तेच इक्षुरसोदः सुरोदः घृतोदः दधिमंडोदः स्वादूदः समुद्रविशेषाणांपृथ
कृपृथगेकैकं २ आपः आप्नुवंति आप्यंतेवा आप्लृव्याप्तौ आप्नोतेर्ह्रस्वश्चेतिक्विप् ह्रस्वत्वंच स्त्रियांबहुत्वेचनित्यं॥वाः॥वारि वारयति तृष्णोष्ण्यंतान्क्विप् इञिवारि॥सलिलं
सलति सलगतौ इलच् सरिलमपि रलयोरेकत्वात् तत्र सरिलंसलिलंसलिलमितिवाचस्पतिः॥कमलं काम्यते कमुकांतौ वृषादित्वात्कलच् कमलाम्भोजलेपद्मंकमलंकमलो
मृग इतिधरणिः कमलंव्योम्निभेषजे पंकजेसलिलेताम्रेकमलस्तुमृगांतरे कमलाश्रीवरस्त्रियोरितिहेमचंद्रः॥जलं जलति जलअपवारणे अच्॥पयः पयते पीयतेवा पय
गतौ पीङ्पानेवा असुन् पयः क्षीरेचनीरेचेति॥कीलालं कीलांज्वालामलति वारयति अलभूषणादौ कर्मण्यण् और्वाग्नेः कीलांलातिवा तदुक्तंहैमे कीलालंरुधिरेतोयेइ

नस्यप्रभेदाःक्षीरोदलवणोदस्तथापरे २ आपःस्त्रीभूम्निवार्वारिसलिलंकमलंजलं॥पयःकीलालममृतंजीवनंभुवनंवनं ३ कबंधमुदकंपाथः

ति॥अमृतं नमृतंमरणमस्त्यस्मिन् प्राणस्यापोमयत्वात् अमृतंयज्ञशेषेस्यात्पीयूषेसलिलेघृते अयाचितेचमोक्षेचनाधन्वंतरिदेवयोः अमृतामागधीपथ्यागुडूच्यामल
कीषुचेति॥जीवनं जीव्यतेऽनेन जीवप्राणधारणे ल्युट्करणे जीवनंवर्तनेनीरप्राणधारणयोरपीत्यक्त०॥भुवनं भूयते भूसत्तायां क्युन् भवंत्यस्मिन्वाऽनेन ल्युट् संज्ञात्वान्नगु
णः तदुक्तंकोशांतरे भुवनंविष्टपेपिस्यात्सलिलेगगनेजनइति॥वनं वन्यते संभज्यतेवा वनसंभक्तौ घञ् संज्ञात्वान्नवृद्धिः वनंप्रस्रवणेगेहेप्रवाहेंभसिकाननेइतिहैमः॥कबंधं
कंसुखंबध्नाति बंधबंधने कर्मण्यण् कबंधोऽस्त्रीक्रियायुक्तमपमूर्धकलेवरं क्लीबंजलेपुंस्युदरेराहुरक्षोविशेषयोरि० केचित्तुकमंधमपिपठंति॥उदकं उनत्ति उंदीक्लेदने उदक
मितिमाधवः दकमित्यपि तदुक्तंहलायुधे प्रोक्तंमाज्ञैर्भुवनममृतंजीवनीयंदकंचेति कंदकंजलमितित्रिकांडशेषः अस्मिन्पक्षेकबंधंचदकंपाथइतिपाठः॥पाथः पाति पारक्षणे उ
दकेपुट्चेत्यसुन् पुट्॥

पुष्करं पुष्णाति पुषपुष्टौ पुषः करन् पुष्करंपुष्करेव्योम्निपद्मः करिकराग्रयोः पुष्करंतूर्यवक्त्रेचकांडेखड्गफलेपिचेत्यः॥ सर्वतोमुखं सर्वतोमुखान्यत्र सर्वदिग्गमना
त् तदुक्तंकोशांतरे सर्वतोमुखउग्रेचक्षेत्रज्ञब्रह्मणोः पुमान् नपुंसकंतुपानीयेस्वर्गेप्यपिस्मृतमिति॥ अंभः आप्नोति आप्यतेवा आप्लृव्याप्तौ असुन् भः नुम्-ह्रस्वः
॥ अर्णः ऋच्छति ऋगतौ उदकेनुट्च॥ तोयं तौतु तुःसौत्रः आवरणार्थः औणादिकोयः॥ पानीयं पीयते पापाने अनीयर पानीयंपेनजलयोरितिहेमः॥ नीरं नीय
ते नीञ्प्रापणे स्फायीतिरक्॥ नारं निश्चयेनराति स्वरवं कः॥ क्षीरं क्षियति क्षिनिवासगत्योः क्रन्दीर्घः क्षीरंपानीयदुग्धयोरितिहेमः॥ अंबु अंबते अबिशब्दे बहुलं
उः॥ शंबरं शंवृणोति वृञ्वरणे अच् शंबंसंवरणंरातीतिवा तदुक्तंविश्वे शंबरंसलिलेपुंसिमृगदैत्यविशेषयोः शंबरीचाखुपर्ण्यांस्यादिति संबरमितिदंत्यादि ४ मेघपु

पुष्करंसर्वतोमुखं॥ अंभोर्णस्तोयपानीयनीरक्षीरांबुशंबरं ४ मेघपुष्पंघनरसस्त्रिषुद्वेआप्यमम्मयम्॥ भंगस्तरंगऊर्मिर्वा

ष्पं मेघपुष्पमिव ॥ घनरसः घनस्यरसः पुंसि तदुक्तंशब्दार्णवे नीरंघनरसःपुमानिति समविंशतिजलस्य वाः गेफांता पूर्वोक्तरसाहचर्यात्स्त्रियांक्लीबेच शेषंक्लीबं असुनि
आपः सांतंक्लीबेच वारंवारमित्यप्ययमक्लीबं अत्र संसारावर्तःप्रमाणं घनरसमितिक्लीबमपि घनरसमंबुक्षीरमितिरत्नकोशात्॥ आप्यं अपांविकारः अण् ष्यञ्॥
अम्मयं मयट् हूजलविकारस्य त्रिषु आप्या अम्मयी इत्यादि॥ भंगः भज्यते भंजोआमर्दनेघञ् तदुक्तंहैमे भंगस्तरंगभेदेचरुग्विशेषेपराजये कौटिल्येभय-
विछित्तिरिति॥ तरंगः तरति तॄप्लवनतरणयोः॥ ऊर्मिः ऋच्छति ऋगतौ उदादेशः मिः॥ ५ ५ ५

वीचिः वयति ऊयतेवा वेञ् तंतुसंताने इच् डित् तदुक्तं हैमे ऊर्मिः पीडाजवोत्कंठालेखाप्राकाशयवीचिषु वक्रसंकोचलेखायामिति वास्त्रियामितिकाकाक्षिन्यायेनोर्मिवीचि भ्यांसंबध्यते ऊर्मिरेवस्त्रीपुंसयोः वीचिस्त्रीनित्यंस्त्रीत्येके पुल्लिंगस्त्रीलिंगयोर्वीचिमणियष्टिमुष्टित्रुटिशामिपाटलिशाललितरणिश्रेण्यूर्मयोबस्तिश्चेतिवामनः च त्वारिलहर्याः॥ महत्सुऊर्मिषुउल्लोलः लोलयतीतिलोलः अच् उद्गतश्चासौलोलश्च उल्लोडयति लोडृउन्माने डलयोरेकत्वात्॥ कल्लोलः कंजलंतस्यलोलः उन्मादः तोर्लि कल्लंते अनेन नद्यइतिशेषः कल्लअव्यक्तशब्दे बहुलंओलच् द्वेमहातरंगस्य॥ अंभसांभ्रमः आवर्तः स्यात् आवर्तनं वृतुवर्तने घञ् आवर्तश्चिंतनेवारिभ्रमेचावर्तने पुमानित्यु॰ मंडलाकारजलभ्रमणस्यैकं ६ पृषंति पर्षंति पृषुसेचने वर्तमानेइतिसाधु तदुक्तं कोशांतरे पृषन्मृगेपुमान्बिंदौनद्वयोः पृषतोपिनेति॥ बिंदवः बिंदंति बि

स्त्रियांवीचिरथोर्मिषु ५ महत्सूल्लोलकल्लोलौस्यादावर्तोंभसांभ्रमः॥ पृषंतिबिंदुपृषताः पुमांसोविप्रुषः स्त्रियः ६ चक्राणिपुटभेदाःस्युर्भ्र-
माश्चजलनिर्गमाः॥

दिअवयवे बहुलंउः तदुक्तंकोशांतरे बिंदुर्दंतक्षतांतरे भ्रुवोर्मध्येरूपकाव्यकृतौचपृषतेपुमानिति॥ पृषतः पर्षंति॥ विप्रुषः प्रुषुप्लुषुदाहे भावेक्विप् विगताप्रुड्दाहोस्मात् पृषत्क्लीबे बिंदुपृषतौपुंसि विप्रुट्स्त्री ६ चक्राणि चंचति चंचुगतौ रक् चक्रः शनैश्चरेपुंसिपुटभेदेनपुंसकमित्युक्तत्वात् गुरु चरणास्तु चक्राण्यपि तत्रचक्राकारेणयांत्यथइति तदुक्तं मेदिन्यां चक्रः कोकेपुमान्क्लीबंव्रजेसैन्यतरंगयोः राष्ट्रेदंभांतरेकुंभकारोपकरणास्त्रयोः जलावर्तेपीतिचादौ इति॥ पुटभेदाः पुटंसंश्लिष्टंभिंदंति भिदिर्विदारणे अण् पुटभेदस्तुनगरेजलौघेतटिनीमुखइतिहैमः॥ भ्रमाः भ्रमंतिजलाअनेन हलश्च तदुक्तं कोशांतरे भ्रमोंबु निर्गमेभ्रांतौकुंदभ्रमणयोरपीति॥ जलनिर्गमाः जलानांनिर्गमाः चत्वारियानिचक्राकारेणजलान्यधोयांतितेषां चक्रादिद्वयं चक्राकारेणजलानामधोयानस्य भ्रमा

दिद्दयंजलनिस्सरणजालकस्य नद्यादौ अधःस्थजलस्योर्ध्वनिस्सरणस्थैनिवामलं ॥ कूलं कूलयति कूल आवरणे अच् ॥ रोधः रुणद्धि रुधिर् आवरणे अ सुन् ॥ तीरं तीरयति पारतीरेनिष्कर्मणात् अच् ॥ प्रतीरं ॥ तटं तटति तटउच्छ्राये अच् रोधः मांतं अदंतोपि रोधः प्रोक्तश्चरोधसीतिसंसारावर्तः तटं त्रिलिंगंपंचतीरस्य ॥ परावाचीतीरेक्रमेण पारावारे उच्येते परंच अर्वाक् नद्याः परतीरंपारं अवाक्तीरं अवारमित्यर्थः एकैकं ॥ तयोः पारावारयोः अंतरं मध्यं पात्रंस्यात् पिबंत्यत्र पांथ्य स्माहा पातेष्ट्रन् तदुक्तंहेमे पात्रंतुकूलयोर्मध्येपर्णेनृपतिमंत्रिणि योग्यभाजनयोर्यज्ञभांडेभाधालुकर्तरीति एकं ॥ अंतर्वारिणः वारिणां तः मध्येयत्तटं तद्द्वीपइति अंतरीपमिति चोच्यते द्विर्गता आपोत्र ऋक्पूरब्धूःइतिसमासांतः ऊगयनद्यंतइतिईत्त्वं अपां अंतर्गतं अंतरीपमिति अस्त्रियामितिअंतरीपउभाभ्यांसंबध्यते द्वे जलम-

कूलंरोधश्चतीरंचप्रतीरंचतटंत्रिषु ७ पारावारेपरार्वाचीतीरेपात्रंतदंतरं ॥ द्वीपोऽस्त्रियामंतरीपंयदंतर्वारिणस्तटं ८ तोयोत्थितंतत्पुलिनंसैकतंसिकतामयं ॥ निषद्वरस्तुजंबालःपंकोऽस्त्रीशादकर्दमौ ९

ध्यस्थस्थानस्य ८ तोयोत्थितंतत्पुलिनमुच्यते पुलति पुलमहत्वे इनन् त्रिकांडशेषेतु पुलिनं द्वीपमुच्यतइति एकं ॥ सैकतं सिकताः संत्यस्मिन् सिकतेतिअण् ॥ सिकतामयं सिकतानांविकारः मयट् द्वे वालुकामयतटस्य ॥ निषद्वरः निषीदंत्यत्र षद्लृविशरणगत्यवसादनेषु नौषदेनिष्वरच् सदेरिनिषत्वं इत्याद्यूह्यं तदुक्तंविश्वे निषद्वरःस्मरेपंकेनिशायांतुनिषद्वरेइति ॥ जंबालः जमति जमुअदने बाहुलकात् यद्वा जंबअदने जंबंआलाति वा कः लादाने जंबालःशैवलेपंकेजगल्वेमदनद्रुमे मदकेपिप्रमदेचपुंसिधूर्तैभिधेयवदित्युः ॥ पंकः पच्यते पचिविस्तारे घञ् पंकोऽस्त्रीकर्दमेपापेइतिहैमः ॥ शादः शीयतेऽस्मिन्ननेन शदॢशातने णः इत्याद्यूह्यं तदुक्तंहैमे शादःकर्दमशष्पयोरिति ॥ कर्दमः कर्दति कर्दकुत्सितेशब्दे कलिअमः पंकशब्दःपुंनपुंसकयोः पंचकर्दमस्य ९

जलोच्छ्वासाः जलानिउच्छ्वसंत्येभिः परिवहंत्येभिः श्वसप्राणने वहेरपिघञ् ॥ परीवाहाः परीवाहोजलोच्छ्वासेमहीभृद्योग्यवस्तुनि परिवाहाइत्यपि हेमचन्द्रः जलस्य निर्गममार्ग स्य जलप्रवृद्धिरेवपरीवाहइत्येके ॥ कूपकाः कुत्सिताः कूपाः कुत्सितेकः ॥ विदारकाः घञंतात्कः कूपकोगुणवृक्षसंस्यात्तैलपात्रेककुंदरे इतिकोशांतरात् विदार्यंते इतिविदार णे हेशुष्कनद्यादौहिजलार्थंगर्ताः क्रियंतेतेषां ॥ स्रोतोहृथाकारिणः शिलादयः कूपकाइत्येके ॥ नौ नार्यं नौभिस्तारितुमर्हं नौवेत्तिनियत् जले नाव्यं नावानार्यं एकंनौतर णयोग्यजलस्य नत्रिषु ॥ नौः नुद्यते नुदप्रेरणे डौः यद्वा नयति नीञ्प्रापणे डः अवेःऊः ॥ तरणिः तरंत्यनया तृप्लवनतरणयोः अनिः तरणिस्तरणेः केः शौकुमार्योबाधि भेदयोरितिहेमः ॥ तरिः अचइः भयंनौकायाः तदुक्तंहेमे तरिर्दशायांवेलायांवस्त्रादीनांचपेडकइति १० उडुपं उडुनोजलात्पाति पारक्षणे कःपोतिकः ॥ प्लवः प्लवते प्लुङ्

जलोच्छ्वासाः परीवाहाः कूपकास्तुविदारकाः ॥ नाव्यंत्रिलिंगंनौतार्येस्त्रियांनौस्तरणिस्तरिः १० उडुपंतुप्लवःकोलः स्रोतोंबुसरणंस्वतः ॥ आतर स्तरपण्यंस्याद्द्रोणीकाष्ठांबुवाहिनी ११

गतौ अच् उडुपश्चंद्रभेलयोरितिधरणिः प्लवः प्लक्षेप्लुतौकपौ शब्देकारंडवेम्लेच्छजातौभेलकभेकयोः क्रमनिम्नमहीभागेकु लकेजलवायसे जलांतरेप्लुवंगंधतृणेमुस्तकभिद्यपीतिहेमः ॥ कोलः कोलति कुलसंस्त्याने अच् तदुक्तंविश्वे कोलः कोलंतुबदरीफलमिति कोलोभेलकउत्संगेकपाल्यांचित्र केकिरौ ॥ कोलंतुबदरेकोलापिप्पल्यांचव्यभेषजइतिहेमश्च अयमल्पनौकायाः होडी पडाव इतिख्यातायाः ॥ स्वतः यदंबुसरणंतत्स्रोतइत्युच्यते स्रवति स्रुगतौ असुनः तुट् सां तमेकं तालव्यादिरपि ॥ आतरः आतरत्यनेन पुंसीतिघः आतरस्तरपण्यंस्यादनुत्तरमितिबोपालितः ॥ तरपण्यं तरस्यपण्यं तरणंअप् इनद्यादितरणेदेयमूल्यस्य ॥ काष्ठांबु वाहिनी काष्ठमयीजलवाहिनीसाद्रोणीस्यात् द्रवति द्रुगतौ द्रोणिः वाहश्चीतिनीङीषा काष्ठांबुसेचनी द्रुणिश्रेतिरूपरत्नाकरः काष्ठमुपलक्षणंपाषाणादेः एवंद्रोणीइति ११

सांयात्रिकः समुद्रितानांगमनंद्वीपांतरगमनंवा संयात्रा साप्रयोजनमस्यास्तीति प्रयोजनं इतिठक् ॥ पोतवणिक् पोतेनोपलक्षितोवणिक् द्वेनौकयावाणिज्यकारिणः॥ कर्णधारः कर्णंश्रोत्रमरित्रंचधरति धृधारणे अण् ॥ नाविकः नावातरति नौद्व्यचष्टन्निति ठन् द्वेनाविकस्य नौपृष्ठदंडधारकस्येत्यन्ये ॥ नियामकाः नियच्छंतिपोतं ण्वुल् नियामकःपोतवाहेकर्णधारेनियंतरि इतिकोशांतरे ॥ पोतवाहाः पोतंवहंति अण् द्वेपोतमध्यस्थितकाष्ठाग्रेदुष्टजलादिज्ञानायस्थितायेनियंतुशक्तास्तेषां ॥ कूपकः कूपेकायति सुपीतिकः कैशब्दे ॥ गुणवृक्षकः गुणानांरज्जूनांवृक्षः द्वेनौमध्यस्थरज्जुबंधनकाष्ठस्य कुवाडोलकाठीइतिख्यातस्य १२ नौकादंडः नौकायादंडः॥ क्षेपणी क्षिप्यते अनयेतिवा क्षिपेःकिच्चेत्यनिः बहुलंगुणः क्षेपणिरपि द्वेनौकावाहकदंडस्य वल्हेइतिख्या॰ ॥ अरित्रं ऋच्छत्यनेन ऋगतौ अर्तीनिद्रत्रः ॥ केनिपातकः केजले

सांयात्रिकः पोतवणिक्कर्णधारस्तुनाविकः॥ नियामकाः पोतवाहाः कूपकोगुणवृक्षकः १२ नौकादंडः क्षेपणीस्यादरित्रंकेनिपातकः॥ अभ्रिःस्त्रीकाष्ठकुद्दालः सेकपात्रंतुसेचनं १३ क्लीबेर्धनावंनावोर्धेतीतनौकेतुत्रिषु॥

निपातोस्य हलदंताइत्यलुक्कन् द्वेकर्णस्यसुकाणूइतिख्यातस्य ॥ अभ्रिः अभ्रति अभ्रगतौइन् अभ्रीत्यपि ॥ काष्ठकुद्दालः काष्ठस्यकुद्दालः द्वेपोतादेर्मलापनयनार्थंकाष्ठादिरचितकुद्दालस्य कुडतीइतिख्यातस्य ॥ सेकपात्रं सेकस्य पात्रं ॥ सेचनं सिच्यतेऽनेन करणेल्युट् सेचनंक्षरणेसेकेनौकायाःसेकभाजनइतिविश्वमेदिन्यौ द्वेचर्मादिरचितस्यजलोत्सर्जनपात्रस्य बादलीडोलइतिख्यातस्य ॥ या नपात्रंतुपोतोब्धिभवेत्त्रिषुसमुद्रियं सामुद्रिकोमनुष्योब्धिजानासामुद्रिकाचनौरिति क्वचित् १३ नावोर्द्धं अर्द्धनावंस्यात् नत्क्लीबे नावोद्विगोरर्धाच्चेतिटच् अतीतनौके नौकामतीत्यवर्तमानेमनुष्यादौ अतिनु अतीतानौर्येन नपुंसकेइतिह्रस्वः अतिनौः पुमान् स्त्रीवा त्रिषु एकं॥ ५ ७

अनःपरंअगाधात् अगाधशब्दमभिव्याप्य त्रि ध्रुवाच्यलिंगाइत्यर्थः॥ प्रसन्नः प्रसन्नास्त्रीप्रसत्तायांस्यादछसंतुष्टयोस्त्रिष्वित्युक्तत्वात्॥ अच्छः छोछेदने स्रपीनिकः अ छोभल्लूकेस्फटिकेमलेच्छाभिमुखेव्ययमिनिहेमः द्वेनिर्मलस्य॥कलुषः लुषति लुषहिंसायां इगुपेनिकः कस्यजलस्यलुषोयानकः कलुषंत्वाविलेपापेइतिविश्वः॥नच्छः ॥आविलः आविलति बिलभेदने इगुपेनिकः त्रीणिमलिनजलस्य १४ निम्नं निमनति म्नाअभ्यासे आतश्चोपेतिकः॥गम्भीरं गच्छति गाङ्गतौ गम्लृगतौ गभीर गंभीराविति निपातितौ त्रीणिगंभीरस्यस्वरोऽडुत्तिरव्यातस्य॥नस्यगंभीरस्य नद्विपर्यये उत्तानंस्यात् उद्गतस्तानोविस्तारोऽस्मात् नदुक्तंकोशांतरे उत्तानमगंभीरेस्या दूर्ध्वास्यशयितेत्रिष्विति एकं॥अगाधं नास्तिगाधःस्थितिरत्र नञास्त्येतिसाधुः॥अतलस्पर्शं नविद्यतेतलस्पर्शोऽस्य द्वे अत्यंतगंभीरस्य॥कैवर्तः केजलेवर्तते वृतु

त्रिष्वागाधात्प्रसन्नोच्छः कलुषोनच्छआविलः १४ निम्नंगभीरंगंभीरमुत्तानंतद्विपर्यये॥ अगाधमतलस्पर्शंकैवर्तेदाशधीवरौ १५ आना
यः पुंसिजालंस्याच्छणसूत्रंपवित्रकं॥ मत्स्याधानीकुवेणीस्याद्बडिशंमत्स्यवेधनं १६

वर्तने अच्॥दाशः दशतिमत्स्यान् दंशदशने दंशेश्छेतिसाधुः य द्वा दाश्यते मूल्यमस्मै दाश्दाने घञ् दासइत्यपि नन्वेत्थं दासोभृत्येचशूद्रेचज्ञानेर्थिनिचधीवरइत्युः॥धीवरः दधातिमत्स्यान् छित्वरेत्यादिनानिपातः त्रीणिकैवर्तस्य १५ आनायः आनयंति मत्स्याननेन आनीघञ्॥जालं जलेक्षिप्यते शेषेइत्यण् नदुक्तंरभसे जालंवृंदगवाक्षयोः क्षारकानायदंभेषुनीपेनास्त्रीहयोषकइति द्वेजालस्य ॥शणसूत्रं शणोति शणगतौ अच् शणस्यसूत्रं॥पवित्रकं पवित्राद्विपरीतलक्षणयासंज्ञायांकः द्वे शणसूत्रजालस्य॥मत्स्याधानी मत्स्याआधीयंतेऽत्र डुधाञ्धारणपो षणयोः ल्युट्॥ कुवेणी कुत्सितंवेणंतेमत्स्याः हलश्चेतिघञ् वेणृगतौ द्वेमत्स्यबंधनकरंडिकायाः॥बलिशं बलिनोमत्स्यान्श्यति शोतनूकरणे आतइतिकः डलयोरै क्याद्बडिशमपि बडिशा बडिशी अयोऽपिलमध्यावा॥मत्स्यवेधनं मत्स्यानांवेधनं द्वेमत्स्यवेधनस्य गलइति॰ १६

पृथुरोमा पृथूनिरोमाण्यस्य ॥ झषः झषति झषहिंसार्थः अच् ॥ मत्स्यः मद्यति मदीहर्षे स्यः ॥ मीनः मीनाति मीयनेवा मीञ्हिंसायां फेनमीनौ ॥ वैसारिणः विवि धंसरति सृगतौ णिनिः विसेतिअण् ॥ अंडजः अंडाज्जायतेस्म जनीप्रादुर्भावे डः ॥ विसारः विशेषेणसरति सृगतौ व्याधीति घञ् ॥ शकुली शकलमस्यास्तीति अतइनिः शकलंवल्कलेः धेंचेतितालव्यादावजयः अष्टौमत्स्यस्य ॥ गंडकः गडति गडसेचने क्वुन् ॥ शकुलार्भकः शकुलोत्रमत्स्यमात्रइतिगुरवः तस्यार्भकः द्वेमत्स्यविशेषस्य गरइतिख्यातस्य १७ सहस्रदंष्ट्रः सहस्रंदंष्ट्रायस्य ॥ पाठीनः पातिपृष्ठंनमयति णमप्रह्वत्वे अंतर्भावितार्थः अन्येतिदीर्घः तदुक्तंहैमे पाठीनोगुग्गुलुद्रुमे पाठकेमीनभेदेचे ति द्वेबहुदंष्ट्रस्यमत्स्यविशेषस्य ॥ उलूपी उविस्मयजनकरूपमस्यास्ति अतइनिः रलयोरैक्यं ॥ शिशुकः कं तदुक्तंकोशांतरे शिशुकःशिशुमारस्याद्वालकेलूपिनोरपीति

पृथुरोमाझषोमत्स्योमीनोवैसारिणोंऽडजः ॥ विसारःशकुलीचाथगंडकःशकुलार्भकः १७ सहस्रदंष्ट्रःपाठीनउलूपीशिशुकःसमौ ॥ नलमीन श्चिलिचिमःप्रोष्ठीतुशफरीद्वयोः १८ क्षुद्राडमत्स्यसंघातःपोताधानमथोझषाः ॥ द्वेशिशुमाराकारमत्स्यस्य ॥ नलमीनः नलवनस्थोमीनः नलमीनश्चिलिचि मोत्रद्वन्द्वौ नोद्भिजस्तिमिरितिरत्नमाला इलयोरैक्यात् नडमीनोऽपि ॥ चिलिचिमः चिलिंचिंविलासंमिमीते माङ्माने कः ॥ चिलिचिमिरपि नलमीनश्चिलिचिमिरितिबोपालितः द्वेजलनृषाचारिमत्स्यविशेषस्यवेगसाइतिख्या० ॥ प्रोष्ठी प्रकृष्टओष्ठोयस्याः पररूपं नासिकेतिङीष् ॥ शफरी शफंराति रादाने कः पुंसितुप्रोष्ठः शफरश्च द्वेसहरीइति ख्यातस्य शफरमत्स्यविशेषस्य १८ क्षुद्रांडमत्स्यसंघातः क्षुद्रादंडाज्जातामत्स्यास्तेषांसंघातः पोताधानंस्यात् पातोऽर्भकआधीयतेऽत्र धाञोल्युट् ॥ अ थोझषविशेषाः उच्यंते ॥ ५ ५ ५ ५ ५ ६

रोहितः रोहति रुहबीजजन्मप्रादुर्भावे इनच् तदुक्तंकोशांतरे रोहितंकुंकुमेरक्तेऋजुशक्रशरासने पुंसिस्यान्मीनमृगयोर्भेदेलोहितकर्दमे इति एकं रोहिइतिप्रसिद्धस्य ॥मद्गुरः मज्जति मस्जेर्निपातः मंगराइतिप्रसिद्धः॥शालः शाड्यते शाडुश्लाघायां डलयोरैक्यं यत्न् सालोपि सालोवरुणसर्जयोरितिरभसे तुदंस्यादिः शालोह लेमत्स्यभेदेशालौकस्तन्मदेशयोरितिहैमः चक्रांकितमत्स्यइत्यर्थः एकं॥राजीवः राजीरेखास्यास्ति अन्येतिवः राजीवोमीनसारंगभेदयोरितिहैमः अब्जमपि एकं राया इतिप्रसिद्धः॥शकुलः शक्नोतिगंतुंवेगेन शक्लृशक्तौ बहुलंउलच् एकंसौराइतिप्रसिद्धः॥तिमिः ताम्यति तमुग्लानौ इन् १९ तिमिंगिलः तिमिंगिरति गृनिगरणे मूले तिकः आदिशब्दान्नंद्यावर्तादयोऽन्ये पृथक् एकैकं॥यादांसि यांतिवेगेन याप्रापणे असुन् बहुलदुक्॥जलजंतवः जलानांजंतवः द्वे जलचरमात्रस्य॥तद्भेदाः तेषांजल

रोहितोमद्गुरःशालोराजीवःशकुलस्तिमिः १९ तिमिंगिलादयश्चाथयादांसिजलजंतवः॥तद्भेदाःशिशुमारोद्रशंकवोमकरादयः २० स्यात्कुलीरःकर्कटकःकूर्मेकमठकच्छपौ॥

जंतूनांभेदाउच्यते शिशुमारः शिशूनमारयति मृङ्प्राणत्यागे अण् शिशुमारोंबुसंभूतजंतौताराप्रकात्म्युते इतिविश्वमेदिन्यौ शिरसइतिख्यातः॥उद्रः उनत्ति उंदीक्लेदने रक् द्वे उदइतिख्यातः॥शंकुः शंकते स्मात् खरुशंकुइतिसाधुः सपूइतिख्यातः तदुक्तंहैमे शंकुःपत्रशिराजालेसंख्याकीलकशंभुषु यादोस्त्र भेदयोर्मदेइति॥मकरः कृणाति कृहिंसायां अच् पृषोदरादिः यद्वा मंकते मकिभूषायां अच् मगरइतिप्रसिद्धः आदिनाजलहस्त्यादयः२० कुलीरः कुलति कुलसंस्त्याने कौळीयते लिङ्श्लेषणे इतिः अग्रेण कुलिनंईरयति कुलिरइत्यपि॥कर्कटकः करति कटेवर्षावरणयोः कृणातेर्विच् अच् स्वार्थेकः करश्चासौकटश्च कर्कस्वेनवर्णटलति वा टलगतौड: करकटइत्यपि करकडइतिगुरवः तदुक्तंहैमे कर्कडः कुलिरेइति द्वे कुरलें खेंकडाइतिख्या०॥कूर्मः कौ ऊर्मिर्वेगोस्य योगविभागादच् ऊर्मिस्त्रीपुंसयोर्वी

च्चांप्रकाशेवेगभंगयोरितिरभसः॥ कमठः काम्यते कमुकांतौ रठः केजलेमठतीतिवा मठमदनिवासयोः अच् कमठः कच्छपेपुंसिभांडभेदेनपुंसकमित्य॰॥ कच्छपः क च्छेनपिबति पापाने सुपीतिकः अन्यत्रकच्छपीत्यपिपाठः कच्छपीवल्लकीभेदेडुलोस्कद्रगदांतरे पुंसिनिध्यंतरेकूर्मेमल्लबंधांतरेपिचेतिविश्वमेदिन्यौ त्रीणिकांसवइति रव्या॰॥ ग्राहः गृह्णाति ग्रहउपादाने विभाषाग्रहइतिणः तदुक्तंहैमे ग्राहोग्रहेजलचरइति॥ अवहारः अवहरति हरतेर्णः तदुक्तंहैमे अवहारस्तुयुद्धादिविश्रांतोग्राहचौरयोः निमंत्रणोपनेतव्यइति हेगोहनाडेसावजइतिरव्या॰॥ नक्रः नक्रामति दूरस्थलं क्रमुपादविक्षेपे डः नक्रंनामाग्रदारुणोः नक्रोयादसीतिहैमः॥ कुंभीरः कुंभीहस्ती तमीरयति अण् हेनक्रस्यग्राहविशेषस्य सुसरइतिरव्या॰॥ महीलता मह्याःलतेव २१ गंडूपदः गंडवो ग्रंथयः पदान्यस्य॥ किंचुलकः किंचित् चुलुंपति वार्तिकनिर्दिष्टाचुलुंपात्डः किं

> ग्राहोऽवहारोनक्रस्तुकुंभीरोथमहीलता २१ गंडूपदः किंचुलकोनिहाकागोधिकासमे॥ रक्तपातुजलौकायांस्त्रियांभूम्निजलौकसः २२ मुक्तास्फोटः स्त्रियांशुक्तिः

चिलिकइत्यपि अयंजलचरभेदस्य केंचू काडूदानवार गांडोळइतिरव्या॰॥ निहाका नियतंजहातिभुवं नौहश्वेतिसाधुः॥ गोधिका गुध्यति गुधपरिवेष्टने ण्वुल् हेजलगोधिकायाः पाण्यातीलघोरपडइतिरव्यातायाः॥ रक्तपा रक्तंपिबति आतश्चोकः॥ तदुक्तंकोशांतरे रक्तपास्याज्जलौकायांडाकिन्यांनानुरासेइति॥ जलौका जलमोकोऽस्याः ओकउचः केइतिसिद्धेनसमासः॥ जलौकसः स्त्रियांभूम्नि उचः कइतिनिपातितोऽदंतओकशब्दः जलौकातुजलौकास्याज्जलूका चजलौकसीतिसंसारावर्तात् बहुवचनंप्रायिकं जलौकापिजलौकास्याज्जलूकाजलजंतुकेतितारपालोपि त्रीणिजळूइतिप्रसिद्धस्य २२ मुक्तास्फोटः मुक्ताःस्फुटंत्यत्र स्फुट विकसने हलइतियत्र्॥ शुक्तिः शुच्यति शोचति शोकंनिवा शच्यअभिषवे शुचशोके शुक्रगतौवा क्तिच् तदुक्तंकोशांतरे शक्तिःकपालशकलेशंखेशंखनखेपिचेति हेशक्तिकायाः॥

शंखः शंखनति खनुअवदारणे अन्यइतिडः शाम्यत्यलक्ष्मीर्वा शमुउपशमे सण्यर्थात् खः॥ कंबुः काम्यते कमुकांतौ जंब्बादिः कंबुर्वलयशंखयोरित्यु० हैशंखस्य अ-स्त्रियौपुंनपुंसकौ॥ क्षुद्रशंखाः क्षुद्राश्चतेशंखाश्च शंकते शकिशंकायां अनुदात्तेतश्चेयुक् कन्॥ शंखनखाः शंखस्यनखइवेति हैसूक्ष्मशंखानां॥ जलशुक्तयः शं-बूकाः स्युः उलूकादिः जलमात्रजाः शुक्तयः शंबूकाननपुंसके इतिमेदिनीहिलिंगता शंबूकः शंबुकश्चैवपूर्वः कांतश्चसर्वदा ककारेणविनात्रोपोदृश्यतेग्रंथविस्तरइ-त्युत्पलिनी २३ भेकः बिभेति ञिभीभये इण्भीकेतिकन् भेकोमंडूकमेघयोरित्युक्तत्वात्॥ मंडूकः मंडयतिजलाशयं मंडतेवा मडिभूषायां शलिमंडिभ्यांऊकन् त-दुक्तंहैमे मंडूकपर्ण्यामंडूकीमंडूकोभेकशोणकाविति॥ वर्षाभूः वर्षासुभवति भुवः संज्ञायां वर्षाभूःस्त्रीचशोथघ्न्यांभूलनाप्लवयोःपुमानितिविश्वमेदिन्यौ॥ शालू-

शंखःस्यात्कंबुरस्त्रियौ॥ क्षुद्रशंखाःशंखनखाःशंबूकाजलशुक्तयः २३ भेकेमंडूकवर्षाभूशालूरप्लवदर्दुराः॥ शिलीगंडूपदीभेकीवर्षाभ्वी कमठीदुलिः २४ मद्गुरस्यप्रियाशृंगी

रः शालते शालकत्थने खर्जपिंजादिभ्यइतिऊरः डलयोरैक्यं तत्र शाडते शाडृगतौ परि-सरस्कलासस्वेदसालूरइत्यूष्मविवेकादृत्यादिरपि प्लवः प्लवते प्लुङ्गतौ अच् तदुक्तंकोशांतरे प्लवः प्लक्षेप्लुतौकपाविति॥ दर्दुरः दृणाति शब्दैः कर्णौ दृविदार-णे मुकुरदर्दुरौ तदुक्तंकोशांतरे दर्दुरः पर्वतेपुंसिस्त्रियांभीषद्ग्रमभाजने दर्दुरस्तोयदेभेकेवाद्यभांडाद्रिभेदयोरिति षट्भेकस्य॥ शिली शिलति शिलउंछे इगुपधेतिकः॥ गंडूपदी व्याख्यातं हैस्वल्पगंडूपदजातेः॥ भेकी॥ वर्षाभ्वी गौरादिः वर्षाभूरपि भेक्यांपुनर्नवायांस्त्रीवर्षाभूर्दर्दुरेपुमानितियादवः हैस्त्रुद्रभेकजातेः॥ कमठी पुंयो-गेजातौवाङीष्॥ दुलिः दोलति दुलउत्क्षेपे इगुपधेतिकिः हैकूर्म्याः २४ मद्गुरस्य मत्स्य भेदस्यप्रियाशृंगीत्युच्यते शरणाति शृहिंसायां शृणातेर्ह्रस्वश्चेतिगन्-तुट्च एकं॥

दुर्नामा दुष्टं निंदितं नामास्याः दुर्नाम्नी अनउपेनिवाडीष्॥ दीर्घकोशिका दीर्घः कोशोयस्याः आनिडीषंतात्कन्‌ह्रस्वः इत्याद्युक्तं द्वेजलूकाकारस्यजलचरविशेषस्य॥ जलाशयाः जलमाशयोह्रदयमस्य जलमाशेते निश्चत्यत्रेतिवा पुंसीनियः तदुक्तंकोशांतरे जलाशयोजलाधारेस्याद्युशीरे ऽन्यलिंगकमिति॥ जलाधाराः जलानां आधाराः ह्रेनदा-गादीनां त्त्रजलाशयेषु अगाधजलः ह्रद उच्यते अगाधमतलस्पर्शजलंयस्य ह्रादनेह्रादअव्यक्तेशब्दे अच् पृषोदरादिः एकं २५ उपकूपजलाशये आहावः निपानमाहावः निपानंस्यात् पिबतेःकरणेनिल्युट् इतिद्वे आह्वयंतेऽत्र नियतंपिबंत्यस्मिन् द्वेकूपसमीपेयोजलाशयः कूपो द्धृतांबुस्थापनीयशिलादिरचितोगर्तः यत्रात्यंतंसत्त्वे नगोमहिषादयः पिबंति तस्य॥ अंधुः अम्यते अमगत्यादौ अर्जीतिकुः यद्वा अंधयति अंधुर्दृष्ट्युपघाते मृगेतिसाधुः॥ प्रहिः प्रन्हियते कूपेः इः इच्छ॥ कूपः कौति कुशब्दे

दुर्नामादीर्घकोशिका॥ जलाशयाजलाधारास्तत्रागाधजलोह्रदः २५ आहावस्तुनिपानंस्यादुपकूपजलाशये॥ पुंस्येवांधुः प्रहिः कूपउदपानंतु पुंसिवा २६ नेमिस्त्रिकाः स्यवीनाहोमुखबंधनमस्ययत्॥ पुष्करिण्यांतुखातंस्यादखातंदेवखातके २७

कुयूइतिपः कुलितादीषद्वाआपोऽत्र ऋक्पूइनिसमासांतः ऊदेत्यत्रदीर्घनिर्देशादन्यत्रापिल्यद्॥ उदपानं उदकंपिबंत्यस्मिन् पुंसिवा चत्वारिविहारइति०॥ २६॥ अस्यकूपस्यनेमिः अंते रज्वादिधारणार्थदारुयंत्रं साभ्रिका संख्यायाः संघेतिकन् त्रिकाकूपस्यनेमौस्यात्त्रिकंपृष्ठाधरेस्त्रियामितिविश्वमेदिन्यौ ह्यानराहाट इतिख्यातस्यैकं॥ अकूपस्यपाषाणादिभिर्यन्मुखबंधनं सवीनाहउच्यते विनह्यतेनेन नहबंधने घञ्दीर्घः विनाहइत्यपि नंदीपरइतिख्यातस्यैकं॥ पुष्करिणी पुष्कराणिसंत्यस्यां मत्वर्थेइनिः॥ खातं अखानि खनुअवदारणे क्तः कर्मणि अतएवअखानिइति चिण्णंतमादर्शि द्वेपुष्करिण्याः॥ अखातं नञ्पूर्वात्क्तः॥ देवखातकं देवेनखातं अखातोदेवखातकइतिपुंस्कांडे भरदत्तात्पुंस्यपि द्वेअकृत्रिमखानस्य देवह्रदस्य जलाशयस्येत्यन्ये २७

पद्माकरः पद्मानामाकरः तडागः तडयते तडआघाते नडादित्वं तदुक्तंविश्वे तडागस्तुजलाधारविशेषेयंत्रकूपकेइति ॥ कासारः कासनैं कासृशब्दे आरन् यद्वा इषत्सारोस्य कोः कादेशः मत्वर्थेअच् इत्यायुक्तं ॥ सरसी स्त्रियते सृगतौ असुन्ङीष् सरः पंचनडागस्य तडागइत्यत्रतडागइत्यपि तटाकतडागावपि सतुअस्त्रियां अत्रपद्मादिदेस पद्मागाधजलाशयस्य कासारादित्रयंकृत्रिमपद्माकरस्येत्यपिगतं सरसीस्त्री सरः सांतं असुनंतत्वात् वेशंतः विशंत्यत्रभेकादयः विशप्रवेशने जृविशिभ्यांझच् पल्वलं पलतिपल्यतेवा पलगतौ वलन् पुंस्यपि वेशंतः पल्वलोस्त्रीतिवाचस्पतिः ॥ अल्पसरः अल्पंचतत्सरश्च त्रीणिस्वल्पसरसः वापी वापिरपि वसिवपीतिइञ् कृदिके तिवाईनिष् तत्र वाप्यं वापिरपिस्मृतेतिद्विरूपकोशः दीर्घिका दीर्घेव संज्ञायांकन् ह्रेदीर्घिकेतिख्यातायाः २८ खेयं खन्यते खनुअवदारणे ईखखनः परिखा प

पद्माकरस्तडागोस्त्रीकासारः सरसीसरः ॥ वेशंतः पल्वलंचाल्पसरोवापी तुदीर्घिका ॥ २८ ॥ खेयंतुपरिखाधारस्त्वंभसांयत्रधारणम् ॥
स्यादालवालमावालमावापोथनदीसरित् ॥ २९ ॥

रितः खन्यतेइति अन्येतिडः ईदुर्गाद्बहिर्यत्परितःखातं क्रियतेतस्यनवरइति मसि ङ्स्य यत्र अंभसाधारणं सेत्रादिसेकार्थं जलानां संग्रहणं स आधारः स्यात् आध्रियते जलमस्मिन् अध्यायेतिघञ् तदुक्तं कोशांतरे आधारश्चाधिकरणेप्यालवालेंऽबुधा रणइति यदपि अपांधारणमाधारस्तदल्पंचालवालकमिति एकं बांध इतिख्यात० आलवालं आसमंताज्जलस्यलवमालाति लाआदाने आवलतेंभोनेन वलसंव रणे हलइतिघञ् अलवालमपि तत्रेत्थं लवमालाति तद्भिन्नं नञ्समासेंह्रस्वादीत्यन्ये आवालं आईषत्वालाद्वृक्षाअत्र आवापः आवपंतिजलमत्र डुवपबीजतंतु संताने घञ् त्रयंवृक्षादिमूलेसमंततो ःमसोधारणार्थे यद्वेष्टनंतस्य अळे इतिख्यातस्य नदी नदति णद अव्यक्तेशब्दे अच् सरित् सरति सृगतौ सतेरितिः २९

तरंगिणी तरंगाः संत्यस्यां इनिः शैवलिनी शैवलमस्त्यस्यां तटिनी तटमस्त्यस्याः ह्रादिनी ह्रदाः संत्यस्यां ह्रादनीइत्यपि एतेषु इन्नंतात्ङीप् धुनी धुनोतिवेतसादि-
न् पृषोदरादिः स्रोतस्वती स्रोतांसिसंत्यस्याः स्रोतस्विनीत्यपि द्वीपवती द्वीपमस्त्यस्यां स्रवंती स्रवति लटः शतृङीप् निम्नगा निम्नंगच्छति गम्लृगतौडः आपगा
अपांसमूहो आपंतेनगच्छति समूहेण गमेर्डः अपगेतिह्रस्वादिरपि विद्यादगारमागारमपगापापगामपीतिद्विरूपकोशः द्वादशनद्याः ३० गंगा गच्छति गम्लृ गम्य ये
तिगन् विष्णुपदि विष्णुः पदंस्थानंयस्याः गौरादिः तदुक्तंहैमे विष्णुपदंनभो ज्ञेयोः विष्णुपदस्तुक्षीरोदे विष्णुपदीसुरापगेति जन्हुतनया जन्होः राजर्षेस्तनया
सुरनिम्नगा सुराणांनिम्नगा भागीरथी भगीरथस्येयं तस्येदं त्रिपथगा त्रयाणांपथांसमाहारस्त्रिपथंतेनगच्छतिडः त्रिस्रोताः त्रीणिस्रोतांसियस्याः भीष्म

तरंगिणीशैवलिनीतटिनीह्रादिनीधुनी ॥ स्रोतस्वतीद्वीपवतीस्रवंतीनिम्नगापगा ॥ ३० ॥ कूलंकषानिर्झरिणीरोधोवक्रासरस्वती ॥ गं
गाविष्णुपदीजन्हुतनयासुरनिम्नगा ॥ भागीरथीत्रिपथगात्रिस्रोताभीष्मसूरपि ॥ ३१ ॥ कालिंदीसूर्यतनयायमुनाशमनस्वसा ॥ रेवातुनर्म
दासोमोद्भवामेकलकन्यका ॥ ३२ ॥

सूः भीष्मंसूतेसा षूङ् प्राणिप्रसवे क्विप् अष्टौभागीरथ्याः ३१ कालिंदी कलिंदस्येयं अणंतात्ङीप् सूर्यतनया सूर्यस्य
तनया यमुना यच्छति यमउपरमे अर्जियमिङ्क्तिउनन् शमनस्वसा शमनस्यस्वसा चत्वारियमुनायाः शमनस्वसाऽन्तदंता रेवा रेवृप्लवगतौ अच् नर्मदा नर्मददातिकः द्य
तिवा डुदाञ्दाने दोअवखंडनेवा नर्मदः केलिसचिवेनर्मदासरिदंतरेइतिविश्वमेदिन्यौ सोमोद्भवा सोमात्सोमवंशजात्पुरूरवसउद्भवति अच् तेनावतारितत्वात् यद्वा
सोमोमृतमुद्भवत्यस्याः स्वर्गप्रदत्वात् सोमाद्रुद्रादुद्भवति मेकलकन्यका मेकलस्यऋषेरद्रेर्वाकन्यका चत्वारिनर्मदायाः ३२ ॥श्रीसितारामप्रसन्न॥

करतोया करस्यतोयं नदत्रास्ति मत्वर्थेच् सदानीरा सदानीरंयस्याः हेगौरीविवाहेशंकरहस्तेदत्तंकन्यादानोदकं तस्मात् जातायाः यदुक्तं प्रथमंकर्कटेदेवीत्र्यहंगंगारज
स्वला सर्वारक्तवहानद्यः करतोयांबुवाहिनीति बाहुदा आवइनिकः बाहुर्छिन्नः दत्तवतीलिखितस्यत्रन्दषे यद्वा बहुदस्यकार्तवीर्यस्येयं तेनावतारितत्वात् अत्रपक्षे अजादिः
सैतवाहिनी सितानिवाहमानियस्यार्जुनस्यतस्येयं अण् यद्वा सितस्यार्जुनस्येयं सैतीन्यासौवाहिनीच ङेकार्तवीर्यार्ज्जुनेनयावतारिता तस्याः शतद्रुः शतधाद्रवति
द्रुगतौडुः वसिष्ठशापभयाच्छतधाद्रुताशतद्रुःजातेत्यर्थः शतुद्रिः शुपुंजितंतुदति तुदव्यथने बहुलंरुक् इशतरुद्रेतिदेशभाषयाप्रसिद्धायाः विपाशा पाशविमो
चयति सत्येतिमोचनेणिच् अच् विपाट् विपृशांतत्वात् षत्वं शकारांता द्वेपाशमोचिनीतिख्यातायाः ३६ शोणः शोणति शोण्रवर्णगत्योः अच हिरण्यवाहः हिर

**करतोयासदानीराबाहुदासैतवाहिनी ॥ शतद्रुस्तुशुतुद्रिःस्याद्विपाशातुविपाट्स्त्रियाम् ॥ ३३ ॥ शोणोहिरण्यवाहःस्यात्कुल्याल्पाकृ
त्रिमासरित ॥ शरावतीवेत्रवतीचंद्रभागासरस्वती ॥ ३४ ॥ कावेरीसरितोन्याश्च**

ण्यंवहति अण् इेनदविशेषस्य शोणनदीतिप्रसिद्धस्य याः ल्याकृ
त्रिमासरित्साकुल्यास्यात् नत्रसाधुरितियत् तालव्यांतं एकं कुल्यानदीकुल्यमस्थिकुल्यावारिप्रणालिकेतिधरणेर्नदिमात्रेपि शरावती शराःसंत्यस्यां वेत्रवती वेत्रम
स्त्यस्यां उभयत्रमतुब् चंद्रभागा चंद्रभागयोः पर्वतयोः इयं तत्रप्रभवत्वात् अण् चंद्रभागाचांद्रभागाचांद्रभागीचसामता चंद्रभागीचसैवोक्तेतिद्विरूपकोशः
सरस्वती सरांसिसंत्यस्यांमत्वंतात्ङीप् ॥ ३४ ॥ कावेरी कस्यजलस्यवेरंशरीरंतस्येयं अणिआदिवृद्धिः तदुक्तंकोशांतरे कावेरीस्यात्सरिद्भेदेपण्यनारीहरिद्रयोरिति
एनपंचसरिद्विशेषाः एकैकं अन्याश्चसरितः कौशिकीगंडकीचर्मण्वतीगोदावर्यादयः स्युः

संभेदः संभिद्यंते मिलंत्यत्र भिदिर् विदारणे हलश्चेति घञ् सिंधुसंगमः सिंध्वोः संगमः द्वे नदीमेलनस्य पयसः जलस्य पदव्यां निर्गममार्गे मकरमुखादिरूपा प्रणाली त्येकं तद्द्वयोः पुंसि तु प्रणालः नल्यते नेल बंधने कर्मणि घञ् उपसर्गादिति णः ३५ उत्तरौ दाविकसारवौ त्रिषु स्यातां यथा देविकायां नद्यां भवं दाविकं दीव्यते दिवु क्रिडायां ण्वुल् गुणः भवार्थे अण् देविकाशिंशपेति आद्यच आत्वं सरय्वां भवं सारवं सरति सर्तेरयुः भवार्थे अण् दाण्डिनायनेति निपातनात् साधुः एकैकं स्त्रियां तु दाविकी सारवी अणंतत्वात् साधुत्वं ङीप् सौगंधिकं शोभनो गंधः प्रयोजनमस्य विनयादित्वं प्रयोजनमिति ठक् सौगंधिकं तु कल्हारे पद्मरागे च कत्तृणे इत्युक्तत्वात् कल्हारं कस्य जलस्य हार इव केल्हादते वा अच् पृषोदरादिः द्वे संध्याविकासिनः शुक्लसरोजस्य हल्लकं हल्लति हल्ल विकासने ण्वुल् पद्मासंपदादिः हल हलं लातीति कः

संभेदः सिंधुसंगमः ॥ द्वयोः प्रणाली पयसः पदव्यां त्रिषु तूत्तरौ ॥ ३५ ॥ देविकायां सरय्वां च भवे दाविकसारवौ ॥ सौगंधिकं तु कल्हारं हल्लकं रक्तसंध्यकम् ॥ ३६ ॥ स्यादुत्पलं कुवलयमथ नीलांबुजन्म च ॥ इंदीवरं च नीलेऽस्मिन् सिते कुमुदकैरवे ॥ ३७ ॥

स्वार्थे कन् इत्या युत्यं रक्तसंध्यकं रक्तां संधां अकति अक कुटिलायां गतौ मूलविभुजादित्वात् कः द्वे रक्तकल्हारस्य ३६ उत्पलं उत्पलति पल गतौ पचाद्यच् कुवलयं कौ वलयमिव शोभाकरत्वात् इत्या युत्यं कुवलं तूत्पलं कुवमिति त्रिकांडशेषः द्वे कुमुदस्य कमलसाधारणस्येत्यन्ये नीलेऽस्मिन्नुत्पले नीलांबुजन्म नीलं च तदंबुजन्म च इंदीवरं इंदति इदि परमैश्वर्ये इणजेति इणक् उदिके ति ङीष् इंदी लक्ष्मी तस्या वरमिष्टं इंदीवरं कुवलये शतावर्यां च योषितीत्युक्तत्वात् द्वे नीलोत्पलस्य इंदिवरं इंदीवारं इत्यपि सिते शुक्ले अस्मिन्नुत्पले कुमुदं कौ मोदते मुद हर्षे मूलविभुजादित्वात् कः कैरवं केजले रौति रु शब्दे पचाद्यच् तत्पुरुषे कृतीत्यलुक् कैरवस्य हंसस्येदं प्रीतस्येदमित्यणि आदिवृद्धिः द्वे शुक्लोत्पलस्य ३७

एषांउत्पलविशेषाणां कंदेनाममूलं शालकंस्यात् शल्यते शलतिवा .शलचलनसंवरणयोः शालिमंडिभ्यामूकन् इत्यधिश्च एकंवारिपर्णी वारिणिपर्णान्यस्याः पाककर्णे लिङ्ङीष यद्वावारिषि पर्ति पूपालनपूरणयोः धाञ्इतिनः जातेरीतिङीष् कुंभिका कुंभोस्त्यस्याः मत्वर्थेठन् द्वेजलकुंभितिख्यातायाः जलनीली जलंनीलयति नीलवर्णेक र्मण्यण इत्याद्युक्तं शैवालं जलेशेतेतिष्ठति शीङोवालञ् शैवलःवालंन् शेवालश्चापिशैवालः शेवलोजलनीलि का त्रीणिशेवाळइतिप्रसिद्धस्य कुमुद्वती कुमुदानिसं ति कुमुदनडवेतसेभ्योडमतुप्झ्न्इतितलं ३८ कुमुदिनी अतइनिः द्वेकुमुदिन्याः कुमुदयुक्तदेशस्यच नलिनी मडाःसंत्यत्र डलयोरैक्यं अतएव नडिन्यपि बिसिनी बिसमस्त्यस्याः पद्मिनी पद्मानिसंत्यस्यां पुरवशब्दात् मृणालिनीत्यादयः तदुक्तंमेदिन्यां पद्मिनीपद्मसंघातेस्त्रीविशेषेसरोंबुजइति पद्मिनीयोषिदंतरे पद्मं पद्यते

शालूकमेषांकंदः स्याद्वारिपर्णीतुकुंभिका ॥ जलनीलीतुशैवालं शैवलोथकुमुद्वती ॥ ३८ ॥ कुमुदिन्यांनलिन्यांतुबिसिनीपद्मिनीमुखाः ॥
वापुंसिपद्मंनलिनमरविंदंमहोत्पलं ॥ ३९ ॥ सहस्रपत्रंकमलंशतपत्रंकुशेशयम् ॥

पद्मगतौ पद्मोःस्त्रीपद्मकेव्यूहानिधिसंख्यांतरेंबुजइत्यरुक्तत्वात् न लिनं नलति णलगंधे अरविंदं अरंशीघ्रंलिप्सांविंदति अकाराणिपत्राणिविंदतिवा महोत्पलं महच्चतदुत्पलंच तदुक्तंरभसे उत्पलं कुष्ठभूरुहे इंदीवरेमांसशून्येप्युक्त- ३९ सहस्रपत्रं सहस्रंपत्राण्यस्यकमलं कंजलं अलति अलभूषणादौ यद्वा काम्यते कमुकांतौ तदुक्तंहैमे कमलंन्योम्निभेषजे पंकजेसलिलेताम्रे कमलस्तु मृगांतरे क मलाश्रीवरनार्योरिति ३९ शतपत्रं शतंपत्राण्यस्य शतपत्रशिखंडिनि दार्वाघाटेसारसेच कमलेतुनपुंसकमिति विश्वमेदिन्यौ कुशेशयं कुशेजलेशेत अधिकरणेशेतेरित्यच् शयवासित्यलुक्

पंकेरुहं पंकेरोहति रुहप्रादुर्भावे इगुपेतिकः तत्पुरुषेइत्यलुक् तामरसं तामरंघृतमर्णश्चेतिरुद्रः तत्रसस्ति अन्येभ्योपीतिडः यद्वा तम्यते तमुकांक्षायां घञ्निषेधान्नित्वात् घृत्थिः रसं रस्यते रस आस्वादने ण्यंतादेरच् तामंचतद्रसंच सारसं तत्रभवइत्यण् सारसंसरसीरुहे सारसःपुष्कराख्येस्यादितिहेमः सरसीरुहं सरस्यांरोहति मूलविभूजादि:इगुपधेतिमांच ।सूत्र तत्रउपपदनिबंधनत्वाभावेनदर्शितविग्रहासंभवात्गणेउभयविधसंभवात् युक्तोविग्रहः ४० बिसप्रसूनं बिसस्यप्रसूनं राजीवं केसरस्थराज्यस्त्यस्य अन्यभ्योपिदृश्यतेइतिवः राजीवंनलिनेनातुभेदेहरिणमीनयोरित्युक्तत्वात् पुष्करं पुष्णाति पुषपुष्टौ पुषःकित्इति करन् अंभोरुहं अंभसिरोहतिकः षोडशाकमलस्य वापुंसितिषोडशानांलगति तत्र पुंडरीकं पुंडयति मंडिभूषायां पुडिचकर्करीकादयश्चेत्यरीकन् तदुक्तंकोशांतरे पुंडरीकंसितांभोजेसितछत्रेच-

पंकेरुहंतामरसंसारसंसरसीरुहं ॥४०॥ बिसप्रसूनराजीवपुष्करांभोरुहाणिच ॥ पुंडरीकंसितांभोजमथरक्तसरोरुहे ॥ ४१ ॥ रक्तोत्पलंकोकनदंनालोनालमथास्त्रियां ॥ मृणालंबिसमब्जादिकदंबेखंडमस्त्रियां ॥४२॥

भेषजेइति सितांभोज्यं सितंशुक्लंचतत् अंभोजंच द्वेसितकमलस्य र-क्तसरोरुहं रक्तंचतत् ॥४१॥ रक्तोत्पलं रक्तंचतदुत्पलंच कोकनदं कोकांश्चक्रान्नदति णदअव्यक्तेशब्दे अंतर्भावितण्यर्थात्मूलविभूजादित्वात्कः तदुक्तंविश्वे अथकोकनदंरक्तकुमुदेरक्तपंकजेइति श्रीणिरक्तकमलस्यकोकनदमितिरक्तकुंदेपिवर्त्तते तत्रेत्थं रक्ताब्जेरक्तकुंदेचबुधैः कोकनदंस्मृतमिति नालः नलति णलबंधनेज्वलितिइतिणः नालं तदुक्तंकोशांतरे नालंना लीपद्मखंडेनालीशाककदंबकइति एवंनालानालीच द्वेपद्मादिदंडस्य मृणालं मृण्यते मृणहिंसायां तमिविशिइत्यादिनाकालन् तदुक्तंविश्वे मृणालंनलदेक्लीबंपुंनपुंसकयोर्बिसइति बिसं बिसति बिसप्रसरणे इगुपेतिकः मृणालेतुबिशंबिसमितिद्विरूपकोशः मृणालि गुणापचयेस्त्रीत्वात् षिद्गौरेतिङीष् मृणालः द्वेमृणालस्यभिसंइतिख्यातस्य अस्त्रियांक्लीबपुंसयोः अब्जादिकदंबे कमलादीनां व्रातेखंडमित्येकंनामस्यात् अस्त्रियां शंडःशडिरुजायांसंघातेच॰ घञ् षणुदाने अम-

तादुः बहुलंषत्वाभावः षंडः तालव्योमूर्द्धन्यो । आदिकदंबषंडशब्दोयंमूर्द्धन्यएवतृषभेपूर्वाचार्यैर्विनिर्दिष्टइत्यक्षविवेकः ४२ करहाटः करंहाटयति हटदीप्तौ कर्मण्यण् तदुक्तंहैमे करहाटः पद्मकंदेपुष्पद्रुमविशेषयोरिति शिफाकंदः शिफामूलतरुप्ररोहस्तत्सहितः कंदः कंदोमूलमित्यर्थः शिफेतिचकंदमितिचपृथक्नामनीइत्यन्ये किंजल्कः केजलेसरसि स्वगतो पचाद्यच् हलदंताइत्यलुक् केशीर्यतेवा शृहिंसायां अप् तदुक्तंकोशांतरे केसरोहिंगुनिर्यासेकिंजल्केनस्त्रियांपुमान् सिंहच्छटायांपुन्नागे बकुलेनागकेसर इति केशरइत्यपि द्वेकेसरस्य संवर्तिका संवर्तनेवृतुवर्तने स्वपिकृषिवृतिइति इन् संवर्तिर्नवपत्रिकेतिबोपालितः नवदलं नवंचतत्दलंच बीजकोशः द्वे पद्मादीनांनवकोशस्य बीजकोशः बीजस्यकमलाक्षस्यकोशःपात्रमिति आधारइतिकश्चित् वराटकः वरंदलवरणमटति अटगतौ कर्मण्यण् वराटकः पद्मबीजकोशे

करहाटः शिफाकंदः किंजल्कः केसरोस्त्रियाम् ॥ संवर्तिकानवदलंबीजकोशोवराटकः ॥ इतिवारिवर्गः ॥ उक्तंस्वर्व्योमदिक्कालधीशब्दादिसनाट्यकम् ॥ पातालभोगिनरकंवारिचैषांचसंगतं ॥ १ ॥ इत्यमरसिंहकृतौनामलिंगानुशासने ॥ स्वरादिकांडः प्रथमः सांगएवसमर्थितः ॥ १ ॥

रज्जोकपर्दके इत्य० ॥ द्वेबीजकोशस्य ॥ ॥ इतिवारिवर्गः ॥ ॥ उक्तान्वर्गान्संगृण्हाति उक्तमिति अथस्वर्गादिवार्यंताः पकादशवर्गाः मयोक्ताः एषां एकादशवर्गाणां संगतं संबद्धवशात्प्राप्तं देवासुरसंबंधादिकंतद् प्युक्तं ॥ १ ॥ इतीति एवममरसिंहस्यकृतौनाम्नांलिंगानांचानुशासनेस्वरादिशब्दानां कांडः समूहः सांगः अंगोपांगसहितः प्रथमः समर्थितः प्रोक्तः ॥ १ ॥ श्रीमत्यमरकोशेपंडितेत्युपनाम्नाहरिणाविरचितविग्रहः प्रथमकांडः समाप्तिमगमत् ॥ ॥ कृष्णायवासुदेवायहरयेनंदसूनवे ॥ सिद्धार्थंसर्वकार्याणांनमोस्तुममविष्णवे ॥ ॥ इतिसाविग्रहामरकोशेप्रथमकांडंसमाप्तं ॥ ॥ श्रीसितारामप्रसन्न ॥ ॥ ७३ ॥ ॥ ७४ ॥

# अथसविग्रहामरकोशेद्वितीयकांडंप्रारभ्यते.

श्रीगणेशायनमः इहवक्ष्यमाणेद्वितीयकांडेवर्गाउक्ताः वक्तुमारब्धाः कीदृशाः पृथिव्यादिभिरुपलक्षिताः तत्रांगानिमृदादीनि उपांगानिशिलादीनि अपणि क्षिनिविपण्यादीनि एवमन्यत्राप्यूह्यं मृगशब्दोऽरण्यपशुमात्रपरः आरण्याःपशवोमृगाइत्युक्तत्वात् आदिशब्देनपक्षिकीटादीनांग्रहणं तत्रांगोपांगानि पक्षिपक्षादीनि यद्वा मृगानत्तुंशीलंयस्यसमृगादीसिंहः १ भूः भवतीतिभूः भूधातुःसत्तारूपार्थे भूःस्थानमात्रेकाधिनाधरण्यामपियोगिनीति भूमिः भू- मिःस्थितोस्थानमात्रइतिहैमः अचला नचलतीत्यचला चलकंपने अचलाःसंत्यस्यांवा अर्शआद्यच् टाप् अचलस्तुगिरिकीलयोः अचलाभुवीतिहैमः अ

श्रीगणेशायनमः वर्गाःपृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः नृब्रह्मक्षत्रविट्शूद्रैःसांगोपांगैरिहोदिताः १ भूर्भूमिरच लानंतारसाविश्वंभरास्थिरा धराधरित्रीधरणीक्षोणीज्याकाश्यपीक्षितिः २

नंता नास्त्यंतोयस्याः यद्वा अनंतोऽस्तिधारकोयस्याः अ नंतःकेशवेशेषेपुमान्निरवधौत्रिषु रसा रसोऽस्यामस्तीति रस्यतेवा रसआस्वादने॥ विश्वंभरा विश्वंबिभर्तीति डुभृञ्भरणे विश्वंभरोऽच्युतेशक्रेपुंसिविश्वं- भराभुवि॥ स्थिरा तिष्ठतीति स्थिराभूशालपर्ण्योर्नाशिनोमोक्षेबलेत्रिषु इति॥ धरा धरतीविश्वं धृञ्धारणे धराःसंतियस्यांवा यद्वा धृङ्अवस्थाने ध्रियते धरःकूर्माधिपेगिरौ कर्पासमूलेथधरामेदोभूमिजरायुषीतिहैमः॥ धरित्री धरतीति॥ धरणी धृञ्धारणे धरणंधारणेमानविशेषेधरणीभुवीतिहैमः॥ क्षोणी क्षौतीति टुक्षुशब्दे॥ज्या ज्यामौर्वीज्यावसुंधरेतिशाश्वतः॥ काश्यपी कश्यपस्येयं॥क्षितिः क्षिपतीति क्षिनिवासगत्योः क्षितिर्गेहेभुविक्षयइतिहैमः २

सर्वंसहा सर्वंसहते षहमर्षणे॥ वसुमती वसुधनमस्त्यस्यां॥ वसुधा वसुदधातीति॥ उर्वी उर्णोतीति ऊर्णुयतेवा ऊर्णुञ् आच्छादने॥ वसुंधरा वसुधारयती ति॥ गोत्रा गोत्राः शैलाः संत्यस्यां गांजलंत्रायतेवा त्रैङ् पालने॥ कुः कुवते कुङ् शब्दे॥ पृथिवी प्रथतइति प्रथविस्तारे पृथ्वीपृथवी पृथिवीतिशब्दार्णवः॥ पृथ्वी पृथ्वीभूमौमहत्यांच लवपत्र्यांकृष्णजीरके॥ क्ष्मा क्षमतेइति क्षमुसहने॥ अवनिः अवतीति अव्यतेवा अवरक्षणादौ॥ मेदिनी मेदमस्त्यस्यामिति मदझो मेदकुशहेतिशालिहोत्रः मेद्यतीवा ञिमिदास्नेहने॥ मही मह्यतइति महपूजायां यद्वा महीयते महीङ् पूजायां महीनद्यंतरेभूमौमहउत्सवतेजसो इतिहैमः

सर्वंसहावसुमतीवसुधोर्वीवसुंधरा गोत्राकुःपृथिवीपृथ्वीक्ष्मावनिर्मेदिनीमही भूतधात्रीरत्नगर्भाविपुलासागरांबरा ३
मृन्मृत्तिकाप्रशस्तातुमृत्सामृत्स्नाचमृत्तिका उर्वरासर्वसस्याढ्यास्यादूषःक्षारमृत्तिका ४

इतिसप्तविंशतिः भूमेरभिधानानि अत्र भूमिधरणीत्यादयोङीषंताअपि कृदिकारा दक्तनइतिगणसूत्रात्॥ भूतधात्री भूतानांधात्रीति॥ रत्नगर्भा रत्नानिगर्भेयस्याः॥ विपुला॥ सागरांबरा सागरः अंबरंयस्याः इतिभूमेश्चत्वारिनामानि ३ मृत् मृद्यतइति मृदक्षोदे॥ मृत्तिका मृदस्तिकन्॥ द्वे मृदः नामनी॥ प्रशस्ता मृत्सा प्रशस्तामृत्तिका॥ मृत्स्ना प्रशस्ता मृत्तिका द्वेप्रशस्तमृदः अभिधाने॥ प्रशस्तामृत्तिकालिंग्यन्वयः कृष्णाभूमः कृष्णमृत्स्याद्दुदग्भूमउदङ् मृदि पांडुभूमः पांडुमृच्चेसापिपठ्यते॥ सर्वसस्याढ्या सर्वैः सस्यैः आढ्यामृत्तिका उर्वरेत्युच्यते उर्वरा उरूणामरा यद्वा उर्व्यते उर्वीहिंसायां यद्वा उर्वरातीददातीति यद्वा उरुश्चासौवराच यद्वा ऊर्वुरा॥ एकं ऊषः ऊषतीति पीडांकरोतीति ऊषरुजायां॥ क्षारमृत्तिका क्षारयतीति क्षरसंचलने क्षाराचासौमृत्तिकाचेतिका द्वेक्षारमृत्तिकायाः अभिधाने ४

उषवान् ऊषोस्त्यस्मिन् ऊषरुजायां॥ ऊषरः हूयंक्षारमृत्विशिष्टायाः अभिधानं॥ द्वावप्यन्यलिंगौ यथा ऊषवती ऊषरावास्थली ऊषरंस्थलमित्यादि॥ स्थलं स्थलतीति ष्ठलस्थाने स्थली अकृत्रिमभूमेःनाम कृत्रिमातुस्थला स्थलमुभयसाधारणं॥ मरुः म्रियंतेऽस्मिन् भूतानि मृङ्प्राणत्यागे मरुर्नागिरिधन्वनोः॥ धन्वा धन्व्यतेऽस्मात् धविगत्यर्थः धन्वातुमरुदेशेनाक्लीबेनापेस्थलेपिच॥ इतिद्वेनिर्जलदेशस्याभिधाने॥ खिलं खिलति खिलउंछे खिल्यतेऽस्मिन्वा॥ अप्रहतं नप्रहन्यतेस्म हलादिभिः हनहिंसागत्योः समे समानार्थे त्रिषुलिंगेष्वित्यर्थः इतिद्वेहलाद्यकृष्टदेशस्यनामनी ५ जगती गच्छतीति गम्लृगतौ जगत्स्याद्विष्टपेक्लीबंवायौनाजंगमेषुच॥ जगतीभुवनेक्ष्मायांछंदोभेदजनेपिच॥ लोकः लोक्यते लोरुदर्शने लोकोविश्वेजनइतिहेमः॥ विष्टपं विश-

**ऊषवानूषरोद्वावप्यन्यलिंगौस्थलंस्थली समानौमरुधन्वानौद्वेखिलाप्रहतेसमे ५ त्रिष्वथोजगतीलोकोविष्टपंभुवनंजगत् लोकोयंभारतंवर्षंशरावत्यास्तुयोवधेः ६**

त्यत्र विशप्रवेशने पिष्टपम पिपाठेतु पिष्यनेवात्र पिशगतौ पिषसंचूर्णनेवा विष्टपः पुमानितिवोपादितः॥ भुवनं भवत्यस्मिन् जगत् इतिपंचभूतलस्याभिधानानि॥ एकंमहाभूतंपृथिवी पंचमहाभूतविषयेंद्रियात्मकंजगदितिपृथिवीजगतोर्भेदः अयं जंबुद्वीपवर्तीदृश्यमानोलोकः भारतनामकंवर्षंज्ञेयं उक्तंच उत्तरंयत्समुद्रस्यहिमाद्रेश्चैवदक्षिणं वर्षंतद्भारतंनामभारतीयत्रसंततिरिति॥ भारतं भरतस्यराज्ञइदंभारतं वर्षशब्दः पुल्लिंगोपि पुंनपुंसकयोर्वर्षंजंबुद्वीपाब्दवृष्टिष्वितिरुद्रः वर्षोस्त्रीभारतादौचजंबुद्वीपाब्दवृष्टिष्वितिमेदिनी इत्येकमभिधेयं एवं इलावृत्तान्यष्टौवर्षाण्यन्यान्यपिशरावंत्याअवधेः ६ ७ ७ ७ ७ ७

यः प्राक् दक्षिणः प्राक्सहितोदक्षिणोदेशः सप्राच्यः प्राच्यांभवः इत्येकंनाम॥ शरावत्याअवधेः यः पश्चिमोत्तरः पश्चिमेनसहितः सः देशः उदीच्यः उदीच्यांभवः इत्येकमभिधानं॥ प्रत्यंतः अंतंप्रतिगतः॥ म्लेच्छदेशः म्लेच्छानांदेशः तदुक्तं चातुर्वर्ण्यव्यवस्थानंयस्मिन्देशेनविद्यते तंम्लेच्छविषयंप्राहुरार्यावर्तमतः परं इतिद्वेशिष्टाचाररहितस्यखशादिदेशस्यनामनी॥ मध्यदेशः मध्यश्चासौदेशश्च॥ मध्यमः मध्येभवः इतिद्वेनामनी एतत्परिमाणंतु हिमवद्विंध्ययोर्मध्यंयत्प्राग्विनशनादपि प्रत्यगेवप्रयागाच्चमध्यदेशःप्रकीर्तितइत्युक्तत्वात् विनशनं कुरुक्षेत्रं ७ आर्यावर्तः आर्याआसमंतात् वर्तंतेऽत्र॥ पुण्यभूमिः पुण्यस्यभूमिः पुण्याचासौभूमिश्चेतिवा उक्तंच आसमुद्रात्तुवैपूर्वादासमुद्राच्चपश्चिमात् तयोरेवांतरंगिर्योरार्यावर्तंविदुर्बुधाइत्युक्तत्वात्॥

**देशः प्राग्दक्षिणः प्राच्यउदीच्यः पश्चिमोत्तरः प्रत्यंतोम्लेच्छदेशः स्यान्मध्यदेशस्तुमध्यमः ७ आर्यावर्तः पुण्यभूमिर्मध्यंविंध्यहिमागयोः निवृज्जनपदोदेशविषयोतूपवर्तनं ८ त्रिष्वागोष्ठान्नडप्रायेनड्वान्नड्डुल इत्यपि**

हिमागः हिमप्रधानोऽगः॥ हिमालयोरितिपाठेतु हिमेनअल्यते अलभूषणादौ इतिद्वेविंध्यहिमागमध्यदेशस्याभिधाने॥ निवृत् निवृत्पुंसि साहचर्यात् नियतंवर्ततेऽस्मिन् नहिवृत्तीतिदीर्घः अस्मिन्नित्यधिकरणस्यकर्तृत्वविवक्षा वृतुवर्तने॥ जनपदः जनः पदंवस्तुयत्र जानपदोपि भवेज्जनपदोजानपदोपिजनदेशयोरितिविश्वमेदिन्यौ इतिद्वेजननिवासस्थानस्याभिधाने॥ देशः दिशतीति दिशअतिसर्जने॥ विषयः विसिनोति षिञ्बंधने॥ उपवर्तनं उपवर्ततेऽत्र इतित्रीणिग्रामसमुदायलक्षणस्यदेशमात्रस्याभिधेयानि ८ अथगोष्ठशब्दमभिव्याप्यवक्ष्यमाणात्रिषुलिंगेषुइत्यर्थः॥ नड्वान् नडाः प्रायाः यत्र॥ नड्डुलः नडाः संत्यस्मिन् इतिद्वेनडप्रायेनडबहुलदेशेअभिधाने॥

अतिपंथाः अतिपूजायां सुपूजायां ॥ सुपंथाः सन्चासौ पंथाश्च ॥ सत्पथः सन्नासौ पथाश्च ॥ अर्चितः अर्चितः शोभने मार्गे इतित्रीणिशोभनमार्गस्यनामानि ॥ व्यध्वः विरुद्धोऽध्वा ॥ दुरध्वः दुष्टोऽध्वा ॥ विपथः विरुद्धः पंथाः ॥ कदध्वा कुत्सितोऽध्वा ॥ कापथः कुत्सितः पंथाः कुपथोपिइति पंचदुर्मार्गस्याभिधानानि नञ्कृत-ध्वानांतः ॥ अपंथाः पथोऽभावः ॥ अपथं नपुंसकं द्वेमार्गाभावस्याभिधाने ॥ शृंगाटकं शृंगं आभाति अटतीति अटनौ ॥ चतुष्पथं चतुर्णांपथांसमाहारः इति ह्याटाइतिख्यातस्यनामनी ॥ दूरशून्यः दूरश्चासौशून्यश्च दूरशून्यः छायाजलादिवर्जितोदूरस्थोऽध्वामार्गः प्रांतरं प्रकृष्टं अंतरं प्रांतरमित्युच्यते इत्येकंनाम

अतिपंथाःसुपंथाश्चसत्पथश्चार्चितेऽध्वनि व्यध्वोदुरध्वोविपथःकदध्वाकापथःसमाः १६ अपंथास्त्वपथंतुल्येशृंगाटक चतुष्पथे प्रांतरंदूरशून्योऽध्वाकांतारंवर्त्मदुर्गमम् १७ गव्यूतिःस्त्रीक्रोशयुगंनल्वःकिष्कुचतुःशतं

कांतारं कस्यसुखस्यज लस्यवा अंतः कांतः कांतं ऋछति ऋगतौ यत् दुर्गमंचोरकंटकाद्युपद्रवयुक्तंवर्त्ममार्गः कांतारमित्युच्यते पुंसि कांतारः कांतारोस्त्रीमहारण्येबिलेदुर्गमवर्त्मनीतिमेदिनी इत्येकंनाम १७ क्रोशयुगं गव्यूतिरित्युच्यते क्रोशोधनुःसहस्रेद्वेधनुर्हस्तचतुष्टयम् द्वाभ्यांधनुःसहस्राभ्यांगव्यूतिःपुंसिभाषित इतिशब्दार्णवात् पुंस्यपि क्लीबेतुगव्यूतं धन्वंतरसहस्रंतुक्रोशः क्रोशद्वयंपुनः गव्यूतंस्त्रीतुगव्यूतिर्गोरुतंगोमतंचतदितिवाचस्पतिः॥ किष्कूणांहस्तानांचतुःशतंचतुःशतीवानल्वइत्युच्यते चतुःशतहस्तमितंस्थानंनल्वसंज्ञकमित्यर्थः एकंनाम ७ २ ५ २ ५

घंटापथः घंटोपलक्षितःपंथाः शाकपार्थिवादिवत् यद्वा घंटानांपंथाः तद्वतांहस्त्यादीनांग्रहणं दशधन्वंतरोराजमार्गोघंटापथःस्मृतइतिचाणक्यः॥ संसरणं संभूयसरं यत्र अनेनवा सरतो इतिद्वेराजपथमात्रस्याभिधाने॥ ततसंसरणंपुरस्यनगरस्यचेद्रुपनिष्करमित्येकंनाम बुधैःसंसरणंवर्त्मगजादीनामसंकुलं पुरस्योपस्करंचोक्तमिति शुग्नः॥ उपनिष्करं उपनिष्क्रीयते सैन्यैर्हन्यते कृहिंसायां १८ द्यावेत्यादि पंचद्विवचननामानिद्यावाभूम्योः॥ गंजेत्यादित्रयंक्षारसमुद्रस्य गंजाखनौसराग्गृहे रुमास्त्री वदोरेषुविशिष्टलवणाकरइतिमेदिनी गंजारुमेस्त्रियां अंगोपांगापेक्षयाभूमिरेवात्रप्रधानमितिभूमिवर्गइतिव्यपदेशः एवमन्यत्रापिमंतव्यं इतिभूमिवर्गः पूः पिपर्तीति पृपालनपूर्णयोः॥ पुरी पूर्यते पुरिरित्यन्यत्र॥ नगरी नगाःसंत्यस्यां॥ पत्तनं पतंतिजनायत्र॥ पट्टनं॥ पुटभेदनं पुटानिपत्राणिभिद्यंतेऽत्र भिदिरविदा

घंटापथःसंसरणंतत्पुरस्योपनिष्करं १८ द्यावापृथिव्योरोदस्यौद्यावाभूमीचरोदसी दिवस्पृथिव्यौगंजातुरुमास्याल्लवणाकरः १९
इतिभूमिवर्गः पूःस्त्रीपुरीनगर्यौवापत्तनंपुटभेदनं स्थानीयंनिगमोऽन्यत्तुयन्मूलनगरात्पुरं १ तच्छाखानगरंवेशोवेश्याज
नसमाश्रयः

रणे॥ स्थानीयं स्थानायहितं॥ निगमः नितरांगच्छंत्यत्र इतिसप्तनगरस्याभिधानानि॥ पूः पुरी पुरीनगर्यौवास्त्रियौ पत्तेपुरं॥ नगरं केचित्तु भेदंवक्तुर्यथा यत्रानेकशिल्पिनोऽनेकवणिकादिव्यवहारस्तत्पुरादि यत्रराजालदनुचराश्चसंतितत्पुरंपत्तनादिसंज्ञं यत्प्राकारादिवेष्टितंविस्तीर्णपुरंतत्स्थानीयादिनामभिति यन्मूलनगरादन्यत्पुरंतच्छाखानगरमित्यन्वयः॥ शाखानगरं शाखेवनगरं इत्येकंनाम॥ मूलनगरंराजधानी १ वेशः विशंत्यत्र विशप्रवेशने॥ वेश्याज नसमाश्रयः वेश्याजनस्यसमाश्रयोवासस्थानंवेशइत्युच्यते इतिद्वेवेश्यानिवासस्याभिधाने ७ ७ ७ श्रीः

आपणः आ समंतात्पण्यंतेऽत्र पणव्यवहारे॥निषद्यायां निषीदंत्यस्यांजनाः षद्लृविशरणगत्यवसादनेषु इतिहैमः व्यवस्तुशालायाअभिधाने॥विपणिः विपणंत्यत्र पणव्यवहारे॥पण्यवीथिका पण्यानांवीथिका इतिहैमः व्यवस्तुशालापंक्तेःअभिधाने २ रथ्या रथंवहतीति॥प्रतोली प्रतोलयती तुलउन्माने॥ विशिखा॥ इतित्रीणि ग्रामाभ्यंतरमार्गस्यनामानि॥चयः चियते चिञ्चयने॥वप्रं वप्रभ्रावरणेरंदेप्राकारेमूलबंधनइतिधरणिः इतिहैमःप्राकारस्याभिधाने॥ प्राकारः प्राक्रियते डुकृञ्करणे॥वरणः वृणोतीति वृञ्वरणे॥शालः शल्यते शलगतौ सालोवरणसर्जयोरितिरभसः इतित्रीणियष्टिकाकंटकादिरचितवेष्टन

आपणस्तुनिषद्यायांविपणिःपण्यवीथिका २ रथ्याप्रतोलीविशिखास्याच्चयोवप्रमस्त्रियां प्राकारोवरणःशालःप्राचीनं प्रांततोवृतिः ३ भित्तिःस्त्रीकुड्यमेडूकंयदंतर्न्यस्तकीकसं गृहंगेहोदवसितंवेश्मसद्मनिकेतनम् ४

स्यनामानि॥प्राचीनं प्राचीयते चिञ्चयने नगरादेःप्रांतभागेयावृतिः वेष्टनंवेणुकंटकादीनांतत्प्राचीनमित्यर्थः॥प्रांततः॥ वृतिः व्रियतेऽनया वृञ्वरणे॥भित्तिः भिद्यते भिदिर्विदारणे॥भित्तिःकुड्येप्रभेदेचेतिहैमः॥कुड्यं कुड्यांसाधु कुडयतेवा कुडकार्कश्ये द्वेभित्तेःअभिधाने॥एडूकं इड्यते इडस्तुतौ॥अंतर्न्यस्तकीकसं अंतर्न्यस्तानिकीकसानिअस्थीनिदार्ढ्यार्थंयत्र तत्एडूकं कीकसं कठिनद्रव्यस्यउपलक्षणं एकंनाम॥ गृहं गृण्हाति गृहउपादाने॥गेहं गेनगणेशेनईह्यते काम्यते ईहचेष्टायां गोगणेशोगंधर्वोवा॥ उदवसितं ऊर्ध्वं अवसीयंतेस्म षिञ्बंधने॥वेश्म विशंत्यत्र विशप्रवेशने॥सद्म सीदंत्यस्मिन्॥निकेतनं निकेत्यतेऽस्मिन् कितनिवासे ४

निशांतं निशायामस्यतेस्म अमगत्यादौ॥ पस्त्यं वसतेस्साधु॥ सदनं सीदंत्यत्र॥ भवनं भवनंसदनेभावइतिहैमः॥ आगारं आ अग्यते अगकुटिलायांग तौ॥ मंदिरं मंद्यते सुप्यते मदिस्तुत्यादौ मंदिरोमकरावासेमंदिरंनगरेगृहइतिहैमः॥ गृहाः तत्रगृहशब्दस्तुबहुलेनित्यंपुंसिच चात्क्लीबेपि॥ निकाय्यः निचीयते धान्यादिकमत्र चिञ्चयने॥ निलयः निलीयतेऽत्र लिङ्श्लेषणे॥ आलयः इतिषोडशगृहस्याभिधानानि ५ वासः वसंत्यत्र॥ कुटी कुटती कुटिलीभवति कुट कौटिल्ये कुटीशब्दस्तुद्वयोः स्त्रियांतुकुटी कुटिश्च पुंसिकुटः कुटःकोटेपुमानस्त्रीकुटःस्त्रीपुंसयोर्गृहइतिमेदिनी॥ शाला शलंत्यत्र शलगतौ॥ सभा सहा

निशांतपस्त्यसदनंभवनागारमंदिरम् गृहाःपुंसिचभूम्न्येवनिकाय्यनिलयालयाः ५ वासःकुटीद्वयोःशालासभासंजवनं त्विदम् चतुःशालंमुनीनांतुपर्णशालोटजोऽस्त्रियाम् ६ चैत्यमायतनंतुल्येवाजिशालातुमंदुरा

त्यत्र इतिसभागृहस्यचत्वारिनामानि गृ हादिसभांत्यानिविंशतिर्नामानिगृहस्येत्यन्ये॥ संजवनं सम्यक्जवंत्यत्र जुगतौ॥ चतुःशालं चतसृणांशालानांसमाहारश्चतुःशालं इतिहैअन्योन्याभिमुखशालाचतुष्कस्याभिधाने॥ पर्णशाला पर्णनिर्मिताशाला॥ उटजः उटाज्जायते उटजस्तृणपर्णादिरितिदेशिकोशः इतिद्वेमुनिगृहस्यनामनी॥ चैत्यं चीयते॥ आयतनं आयतंतेऽत्र यतिप्रयत्ने इतिद्वेयज्ञायतनभेदस्य॥ वाजिशाला वाजिनांशाला॥ मंदुरा मदंत्यत्र मदिस्तुत्यादौ मंदुरावाजिशालायांशयनीयार्थवस्तुनीत्युक्तत्वात् इतिद्वेअश्वशालायाः अभिधाने

आवेशनं आविशंत्यत्र विशप्रवेशने आवेशनंशिल्पिशालेभूतावेशप्रवेशयोरितिविश्वमेदिन्यौ ॥ शिल्पिशाला शिल्पिनांशाला शिल्पशालेत्यपिपाठः तत्र शिल्पस्यशालेतितुस्वामी इतिद्वेस्वर्णकारादीनांशालायाः अभिधाने ॥ प्रपा प्रपिबंत्यस्यां पापाने ॥ पानीयशालिका पानीयस्यशालिका इतिद्वेपानीयस्यशालायाः पाणपोहीऽतिप्रसिद्धायाः अभिधाने ॥ ७ ॥ छात्रादिनिलयः शिष्यादीनांगृहंमठइत्युच्यते मठंत्यत्र मठमदनिवासयोः यद्वा मठतिनिवासयति ॥ छात्रांतेवास्यादिर्येषांपरिव्राजकक्षपणकादीनां तेषांनिलयइतिवा आदिनाकापालिकादिसंग्रहः ॥ गंजा गजंत्यस्यां गजिशब्दार्थः गंजाखनौस्त्रीगृहे गंजः स्यात्पुंसिरीठायांभांडागारेतुनस्त्रियामितिविश्वमेदिन्यौ ॥ मदिरागृहं मदिरायाःगृहं इतिद्वेमद्यस्थानस्यअभिधाने ॥ गर्भागारं गर्भइवागारं ॥ वासगृहं वासस्य

**आवेशनंशिल्पिशालाप्रपापानीयशालिका ७ मठश्छात्रादिनिलयोगंजातुमदिरागृहं गर्भागारंवासगृहमरिष्टंसूतिकागृहं कुट्टिमोऽस्त्रीनिबद्धाभूश्चंद्रशालाशिरोगृहं ८ वातायनंगवाक्षोऽथमंडपोऽस्त्रीजनाश्रयः**

गृहं इतिद्वेगृहमध्यभागस्याभिधाने ॥ अरिष्टं नास्तिरिष्टमत्र यद्वानरिष्यतेस्म हिंस्रैरितिशेषः रिषहिंसायां अरिष्टोलशुनेनिंबेफेनिलेकाककंकयोः अरिष्टमशुभेतक्रेसूतिकागारआसवइतिविश्वमेदिन्यौ ॥ सूतिकागृहं सूतैवसूतिकातस्या गृहं इतिद्वेप्रसवस्थानस्याभिधाने चत्वारोऽपिपर्यायाइत्यन्ये ॥ कुट्टिमः पाषाणादिनिबद्धाभूः कुट्टिमइत्येकंभूमिगृहतळघरइतिप्रसिद्धस्यनाम ॥ चंद्रादिद्वयंगृहोपरितनगृहस्यनाम ॥ वातायनं वातस्यायनं ॥ गवाक्षः गवांअक्षीइव गवाक्षीशक्रवारुण्यांगवाक्षीजालकेकपावितिविश्वः इतिद्वेगवाक्षस्यझरोकाइतिप्रसिद्धस्याभिधाने ॥ मंडपः पारक्षणे मंडिभूषायांच ॥ जनाश्रयः जनानांआश्रयः इतिद्वेमंडपस्याभि०॥

धनिनांधनवतां वासः गृहंतत्हर्म्यादि हरतीतिमनः हृञ्हरणे आदिनास्वस्तिकाट्टालिकादेर्ग्रहणं॥ देवानांराज्ञांचगृहंप्रासादः प्रसीदंतिमनोत्र एकंनाम॥सौधः सुधालेपोऽस्यास्ति यद्वासुधयालिप्तः॥राजसदनं राज्ञःसदनंयोग्यत्वात् यद्वा सदनानांराजाइतिराजसदनं॥उपकार्या॥ उपकारिका उपकरोतीति इतिचत्वारिराजगृहस्यनामानि॥स्वस्तिकः स्वस्तिक्षेमंकायति कैशब्दे। सर्वतोभद्रः सर्वतोभद्रमत्र॥नंद्यावर्तः नंदयतीतिनंदी आवर्तोत्र १० विच्छंदकः विशिष्टः छंदोऽत्र यद्वा विशिष्टान्छंदयति साभिलषवान्करोति॥ प्रभेदाः प्रकर्षेभेदोयेषां स्वस्तिकादयईश्वरसद्मनांराजगृहाणांप्रभेदाः भवंति॥भूभुजां

हर्म्यादिधनिनांवासःप्रासादोदेवभूभुजां ९ सौधोऽस्त्रीराजसदनमुपकार्योपकारिका स्वस्तिकःसर्वतोभद्रोनंद्यावर्तादयोपिच १० विच्छंदकःप्रभेदाहिभवंतीश्वरसद्मनाम् स्त्र्यगारंभूभुजामंतःपुरंस्यादवरोधनं ११ शुद्धांतश्चावरोधश्चस्यादट्टःक्षौममस्त्रियां प्रघाणप्रघणालिंदाबहिर्द्वारप्रकोष्ठके १२

स्त्र्यगारं स्त्रीणांअगारं अंतःपुरं॥अवरोधनं अवरुध्यंतेत्र ११ शुद्धांतः शुद्धाः अंतेसमीपेयस्य ॥अवरोधः अवरुध्यतेऽस्मिन् इतिचत्वारिनामानि॥अट्टः अट्यते अट्टअतिक्रमणे अट्टयतीतिवा॥क्षौमं क्षुवंत्यत्र टुक्षुशब्दे इतिद्वे हर्म्यादेरष्टस्यउपरिगृहस्य माडीइत्यादिख्यातस्यअभिधाने॥प्रघाणः प्रहन्यते ताड्यते आगारैकदेशे॥प्रघणः प्रघाणश्चेतिसाधुः प्रघणोलिंदकेताम्रकलशेऽपिहमुद्गरइतिहैमः॥अलिंदः अल्यते भूष्यते अलभूषणादौ॥आलिंदोऽपि गृहैकदेशे-
आलिंदःप्रघाणःप्रघणस्तथा इत्यमरमाला इतित्रीणिद्वाराग्रवर्तिचतुष्कस्यनामानि ६७ ६७ ६७

गृहावग्रहणी गृहं अवगृह्यतेऽनया गृहउपादाने॥देहली देहंलातीति लादाने इतिद्वे गृहद्वाराधोभागस्य उम्राइतिप्रसिद्धस्यअभिधाने॥अंगणं अंगत्यत्र अगिगतौ अंगणंप्रांगणेंयानेकाभिन्यामंगनामतेइतिनांतवर्गेविश्वः॥चत्वरं चत्यते चतियाचने॥अजिरं अजंत्यत्र अजगतौ इतित्रीणिप्रांगणस्याभिधानानि॥शिला शिलति शिलउंछे इत्येकंद्वारस्तंभाधस्थितकाष्ठस्यनाम॥नासा नास्यते णासृशब्दे इत्येकंनाम द्वारस्तंभोपरिस्थितस्यदारुणइति १३ प्रच्छन्नं प्रकर्षेणछन्नं॥अंतर्द्वारं अंतःस्थितंद्वारं शाकपार्थिवादिवत् इतिद्वेगुप्तद्वारस्यखिड्कीसंज्ञस्यअभिधाने॥पक्षद्वारं पक्षेपार्श्वेद्वारं॥पक्षकं पक्षइव इतिद्वेपार्श्व

गृहावग्रहणीदेहल्यंगणंचत्वराजिरे अधस्ताद्दारुणिशिलानासादारुपरिस्थितम् १३
प्रच्छन्नमंतर्द्वारंस्यात्पक्षद्वारंतुपक्षकं वलीकनीध्रेपटलप्रांतेथपटलंछदिः १४

द्वारस्याभिधाने प्रच्छन्नमंतर्द्वारंस्यात्पक्षद्वारंनदृश्यतेइतिकात्याल पक्षद्वारंपूर्वान्वयीत्यन्ये॥ वलीकं वलतिआवृणोति भित्त्यादि वलसंवरणे॥ नीध्रं नितरांध्रियते धृङ् अवस्थाने निश्चयेनधरति जलमितिवा धृञ्धारणे इतिद्वे गृहछादनस्यभित्तिबहिर्भागस्य वळचणपड्डी इतिख्यातस्याभिधाने॥पटलप्रांते पटलस्यछदिषः प्रांते॥ पटलं पटंलाति लाआदाने पटलंनिलकेनेत्ररोगेछदिषिसंचये पटिकेपरिवारेचेतिहैमः॥ छदिः छादयंति छदअपवारणे इतिद्वेछादनस्यशाकारइतिख्यातस्यनामनी छदिःसांतंस्त्रियांछदिषी १४ ८

गोपानसी गोपायति गुपूरक्षणे यद्वा गवांगोभिर्वापानंगोपानंकिरणानांगृहणं कियॆर्वाकस्य तिनिवर्तयति॥ वलभी वलति वलसंवरणे वलभिः वडभीइतिमू र्धन्यमध्योपि शब्दांतेवलभीचंद्रशालेसौधोर्ध्ववेश्मनीतिरभसः ओकोगृहंपिटंचालोवडभीचंद्रशालिकेतित्रिकांडशेषः॥ वक्रदारुणि वक्राणि दारूणि यस्मि न् इतिहेच्छादनार्थयद्वक्रदारु तत्रअभिधाने पटलाधारभूतवक्रकाष्ठइत्यर्थः पटलाधारवंशपंजरस्य ओमण कडणी वांसाइतिप्रसिद्धस्य सज्जाइत्यपिमतं॥ क पोतपालिका कपोतानांपालिका कपोतान्पालयतिवा॥ विटंकं विशेषेणटंक्यतेऽत्र टकिबंधने इतिहेसौधादौकाष्ठादिरचितपक्षिगृहस्याभिधाने १५ द्वाः द्वारय ति दृवरणे यद्वा द्वार्यते॥ द्वारं॥ प्रतीहारः प्रतिन्हियते इतित्रयंद्वारस्यनामानि तत्र द्वाः स्त्रियां रेफांतः॥ वितर्दिः विगतातर्दिर्हिंसाऽस्याः तर्दिर्हिंसायां॥ वेदि

गोपानसीतुवलभीछादनेवक्रदारुणि कपोतपालिकायांतुविटंकंपुंन्नपुंसकम् १५ स्त्रीद्वाद्वारंप्रतीहारःस्याद्वितर्दिस्तु वेदिका तोरणोऽस्त्रीबहिर्द्वारंपुरद्वारंतुगोपुरं १६ कूटंपूर्द्वारियद्धस्तिनखस्तस्मिन्नथत्रिषु

का विदंत्यस्यां॥ विदूलाभे इतिहे वे- द्याः नामनी अंगणादिषुकृतस्योपवेशस्थानस्येतिवा वितर्दिः स्त्री वितर्दी इत्यपि॥ तोरणः तुरंत्यत्र तुरत्वरणहिंसयोः तोळयंत्य त्रेतिवा तुलउन्माने र लयोरेकत्वं॥ बहिर्द्वारं बहिः द्वारं इतिहेतोरणस्यद्वारबाह्यभागस्याभिधाने॥ पुरद्वारं पुरस्यद्वारं॥ गोपुरं गोपायतीति गुपुरक्षणे यद्वा गुल्यते गुल्महृ ले रलयोरभेदः गोभिः पुरं इतिहेनगरद्वारस्याभिधाने १६ कूटं पुरद्वारि नगरद्वारेसुखेनावतरणार्थंकृतस्यकृत्रिमनिम्नस्यमृत्तिकापुंजस्ययत्कूटं सः हस्तिनख इत्युच्यते हस्तिनः नखइव हस्तिनानखन्यतइतिवा खनुअवदारणे इत्येकंनाम ६५ ६७

कपाटं कंवातंशिरोवापाटयति पटगतौ कवाटमित्यन्ये तत्र कंवटती वटवेष्टने कवंशब्दंअटतीतिवा कुशब्दे॥ कवाटस्त्वकपालश्चत्रिषुस्यादररंननेतिवाच स्पतिः कवाटश्चाररमितित्रिकांडशेषः॥अररं इतिद्वेकवाडइतिख्यातस्याभिधाने॥ तद्विष्कंभः तस्यकपाटस्यअवष्टंभकंयन्मुसलंतदर्गलमित्युच्यते १७ आरोहणं आरुह्यतेऽनेन रुहप्रादुर्भावे॥सोपानं इतिद्वेसोपानस्य पायरी इतिख्यातस्याभिधाने॥ निश्रेणिः नियताश्रेणिः पंक्तिः यस्यां॥अधिरोहिणी अधिरु ह्यतेऽनया इतिद्वयंनिसणि शिडी इतिख्यातस्य॥ संमार्जनी संमृज्यतेऽनया मृजशुद्धौ॥ शोधनी शोध्यतेऽनया शुध्शौचे इतिद्वेसारणीकेरसूणी इतिख्यात स्यअभि०॥संकरः संकीर्यते कृविक्षेपे हिंसायांवा॥ अवकरः अवकीर्यते इतिद्वयं १८ मुखं मुखंउपायेप्रारंभेप्रवेशेनिःसरणास्ययोरितिहैमः॥ निःसरणं निःसरंत्यने

कपाटमररंतुल्येतद्विष्कंभोऽर्गलंनना १७ आरोहणंस्यात्सोपानंनिश्रेणिस्त्वधिरोहिणी संमार्जनीशोधनीस्यात्संकरोऽवक रस्तथा १८ क्षिप्तेमुखंनिःसरणंसन्निवेशोनिकर्षणः समौसंवसथग्रामौवेश्मभूर्वास्तुरस्त्रियां १९ ग्रामांतउपशल्यं स्यात्सीमसीमेस्त्रियामुभे

न मृगतौ इतिद्वेगृहादेर्मुखभूतस्यद्वारप्रदेशस्य उसदार पुढीलदार इतिख्यातस्यनामनी॥सन्निवेशः संनिविशंतेऽत्र विशप्रवे शने॥निकर्षणः कर्षणान्निर्गतः इतिद्वेसमीचीनवासस्थानस्य पुरादौगृहादिरचनापरिछिन्नदेशस्येत्यर्थः॥संवसथः संवसंत्यत्र वसनिवासे॥ग्रामः ग्रसते ग्रसुअदने इतिद्वे ग्रामस्यनामनी॥वेश्मभूः वेश्मनोभूः॥वास्तुः वसंत्यत्रेति वास्तुरुच्यते इतिद्वेगृहरचनावच्छिन्नभूमेःनामनी १९ ग्रामांते ग्रामस्यअंतःतत्र॥उपशल्यं शल्यमुपगतं ग्रामगृहणं चोपलक्षणं अतएव उपकंठोपशल्येद्वेइतित्रिकांडशेषः ग्रामांतमुपशल्यमित्यपिपाठः॥ तत्रग्रामस्यांतंसमीपं॥सीमः॥सीमा सीयते षिञ्बंधने नामन् सीमन् इत्यादिनानिपातः इतिद्वेग्रामादेर्मर्यादाया अभिधाने॥ पूर्वोनकारांतः उभेद्वेस्त्रियाम्

घोषः घोषंतिगावोऽत्र घुषिरविशब्दने अन्यमतेशब्देइति ॥आभीरपल्ली आभीराणांपल्ली आभीरपल्लिरित्यपिपाठः कुटीग्रामकयोः पल्लिरितिशाश्वतः इतिहैगोपाल ग्रामस्यतद्देहस्यवाअभिधाने ॥पक्कणः पचः पचंतीतिपचः क्विप् कणायत्र ॥शबरालयः शवंराति शवराः तेषामालयः इतिद्वेभिल्लग्रामस्य २० इतिपुरवर्गः महीध्रः म हींधरति धृञ्धारणे ॥शिखरी शिखरमस्यास्ति शिखरीस्यादपामार्गेशैलपादपयोःपुमान् ॥क्ष्माभृत् क्ष्मांबिभर्ति डुभृञ्धारणपोषणयोः क्विप्तुक् ॥ हृञ्हरणे ॥अहार्यः नह्रार्यः ॥धरः धरति धृञ्धारणे ॥धरः कूर्माधिपेगिरौ ॥पर्वतः पर्वाणिसंत्यत्र यद्वा पर्वति पर्वपूरणे ॥अद्रिः अत्ति अद्यतेवा अदभक्षणे ॥गोत्रः गांत्रायते त्रैङ्पालने गोत्रंक्षेत्रेऽन्वयेछत्रेसंभाव्येबोधवर्त्मनोः वनेनाम्निचगोत्रोद्रौगोत्रामुविगवांगणे इतिहैमः ॥गिरिः गिरति गृणातिवा गृनिगरणे ॥ग्रावा ग्रसते ग्रसुअदने ॥अचलः

घोषआभीरपल्लीस्यात्पक्कणःशबरालयः २० इतिपुरवर्गः महीध्रेशिखरिक्ष्माभृदहार्यधरपर्वताः अद्रिगोत्रगिरिग्रा वाःचलशैलशिलोच्चयाः १ लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ

नचलति चलकंपने अचलस्तुगिरिकीलयोः अचलाभुवीतिहैमः ॥शैलः प्रचुराःशिलाःसंत्यत्र ॥शिलोच्चयः शिलाभिरुच्चीयते चिञ्चयने इतित्रयोदशपर्वतसामान्यस्याभिधानानि १ लोकालोकः लोकालोकोप्रकाशांध कारावत्रस्तः लोकृदर्शने अंतर्बहिः सूर्यकिरणाभ्यांस्पर्शास्पर्शाभ्यां ॥चक्रवालः चक्रंभूमंडलंवलते वलवेष्टने डलयोरेकत्वस्मरणाच्चक्रवाडोऽपि यद्वा च क्राकारेणवाडते वाडआप्लाव्ये चक्रवालमस्यास्ति इतिवा चक्रवालोद्रिभेदेस्याच्चक्रवालंतुमंडलइतिहैमः इतिद्वेसप्तद्वीपवत्याभूमेः प्राकारभूतेगिरौना म्नी ॥त्रिकूटः त्रीणिकूटान्यस्य त्रिकूटंसिंधुलवणेत्रिकूटःपर्वतांतरइतिहैमः ॥त्रिककुत् त्रीणिककुदसदृशानिशृंगाण्यस्य इतिद्वेत्रिकूटाचलस्यनाम्नी

अस्तः असनिस्मा असादौसौ यद्वा अस्यते स्य असुक्षेपणे अस्तं क्षिपेष्य वासते त्रिषु नापश्चिमाचलेइतिविश्वमेदिन्यौ ॥ चरमक्ष्मा [illegible] चरं चरमं चरगतौ इअस्ताचलस्य नामनी ॥ उदयः उद्यंतिग्रहा अस्मात् इणगतौ उदयः पर्वतोन्नत्योरितिहेमः ॥ पूर्वपर्वतः इतिद्वे उदयाचलस्यनामनी २ हिमवान् हिममस्त्यत्र ॥ निषधः निषादति निषधः कठिनेदेशेनद्राजेपर्वतांतरे इतिविश्वमेदिन्यौ ॥ विंध्यः विरुद्धं ध्यायति ध्यैचिंतायां ॥ माल्यवान् माल्याकारतास्यास्ति ॥ पारियात्रकः परितोयात्रयाद श्यते पारियात्रिकइत्यपिपाठः ॥ गंधमादनं गंधेनमादयति गंधमादनइतिपुल्लिंगोप्यन्यत्र स्याद्गंधमादनेभृंगेगंधकेवानरांतरे स्त्रीसुरायांनगेनस्त्री इतिमेदिनी ॥ हेमकूटः हेम्नः कूटोराशिः हिमवानित्यादयः सप्तपर्वतविशेषाः आदिशब्दान्मलयदर्दुरचित्रकूटमैनाकसह्यादिग्रहणं ॥ पाषाणः पिनष्टि पिष्लृसंचूर्णने यद्वा पष

अस्तस्तुचरमक्ष्माभृदुदयः पूर्वपर्वतः २ हिमवान्निषधोविंध्योमाल्यवान्पारियात्रकः गंधमादनमन्येचहेमकूटादयोनगाः ३ पाषाणप्रस्तरग्रावोपलाश्मानःशिलादृषत् कूटोस्त्रीशिखरंशृंगंप्रपातस्त्वतटोभृगुः ४

तेनेन पषबाधेग्रंथेच अणति अणशब्दे पाषश्चासौअणश्चपाषाणः ॥ प्रस्तरः प्रस्तृणाति स्तृञ् आच्छादने ॥ ग्रावा गिरतिगृणातिवा गॄनिगरणेशब्देवा यद्वा गिरति गृसेके अवति अवरक्षणादौ ग्रश्चासा ववाच ॥ उपलः उपलाति लाआदाने यद्वा पलति पलगतौ ओःशंभोः पलःबोधकः ॥ अश्मा अश्नुते अशूव्याप्तौसंघातेच ॥ शिला शिलति शिलउंछे ॥ दृषत् दृणाति दृविदारणे इतिसप्तपाषाणस्य शिलादृषदौस्त्रियां ॥ कूटः कूटयति कूटदाहे कूटस्यतेवा ॥ शिखरं शिखाःस्यास्ति ॥ शृंगं शृणाति शॄहिंसायां शृंगंप्रभुत्वे शिखरेचिन्हेक्रीडांबुयंत्रके त्रयमपिपुन्नपुंसकलिंगमितित्रीणिपर्वताग्रस्याभिधानानि ॥ प्रपातः प्रपतंत्यस्मात् पत्लृगतौ ॥ अतटः नतटमत्र ॥ भृगुः भ्रज्जति भ्रस्ज्यतेवा भ्रस्जपाके त्रीणिपर्वतात्पतनस्थानस्य ४

अद्रेर्नितंबोमध्यभागः कटकइतिप्रोच्यते कटति कट्यतेवा कटेवर्षावृणयोः एवंपर्वतमध्यभागस्यनाम॥ स्नुः स्नौतिजलं स्नातिवा ष्णा.प्रस्नवणे॥ प्रस्थः प्रतिष्ठंते ऽत्र प्र
स्थोस्त्रियांमानभेदेसानावप्यन्नवदस्क.नि॥ सानुः सनोति षणुदाने त्रीणिपुंनपुंसकलिंगानिसमभूभागेपर्वतैकदेशे॥ उत्सः उनत्तिजलेन उंदीक्लेदने॥ प्रस्रव
णं प्रस्रवंत्यापोऽस्मात् स्रुगतौ द्वेयत्रपानीयंनिपत्यबहुलीभवतितस्यस्थानस्याभिधाने॥ वारिप्रवाहः वारिणः प्रवाहः॥ निर्झरः॥ झरः॥ त्रीणिनिर्गतजलप्र
वाहस्य झराइतिख्यातस्याभि०॥ दरी दृणाति दॄविदारणे॥ कंदरः कंजलंदार्यते॥ इतिद्वेपर्वतस्यगृहाकारकृत्रिमविवरस्यनामनी॥ पाक्षिके कंदराभवति

कटकोऽस्त्रीनितंबोद्रेः स्नुः प्रस्थः सानुरस्त्रियां उत्सः प्रस्रवणंवारिप्रवाहोनिर्झरोझरः ५ दरीतुकंदरोवास्त्रीदेवखात
बिलेगुहा गव्हरंगंडशैलास्तुच्युताः स्थूलोपलागिरेः ६ खनिः स्त्रियामाकरः स्यात्पादाः प्रत्यंतपर्वताः उपत्यकाद्रे
रासन्नाभूमिरूर्ध्वमधित्यका ७

देवखातबिलं देवैः खातंखनितंयत्बिलंतस्मिन्बिलेद्वेअभिधाने॥ गुहा गाह्यते गाहूविलोडने॥ गव्ह
रं देवखातेबिलंगुहेति गव्हरंबिलदंभयोरितिशाश्वतः॥ गिरेः सकाशाच्च्युताः पतितायेस्थूलपाषाणास्तेगंडशैलाइत्युच्यंते गंडाइवशैलाः शैलानांगंडाइव ६
खनिः खन्यते खनुअवदारणे॥ आकरः आकुर्वत्यत्र आकीर्यंतेधातवोऽत्रवा कॄविक्षेपे खानिरित्यपिपाठः खनिरेवमतारवानिरितिद्विरूपकोशः द्वेरत्ना-
द्युत्पत्तिस्थानस्य॥ पादाः पद्यंतेएभिः पदगतौ॥ प्रत्यंतपर्वताः प्रत्यंतेमहीध्राणांसमीपेयेक्षुद्राः पर्वताः इतिद्वेपर्वतसमीपस्थक्षुद्रपर्वतानामभिधाने॥ अद्रेः
अधः सन्निहिताभूमिरुपत्यकेत्युच्यते॥ अद्रेरूर्ध्वायाभूमिः साऽधित्यका ७ ७ ७ ७ ७

धातुः अद्रेर्यन्मनःशिलादिसधातुरित्युच्यते आदिनाहरितालस्वर्णताम्रादिग्रहः अत्रैवं सवर्णरौप्यताम्राणिहरितालंमनःशिला गैरिकांजनकासीससीसलोहाः सहिंगुलाः गंधकोऽभ्रइत्याद्याधातवोगिरिसंभवाइति दर्शितशोभामितिधातवः गैरिकंतुविशेषेणधातुः धातुशब्देनैवप्रसिद्धत्वात् एकंगेरूकावइतिख्यात स्यनाम॥ निकुंजः॥ कुंजः कुंजत्यत्र कुजिअव्यक्तेशब्दे द्रुलतादिपिहितोदरे लताद्याच्छादितगर्भेअभिधाने विकल्पेनद्वयंक्लीबमपि आदिशब्देनतृणादी नांसंग्रहः ८ इतिशैलवर्गः अटवी अटंत्यत्र अटगतौ॥अरण्यं अर्यतेऋगतौ॥विपिनं विशेषेणपिबंत्यत्र पिगतौ॥गहनं गाहते गाह विलोडने कृच्छ्रग

धातुर्मनःशिलाद्यद्रेर्गैरिकंतुविशेषतः निकुंजकुंजौवाक्लीबेलतादिपिहितोदरे इतिशैलवर्गः अटव्यरण्यंविपिनंगहनंकाननंवनं महारण्यमरण्यानीगृहारामास्तुनिष्कुटाः १ आरामःस्यादुपवनंकृत्रिमंवनमेवयत् आमात्यगणिकागेहोपवनेवृक्षवाटिका २

हनयोरितिनिर्देशात्ह्रस्वः॥ काननं कानयति दीपयतिस्मरादिकमितिशेषः यद्वा कंजलंअननंजीवनमस्यैति॥वनं वनति वनसंभक्तौ वनंनपुंसकेनीरेनिवासालयकानने इतिषट्अरण्यस्यनामानि तत्राटवीस्त्रियां॥ महारण्यं महच्चतदरण्यंच॥ अरण्यानीइतिद्वेमहारण्यस्यनामनी॥ गृहारामाः॥निष्कुटाः कुटाद्गृहान्निष्क्रांतानिष्कुटाः १ यत्कृत्रिमंकृत्यानिर्वृत्तंवनंतत्र आरामः आरमंत्यत्र॥ उपवनं इतिद्वेनामनी॥ वृक्षवाटिकेत्येकं वक्ष्यते वटवेष्टने आमात्यानांवेश्यानांचयद्गृहोपवनंतस्मिन् २

यद्राज्ञः साधारणंप्रमदाभिरन्यैर्वासहक्रीडाद्यर्थंवनंतत्रआक्रीडः आक्रीडंत्यत्र क्रीडविहारे॥ उद्यानं उद्यांत्यत्र याप्रापणे ज्ञेयमाक्रीडमुद्यानमित्यमरमा लायामाक्रीडस्यापिक्लीबलमुक्तं उद्यानंस्यान्निःसरणेवनभेदेप्रयोजने एतदुद्यानं अंतःपुरोचितं राज्ञीनामेवक्रीडायायुचितंचेत्प्रमदवनंस्यात् ३ वीथी वी-थ्यते विश्रयाचने॥ आलिः अलति अलभूषणादौ॥ आवलिः आवलति वल्संवरणे॥ पंक्तिः पचते पचिविस्तारे॥ श्रेणी श्रियते श्रिञ्सेवायाम् पंचपंक्तेः नामानि॥ लेखा रेखा लिख्यते लिखअक्षरविन्यासे॥ राजिः राजति राजृदीप्तौ द्वेलेखानामनी॥ सांतरापंक्तिः निरंतरालेखावा॥ वनसमूहे वनानांसमूहे

**पुमानाक्रीडउद्यानंराज्ञःसाधारणंवनं स्यादेतदेवप्रमदवनमंतःपुरोचितम् ३ वीथ्यालिरावलिःपंक्तिःश्रेणीलेखा स्तुराजयः वन्यावनसमूहेस्यादंकुरोऽभिनवोद्भिदि ४ वृक्षोमहीरुहःशाखीविटपीपादपस्तरुः अनोकहःकु टःशालःपलाशीद्रुद्रुमागमाः ५**

वन्या॥ अभिनवोद्भिदि उद्भिनत्तिभवं भिदिरविदारणे अंकुरइत्येकं अंक्यते अकिलक्षणे अंकुरश्चां कुरःप्रोक्त इतिहलायुधः॥ वृक्षः वृक्षति वृक्षवरणे॥ महीरुहः मह्यांरोहति रुहबीजजन्मनिप्रादुर्भावेच॥ शाखी शाखाःस्यास्ति॥ विटपी विटपःशाखाविस्तारोऽस्या स्तीति अतइनिठनौ पादपः पादैःपिबति पापाने पादपोवृक्षपीठयोरितिहैमः॥ तरुः तरति तृप्लवनतरणयोः॥ अनोकहः अनसःशकटस्याकंगतिंहंति॥ कुटः कु टति कुटकौटिल्ये॥ शालः सालइत्यपिपाठः सालःसर्जतरौवृक्षमात्रप्राकारयोरपीति सालःपादपगात्रेस्यात्प्राकारइतिमेदिनी विश्वप्रकाशौ॥ पलाशी पलाशा निसंत्यत्र पलाशीवृक्षरक्षसोरितिविश्वमेदिन्यौ॥ द्रुः॥ द्रुमः द्रुशब्दान्मप्रत्ययः॥ अगमः नगच्छति गम्लृगतौ इतित्रयोदशवृक्षनामानि ५

पुष्पाज्जातैः फलैरुपलक्षितोवृक्षोवानस्पत्यः वनस्पतौभवः इत्येकमाम्रादेर्नाम ॥ अपुष्पात्पुष्पंविनाजातैस्तैः फलैरुपलक्षितोवृक्षोवनस्पतिः इत्येकंपनसोदुंबरादेर्नाम ॥ द्रुममात्रेऽपिवनस्पतिः वनस्पतिर्नाद्रुमात्रेविनापुष्पंफलिद्रुमइतिमेदिनीकोशात् ॥ फलपाकांताः फलपाकएवअंतोयासांताः ओषध्यः भवंति ओषः प्लोषोदाप्तिर्वाधीयतेऽत्र डुधाञ्धारणपोषणयोः इत्येकंव्रीहियवादेः नाम ॥ अवंध्यः नवंध्यः अवंध्यः ॥ फलेग्रहिः फलानिगृण्हाति गृहउपादाने इति द्वेयथाकालंफलधरस्यनामनी ६ वंधेसाधुःवंध्यः । अफलः नफलान्यस्य ॥ अवकेशी अवसन्नाःकेशायस्य सोस्तित्वशांतत्वेनास्यसोवकेशी इत्याद्यूह्यम् इति

वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ओषध्यः फलपाकांताःस्युरवंध्यः फलेग्रहिः ६ वंध्योफलोवकेशीचफलवान्फलिनःफली प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ७ फुल्लश्चैतेविकसितेस्युरवंध्यादयस्त्रिषु स्थाणुर्वानाध्रुवः शंकुर्ह्रस्वशाखाशिफः क्षुपः ८

त्रीणिऋतावपिफलरहितस्यनामानि ॥ फलवान् फलानिविद्यंतेयस्य ॥ फलिनः ॥ फली फलादिनिःइतित्रीणिसफलस्याभिधानानि ॥ प्रफुल्लः प्रफुल्लति फुल्लविकसने ॥ उत्फुल्लः ॥ संफुल्लः ॥ व्याकोशः व्याकोशोव्यावृत्तः कोशः संकोचोस्मात् ॥ विकचः विगतःकचोस्मात् ॥ स्फुटः स्फुटति स्फुटविकसने स्फुटोव्यक्तप्रफुल्लयोः ७ फुल्लः एते शैविकसितेपुष्पितेस्युः अवंध्यादयः अवंध्यो १ फलइत्यादयोविकसितांतास्त्रिषुभवंति स्थाणुः स्थाणुःकीलेहरेपुमानस्त्रीध्रुवइतिहैमः वाना रूपभेदात्क्लीबत्वं ॥ ध्रुवः ध्रुवति ध्रुवगतिस्थैर्ययोः पाठांतराभिप्रायं ॥ शंकुः शंकतेऽस्मात् शकि शंकायां त्रीणिशाखापत्ररहितवृक्षस्यनामानि ॥ ह्रस्वशाखाशिफः शाखाप्रसिद्धा शिफावृक्षमूलं ह्रस्वेशाखामूलेयस्यसक्षुपःस्मात् क्षौति दुक्षुशब्दे एकं ८

अप्रकांडे नविद्यतेप्रकांडोयस्यतत्र ॥ स्तंबः तिष्ठति स्थागतिनिवृत्तौ ॥ गुल्मः गुडति गुडरक्षायां डलयोरेकत्वं इतिद्वे स्कंधरहितवृक्षस्यनामनी ॥ वल्ली वल्लते वल्लुसंवरणे वल्लीतुवेल्लिः सरणइतिवाचस्पतिः वल्लिरितिपाठः इतिद्वे० ॥ व्रततिः प्रतनोति तनुविस्तारे पस्यवु व्रततिर्व्रततीस्त्रथैतिहलायुधः व्रततिस्तुप्रतानिन्यांविस्तारेइतिहला युधः यद्वा व्रतमिवकरोति ॥ लता लतति सौत्रोधातुर्वेष्टनार्थः त्रीणिलतामात्रस्यनामानि शाखापत्रप्रचयप्रतानःसोऽस्यास्ति ॥ वीरुत् विरुणद्धि रुधिरआवर णे ॥ गुल्मिनी गुल्मः प्रतानोस्त्यस्याः ॥ उलपः उलपते उलः सौत्रआवरणार्थोदाहार्थोवा शाखापत्रप्रचयःप्रतानःसोऽस्त्यस्याः साप्रतानिनीवीरुदादिद्वत्रयवा-

अप्रकांडेस्तंबगुल्मौवल्लीतुव्रततिर्लता लताप्रतानिनीवीरुद्गुल्मिन्युलपइत्यपि ९ नगाद्यारोहउच्छ्रा यउत्सेधश्चोच्छ्रयश्चसः अस्त्रीप्रकांडःस्कंधःस्यान्मूलाच्छाखावधिस्तरोः १० समेशाखालतेस्कंधशाखा शालेशिफाजटे

च्या ॥ शाखादिभिर्विस्तृतालतातत्रेत्यर्थः ९ नगाद्यारोहः नगस्यतरोःआरोहणंउच्चत्वं आरोहोदैर्घ्यउच्छ्रायस्त्रीकस्यांमानपि घपि आरोहणेगजारोहइतिहैमः आदिशब्देनगिरिदेवालयादितत्र ॥ उच्छ्रायः उच्छ्रयणं श्रिञ्सेवायाम् ॥ उत्सेधः उत्सेधनं षिधुगत्यां उत्सेधस्तूच्छ्रयेनस्त्रीक्लीबंसंह ननेपिचेतिमेदिनी इतित्रीणिवृक्षादिदैर्घ्यस्यनामानि ॥ प्रकांडः प्रकाड्यते कडभेदने प्रकांडोविटपेशस्तेमूलस्कंधांतरेतरोरितिहैमः ॥ स्कंधः स्कंद्यते आरुह्यते स्कंदि रगतिशोषणयोः इतिद्वेतरोर्मूलमारभ्यशाखापर्यंतोयोभागस्तस्यनामनी १० शाखा शाखति शाखृव्याप्तौ ॥ लता द्वेशाखायाअ० ॥ स्कंधशाखा ॥ शाला शलनं शलचलने द्वेप्रधानशाखायाअमि० स्कंधात्प्रथमोत्पन्नशाखायाइत्यर्थः ॥ शिफा शेतेसौशीङ् स्वप्ने शिफाजटायांसरितिमांसिकायांचमातरि ॥ जटा जटति जटसंघाते द्वेतरु मूलस्यनामनी

गुच्छकः गुध्यते गुधिपरिवेष्टने स्तबकेहारभेदेचगुच्छस्तंबेऽपिवर्तिनइति रुद्रः॥स्तबकः स्तूयते ष्टुञ्स्तुतौ वुन्प्रत्ययः यद्वा तिष्ठति इतिविग्रहः ॥ कलिका
दिभिराकीर्णस्यपल्लवग्रंथेः नामनी केचित विकसोन्मुखकलिकायाः पुष्पादिस्तवकेगुच्छइतितालव्यांतेरंतिदेवः॥कुड्मलः कुड्यते कुटतिवा कुटच्छेदने कौटिल्येवा
मुकुलः मुंचति कलिकात्वं मुच्लृमोक्षणे इतिद्वेईषद्विकसितकलिकायाः नामनी १६ सुमनसः सुष्टुमन्यंतेआभिः॥पुष्पं पुष्यति पुष्पविकसने प्रसूनं प्रसूयते
स्म॥कुसुमं कुस्यति कुससंश्लेषणे उमप्रत्ययः कुसुमंस्त्रीरजोनेत्ररोगयोरित्युक्तं॥सुमं सर्वसाधुसमानेषुसमंस्यादभिधेयवत् इतिमेदिनी कुसुमंसममित्यपि
पाठः भूम्निस्त्रियांसुमनसइतिरत्नकोशः सुमनाः पुष्पमालत्योस्त्रियामितिमेदिनीकोशः॥मकरंदः मकरमपि द्यति कामजनकत्वात् दोअवखंडने यद्वा मकरम

**स्याद्गुच्छकस्तुस्तबकः कुड्मलोमुकुलोस्त्रियां १६ स्त्रियःसुमनसःपुष्पंप्रसूनंकुसुमंसुमं मकरंदःपुष्परसःपरागःसुमनो**
**रजः १७ द्विहीनंप्रसवेसर्वंहरीतक्यादयःस्त्रियां आश्वत्थवैणवप्लाक्षनैयग्रोधैंगुदंफले १८**

यंदति अदिबंधने॥पुष्परसःपुष्पस्यरसः
इतिद्वेपुष्पमधुनामनी॥ परागः परांगच्छति गम्लृगतौ परागःकौसुमेरेणौधूलिस्त्रीनीपयोरपि गिरिप्रभेदेविख्यातावुपरागेचचंदने॥सुमनोरजः सुमनसांरजः द्वेपुष्परे
णोः १७ द्विहीनं द्वाभ्यांस्त्रीपुंसाभ्यांहीनं सर्ववक्ष्यमाणंवृक्षलतौषधिजातीयंस्त्रीपुल्लिंगहीनमश्वत्थकपित्थादिषुवर्तमानंप्रसवेपुष्पेफलेमूलेचवर्तमानंनपुंसकलिंगंज्ञेयमि
त्यर्थः यथा चंपकंसूरणमित्यादि तस्मिन्सविशेषमाह हरीतक्यादयःस्त्रियां स्त्रीलिंगे हरीतक्याःफलंहरीतकी आदिशब्दात्द्राक्षाकर्कटीकोशातक्यादीनांसंग्रहः॥
अश्वत्थस्यफलंआश्वत्थं॥वेणोःफलंवैणवं॥प्लक्षस्यफलंप्लाक्षं॥न्यग्रोधस्यफलंनैयग्रोधं॥इंगुद्याःफलंऐंगुदं॥बृहत्याःफलंबार्हतं एकैकंप्लक्षादिभ्योणितिपुनरण्विधाना
न्नलुक् १८

जंबूः जंब्वाः फलं जमति जमुअदने एवमेव जंबु आंबवं इतित्रीणिजंब्वाः फलनामानि ॥ पुष्पेवर्तमानाः जातिप्रभृतयः प्रभृतिशब्दात् यूथिकामल्लिकेत्यादीनां ग्रहणं स्वलिंगाएवभवंति नतुक्लीबे तद्यथा जात्याः पुष्पंजातीस्त्री ॥ व्रीहयः फलेस्वलिंगाः यथा व्रीहीणांफलानिव्रीहयः पुंसि एवंमाषमुद्गयवादयोपिऊह्याः १९ विदारी बृहती अंशुमती इत्याद्यामूलेऽपिस्वलिंगाः तद्यथा विदार्याः मूलंविदारी ॥ अपिशब्देनपुष्पेऽपिस्वलिंगाः ॥ पाटलापुष्पेवर्तमानाक्लीबे यथा पाटलायाः पुष्पं पाटलं अपिशब्दात्स्वलिंगा पाटलः कुसुमेवर्णेप्याशुव्रीहिश्चपाटल इतिशाश्वतकोशात्पुल्लिंगोपि ॥ बोधिद्रुमः बोधिश्चासौद्रुमश्च ॥ चलदलः चलानिद

**बार्हतंचफलेजंब्वाजंबूः स्त्रीजंबुजांबवं पुष्पेजातिप्रभृतयः स्वलिंगाव्रीहयः फले १९ विदार्याद्यास्तुमूलेऽपिपुष्पेक्लीबेपि पाटला बोधिद्रुमश्चलदलः पिप्पलः कुंजराशनः २० अश्वत्थेऽथकपित्थेस्युर्दधित्थग्राहिमन्मथाः तस्मिन्दधिफलः पुष्पफलदंतशठावपि २१**

लानियस्य ॥ पिप्पलः पिप्पलंजलंअस्तियस्य मूलेसिक्तत्वात् पिप्पलंसलिलेवस्त्रच्छेदभेदेचनातरौ इत्युक्तत्वात् ॥ कुंजराशनः कुंजरेणाश्यते अशभोजने कर्मणिल्युट् २० अश्वत्थं नश्वश्चिरंतिष्ठति यद्वा अश्वत्थंजलमस्यास्ति आपः प्रजाहितंशीलमश्वत्थंपवनं विषमितिरत्नकोशः अश्वत्थः पिप्पलद्रौस्यादश्वत्थापूर्णिमामता इत्युक्तत्वात् पंचपिप्पलस्यस्याभिधानानि ॥ कपित्थः अमरमालायांपवर्गतृतीयमध्योपि ॥ दधित्थः दधिवर्णस्तिष्ठत्यस्मिन् ॥ ग्राही गृण्हाति ग्रहउपादाने ॥ मन्मथः मनोमथः मन्मथः मनज्ञानेसंपदादित्वात् क्विप् नलोपेतुक् मथतीतिमथेरच् ॥ दधिफलः दधिअस्तिफलेयस्य ॥ पुष्पफलः पुष्पयुक्तंफलमस्य ॥ दंतशठः दंतानांशठइव सप्तकपित्थस्यकंवठइतिख्यातस्याभिधानानि २१ ७

उदुंबरः उल्लुंघितमंबरमनेन उदतिशयेनांबतेवा अविशब्दे उदुंबरस्तु देहल्यां वृक्षभेदे च षंडके कुष्ठभेदे पिच पुमांस्ताम्रेपिस्यान्नपुंसकमितिविश्वः मेदिन्यांतब गेरतृतीयमध्यः त्रिकांडशेषेप्येवमेव॥ जंतुफलः जंतवः फलेऽस्य॥ यज्ञांगः यज्ञमंगति अगिगत्यर्थः॥ हेमदुग्धकः हेमवर्णंदुग्धमस्य चत्वारि उदुंबरस्य उं बरइतिख्यातस्यनामानि॥ कोविदारः कुंभूमिंविदारयति दृविदारणे॥ चमरिकः चमरंअस्यास्ति अतइनिठनौ॥ कुद्दालः कुंउद्दालयति दलविदारणे युगपत्रकः युगंयुग्मंपत्रमस्य चत्वारिकांचन इतिख्यातस्यनामानि २२ सप्तपर्णः कांडेकांडेसप्तपर्णान्यस्य॥ विशालत्वक् विशालात्वगस्य॥ शारदः शरदिपुष्प्यति शारदीतोयपिप्पल्यांसप्तपर्णेचेतिदंत्यांतेषुरुद्रः शारदो ऽन्दस्त्रियांतोयपिप्पलीसप्तपर्णयोरितिमेदिनी॥ विषमच्छदः विषमाः छदायस्य

उदुंबरे जंतुफलोयज्ञांगोहेमदुग्धकः कोविदारेचमरिकः कुद्दालोयुगपत्रकः २२
सप्तपर्णे विशालत्वक्शारदोविषमच्छदः आरग्वधेराजवृक्षशम्याकचतुरंगुलाः २३

चत्वारिसांतवणइतिख्यातस्याभिधानानि दुरधिगमवस्तुनः प्राकृतसंज्ञयापिव्याख्यानेनदोषः तत्रैवं प्रयोजनार्थावचनप्रवृत्तिर्यतस्ततः प्राकृतमित्य दोषइति किंच रसवीर्यविपाकेषुयौमूलात्पुष्पात्फलाद्दलात् आकाराद्देशकालादेर्बनौषध्यर्थमुन्नयेदिति आरग्वधः आरगंरोगं शंकामपिहंति इत्याद्यूह्यं आरग्वधः आर्गधः ह्रस्वादिरपि अरग्वधोथसंपाकः कृतमालस्तथार्ग्वधइतिरत्नकोशः॥ राजवृक्षः राजावासौवृक्षश्च वृक्षाणांराजावा राजदंतादिः रोगा णांराजानंवृश्चतीतिवा ओव्रश्चूछेदने॥ शम्याकः शंकल्याणंपाकोऽस्य संपाकः शंपाकश्च तदुक्तं संपाकस्तर्ककेधृष्टेत्रिषुनाचतुरंगुलइतिमेदिनी॥ चतुरंगुलः चत- स्रः अंगुल्यः प्रमाणंयस्य २३

आरेवतः आरेवयतिनिः सारयति मलसारकत्वात् रेरप्लवगतौ अतसातत्यगमने आरेवश्चासौअतश्च ॥ व्याधिघातः व्याधीन्हंतीति ॥ कृतमालः कृतामा लाऽस्य पुष्पैरितिशेषः ॥ सुवर्णः शोभनोवर्णोऽस्य ॥ सुपर्णकइतिवापाठः अंष्टौबाहवाइतिख्यातस्यनामानि ॥ जंबीरः जभ्यते जभुअदने जंबीरःप्र स्थपुष्पेस्यात्तथादंतश ठदुमइत्युक्तत्वात् ॥ दंतशठः दंतानांशठइव ॥ जंभः ॥ जंभीरः ॥ जंभलः पंचजांबेरलघुइड निंबु इतिख्यातस्याभिधानानि २४ वरुणः वृणोति वृञ्वरणे करणेवा ॥ वरणः ॥ सेतुः सिनोति सीयतेवा षिञ्बंधने सेतुर्नाळौकुमारके इत्युक्तत्वात् ॥ तिक्तशाकः तिक्तः शाकोऽस्य

आरेवतव्याधिघातकृतमालसुवर्णकाः स्युर्जंबीरेदंतशठजंभजंभीरजंभलाः २४ वरुणोवरणःसेतुस्तिक्तशाकःकु मारकः पुन्नागेपुरुषस्तुंगःकेसरोदेववल्लभः २५ पारिभद्रेनिंबतरुर्मंदारःपारिजातकः

तिक्तशाकस्तुखदिरेवरुणेपत्रसुंदर इत्युक्तत्वात् ॥ कुमारकः कुमारयति कुमारक्रीडायामित्यादि चिरतरुणत्वात् पंचवायवर्णाइतिख्यातस्य ॥ पुन्नागः पुमान् नागइव ॥ पुरुषः पूरयति पुर अग्रगमने ॥ तुंगः तुंज्यते तुजिहिंसायां घञ् ॥ केसरः प्रशस्ताःकेसरायस्य अर्शआद्यच् केसरोनागकेसरः केशरइत्यपिपाठः ॥ देववल्लभः ॥ पंचसं देसराइतिख्यातस्य २५ पारिभद्रः पारिमस्यास्तीति अतइनिः पारि पारंगतं भद्रंयस्य ॥ निंबतरुः नियमयति यमउपरमे पृषोदरादिः निंबति निवि सेचने बवयोरैक्यं निंबसंज्ञकस्तरुः शाकपार्थिवादिः ॥ मंदारः मंदाःआराःयस्यवा मंदंऋच्छति ऋगतौ इत्याद्यूह्यं ॥ पारिजातः पारि पारंगतंजातंजन्म यस्यसमुद्राज्जातोवा स्वार्थेकः चत्वारिनिंबतरोः कडूनिंबइतिख्यातस्याभि०

तिनिशः अतिशयेननेशति णिश्समाधौ यद्वा अतिक्रांतोनिशः तिनिशः पृषोदरादित्वात् अकारलोपः ॥ स्यंदनः स्यंदते स्यंदूप्रस्रवणे ॥ नेमिः ह्रस्वांतः संहितायां कृतोदीर्घोपदकालेनिवर्तते नयति णीञ्प्रापणे ॥ नेमिः पुल्लिंगस्तिनिशेनेमिश्चक्रप्रांतेस्त्रियामपीतिरुद्रः ॥ रथद्रुः रथस्यद्रुः तत्रोपयुक्तत्वात् ॥ अतिमुक्तकः अतिश यितोमुक्तोविस्तारोऽस्य २६ वंजुलः वच्यते वंचुगतौ ॥ चित्रकृत् चित्रंकरोति सप्तलिवसइतिख्यातस्य ॥ पीतनः पीतंकरोति तत्करोतीतिणिजंतात् बहुलमन्यत्रापी तियुच् ॥ कपीतनः तनोति तनुविस्तारे कपीनांकपेर्वर्णस्यवातनः इत्याभूतौ ॥ आम्रातकः आम्रमतति अतसातत्यगमने कपिचूतोऽम्रातकोस्यफलेपशूहरीतकीति त्रिकांडशेषः त्रीणिअंबाडाइतिख्यातस्य ॥ मधूकः मह्यते गन्यतेवा महपूजायां मनज्ञानेवा ॥ मधुकः ॥ मधूलः ॥ मधुलः ॥ गुडपुष्पः गुडइवपुष्पमस्य ॥ मधु-

**तिनिशोस्यंदनोनेमीरथद्रुरतिमुक्तकः २६ वंजुलश्चित्रकृच्चाथद्वौपीतनकपीतनौ आम्रातकेमधूकेतुगुडपुष्पमधुद्रुमौ २७**
**वानप्रस्थमधुष्ठीलौजलजेत्रमधूलकः पीलौगुडफलःस्रंसीतस्मिंस्तुगिरिसंभवे २८**

द्रुमः मधुनामाद्रुमः २७ वानप्रस्थः वनप्रस्थेवनैक देशेभवः वानप्रस्थोमधूकेपिस्यात्तृतीयाश्रमेपुमानितिरुद्रः ॥ मधुष्ठीलः मधुष्ठीवति ष्ठिवुनिरसने मधुष्ठीलेगर्भेऽस्येतिवा पंचमोहाइतिख्यातस्यनामानि जलजे त्रमधूकेमधूलकइत्येकंनाम मधुलाति लादाने गिरिजेत्रमधूलकइत्यपिपाठः गौरशाकोमधूकोऽन्योगिरिजः सोऽल्पपत्रकइतिमाधवः ॥ मधूकोऽन्योमधूलस्तु जलजोदीर्घपत्रकइतिस्वामी ॥ पीलुः पीलति पीलप्रतिष्टंभे ॥ गुडफलः गुडइवफलमस्य ॥ स्रंसी स्रंसयति मलं स्रंसुअधःपतने त्रीणिगुर्जरदेशेपीलुवृक्षस्य अक्रोडइतिप्रसिद्धस्य तस्मिन्पीलौगिरिजे २८

अक्षोटः अक्ष्णोति अक्षूव्याप्तौ अक्षस्येवउटाःपर्णान्यस्येतिवा ॥ कर्परालः कर्पमलति अलभूषणादौ यद्वा कर्परराख्याऽस्ति कंदरालइतिवापाठः पूर्ववन्द्वेप र्वतपीलोःअक्रोडइतिख्यातस्य ॥ अंकोटः अंक्यते अकिलक्षणे ॥ अंकोठः अंकोलः इत्यपिपाठो ॥ निकोचः निकुच्यते कुचशब्दे निकोटइत्यपिपाठः द्वेअंको रस्यपिस्तेइतिख्यातस्य ॥ पलाशः प्रशस्तानिपलाशानियस्य अर्शआद्यच् यद्वा पलंमांसमश्नाति अशभोजने ॥ किंशुकः किंचित्शुकइव शुकतुंडाभ पुष्पत्वात् ॥ पर्णः पृणाति पृणप्रीणने तौदादिकः यद्वा प्रशस्तानिपर्णानियस्य अर्शआद्यच् यद्वा पिपर्ति पृपालनपूरणयोः पर्णपत्रेकिंशुकेनाइतिधान्त त्वात् ॥ वातपोथः वातंपोथयति पुथहिंसायां इतिचत्वारिपलाशस्य ॥ वेतसः वयते वेञ्तंतुसंताने २९ रथः रम्यतेऽत्र रमुक्रीडायां रथःस्यंदनयानेऽपि

**अक्षोटकर्परालौद्वावंकोटेतुनिकोचकः पलाशेकिंशुकःपर्णोवातपोथोऽथवेतसे २९ रथाभ्रपुष्पविदुलशीतवानीरवंजुलाः द्वौपरिव्याधविदुलौनादेयीचांबुवेतसे ३०**

रजयः ॥ अभ्रपुष्पः अभ्रमिवाभ्रसमयेवापुष्पमस्य ॥ विदुलः वेत्तिविद्यतेवा ॥ शीतः शीतमस्यास्ति शीतमित्यपि शीतंतुपाग्वानीरबहुवारद्रुमेष्वितेत्यजयात् ॥ वानीरः वायति ओवैशोषणे वंशकंआसमंतान्नीरंयस्य ॥ वंजुलः व ञ्जति वजगतौ सप्तवेतसस्यवेतइतिख्यातस्य ॥ परिव्याधः परिविध्यते व्यधताडने परिव्याधस्तुपुंसिस्याद्वेतसेचद्रुमोत्पले ॥ विदुलः ॥ नादेयी नद्यांभवा नद्यादिभ्योढक् नादेयीशब्दःस्त्रियां नादेयीनागरंगेस्याज्जायायांजलवेतसे इत्युक्तत्वात् ॥ अंबुवेतसः अंबुनिजातोवेतसो शाक पार्थिवादिः इतिचत्वारिजलोत्पन्नवेतसस्य ३०

अस्तौसौभांजनोरक्तोरक्तपुष्पश्वेत मधुशिग्रुरित्युच्यते एके ॥ सौभांजनः शोभामनक्ति शोभांजनइत्यपिपाठः शिनोति शिञ्निशाने शिग्रुर्नाशाकभाने वरौभांज नमहीरुहे ॥ तीक्ष्णगंधः तीक्ष्णोगंधोऽस्य ॥ आक्षीवः आक्षीवति आक्षीवयतिवा क्षीष्टमदे अक्षीवइत्यपिपाठः ॥ मोचकः मोचयति मुच्लृमोक्षणे पंचशोगूल शोव गा शोवट इतिख्यातस्य ॥ अरिष्टः नरिष्टमस्मात् अरिष्टोलशुने निंबेफेनिलेकाककंकयोः रिष्टंक्षेमाशुभाभावेपुंसिखड्गेचफेनिले इतिमेदिनी ॥ फेनिलः फेनोऽ स्यास्ति ॥ हुरिठाइतिख्यातस्य ३१ बिल्वः बेलयति बिल्भेदने ॥ शांडिल्यः शांडिलस्यगोत्रापत्यंपुमान् शांडिल्यइवेतिवा ॥ शैलूषः शिलूषस्यअपत्यं शैलूषइवेति वा ॥ मालूरः मांलक्ष्मींपरेषांलुनाति ॥ श्रीफलः श्रीप्रदंफलंश्रीप्रियंवाफलमस्य शाकपार्थिवादिवत् श्रीफलःपुंसिमालूरेधात्रीनीलीकयोःस्त्रियां ॥ इतिपंचबिल्वस्य ॥

**सौभांजनेशिग्रुतीक्ष्णगंधकाक्षीवमोचकाः रक्तोसौमधुशिग्रुःस्यादरिष्टःफेनिलःसमौ ३१ बिल्वेशांडिल्यशैलूषौमालू रश्रीफलावपि प्लक्षोजटीपर्कटीस्यान्न्यग्रोधोबहुपाद्वटः ३२ गालवःशाबरोलोध्रस्तिरीटस्तिल्वमार्जनौ**

प्लक्षः प्रक्षरति क्षरसंचलने यद्वाप्लक्षते प्लक्षभक्षणे प्लक्षत्यधोगच्छतीतिवा ॥ जटी जटति जटसंघाते ॥ पर्कटी पृच्यते पृचीसंपर्के ॥ पर्कटीनूतनफलेयुगादौप्लक्षपादपइत्युक्तत्वात् इतित्रीणि पिंपर्योःनामा० न्यग्रोधः न्यक्रुणाद्धि रुधिरआवरणे न्यग्रोधस्तुपुमान्व्यामवटयोश्चशमीतरौ ॥ बहुपात् बहवःपादाअस्य ॥ वटः वटति वृटवेष्टने त्रीणिवटतरोः ३२ गालवः गालवस्यापत्यं गालवोमुनिभेदःस्याल्लोध्रवृक्षश्चकीर्तितः ॥ शाबरः शबराणामयं ॥ लोध्रः रुणद्धि रुधिर् आवरणे लोध्रोवश्यंकरेपुंसिकार्तिकेयेगणाधिपे इति ॥ तिरीटः तीर्यतेमलम नेन ॥ तिल्वः तिल्यतेऽनेनांगं तिलस्नेहे ॥ मार्जनः मार्जनंनद्वयोर्मार्ष्टौपुंसिस्याल्लोध्रशाखिनि इतिषट्लोध्रस्यनामानि तत्राद्यो श्वेतलोध्रे शेषारक्तलोध्रेइतिस्वामी ॥

आम्रः अम्यते अमगत्यादौ॥ चूतः चूष्यतेस्म चूषपाने पृषोदरादिः च्योततिरसमितिवा च्युतिरक्षरणे॥ रसालः रसमलति अलभूषणादौ इतित्रयः आम्रस्यनामानिशब्दाः असौ आम्रः अतिशयेनसौरभः अतिसौरभश्चेत् सहकारः सहकारयति मेलयति इत्येकनाम ३३ कुंभः कुंउंभति उंभपूरणे शकंध्वादिश्च कुंभेतिसंपातविगृहीतं कुंभःक्लीबंतुगुग्गुला विनिरभसः कुंभोलूः खलकं कुंभोलूखलकं कुंभोलूखलाकाराहस्तकोशान्निर्यातं कुंभोलूखलकंकुंभंकुंभोलूखलकंजरभिनिवानस्पतिः कुंभांस्त्रिहन्तिगुग्गुलाविविविश्वप्रकाशः॥ उलूखलकं उलूखलंलाति लादाने ततःसार्थेकः उलूखलेगुग्गुलौनक्लीबमुक्तमुदूखलमितिरुद्रः अस्मिन्पक्षेकुंभंचोदूखलमितिपाठः उदूखलंगुग्गुलेस्यादुलूखलेपिनद्वयोरितिमेदिनी॥ कौशिकः कोशेभवः कौशिकोनकुलेव्यालग्राहेगुग्गुलुशक्रयोः कोशेयोलूकयोर्यःस्याद्विश्वामित्रमुनावपि कौशिकीचंडिकायांचनदीभेदेचयोषितीति॥ गुग्गुलुः गोजति गु

**आम्रश्चूतोरसालोसौसहकारोऽतिसौरभः ३३ कुंभोलूखलकंक्लीबेकौशिकोगुग्गुलुःपुरः शेलुःश्लेष्मातकःशीतउद्दालोबहुवारकः ३४ राजादनंप्रियालःस्यात्सनकद्रुर्धनुःपटः**

जस्तेये गुडति गुडरक्षणे डलयोरेकत्वं पुरः पुरति पुरअग्रगमने पंचगुग्गुलुनामानि॥ शेलुः शिलति शिलउंछे॥ श्लेष्मातकः श्लेष्माणमतति अतसातत्यगमने॥ शीतः श्यायतेस्म श्यैङ्गतौ॥ उद्दालः उद्दालयति दलविदारणे॥ बहुवारकः बहून्वारयति रुज्वरणे पंचशेलुनामानिइतिख्यातस्य ३४ राजादनं राजभिरद्यते अदभक्षणे राजादनंक्षीरिकायांप्रियालेकिंशुकेपिचेतिप्रामाण्यं हितीयंतु राजादनंप्रसरकोराजातनदिवावनस्पतिः राजानमततीतिवाराजादनं॥ पियालः पीयते पीयुःसौत्रोधातुः पियालश्चप्रियालकइतिमाधवः॥ सन्नकद्रुः सन्नः लीनः कद्रुर्वर्णोस्य॥ धनुः धनुःप्रियालकद्रुमइतिरत्नकोशः धनुःपुमान्प्रियालेद्रौराशिभेदेशरासनइतिमेदिनी॥ धनुःप्रियालेनानस्त्रीराशिभेदेशरासनइति॥ पटः पटति अत्र पटःप्रियालवृक्षेनासकवेलेपुंनपुंसकमितिरभसः सप्तस्तंनामत्तु मतांतरे धनुःपटः धनुषइवपटोविस्तारोस्येति चत्वारिनामइतिख्यातस्य॥

श्रीपर्णिका श्रीः पर्णेष्वस्याः॥ कुमुदिका कौ मोदते मुदीहर्षे॥ कुंभी कुंभीवकुंभी असाधारकत्वात् दृश्निकायांचकुंभीस्यात्पाटलौकट्फलेपिचेतिदेवः कुंभी-स्त्री॥ कैटर्यः कैटंराति किटत्रासे अतितिक्तत्वात्॥ कट्फलः करति कटेवर्षावरणयोः कटूफलमस्य पंचकुंमल कुंभ्या इति कायफळइतिचख्यातस्य ४० क्रमुकः क्रामति क्रमुपादविक्षेपे क्रमुकः पट्टिकालोध्रेत्तुवाकेभद्रमुस्तके॥ पट्टिकाख्यः पट्टिकाआख्यायस्य॥ पट्टी पट्टोऽस्यास्तीति इन्नंतः पट्टःपेषणपाषाणेव्रणादीनांचबंधने॥ चतुःपथेऽथराज्ञादिशासनांतरपाटयोः यद्वा पट्टिःस्त्रीपटभेदेस्याल्ललाटेकुंभिकाद्रुमइत्युक्तत्वाच्च॥ लाक्षाप्रसादनः लाक्षाप्रसीदत्यनेन चत्वारिलोहितलोध्रभेदस्य॥ तूदः तुदति पापं तुदप्रेरणे तुदइत्यपिपाठः तत्रेद्वयं तुदति तुदव्यथने॥ यूपः युवंत्यनेन यूमिश्रणामिश्रणयोः इत्याद्यूत्यं ब्रह्मण्यः

**श्रीपर्णिकाकुमुदिकाकुंभीकैटर्यकट्फलौ ४० क्रमुकःपट्टिकाख्यःस्यात्पट्टीलाक्षाप्रसादनः तूदस्तुयूपःक्रमुकोब्रह्मण्यो ब्रह्मदारुच ४१ तूलंचनीपप्रियककदंबास्तुहलिप्रिये वीरवृक्षोऽरुष्करोऽग्निमुखीभल्लातकीत्रिषु ४२**

ब्रह्मणिवेदिकेसाधुः॥ ब्रह्मदारु ब्रह्मणोब्रह्मणिवादारु ४० तूलं तूलयति तूल्यतेवा तूलनिष्कर्षे तुलइत्यपिपाठः पुल्लिंगस्तूपिचौतूलः क्लीबंस्याद्ब्रह्मदारुणीतिरुद्रः षट्कंअश्वत्थाकारेवृक्षभेदेपारसापिंपळइतिमहाराष्ट्रभाषायांख्याते॥ नीपः णीञ्प्रापणे प्रीणाति प्रीञ्तर्पणे॥ कदंबः कदति कदःसौत्रोधातुर्हिंसार्थः॥ हलिप्रियः हलिनःप्रियः सुरायाअधिवासनात् चत्वारिकदंबइतिख्यातस्य॥ वीरवृक्षः वीरइववृक्षोदुःस्पर्शत्वात् वीरवृक्षस्तुभल्लातकार्जुनद्रुमयोःपुमान्॥ अरुष्करः अरुर्व्रणंकरोति॥ अग्निमुखी अग्निरिवमुखमस्याः भवेदग्निमुखीदेवविषेभल्लातकेस्त्रियां॥ भल्लातकी भल्लईवातवि अतसातत्यगमने गौरादिः चत्वारिबिबवाभिलावाइतिख्यातस्य

गर्दभांडः गर्दभंअमति अमगत्यादिषु अमंताड्डुः॥ कंद्रालः कंदरांलाति कंदरालःपुमान्गर्दभांडेप्लक्षतरावपि॥कपीतनः याःलक्ष्म्याःतनःईतनःकपीनांतनःकपीतनः कपीतनोग
र्दभांडशिरिषाम्रातकेषुच॥ सपार्श्वकः शोभनंपार्श्वमस्य॥प्लक्षः प्रक्षरति क्षरसंचलने प्लक्षोह्वीपेगर्दभांडेऽश्वत्थेजटिनिपक्षकइतिहेमः पंचगजहंड स्वालीम्पिरीक्षनिम्न्य
तस्य॥ तिंतिडी निम्यति तिमआर्द्रीभावे तिंतिडिस्वाम्लिकाचिंचातिंतिडीकाकपिप्रियेतिवाचस्पतिः॥चिंचा चिमित्यव्यक्तंशब्दंचिनोति चिञ्चयने॥अम्लिका अ
म्लोरसोस्यास्ति अम्लिकाचाम्लिकाचिंचातिंतिडीकाचतिंतिलाइतिचंद्रः त्रयंचिंचायाः॥पीतसारकः पीतः सारोऽस्य ४३ सर्जकः सृजति सृजविसर्गे यद्वा सर्ज्यते ष
र्जअर्जने असनः अस्यति असुक्षेपणे प्रियकोजीवकोसनइतिरत्नकोशः आसनंक्षेपणेक्लीबंपुंसिस्याज्जीवकद्रुमे पीठेभस्कंधयोः क्लीबमासनंनाजुजीवक इतिरुद्र

गर्दभांडेकंद्रालकपीतनसपार्श्वकाः प्लक्षश्चतिंतिडीचिंचाम्लिकाऽथोपीतसारके ४३ सर्जकासनबंधूकपुष्पप्रियकजीवकाः
सालेतुसर्जकार्श्याश्वकर्णकाःसस्यसंवरः ४४ नदीसर्जोवीरतरुरिंद्रद्रुःककुभोऽर्जुनः

रभसौ॥बंधूकपुष्पः बंधुकस्येवपुष्पाण्यस्य प्रिय
कः प्रीणाति प्रीञ्तर्पणे॥जीवकः जीवयति जीवप्राणधारणे षड्डुअसपाइतिख्यातस्य॥सालः सल्यते सल्गतौ पुंसिभूरुहमात्रेऽपिसालोवरणसर्जयोरितिरंत्यादौ
रभसः शालइत्यपिपाठः॥सर्जः॥कार्श्यः कृशतनूकरणे कृषति कृषविलेखने कार्ष्यइत्यपिपाठः॥अश्वकर्णकः अश्वस्यकर्णइवपत्रमस्य॥सस्यसंवरः सस्यैःसंव्रीयते वृ
ञ्वरणे पंचशालवृक्षस्य सालईइतिप्रसिद्धस्य ४४ नदीसर्जः नद्याःसर्जः॥वीरतरुः वीरश्चासौतरुश्च दृढकाष्ठत्वात्॥इंद्रद्रुः इंद्रस्यद्रुइवबाहुः॥ककुभः ककुभोदि
शःसंत्यस्य बहुविस्तरत्वात् ककुभोरागभेदेऽपिवीणांकेऽर्जुनपादपे॥अर्जुनः अर्ज्यते अर्जअर्जने पार्थस्तुककुभोजिष्णावितिविश्वकोशः पंच अर्जुनवृक्षस्यनामानि॥

एरंडः आ इरयति वायुविशेषः ईरणो कंपनेच॥ उरुबूकः उरुमहांतंवायति ओवैशोषणे उलूकादिषुनिपातितः॥ रुचकः रोच्यते रुचदीप्तौ क्वुन्प्रत्ययः॥ चित्रकः चित्रयति चित्रअद्भुतादौ॥ चंचुः चंचति चंचुगत्यर्थः॥ पंचांगुलः पंचअंगुलयोयस्य॥ मंडः मंडयति मंडिभूषायां आमलक्यांस्त्रियांमंडएरंडेमांत्वपिलयोरितिरभसः मंडःपंचांगुलेशाकेपुंसिक्लीवंतुवस्तुनि कश्चिदमंडमाह आमंडइत्यपि गंधर्वहस्तकोमंडआमंडोव्याघ्रपुच्छकइतितारपालः॥ वर्धमानः वर्धते वर्धछेदनपूरणयोः व्यडंबकः व्यडंमलमबयति अविभ्रंसने व्यडंबनइतिस्वामी इत्येकादशएरंडस्यनामानि याल्पास्वल्पाकाराशमीसशमीरइत्येकं॥ शमीशमयतिरोगान्

एरंडउरुबूकश्चरुचकश्चित्रकश्चसः चंचुःपंचांगुलोमंडवर्धमानव्यडंबकाः ५१ अल्पाशमीशमीरःस्याच्छमीसक्तुफलाशिवा पिंडीतकोमरुबकःश्वसनःकरहाटकः ५२ शल्यश्चमदनेशक्रपादपःपारिभद्रकः भद्रदारुद्रुकिलिमंपीतदारुचदारुच ५३

शमीसक्तुफलायांचशिविकायांचगुग्गुले॥ सक्तुफला सक्तुवत्फलमस्याः॥ शिवा शिवंकरोति त्रयंशम्याः॥ पिंडीतकः पिंडीतनोति अन्येभ्यो पीतिडः कन् पिंडीतकःस्यान्नगरेमदनाख्यमहीरुहे॥ मरुबकः मरुंवाति क्वुन् आकारलोपः॥ श्वसनः श्वसनंश्वसितेपुंसिमारुतेमदनद्रुमे॥ करहाटकः करैःहाटयति हटदीप्तौ ५२ शल्यः शलति शलगतौ॥ मदनः मदयति मदीहर्षग्लपनयोः षड्गोळाइतिख्यातस्य॥ शक्रपादपः शक्रस्यपादपः॥ पारिभद्रकः पारिनिंबःप्राप्तंभद्रमस्य पारिभद्रस्तुनिंबद्रौमंदारेदेवदारुणि॥ भद्रदारु भद्रंदारु भद्रदारुणिनक्लीबमित्यमरमाला॥ द्रुकिलिमं किलति किलश्वैत्यक्रीडनयोः बाहुलकात्किमच् द्रुश्चासौकिलिमं॥ पीतदारु पीतंचतत् दारुचपीतंदारु॥ दारु दीर्यते दृविदारणे पुंनपुंसकयोर्दार्वीतित्रिकांडशेषः ५३

पूतिकाष्ठं पूतिवत्काष्ठंच ॥ देवदारु देवस्यदारुनस्मिन् एतानिसप्तनामानि ॥ पाटलिः पाति दलति दलैर्वृक्षो सर्वधातुभ्यइन् पाश्चात्सेटलिश्च पाटलीइत्यपिपाठः ॥ पाटला पाटलाति पाटलापाटलौस्त्रीस्यादस्याःपुष्पेपुनर्नना ॥ अमोघा नमोघा अलिप्रियाविशालाग्राप्यमोघापाटलिर्द्वयोरितिवाचस्पतिः मोघेत्यपिपाठः तत्र स्त्रं मोहयति मोघास्त्रीपाटलावृक्षेमोघंत्रिषुनिरर्थकइतिरुद्रः ॥ काचस्थाली काचस्य कार्ष्ण्यस्य स्थाली पात्रं गुरुचरणास्तुकालास्थालीइतिपठंति तत्र काला स्थाली इतिपदयुग्मंज्ञेयं काला कालोवर्णोस्यास्ति कालातुकृष्णत्रिवृतारव्यामंजिष्ठानीलिकासुचेतिमेदिनी ॥ स्थाली तिष्ठति स्थागानिनिरस्तो स्थालीस्यात्पाटलोखयोरितिमेदिनीविश्वप्रकाशौ ॥ फलेरुहा फलेरोहति ५४ कृष्णवृंता कृष्णंवृंतमस्याः कृष्णवृंतापाटलायांमाषपर्ण्यांचयोषिति ॥ कुबेराक्षी कुबेरस्येवा-

**पूतिकाष्ठंचसप्तस्युर्देवदारुण्यथद्वयोः पाटलिःपाटलामोघाकाचस्थालीफलेरुहा ५४ कृष्णवृंताकुबेराक्षीश्यामातुमहिलाह्वया लतागोवंदनीगुंद्राप्रियंगुःफलिनीफली ५५ विष्वक्सेनागंधफलीकारंभाप्रियकश्चसा**

क्षियस्याः सप्तपाटलायाः पाडलीइतिख्यातायाः तत्रपाटलिर्द्वयोः ॥ श्यामा श्यामोवर्णोस्त्यस्याः श्यामोवटेप्रयागस्यवारिदेरुद्रदारुके ॥ पिकेचकृष्णहरितेपुंसिस्यात्तद्वतित्रिषु ॥ महिलाह्वया महिलायाःस्त्रियाःआह्वयइवआह्वयोयस्याः ॥ लता लतति लतिःसौत्रोधातुः ॥ गोवंदनी गविभूमौवंद्यते वदिअभिवादनस्तुत्योः ॥ गुंद्रा गुंद्रयति गुद्रिक्षोदे ॥ प्रियंगुः प्रियंगच्छति ॥ फलिनी फलमस्त्यस्याः फलिन्यग्निशिखायांचफलिन्यांस्त्रीफलेत्रिषु ॥ फली ५५ विष्वक्सेना विष्वक्सिनोति षिञ्बंधने विष्वक्सेनाफलिन्यांस्याद्विष्वक्सेनोजनार्दने ॥ गंधफली गंधवत्फलमस्याः पाककर्णेनिङीष् ॥ कारंभा ईषद्रंभाकारंभा ॥ प्रियकः प्रीञ्तर्पणे वुन् अकादेशोइयङ् द्वादशप्रियंगुरक्षेवाघांटीइतिख्याते ॥

मंडूकपर्णः मंडूकइवपर्णमस्य॥पत्रोर्णः पत्रेऊर्णाऽस्य पत्रोर्णंधौतकौशेयंक्लीबंस्याच्छोणकेपुमान्॥नटः नटति नटन्नृतौ॥कट्वंगः कटून्यंगान्यस्य॥टुंटुकः टुंटु इतिकायति कैशब्दे आतोनुपसर्गेकः ५६ स्योनाकः सीव्यति षिवुतंतुसंताने सेनाकनि अकयतेवा अककुटिलायांगतौ स्योनः किरणसूर्ययोः श्योनाकइत्यपिपा ठः॥शुकनासः शुकनासेवपुष्पमस्यास्ति॥ऋक्षः ऋषति ऋषीगतौ ऋक्षःपर्वतराजेस्यान्भल्लुकेशोषणेपुमान् दीर्घवृंतः दीर्घवृंतमस्य॥कुटंनटः कुटन् च क्रीभवन् नटति नटस्पंदने॥शोणकः शोणति शोणवर्णे गुरुचरणास्तु शोनकइत्याहुः तत्रैवं शवति॥अरलुः द्वादशदंडिका दिंडाइतिख्यातस्य॥तिष्यफला

मंडूकपर्णपत्रोर्णनटकट्वंगटुंटुकाः ५६ स्योनाकशुकनासर्क्षदीर्घवृंतकुटंनटाः शोणकश्चारलोतिष्यफलात्वामलकीत्रिषु
५७ अमृतावयस्थाचत्रिलिंगस्तुविभीतकः नाक्षस्तुषःकर्षफलोभूतावासःकलिद्रुमः ५८ श्रीराधाकृष्णाभ्यांनमः

तिष्ये कलियुगेफलमस्याः॥आमलकी आमलते मलधारणे ५७ अमृता नम्रियंतेऽनया अमृतामागधीपथ्यागुडूच्यामलकीषुच॥वयस्था वयोयौवनंति ष्ठत्यनया वयस्थातुस्त्रियांब्राह्मीगुडूच्यामलकीषुच सूक्ष्मैलायांचकाकोल्यांपथ्यायांतरुणेषुचेत्युक्तत्वात् त्रिष्वित्युक्तेः आमलकः आमलकं चत्वारिआ मलक्याः॥विभीतकः विगतंरोगभयमस्मात्॥अक्षः अक्षति अक्षूव्याप्तौ अक्षोज्ञानात्मशकटावयवेषुसपाशके रुद्राक्षद्राक्षयोःसर्पेविभीतकतरावपि च- क्रेवर्षेपुमान्क्लीबमक्षंसौवर्चलेंद्रियइतिहेमः॥तुषः तुष्यति तुषतुष्टौ॥कर्षफलः कर्षफलमस्य॥भूतावासः भूतानामावासः॥कलिद्रुमः कलेर्द्रुमः षट्धा दिंगइतिख्यातस्य क्वचिदयंबेहडाइतिख्यातः ५८

अभया नभयमस्याः अभयास्त्रीहरीतक्यामुशीरेत्वनपुंसकं अभयामलकीगौरीफेरुसक्कुफलासत्वेतिमेदिनी॥अव्यथा नव्यथायस्याः अव्यथोनिर्व्यथेसर्पे चारटीपथ्ययोः स्त्रियामित्युक्तत्वात्॥पथ्या पथोऽनपेता॥कायस्था कायस्तिष्ठत्यनया अत्रवयस्थेत्यपिपाठः॥पूतना पूतंकरोति पूतनातुहरीतक्यांदानवीरा गभेदयोरित्युक्तत्वात्॥अमृता नमृतंयस्याः॥हरीतकी हरिर्वर्णइतोयस्याः॥हैमवती हिमवतिजाता॥चेतकी चेतयति चितिसंज्ञाने॥श्रेयसी अतिप्रशस्ता शिवा शिवंकरोति शिवोमोक्षेमहादेवेकीलेग्रहयोगयोरितिविश्वः एकादशहरिडाइतिख्यातस्य ५९ पीतद्रुः पीतश्चासौद्रुश्च॥सरलः सरति सृगतौ॥पूतिकाष्ठं पूतेःपावनस्यकाष्ठंपूतिकाष्ठं त्रयंसरलस्य सरलदेवदारइतिख्यातस्य॥द्रुमोत्पलः द्रुमेउत्पलमिवपुष्पंयस्य॥कर्णिकारः कर्णिकामियर्ति ऋगतौ॥परि

**अभयात्वव्यथापथ्याकायस्थापूतनामृता हरीतकीहैमवतीचेतकीश्रेयसीशिवा ५९ पीतद्रुःसरलःपूतिकाष्ठंचाथद्रुमोत्पलः कर्णिकारःपरिव्याधोलकुचोलिकुचोडहुः ६० पनसःकंटकिफलोनिचुलोहिज्जलोंऽबुजः**

व्याधः परिविध्यति व्यधताडने परिव्याधस्तुपुंसिस्याद्रुतसेचद्रुमोत्पले त्रीणिकर्णिकारस्यपांगाराइतिख्यातस्य॥लकुचः लक्यते लकआस्वादने॥लिकुचः पृषोदरादिः॥डहुः दहति दहभस्मीकरणे डहूरित्यपीतिस्वामीचरणाः त्रयंओंटइतिख्यातस्य क्षुद्रपनसस्येत्यपिमतं ६० पनसः पनाय्यतेस्तूयतेपनसः पनसःकंटकिफलेकंटकेवानरांतरे॥स्त्रियांरोगप्रभेदेस्याद् पणसइत्यपिपाठः॥कंटकिफलः कंटकाःसंत्यस्य कंटकिफलमस्येतिवा॥द्वेपनसइतिख्यातस्य॥निचुलः निचोलति चुलसमुच्छ्राये निचुलस्तुनिचोलेस्यादिज्जलाख्यमहीरुहे निचुलिज्जलहिज्जलाइतिरभसः॥हिज्जलः हिनोति हिगतौरद्धौच क्विपतुक् हितंजलमस्येतिवा इज्जलइत्यपिपाठः एति इण्गतौ इत् जलमस्य॥अंबुजः अंबुनिजातः जनीप्रादुर्भावे त्रयंइजरइतिख्यातस्य स्थलवेतसस्येत्यपिकश्चित् निचुलस्थलवेतसइतिशब्दार्णवात् समुद्रफलस्येत्यपिकेचित्॥

काकोदुंबरिका काकप्रिया उदुंबरी संज्ञायांकन्॥फल्गुः फलति फलनिष्पत्तौ॥मलयूः मलयंयाति शुजुगुप्सायां यद्वा मलते मलधारणे मलपूः मलापूरित्यपिपाठो॥ज घनेफला जघनेफलंयस्याः चलारिकाळाउंबर वोरवाटा खर्वत इतिख्यातस्य पाश्चात्यपुरातनसाहचर्यात्फल्गुशब्दस्तुस्त्रीलिंगे ६१ अरिष्टः नरिष्टमशुभमस्मा त्॥सर्वतोभद्रः सर्वतोभद्रंयस्मात् सर्वतोभद्रइत्युक्तःकाव्यचित्रेगृहांतरे निंबेनासर्वतोभद्रागंभारिनटयोषितोः इत्युक्तत्वात्॥हिंगुनिर्यासः हिंग्वाकारोहिंगु- गंधोवानिर्यासोऽस्य हिंगुनिर्यासइत्येषनिंबेहिंगुरसेपिचेतिमेदिनी॥मालकः मलते मलधारणे॥पिचुमंदः पिचुंमंदयतीति॥निंबः निंबतिस्वास्थं॥णिविसेच ने बवयोरेकत्वं षट्निंबस्य॥पिच्छिला पिच्छास्त्यस्याः॥अगुरु नगुरुर्यस्मात् अगुरुक्लीबेशिंशपायामितिरुद्रः अगुरुःस्याच्छिंशपायामितिविश्वप्रकाशः अगु

काकोदुंबरिकाफल्गुर्मलयूर्जघनेफला ६१ अरिष्टःसर्वतोभद्रहिंगुनिर्यासमालकाः पिचुमंदश्चनिंबेथपिच्छिलागुरुशिंशपा
६२ कपिलाभस्मगर्भासाशिरीषस्तुकपीतनः भंडिलोप्यथचांपेयश्चंपकोहेमपुष्पकः ६३

रुपदंतुपुन्नपुंसकं॥शिंशपा शिमित्यव्यक्तंशब्दं शब्देनवाशायति इत्याहुर्यु अगुरुशिंशपेत्येकंपदंस्वामीइत्याह याकपिलाकपिलवर्णपुष्पा साभस्मगर्भोच्यते भस्म गर्भेयस्याः शकुसारत्वादित्येके चलारिशिसवाइतिख्यातस्य॥शिरीषः शृणाति शीर्यतेवा शृहिंसायां॥कपीतनः तनोति तनुविस्तारे कपीनांकपेर्वर्णस्यवाइति नःकपीतनः इत्सीविस्तारकः॥भंडिलः भंडते कल्याणंकरोति भडिकल्याणे रलयोरेकत्वाद्भंडिरोपि भंडिलोभंडिरोनेतिवाचस्पतिः त्रयंशिरसइतिख्यातस्य॥चांपेयः चंपायाःअपत्यं ढक् चांपेयश्चंपकेस्वर्णेकिंजल्केनागकेसरे॥चंपकः चंपयति चंप्यतेवा॥हेमपुष्पकः हेमवर्णपुष्पमस्य त्रयंकुडचांफा सोनचांफा इतिख्यातस्य ६३

एतस्यचंपकस्यकलिकायाः गंधफलीइत्येकं गंधः फलंसाध्यमस्याः॥ केसरः केसराःसंत्यस्य मत्वर्थेअच् केसरंहिंगुनिर्क्वाबंकिंजल्केनस्त्रियांपुमान् सिंहेछटायांपुन्नागेबकुले नागकेसरइत्युक्तत्वात्॥ बकुलः बंकते बकिगत्यर्थः द्वे ओंवळ बकुळ इतिख्यातस्य॥ वंजुलः वजति वजगतौ॥ अशोकः नशोकोऽस्मात् अशोकस्त्रिषुनिःशोकेपुंसि कंकेलिपादपे स्त्रियांतुकटुरोहिण्यांपारदेस्यान्नपुंसकमित्युक्तत्वात् इतिद्वेअशोकस्यनामनी॥ करकः करोतिदोषाभावं वुन्प्रत्ययः करकस्तुपुमान्पक्षिविशेषेदाडिमेपिच द्वयोर्मेघोपलेनस्त्रीकरकंचकमंडलावित्युक्तत्वात्॥ दाडिमः दलनंदालः दलविदारणे दालेननिर्वृत्तः डलयोरेकत्वं दाडिंबइत्यन्यत्र दाडिंबसारपिंडारस्वाद्वम्लशुकवल्लभा

**एतस्यकलिकागंधफलीस्याद्थकेसरे बकुलोवंजुलोशोकेसमौकरकदाडिमौ ६४ चांपेयःकेसरोनागकेसरःकांचनाह्वयः**
**जयाजयंतीतर्कारीनादेयीवैजयंतिका ६५ श्रीपर्णमग्निमंथःस्यात्कणिकागणिकारिका** इतिरमसः डालिमइत्यपि द्वे दाडिमस्य डा

लिंबइतिख्यातस्य ६४ चांपेयः चंपायाअपत्यं चांपेयश्चंपकेस्वर्णेकिंजल्केनागकेसरे॥ केसरः केसराःसंत्यस्य मत्वर्थेअच्॥ नागकेसरः नागाख्यः केसरः॥ कांचनाह्वयः कांचनस्यआह्वयइवआह्वयोयस्य चत्वारिनागचांफाइतिख्यातस्यनामानि कांचनाह्वयः हेमपर्यायनामकइत्यर्थः॥ जया जयति॥ जयंती जयंतीवृक्षभिद्योर्यामिंद्रपुत्रीपताकयोः॥ तर्कारी तर्कमृच्छति ऋगतौ॥ नादेयी नद्यांभवा॥ वैजयंतिका विजयंतस्येदंतस्येदमित्यण् स्वार्थेकन् पंचपंचांहाकळ थोरऐरणइतिख्यातायाः ६५ श्रीपर्णं श्रीः पर्णेषुयस्य॥ अग्निमंथः अग्निमथ्नाति मंथविलोडने॥ कणिका कणति कणशब्दे कणाःसंत्यस्यांवा इत्याद्यूह्यं॥ गणिकारिका गणिंकरोति कर्मण्यण् स्वार्थेकन्॥ ७ ७ ७ ७

जयः जयतीतिपचाद्यच् पंचनखेलइतिख्यातस्य दशाप्येकस्यपर्यायाइतिस्वामीचरणाः॥ कुटजः कूटेशृंगेजायतेस्म पृषोदरादित्वात् ह्रस्वः॥शक्रः शक्नोति श
क्रशब्दो शक्रः पुमान्देवराजेकुटजेऽर्जुनभूरुहइत्युक्तत्वात्॥वत्सकः वदति वद्व्यक्तायांवाचि सप्रत्ययेस्वार्थेकन्॥गिरिमल्लिका इवार्थेकन् चत्वारिकुडाइतिप्रसि
द्धस्य ६६ एतस्यैवकुटजस्यफलेकलिंगं कलिंगन्छति अंतर्भावितण्यर्थोगमिः॥इंद्रयवं इंद्रसंज्ञस्यवृक्षस्ययवं यवाकारबीजत्वात्॥भद्रयवं भद्रंचतत्यवंच कलिंगं
द्रयवः पुमानित्यमरमाला॥कलिंगा तत्रैवस्त्रीकांडेपाठात्॥कृष्णापाकफलः कृष्णापाकंफलमस्य अविग्नः ओविजीभयचलनयोः आङ्पूर्वः आविग्नइत्यपि॥सुषेणः

**जयोऽथकुटजःशक्रोवत्सकोगिरिमल्लिका ६६ एतस्यैवकलिंगेंद्रयवभद्रयवंफले कृष्णापाकफलाविग्नसुषेणाःकर**
**मर्दके ६७ कालस्कंधस्तमालःस्यात्तापिच्छोप्यथसिंदुके सिंदुवारेंद्रसुरसौनिर्गुंडींद्राणिकेत्यपि ६८**

शोभनासेनायस्य॥शुष
सिनोति षिञ्बंधने॥करमर्दकः करंमृद्गाति मृदक्षोदे चत्वारिकरमर्दकस्य करवंदइतिख्यातस्य ६७ कालस्कंधः कालःस्कंधोऽस्य कालस्कंधस्तमालःस्यात्सिंदुके
जीवकद्रुमइत्युक्तत्वात्॥तमालः ताम्यति तमुग्लानौ तमालस्तिलकेखङ्गेतापिच्छेवरुणद्रुमे॥तापिच्छः तापिनं छादयति छदअपवारणे त्रयंतमालस्य॥
सिंदुकः स्यंदते सिंदुवारः श्वेतपुष्पः सिंधुकः सिंधुवारितः॥इंद्रसुरसः इंद्रस्यसुरसः॥निर्गुंडी निर्गुंडति शुंडरक्षायां नैर्गुंडेन्द्रः इगुपधेतिकः पृषोदरादिः निर्गुंडीतु
शेफाल्यांसिंदुवारद्रुमेपिचेतिहेमः॥इंद्राणिका इंद्रमाणयति इंद्राणीकर्णोन्मीणानीन्द्रायोः सिंदुवारयोः पंचसिंदुवारस्य निर्गुंडी निगडी निर्गुंडी इतिख्यातस्य ६८

वेणी वेणीव देवताडेपिवेणीस्याद्वेण्यामपियोषितीतिरभसः ॥ गरा गृण्हाति गृशब्दे खराइत्यपिगः ॥ देवताडे खरातीक्ष्णोनिकुम्भ्यान्द्रंदंतेपुमानितिरभसः ॥ गरी अग रीइत्यपिपदं खरागरीइतिसमस्तमपिपदं मूषिकाविषजत्वात्गरागरीइत्येकंपदं गरमागिरति नबैवं जीमूतकोदेवदाटोदकनेशोगरागरीइति ॥ देवताडः देवंइंद्रियंताड यति तडआघाते देवोमेघेसुरेराज्ञिस्यान्नपुंसकमिंद्रिये जीमूतः जीमूतइव जीमूतोद्रौधनिकरेदेवताडेपयोधरे पंचदेवताडस्यदेवताली देवडांगरी इतिख्यात स्य ॥ श्रीहस्तिनी श्रीहस्तोविद्यतेयस्याः इत्याचूर्ण ॥ भूरुंडी भुवंरुंडयति आच्छादयति हे हस्तिकर्णीभपत्रस्यशाकभेदस्य सिरिहस्तिनी थोरकुरडू इति ख्यातस्य ॥ तृणशून्यं तृणशून्यंमल्लिकायांतथास्याल्केतकीफलइतिविश्वमेदिन्यौ तृणशून्येगुल्मेसाधु तत्रसाधुरितियत् ॥ मल्लिका मल्लते गंधंमल्यतेना म

**वेणीगरागरीदेवताडोजीमूतइत्यपि श्रीहस्तिनीतुभूरुंडीतृणशून्यंतुमल्लिका ६९ भूपदीशीतभीरुश्वसैवास्फोटावनोद्भवा शेफालिकातुसुवहानिर्गुंडीनीलिकाचसा ७०**

धारणे मल्लिकोहंसभेदेस्यात्तृणशून्येपिमल्लिकेतिरुद्रः ६९ भूपदी भुविपदमस्याः ॥ शीतभी रुः शीताद्भीरुः शतभीरुरित्यपिपाठः मल्लिकाशतभीरुश्चगवाक्षीमद्रमल्लिका शीतभीरुर्मदयंतीभूपदीतृणशून्यकमितिवाचस्पतिः चत्वारिमल्लिकाया मोगरीइतिख्यातायाः ॥ सैवमल्लिका वनोद्भवा वनेउद्भवोयस्याः आस्फोटेत्युच्यते एकंरानमोगरीइतिख्यातस्य आस्फोटयति स्फुटविकसने आस्फो टाविष्णुक्रांतायांवनमल्लार्कपर्णयोरितिरभसः आस्फोटस्तुपुमानर्कपर्णेस्यात्कोविदारके आस्फोतेत्यपि आस्फोतागिरिकर्ण्यांवनमल्यांचयोषितीतिमेदिनी ॥ शेफालिका शेरतेशेफाःअलयोस्यां सार्थेकन् ॥ सुवहा सुष्टुवहत्यामोदं वहप्रापणे निर्गुंडी ॥ नीलिका नीलादेषधोःष्कन् चत्वारिकृष्णपुष्पायाः निर्गुंड्याः शर्नानिर्गुंडीइतिख्यातायाः ७०

इयंश्वेतपुष्पा असौनिर्गुंडीसिता श्वेतसुरसा शोभनोरसोऽस्याः श्वेताचासौसुरसाचेति भूतवेशीइत्युच्यते भूतानिविशति विशप्रवेशने इयंकातरीनिर्गुं-
डीइतिख्याताः॥ मागधी मगधदेशेभवा मागधीमगधोद्भूतेशुक्लजीरकबंदिनोः वैश्यतः क्षत्रियापुत्रेमागधीस्यात्तुपिप्पली॥ गणिका विन्नापहारित्वाद्गणि
कासादृश्यं॥ यूथिका यूथमस्त्यस्याः यूथिकास्थानकेपुष्पविशेषेपिचयोषिति॥ अंबष्ठा अंबेवमातेवतिष्ठति ङ्यापोरिति ह्रस्वः षत्वंच अंबष्ठोदेशभेदेऽपिवि
प्राद्वैश्यासुतेपिच अंबष्ठाप्यम्ललोण्यांस्यात्पाठायूथिकयोरपि इतिविश्वः चत्वारियूथिकायाः जुईइतिख्यातायाः॥ सायूथिकापीतपुष्पाचेद्धेमपुष्पिकास्यात्
इत्येकं ७१ अतिमुक्तः मुक्तान् विरक्तान् अति॥ पुंड्रकः पुंडति पुंड्यतेवा पुंडिखंडने रक्प्रत्ययेस्वार्थेकन्॥ वासंती वसंतेपुष्प्यति कालादिति अण् ङीप्॥ माधवी

सिताऽसौरवतसुरसा भूतवेश्यथमागधी गणिकायूथिकांबष्ठासापीताहेमपुष्पिका ७१ अतिमुक्तः पुंड्रकः स्याद्वासंतीमा
धवीलता सुमनामालतीजातिः सप्तलानवमालिका ७२

मधौपुष्प्यति पूर्ववत्॥ लता पंच कुंद
भेदस्य कुसरीइति कस्तूरमोगरा मधुमाधवीइतिख्यातस्य॥ अतिमुक्तादिद्वयंमल्लिकाभेदस्येत्येके माधवीलताइत्येकंपदमपि॥ सुमनाः सुष्ठुमन्यते मनज्ञाने यद्वा
शोभनंमनोऽस्याः स्त्रियांसुमनसोभूम्नियुष्पेजातौतुभेदतः तत्रसुमनाः सांतः टाबंतोपि तत्रैवं सुमनायाश्चपत्रेणेतिसुश्रुतेर्दर्शनात्॥ मालती मालक्ष्मीं लतति तल
सौत्रोवेष्टनार्थः॥ जातिः जायते जनीप्रादुर्भावे जातीइत्यपिपाठः जातीफलेचमालत्यामितिमेदिनी त्रीणिजातेः जाईचमेलीमोबीश्वेतजाईपीतवर्णजाईइतिख्याता
याः॥ सप्तला सप्तमनोबुद्धींद्रियाणिलाति लाआदाने नवमालिका नवामालायस्याः द्वेनेवाळी थोरमोगरा बटमोगरा वेलमोगराइतिख्यातायाः ७२

माघ्यं माघेसाधु माघेभवंदिगादित्वाद्यदितिप्रांचः॥कुंदं कुंभुवंदायतिद्यतिवा देपशोधने दोअवखंडनेवा माघ्यः कुंदः कुरंटकइतिपुंस्कांडेरत्नकोशात् कुंदोमाघ्येस्त्रीमुकुं
दभ्रमिभेद्यंतरेषुचेतिमेदिनी इकुंदस्य॥रक्तकः रक्तपुष्पत्वात्स्वार्थेकन्॥बंधूकः बध्नातिचित्तं बंधबंधने बंधुकंबंधुजीवेस्यात्बंधुकःपीतसारके॥ बंधुजीवकः बंधुरिव
जीवंजलंयस्य समासांतःकप् त्रीणिबंधुकस्यधुपारीइतिख्यातस्य॥सह्या सहते आतपं षहमर्षणे॥कुमारी कुमारक्रीडायांअच् गौरादिः कामयंते कमुकांतौ इत्याद्यू-
त्यं॥तरणिः तरंत्यनया तृप्लवनतरणयोः॥द्युमणौतरणिः पुंसिकुमारीनौकयोःस्त्रियां त्रीणिकुमारीइतिकांटेशेवंती शेवंतीगुलाबइतिचख्यातायाःकुमार्याःनामानि॥अ-
म्लानः नम्लायतिसः अम्लानस्त्वमलेपिंडीभेदइतिहेमः॥महासहा महतीचासौसहा महासहामाषपर्ण्यामम्लानेपिचयोषिति इआबोलीइतिख्यातायाः तस्मिन्अ

माघ्यंकुंदंरक्तकस्तुबंधूकोबंधुजीवकः सहाकुमारीतरणिरम्लानस्तुमहासहा ७३ तत्रशोणेकुरबकस्तत्रपीतेकुरंटकः नी
लाझिंटीद्वयोर्बाणादासीचार्तगलश्चसा ७४ सैरीयकस्तुझिंटीस्यात्तस्मिन्कुरबकोऽरुणे

म्लानइत्येकंकुरंटकमात्रस्य कांटेशेवंतीथोररा
नशेवंतीइत्याख्यातायाइतिसिद्धाः ७३ तत्राम्लाने शोणे रक्ते कुरबकइत्येकं आलीनांकुत्सितईषद्वोत्राल्पमकरंदत्वात् कुरुबकइत्यपिपाठः॥तत्राम्लानेपीतवर्णेकुरंटकइ
त्येकं कौःरुंटकः ण्वुल् रुटिस्तेये कुर्यते कुरछेदने॥नीली नीलवर्णायाझिंटी तत्रबाणा वण्यते वणशब्दे कर्मणिघञ् बाणातुबाणमूल्येस्त्रीनलझिंट्यांपुनर्द्वयोः॥दासी द
स्यते दसुउपक्षये दासीबाणेलिकोशः कर्मणिघञ् गौरादिः॥आर्तगलः आर्तःक्षीणेगलति गलअदने इतित्रयं॥द्वयोरित्युक्तेर्बाणइत्यपि नीलाझिंटीनीलझिंटेत्यपिपाठः॥
सैरीयकः सीरेभवः कर्षः तत्रभवइत्यण् ततोढ्ञ् स्वार्थेकन् सैरीयकःसहचरइतिकोशांतरात्॥झिंटी झिमितिरटति पृषोदरादिः द्वयंझिंटीमात्रस्य कोरांटीइतिख्या० तस्मिन्सैरी
यकेऽरुणे रक्तवर्णे कुरबकइत्येकं॥

या पीतपुष्पाझिंटीसाकुरंटकइत्युच्यते तस्मिन्कुरंटके सहचरीत्यपि सहचरति पचाद्यच् टित्वान्ङीप् द्वयोरित्युक्तेसहचरइत्यपि ७५ ओड्रपुष्पं आ ईषत् उनत्ति उंदीक्लेदने स्फायितंचीतिरक् बाहुलकाद्रस्यडलं ओड्रंपुष्पंयस्य ओड्रपुष्पेपितद्वृक्षेपिजपाशब्दःप्रकीर्तितइतित्रिकांडशेषः॥ जपापुष्पं जपायाःपुष्पं द्वेजास्वंदइति ख्याते॥ जवेत्यपि जवायांतुजपाक्रियामितिधर्मदासः ओड्रपुष्पस्यवृक्षस्यापिचजवेत्यभिधानं॥ यत् तिलस्यपुष्पंतद्वज्रपुष्पं एकं वज्रमिवपुष्पं॥ प्रतिहासः प्र तीपोहासोस्य प्रतीहासइत्यपिपाठः॥ शतप्रासः शतंप्रासाःपुष्पाणियस्य इत्याद्यूह्यं॥ चंडातः चंडमततिअतसातत्यगमने॥ हयमारकः हयान्मारकः ७६

पीतावुरंटकोझिंटीतस्मिन्सहचरीद्वयोः ७५ ओड्रपुष्पंजपापुष्पंवज्रपुष्पंतिलस्ययत् प्रतिहासशतप्रासचंडातहयमारकाः ७६ करवीरेकरीरेतुक्रकरग्रंथिलावुभौ उन्मत्तःकितवोधूर्तोधत्तूरःकनकाह्वयः ७७

करवीरः करवीरयति वीरविक्रांतौ करवीरःकृपाणेस्याद्दैत्यभेदाश्वमारयोः पंचकंकरवीरस्यकण्हेरइतिख्यातस्य॥ करीरः करिणंईरयति वंशांकुरेकरीरीस्त्रीवृक्ष भिद्घटयोःपुमान्॥ क्रकरः ग्रंथिलः ग्रंथिरस्यास्ति ग्रंथिंलातिवा त्रीणिकरीरस्य॥ उन्मत्तः उन्मत्तयति॥ कितवः कितवाःसंत्यस्य इत्याद्यूह्यं॥ धूर्तः धूर्व्यते स्म धुर्वीहिंसायां इत्याद्यूह्यं॥ धत्तूरः धत्तूरस्तुस्मृतोधूर्तोदेविताकितवःशठइतिस्वामी धूसति धूसकांतिकरणे तुरगतित्वरणयोः इगुपधेतिकः धूःक्विप् इत्या द्यूह्यं॥ (धुस्तूरः। धुस्तूरः। धूस्तूरः। धुत्तूरः। धुस्तुरस्तुपुंडरीशोधुस्तूरः कनकाह्वयइतिशब्दार्णवः॥ उन्मत्तउन्मादवतिधुत्तूरमुचुकुंदयोरितिविश्वप्रकाशः॥ मद नस्मरवसंतद्रुमिद्धूस्तूरसिक्थकइतिमेदिनी) कनकाह्वयः कनकमाह्वयोयस्य कनकंहेम्निपुंसिस्यात्किंशुकेनागकेसरे धत्तूरेकांचनारेचकालीयेचंपकेपिच ७७

मातुलः मास्ति नास्तितुलाऽस्य माश्रीतुलास्येतिवा कनकनामकत्वात् मातुलोव्रीहिभिन्मात्मात्रोश्रमदनद्रुमे॥मदनः मदयति मदीहर्षग्लेपनयोः सप्तधत्तूरस्यनामानि अस्यधत्तूरस्यफलेमातुलपुत्रकइत्येकं॥ फलपूरः फलेनपूर्यते पूरिआप्यायने एवंबीजपूरः॥ रुचकः रोचते रुचदीप्तौ अभीप्सितौच रुचकोबीजपूरेनविष्के दन्तकपोतयोः॥ मातुलुंगकः मातुश्चासौलुंगश्च चत्वारिमातुलुंगस्यमहाळुंगइतिख्यातस्य ७८ समीरणः सम्यक् ईरयति ईरगतौ समीरणस्तुपवनेपथिकेनपणिज्जके॥ मरुबकः मरौवाति आवइविकेस्वार्थेकन्॥ प्रस्थपुष्पः प्रस्थेसानौपुष्यति पुष्पविकसने॥ फणिज्जकः फणिर्जातोऽस्यात् पृषोदरादिः इत्याद्यूह्यं॥ जंबीरः

मातुलोमदनश्चास्यफलेमातुलपुत्रकः फलपूरोबीजपूरोरुचकोमातुलुंगके ७८ समीरणोमरुबकःप्रस्थपुष्पः फणिज्जकः
जंबीरोप्यथपर्णासःकठिंजरकुठेरकौ ७९ सितेऽर्जकोत्रपाठीतुचित्रकोवन्हिसंज्ञकः

जम्यते जमुअदने वीरयति वीरविक्रांतौ जम्चासौवीरश्च जंबीरः प्रस्थपुष्पेस्यात्तथादंतशठद्रुमइति जंभीरइत्यपि पंचदेशांतरेजंबीरइतिख्यातस्य स्वल्पपर्णस्यपर्णासभेदस्य श्वेतमरवाइतिचख्यातस्य॥ पर्णासः पर्णान्यस्यति असुक्षेपणे यद्वा पर्णैरसति अस्दीप्तौ॥ कठिंजरः कठिणंजरयति पृषोदरादिः॥ कुठेरकः कुंठति कुंठप्रतिघाते एरक्प्रत्ययः कन्च त्रीणिपर्णासस्य आजवलेतिबाबरीइतिख्यातस्य ७९ अत्रपर्णासेसितेकांडपुष्पाभ्यांश्वेतेअर्जकइत्येकं॥ अर्जयति अर्जअर्जने ण्वुल्॥ पाठी पाठोऽस्यास्ति॥ चित्रकः चित्तंबुद्धिंत्रायते त्रैङ्पालने कप्रत्ययेस्वार्थेकन्॥ वन्हिसंज्ञकः वन्हिःसंज्ञायस्य॥ तत्रपाठेइन्नंतः वन्हिःपर्यायनामकइत्यर्थः अयंचित्रकस्यचिताइतिख्यातस्य

अर्काह्वः अर्कआह्वयस्य अर्कोर्कपर्णस्फटिकेरवौताम्रेदिवस्पतौ॥वसुकः वसति वसनिवासे उप्रत्ययेस्वार्थेकन् वसुकंरोमकेपुंसिशिवमल्ल्यर्कपर्णयोः॥आस्फोटः आ-स्फोटयति स्फुटिरविकसने आस्फोतइत्यपि टकारस्यतकारः पृषोदरादित्वात् आस्फोनस्तुपुमानर्कपर्णेस्यात्कोविदारके आस्फोतागिरिपर्ण्यांचवनमल्ल्यांचयोषितीति मेदिनी॥गणरूपः गणाःबहूनिरूपाण्यस्य नानात्वात्॥विकिरणः विकिरति कॄविक्षेपे विविधाःकिरणाः यस्येत्यन्ये अन्येषामपीतिदीर्घः ८० मंदारः मदानियर्ति कर्मण्यण्॥अर्कपर्णः अर्कवत्पर्णानियस्य इतिसप्तअर्कस्यरुईइतिख्यातस्यनामानि॥अत्रशुक्ले ऽलर्कः अलति अलभूषणादौ क्विप् अल्चासावर्कश्च॥प्रतापसः प्रतापंचसुस्तेजःस्यति कप्रत्ययः इत्याद्युक्तं इतिद्वेश्वेतरुईइतिख्या॰॥शिवमल्ली शिवप्रियामल्ली॥पाशुपतः पशुपतेरयं अण्प्रत्ययः॥एकाष्ठीलः एकंअस्थिलाति सु

अर्काह्ववसुकास्फोटगणरूपविकीरणाः ८० मंदारश्चार्कपर्णोत्रशुक्लेऽलर्कप्रतापसौ शिवमल्लीपाशुपतएकाष्ठीलोबुकोवसुः

८१ वृंदावृक्षादनीवृक्षरुहाजीवंतिकेत्यपि वत्सादनीछिन्नरुहागुडूचीतंत्रिकामृता ८२ जीवंतिकासोमवल्लीविशल्यामधुपर्ण्यपि

षामादित्वात्षत्वं॥बुकः बकइत्यपि वाधातोःक्कन् बकस्तुबकपुष्पेस्यात्कंकेश्रीदेवरक्षसीतिविश्वप्रकाशः॥वसुः वस्ते वसतिवा पंचबुकस्यरुईमंदारइतिख्यात॰ ८१ वृंदा वं-द्यते वदिअभिवादनस्तुत्योः॥ वृक्षादनी वृक्षमत्ति अदभक्षणे॥वृक्षरुहा वृक्षंरोहति॥जीवंतिका जीवति चत्वारिवृक्षोपरिजातलताविशेषस्यबंदर्ले वेटाशुळी बांधेइति-ख्यातस्य॥वत्सादनी वत्सैरद्यते अदभक्षणे॥छिन्नरुहा छिन्नासति रोहति इगुपधेतिकः॥गुडूची गुडति गुडरक्षणे॥तंत्रिका तंत्रयति तत्रिकुटुंबधारणे॥अमृता नमृतम-स्याः अमृतामागधीपथ्यागुडूच्यामलकीषुच ८२ जीवंतिका जीवंतिकागुडूच्यांचजीवाख्याशाकवंद्योरितिविश्वः॥सोमवल्ली सोमस्यवल्ली॥विशल्या विगतंशल्यंय-स्याः विशल्याग्निशिखादंतीगुडूचीत्रिजटासुच मधुपर्णी मधुमयानिपर्णान्यस्याः नवगुडूच्या गुळवेलइतिख्याताया॥

मूर्वा मुरति मुरसंवेष्टने तुदादिः॥देवी दीव्यति॥मधुरसा मधुःरसोयस्याः॥मोरटा मुरति मुरसंवेष्टने॥तेजनी तेजति तेजपालने॥स्रवा स्रवति स्रुगतौ ८३ मधूलिका मधुलाति॥मधुश्रेणी मधुनःश्रेणी॥गोकर्णी गोःकर्णइव॥पीलुपर्णी पीलोरिवपर्णान्यस्याः पीलुपर्णमिचिकायांमूर्वायामोषधीभिदि संपदादित्वाद्भिदेः-क्विप् षष्ठीतत्पुरुषः दशमूर्वायाः मूरइतिख्यातायाः इयंधनुर्गुणोपयोगिनी॥पाठा पठ्यते पठव्यक्तायांवाची कर्मणिघञ्॥अंबष्ठा अंबशब्दपूर्वकात् स्थाधातोः कप्रत्यये अंबांबेतिषत्वेसाधुः अंबष्ठाप्यम्ललोण्यांस्यात्पाठायुथिकयोरपि॥विद्धकर्णी विद्धौकर्णौयया॥अविद्धकर्ण्यपि तत्रैव अविद्धो अछिद्रो॥स्थापनी

मूर्वादेवीमधुरसामोरटातेजनीस्रवा ८३ मधूलिकामधुश्रेणीगोकर्णीपीलुपर्ण्यपि पाठांबष्ठाविद्धकर्णीस्थापनीश्रेयसीरसा ८४ एकाष्ठीलापापचेलीप्राचीनावनतिक्तिका कटुःकटंभराशोकरोहिणीकटुरोहिणी ८५

स्थापयति स्थापनंरोपणेपुंसिवने पाठौषधौस्त्रियां॥श्रेयसी अतिशयेनप्रशस्ता श्रेयसीकरिपिप्पल्यामभयापीठयोरपि॥रसा रस्यते रसआस्वादने ८४ एकाष्ठीला एकबीजा॥पापचेली पापेचलति चलविलसने॥प्राचीना स्वार्थेखः॥वनतिक्तिका वनेतिक्तास्वार्थेकन् दशपाठायाः पाडवळी पाहाडमूळइतिख्यातायाः॥कटुः कटति कटेवर्षावरणयोः कटुःस्त्री कटुरोहिण्यांलताराजिकयोरपि॥कटंभरा भरेतिपाठेभृधातोः॥कटति कटंवृणोति वृञ्वरणे कटंवराइत्यपि॥अशोकरोहिणी अशोकइवरोहति आरोहणंकरोति व्यक्तमपीदंनाम अशोकाकटुरोहिण्यामशोकोवंजुलद्रुमइतिरभसः॥रोहिणीकटुरोहिण्यामितिरुद्रः कटुरोहिणी कटुश्चासौरोहिणीच ८५

मत्स्यपित्ता मत्स्यानांपित्तमिव तत्स्वादुत्वात्॥कृष्णभेदी कृष्णेनवर्णेनभेदश्छेदोऽस्याः यद्वा कृष्णांनाममलंभिनत्ति कृष्णभेदे कृष्णभेद्यान्चंडरुहेतिनिघंटुः॥चक्रांगी चक्राकारमंगमस्याः चक्रांगीकटुरोहिण्यामितिहेमः॥शकुलादनी शकुलैरद्यते अष्टौकेदारकुटकीइतिख्यातायाः॥आत्मगुप्ता आत्मनागुप्ता दुःस्पर्शत्वात्॥अजहा नजहातिशूकान्॥जडेत्यपिपाठः तत्रैवं जडयति॥अव्यंडा नविगलमंडमस्याः अव्यंडावृषभीगुप्तेतींदुः॥कंडूरा कंडूं राति रादाने कडुरेतिपाठः कपिकच्छूश्चकंडूरकंडूराशूकशिंबिकेतींदुः॥प्रावृषायणी प्रावृषामेति अयतेवा प्रावृषातुजलार्णवइतित्रिकांडशेषः ८६ ऋष्यप्रोक्ता ऋष्यैर्मृगैः प्रोक्ता ऋषिभिरप्रोक्तावा ऋष्यप्रोक्ताशतावर्याअचलाशूकशिंबिषु॥शूकशिंबिः शूकयुक्ताशिंबिः शाखच्छशांकशिशिराणिचशूकशिंबिः इत्यूष्मविवेकाद्दिनालव्या

मत्स्यपित्ताकृष्णभेदीचक्रांगीशकुलादनी आत्मगुप्ताऽजहाऽव्यंडाकंडूराप्रावृषायणी ८६ ऋष्यप्रोक्ताशूकशिंबिःकपिकच्छुश्चमर्कटी चित्रोपचित्रान्यग्रोधीद्रवंतीशांबरीवृषा ८७ प्रत्यक्श्रेणीसुतश्रेणीरंडामूषिकपर्ण्यपि

दिः शूकशिंबिश्च मर्कटी मर्कटीशूकबिंबाचेतिवाचस्पतिः॥कपिकच्छुः कपीनांकच्छुः कंडूहेतुत्वात्॥मर्कटी मर्कटीव विविधचेष्टाहेतुत्वात् नवकुबली कुहिरीइतिख्यातायां मर्कटतुल्यलोमयुक्तत्वान्मर्कटी॥ यत्स्पर्शेनकंडूउत्पद्यतेऽतःकंडूरा॥चित्रा चित्रंरूपमस्त्यस्याः मत्वर्थेअच्॥चित्राखुपर्णीगोडंबासुभद्रादंतिकासुच॥मायायांसर्पनक्षत्रनदीदेवेषुचस्त्रियां॥उपचित्रा चित्रमुपगता॥न्यग्रोधी न्यक्रुणद्धि बहुमूलत्वात्॥द्रवंती द्रवति द्रुगतौ लटःशतृ॥शांबरी शंवृणोति वृञ्वरणे शंभिधातोरित्यच्॥वृषा वर्षति वृषुसेचने इगुपधेतिकः ८७ प्रत्यक्श्रेणी प्रतीचीश्रेणीयस्याः॥सुतश्रेणी सुतानांश्रेणीयस्याः॥रंडा रमंतेऽत्र रमुक्रीडायां स्वामीत्वं

इत्याह तंत्रेतु चंडपते चडिकोपेयत्र ॥ प्रत्यक्श्रेणीरषाचंडापुत्रश्रेण्यारवुपर्णिकेतिनिघंटुः ॥ मूषिकपर्णी मूषिककर्णाकारंपर्णमस्याः दशमूषिकपर्ण्याः उंदीरकानीइति रव्याताया: ॥ अपामार्गः उपसर्गस्यघञीतिदीर्घः अपमार्ज्यतेऽनेन अपकृष्टः आसमंतान्मार्गोस्येतिवा ॥ शैखरिकः शिखरेप्रायेणाभवति अध्यात्मादिः ॥ धामार्गवः धाम्नीर्गः धामार्गः लंबाति अधामार्गवइत्यपि अधामार्गवोपामार्गः कोशातकीनेतिद्व्यर्थे ॥ मयूरकः मयूरप्रतिकृतिःकन् मयूरकोप्यपामार्गेकैबंतुथांजनेषु नः ८८ प्रत्यक्पर्णी प्रत्यंचीपर्णान्यस्य केशपर्णी केशाइवपर्णान्यस्याः कोशपर्णीइतिगुरुचरणाः तत्रेत्थं कपिलोमतुल्यानिलोमशानिपर्णान्यस्याः कपि लोमतुल्यत्वंलोमसःशिरवीध्वस्तइतिवत् ॥ किणिही किणिनोव्रणानजिहीते ओहाङ्गतौ आतइतिकप्रत्ययेगौरादित्वात्ङीष् हंतिइतिपक्षे अन्येषामितिडः

अपामार्गःशैखरिकोधामार्गवमयूरको ८८ प्रत्यक्पर्णीकेशपर्णीकिणिहीखरमंजरी हंजिकाब्राह्मणीपद्माभार्गीब्राह्म णयष्टिका ८९ अंगारवल्लीबालेयशाकबर्बरवर्धकाः मंजिष्ठाविकसाजिंगीसमंगाकालमेषिका ९०

खरमंजरी खरामंजरीरस्याः अत्र अपामार्गस्य आघाडाइतिरव्यातस्य ॥ हंजिका हंतिरोगान् पृषोदरादिः फंजिकेतिस्वामी ॥ ब्राह्मणी ब्रह्मणः इयं ॥ पद्मा पद्माकारपुष्पत्वात् ॥ भार्गी भ र्गस्येयं प्रज्ञादित्वादण् ङीप् ॥ ब्राह्मणयष्टिका ब्राह्मणस्ययष्टिरिवनादशप्रकांडत्वात् ८९ अंगारवल्ली अंगारवत्वल्ल्यस्याः ॥ बालेयशाकः बालेयस्यशाकः ॥ बर्बरः बर्बति इत्र्य रणे ॥ वर्धकः वर्धते रधुच्छेदने नवभार्ग्याः भार्गीइतिरव्यातायाः ॥ मंजिष्ठा मंजेः शोभनेवर्णेतिष्ठति इत्याद्युक्तं ॥ विकसा विकसति कसगतौ ॥ विकषेतिस्वामी तत्रविकषति कषहिंसायां ॥ जिंगी जिंगनीतिजिंगी ॥ समंगा समंततोअंगति पचाद्यच् शकंध्वादिः ॥ कालमेषिका कालंवर्णंमिषति मिषस्पर्धायां मंजिष्ठाकालमेषि केतिनिघंटुः ९०

मंडूकपर्णी मंडूकवत्पर्णमस्याः॥भंडीरी भडिगतौ बाहुल्कादीरन्॥भंडी भंडति भडिआभांजने भडिगतौ इतिगुरवः रक्ताभंडिरिकाचेतींदुः॥योजनवल्ली योजनगामिनीवल्ली योजनपर्ण्यपीतिपाठः नवकंमंजिष्ठायाः॥यासः यसुप्रयत्ने भावेघञ् मत्वर्थेअच् युमिश्रणामिश्रणयोः योतीतियवासः॥ दुःस्पर्शः दुःखेनस्पृशति स्पृशसंस्पर्शने॥धन्वयासः धन्वनीयासः मरुभवत्वात् धनुर्यासइत्यपिपाठः॥कुनाशकः कुं नाशयति णश्अदर्शने ११ रोदनी रोदयति रुदिर्अश्रुविमोचने रोदनीइतिगुरुपादाः॥कच्छुरा कच्छुंराति रादाने॥अनंता नांतोस्याः॥समुद्रांता समुद्रांतोस्त्यस्याः अच् मत्वर्थे दुरालभा दुःखेनाल

मंडूकपर्णीभंडीरीभंडीयोजनवल्यपि यासोयवासोदुःस्पर्शोधन्वयासःकुनाशकः ११ रोदनीकच्छुरानंतासमुद्रांतादुरालभा पृश्निपर्णीपृथक्पर्णीचित्रपर्ण्यंघ्रिपर्णिका १२ क्रोष्टुविन्नासिंहपुच्छीकलशीधावनीगुहा निदिग्धिकास्पृशीव्याघ्रीबृहतीकंटकारिका १३

भ्यते डुलभष्प्राप्तौ दुःधन्वयासस्यधमासाइतिख्यातस्य॥पृश्निपर्णी पृश्निरल्पंपर्णमस्याः॥पृथक्पर्णी पृथक्असक्तंपर्णमस्याः॥चित्रंपर्णअस्त्यस्याः मत्वर्थेअच्॥अंघ्रिपर्णिका अंघ्रेराराध्यपर्णान्यस्याः अंघ्रिवल्लिकेतिकेचित् १२ क्रोष्टुविन्ना क्रोष्टुभिर्विन्ना विदलाभे॥सिंहपुच्छी सिंहपुच्छवत्पुच्छमस्याः सिंहपुच्छाकारपुच्छत्वात्॥कलशी कलंश्यति शोतनूकरणे इन्प्रत्ययेबाहुलकादाकारलोपः॥धावनी धावति धावुगतिशुद्ध्योः बाहुलकात् गुहा गूहति गुहूसंवरणे नवसिंहपुच्छ्याः डवलापिठवणइतिख्यातायाः॥निदिग्धिका निदिह्यतेस्म दिहउपचये कर्मणिक्तेटाप् स्वार्थेकन्॥स्पृशी स्पृशति स्पृशस्पर्शने इगुपधेतिकेगौरादित्वात्ङीष्॥व्याघ्री व्याजिघ्रति आतश्चोपसर्गेइतिकप्रत्ययः जातित्वात्ङीष्॥बृहती वर्तमानेइतिनिपातितः ङीप्च॥कंटकारिका कंटकानियर्ति ऋगतौ १३

प्रचोदनी प्रचोदयति चूदसंचोदने कर्तरिल्युट्॥ कुली कोलति कुलसंस्त्याने इगुपधेकप्रत्ययेगौरादित्वात्ङीष्॥ क्षुद्रा क्षुणत्ति क्षुदिरसंपेषणे रक्प्रत्ययः॥ दुःस्पर्शा दुःखेनस्पृश्यते॥ राष्ट्रिका मत्वर्थेठन्टाप् राष्ट्रमस्त्यस्याः दशाकण्टकारिकायाः रिंगणीइतिख्यातायाः॥ नीली नीलादोषधौइतिङीष्॥ काला काल्यते॥ क्लीतकिका क्लीतकं क्रयोस्त्यस्याः क्रीइतिरेफस्यलत्वंअतः ठन्॥ ग्रामीणा ग्रामेभवा ग्रामाद्यखौ इतिखेईनादेशः णत्वंटाप्॥ मधुपर्णिका ग्रामीणानीलिकायांस्त्रीग्रामोद्भूतेभिधेयवत्॥ मधुपर्णिका मधुराणिपर्णान्यस्याः १४ रंजनी रंजयति कर्तरिल्युट् णिलोपस्यस्थानिवद्भावान्नलोपोन॥ श्रीफली श्रीमत्फलमस्याः॥ तुत्था तुद्यते तुदव्यथने तुत्थयतिवा तुत्थआवरणे तुत्थाश्रीफलिकामेलासारवाहीचरंजनीतिनिघंटुः तुत्थमंजनभेदेस्यान्नीलीसूक्ष्मेलयोःस्त्रियां॥ द्रोणी द्रवति द्रुगतौ तूणीइतिमाधवः॥ तूणीनील्यांनिषंगेऽपिति

प्रचोदनीकुलीक्षुद्रादुःस्पर्शाराष्ट्रिकेत्यपि नीलीकालाक्लीतकिकाग्रामीणामधुपर्णिका १४ रंजनीश्रीफलीतुत्थाद्रोणीदोलाचनीलिनी अवल्गुजःसोमराजीसुवल्लिःसोमवल्लिका १५ कालमेषीकृष्णफलावाकुचीपूतिफल्यपि

मेदिनी तूणीतुनील्यांतूणानिषंगकइतिविश्वप्रकाशः ॥ दोला दोलयति दुल्क्षेपे मलेतिस्वामी॥ नीलिनी नीलोवर्णोस्त्यस्याः मत्वर्थेइनिः एकादशनील्याः इयंवस्त्रादिरंजनकारिणीकृष्णवर्णा॥ अवल्गुजः अवल्गोर्जातः॥ सोमराजी सोमइवसोमेनवाराजति राजृदीप्तौ सोमराजिशब्दः ङीबंतइन्नंतश्च॥ सुवल्लिः शोभनावल्लिरस्याः॥ सोमवल्लिका सोमस्यवल्लिः स्वार्थेकन् १५ कालमेषी कलंमिषति मिषस्पर्धायां कालमेशीइत्यपि॥ कृष्णफला कृष्णंफलमस्याः॥ वाकुची वातंकोचयति पृषोदरादित्वात्तलोपः कुचशब्दे॥ पूतिफली पूतिःफलेषुअस्याः अयंवाकुचीबावचीइतिख्यातायाः॥

कृष्णा कृष्णोवर्णोऽस्त्यस्याः कृष्णास्याद्द्रौपदीनीलीकणाद्राक्षासुयोषिति ॥ उपकुल्या उपकोलति कुलसंस्त्याने ॥ वैदेही विदेहेभवा वैदेहीरोचनासीतावाणीस्त्रीपि-
प्पलीषुच ॥ मागधी मगधेषुभवा मागधीस्त्रीकणायूथ्योर्वाच्यवन्मागधोद्भवे पुंसिवैस्याक्षत्रियाजेशुक्लजीरकबंदिनोः ॥ चपला चपति चपसांत्वने हृषादित्वात्कलच्
॥ कणा कणति कणशब्दे कणाजीरककुंभीरमक्षिकापिप्पलीषुच ९६ उषणा ओषति उषदाहे उषणाइत्यपि तत्र ऊषति ऊष्रुजायां ऊषणंमरिचेक्लीबंकणाया
मूषणास्त्रियां ॥ पिप्पली पिपर्ति पृपालनपूरणे पृषोदरादिः पिप्पलंसलिलेवस्त्रेछेदेभेदेचनातरौ ॥ निरर्गलेपक्षिभेदेकणायांपिप्पलीस्मृता पिप्पलिरित्यपि ॥ शौंडी
शुंडायांभवा मद्यपानगृहभवत्वात् शौंडोमत्तेचविख्यातेपिप्पल्यांतुभवेत्स्त्रियां ॥ कोला कोलतिकुलसंस्त्याने कोलंकोलफलेक्लीबंपिप्पलीचव्ययोःस्त्रियां दशापिप्प

**कृष्णोपकुल्यावैदेहीमागधीचपलाकणा ९६ उषणापिप्पलीशौंडीकोलाऽथकरिपिप्पली कपिवल्लीकोलवल्लीश्रेयसीवशिरः पुमान्**
**९७ चव्यंतुचविकाकाकचिंचीगुंजेतुकृष्णला पलंकषात्विक्षुगंधाश्वदंष्ट्रास्वादुकंटकः ९८**

ल्याः ॥ करिपिप्पली करीवपिप्पली बृहत्वात् ॥ कपिव
ल्ली कपिरिववल्ली ॥ कोलवल्ली कोलइववल्ली ॥ श्रेयसी अतिशयेनप्रशस्ता ॥ वशिरः वस्ते तालव्यपाठेवशकांतौवष्टि वसआच्छादने वशिरः पुमान् पंचगजपिप्पल्याः ९७ च
व्यं चर्वते चर्वअदने ण्यत् पृषोदरादिः एवंचविकेत्यत्र अकादेशोरेफलोपः चव्यंतुचविकेक्लीबंवचायामपियोषिति चव्येत्यपि चव्याकोलाचचविकेतिहेमचंद्रः चविका चविकइत्य
पिपुंसिवर्तते केचित्तुचव्यादिद्वयंपूर्वान्वयीत्याहुः अत्रपक्षेतुस्थानेचः पाठः ॥ द्वयंच व्यस्य चवक इतिख्यातस्य ॥ काकचिंची काकवर्णाचिंचा काकचिंचिः काकचिंचेत्यपि भवतः ॥ गुं
जा गुंजति गुजिअव्यक्तशब्दे गुंजातुकाकचिंचायांपटहेचकलध्वनावितिमेदिनी ॥ कृष्णला कृष्णंवर्णंलाति त्रीणिगुंजायाः ॥ पलंकषा पलंमांसंकषति कषहिंसार्थः पलंकषागो

क्षुरकेस्त्रियांरास्नापलाशयोरितिरभसः॥ इक्षुगंधा इक्षुगंधइवगंधोऽस्याः इक्षुगंधाकोकिलाख्येरुष्यांशाकेचगोक्षुरइत्युक्तत्वात्॥स्वदंष्ट्रा शंकुनोदंष्ट्रेव॥स्वादुकंटकः स्वादुःकंटकोऽस्य ९८ गोकंटकः गोः धेनोः पृथिव्याः वा कंटकः गोकंटकोगोक्षुरकेस्थपुटेचगवांखुरे॥गोक्षुरकः क्षुरविलेखने इगुपधेतिकः॥वनशृंगाटः वनस्य शृंगाटइव सपगोक्षुरस्य गोखरूसराटाइतिख्यातस्य॥ विश्वा विशति विशप्रवेशने विश्वंकृत्स्नेचभुवनेविश्वेदेवेषुनागरे विश्वाप्रतिविषायांस्यादित्युक्तत्वात्॥विषा कप्रत्ययः वेवेष्टि विष्लृव्याप्तौ विषंजलेतिविषायांस्त्रियांक्ष्वेडेतुनस्त्रियामित्युक्तत्वात्॥प्रतिविषा प्रतीपंविषमस्याः॥अतिविषा विषंअतिक्रांता॥उपविषा विषमुपगता॥अरुणा अरुणोवर्णोऽस्याः मत्वर्थेप्रत्ययः अरुणाऽतिविषायांस्यामामंजिष्ठात्रिवृतासुच ९९ शृंगी शृणाति शृहिंसायां शृंगीविषायामृषभेस्व

**गोकंटकोगोक्षुरकोवनशृंगाटइत्यपि विश्वाविषाप्रतिविषाऽतिविषोपविषाऽरुणा ९९ शृंगीमहौषधंचाथक्षीरावीदुग्धिका समे शतमूलीबहुसुताऽभीरुरिंदीवरीवरी १०० ऋष्यप्रोक्ताभीरुपत्रीनारायण्यःशतावरी**

र्णमीनविशेषयोरितिविश्वः॥महौषधं महच्चतदौषधंच महौषधंचशंठ्यांस्याद्विषायांलशुनेपिच अष्टोअतिविषायाःअतिविखइतिख्यातायाः॥क्षीरावी क्षीरमवति कर्मण्यण् ङीप् अवरक्षणादौ॥दुग्धिका दुग्धमस्त्यस्याः मत्वर्थेठन् द्वेदुग्धीइतिख्यातायाः॥शतमूली शतंमूलान्यस्याः॥ बहुसुता बहवः सुतायस्याः॥अभीरुः नभीरुः स्थिरपत्रत्वात्॥इंदीवरी इंदीवरमस्त्यस्याः इंदीवरंकुवलयेशतावर्यांचयोषिति इत्युक्तः॰ नीलोत्पलाकारपुष्पत्वात्॥वरी वृणोति अच्प्रत्ययेगौरादित्वात्ङीष् १०० ऋष्यप्रोक्ता ऋष्यैःप्रोक्ता॥अभीरुपत्री अभीरूणिपत्राण्यस्याः॥नारायणी नारायणोऽच्युतेभीरुर्गौर्योर्नारायणीमता॥शतावरी शतेनावृणोति गौरादिः शतावरीतुशच्यांस्यादिंदीवर्यामपिस्त्रियां॥

अहेरुः नहिनोति हिंगतौ दशकंस्त्रीलिंगं शतमूल्याः सहस्रमुखी शतावरीइतिख्यातायाः॥ पीतद्रुः पीतंद्रवति द्रुगतौ॥ कालीयकः कालस्यायं छांतात्स्वार्थेक न् कालेयकइतिवापाठः अग्निकलिभ्यामितिढक्स्वार्थेकन्॥ प्रतिदिष्टवैकटिनीसचकालेयकःस्मृतः कालीयकोदारुनिशेतिरुद्रः॥ हरिद्रुः हरिःपिंगः पीतोवाद्रुर स्य द्रुःशाखा हरिद्रुःपीतचंदनमितिनिघंटः १०१ दार्वी दीर्यते दृविदारणे दारुशब्दाङीष्यण् दार्वीदारुहरिद्रास्तथागोजिह्विकौषधौ॥ पचंपचा पचति ए योदरादिः पीतदारुपचंपचेतिनिघंटः पचंबचेत्यपि॥ दारुहरिद्रा दारुश्चासौहरिद्राच॥ पर्जनी पिपर्ति पृपालनपूरणयोः विच् गुणेपर् तंजनयति ण्यंतात्कर्मण्य ण् समकंदारुहल्दइतिख्यातस्य॥ वचा वचेरंतर्भावितण्यर्थात्पचाद्यच्॥ उग्रगंधा उग्रोगंधोऽस्याः उग्रगंधाऽजमोदायांवचायांछिक्किकौषधौ॥ षड्ग्रंथा षड्

**अहेरुरथपीतद्रुकालीयकहरिद्रवः १०१ दार्वीपचंपचादारुहरिद्रापर्जनीत्यपि वचोग्रगंधाषड्ग्रंथागोलोमीशतपर्विका १०२**
**शुक्लाहैमवतीवैद्यमात्रसिंह्यौतुवाशिका वृषोऽटरूषःसिंहास्योवासकोवाजिदंतकः १०३**

ग्रंथाः ग्रंथयोऽस्याः षड्ग्रंथातुवचायांस्त्रीस्या त्करंजांतरेपुमान् इत्युक्तं॥ गोलोमी गोर्लोमास्याः गोशब्दोगोलोमसदृशेलाक्षणिकः॥ शतपर्विका शतंपर्वाण्यस्याः॥ शतपर्विकाचदूर्वायांवचायामपियोषिति पंचवचायाः वेखंडइतिख्यातायाः १०२ याशुक्लावचासाहैमवतीत्येकं हिमवतिभवा॥ वैद्यमाता वैद्यस्यमातेव॥ सिंही हिनस्ति हिसिहिंसायां॥ वाशिका वाश्यते वाशृशब्दे गुरोश्चेतिअप्रत्ययेस्वार्थेकन् इ त्वं दंत्यमध्यापि वासिकेत्यपि तत्रैवं वासयति वासोगृहेव्यवस्थानेवासास्यादाटरूषकइतिरुद्रः॥ वृषः वर्षति मधु वृषुसेचने इगुपधेतिकः वृषःस्याद्वासवेधर्मेसौरभेयेचशुक्रके इतिमूर्धन्यांतेविश्वः अटरूषः अटान्गच्छतोरुषति रुषहिंसायां मूलविभुजादिः इत्यादयूत्वं॥ सिंहास्यः सिंहस्यास्यमस्य सिंहास्यसदृशपुष्पत्वात्॥ वासकः वासयति॥ वाजिदंत कः वाजीदंतोस्य वाजिदंताभकेसरत्वात् अष्टौअटरूषस्य अडूळसाइतिख्यातस्य॥ १०३॥

आस्फोटा आस्फोटयति स्फुटिर्विकसने आस्फोताइत्यपि आस्फोतागिरिकर्ण्योर्वनमल्ल्यांचयोषितीतिमेदिनी ॥ गिरिकर्णी गिरिर्बलिमूषिकाकर्णोऽस्याः तत्कर्णतुल्यमात्रत्वात् विष्णुक्रांता विष्णुनाक्रांता ॥ अपराजिता नपराजिता चत्वारिविष्णुक्रांतायाः ॥ इक्षुगंधा इक्षुगंधोऽस्याः इक्षुशब्दइक्षुगंधसदृशोलाक्षणिकः इक्षुगंधाकोकिलाक्षेक्रोष्ट्र्यां काशेचगोक्षुरे ॥ काडेक्षुः कांडेनेक्षुरिव ॥ कोकिलाक्षः कोकिलोऽक्षियस्य कोकिलशब्दः कोकिलाक्षिसदृशोलाक्षणिकः ॥ इक्षुरः इक्षुरिवगंधंराति ॥ क्षुरः क्षुरइव क्षुरःस्या च्छेदनद्रव्येकोकिलाक्षेचगोक्षुरइतिविश्वः पंचकोकिलाक्षस्य कोकसुंदा तालिमखान्यानेंबीकोलिस्ता इतिख्यातस्य ॥ १०४ ॥ शालेयः शालीनांभवनंक्षेत्रंशालेयं तदस्यास्ति मत्वर्थेअच् ॥ शीतशिवः शीतमस्यास्ति शिवमस्यास्ति शीतश्चासौशिवश्च ॥ छत्रा छत्रमस्यास्ति छत्राकारस्तबकत्वात् ॥ मधुरिका मधुरोरसोऽस्त्यस्याः अतइनिठनौ ॥ मिसिः

**आस्फोटागिरिकर्णीस्याद्विष्णुक्रांताऽपराजिता इक्षुगंधातुकांडेक्षुकोकिलाक्षेक्षुरक्षुराः १०४ शालेयःस्याच्छीतशिवश्छत्रामधुरिकामिसिः मिश्रेयाप्यथसीहुंडोवज्रःस्नुक्स्त्रीस्नुहीगुडा १०५ समंतदुग्धाऽथोवेल्लममोघाचित्रतंडुला**

मस्यते मसीपरिमाणे इन्बाहुलकादत्वं मिसिःस्त्रीमधुरामांस्योः शतपुष्पाजमोदयोः मिशिः मि शशब्देरुदिकारादितिङीषि मिशी मिशीमिशिरितितालव्यांतआहसोपनंदी ॥ मिश्रेया मिश्राचासौएया शाकंस्वादिः षट्मधुरिकायाः बडिशेपइतिख्यातायाः ॥ सीहुंडः सीतिहुंडते हुडिवरणे वज्रद्रुमः सिहुंडोऽथेतिरभसात्ह्रस्वादिरपि शीहुंडइतितालव्यादिरपि ॥ वज्रः वज्राशुद्रून्चिकायांच वज्रोतुधत्तुरेस्मृतः ॥ स्नुक् स्नुही स्नुक् हकारांतःस्त्री स्नुह्यति स्नुहउद्गिरणे स्नुहीस्नुहास्नुगित्यमरदत्तः ॥ गुडा गुडति गुडवेष्टने ॥ गुडोगोलेक्षुविकृतीस्नुहीगुडिकयोर्गुडेतिरुद्रः वज्रद्रुःस्नुक्स्नुहीगुडेतिपाठः १०५ समंतदुग्धा समंतात्दुग्धमस्याः षट् वज्रद्रुमस्य शेरनिवडुंगइतिख्यातस्य ॥ वेल्लं वेल्लति वेल्लचलने अथवेल्लंरुभिभ्रंनत्तंडुलइतिरभसः ॥ अमोघा नमोघा मोघापीत्यन्यत्र रुभिन्नंतंडुलंमोघेतिवाचस्पतिः ॥ चित्रतंडुला चित्रातंडुलाअस्याः ॥

तंडुलः तंतुकृमिसूत्रं लाति तंडुलःस्याद्विडंगेपिधान्यादिनिकरेपुमान् तंतुलइत्यपि॥ कृमिघ्नः कृमीन्हंति॥ विडंगं विडति विडभेदने षट् विडंगस्य वावडिंगइतिख्या॰ १०६
बला बलति बलसंवरणे बलमस्त्यस्याइतिवा॥ वात्यालका वातीमलते अलभूषणादौ इतुपकडी चिकणाइतिख्यातस्य॥ घंटारवा घंटेआरौति॥ शणपुष्पिका शणःपु
ष्पंयस्याः शणशब्दस्तंतुपुष्पसदृशेलाक्षणिकः इशणपुष्पिकायाः लघुतागइतिख्यातायाः॥ मृद्वीका मृद्नाति मृदक्षोदे॥ गोस्तनी गौःस्तनोस्याः गोस्तनसदृशेगोशब्दो
गौणः गोस्तनोहारभेदेनाद्राक्षायांगोस्तनीस्त्रियां गोस्तनेत्यन्यत्र॥ द्राक्षा द्राक्षते द्राक्षिकांक्षायां॥ स्वाद्वी स्वदआस्वादने वोतोगुणइतिङीष्॥ मधुरसा मधुरसोऽ
स्याः भवेन्मधुरसाद्राक्षामृर्विकादुग्धिकास्र्वेत्युक्तं पंचद्राक्षायाः॥ १०७॥ सर्वानुभूतिः सर्वाअनुभूतयोऽस्यां सर्वैरनुभूयतेवा॥ सरला सरति सृगतौ सरणीरितिपाठः

तंडुलश्चकृमिघ्नश्चविडंगंपुंनपुंसकं १०६ बलावात्यालकाघंटारवातुशणपुष्पिका मृद्वीकागोस्तनीद्राक्षास्वाद्वी
मधुरसेतिच १०७ सर्वानुभूतिःसरलात्रिपुटात्रिवृतात्रिरुत् त्रिभंडीरोचनीश्यामापालिंद्योतुसुषेणिका १०८

युच् त्रिपुटा त्रयःपुटाःयस्याः त्रिपुटीइत्यपि सर्वानुभूतिःसरणात्रिपुटारेचनीसरा त्रिपुटीमहतीश्यामेतिवाचस्पतिः॥ त्रिवृता त्रिभिरवयवैर्वृता॥ त्रिवृत्
त्रीनवयवान्वृणोति वृञ्वरणेक्विप्॥ त्रिभंडी त्रीन्दोषान्भंडते भडिपरिभाषणे॥ रोचनी रोचते रुचिदीप्तावभिप्रीतौच रेचनीइत्यप्यन्यत्र रेचनीत्रि
वृतादंत्योरितिमेदिनी सप्तत्रिवृतायाः॥ तेडुश्वेतनिशोत्तरइतिख्यातायाः॥ श्यामा श्यायते श्यैङ्गतौ अस्मात्मक्॥ पालिंदी पालयति पालरक्षणे बाहुलका-
किंदच्॥ सुषेणिका सुषुसेनयायाति सत्यापपाशेतिणिच् पचाद्यच् कन् एति सज्ञायामिषत्वं १०८

काला कलयति ॥ मसूरविदला मसूरवद्विदलमस्याः ॥ अर्धचंद्रा अर्धश्चंद्रोयस्याः एतद्विदलस्यार्धचंद्राकारत्वात् ॥ कालमेषिका कालंमिषति मिषस्पर्धायां ॥ सप्तकृष्णवर्णायास्त्रिवृतायाः काळातेडू निशोत्तरनिगडीत्रिधारेइतिख्यातायाः ॥ मधुकं मधिवइति ॥ क्लीतकं कलति कलक्षेपे क्लीबआधार्थेभावेक्तः आगमशास्त्रस्यानित्यत्वादिड्भावेइत्याघूल्हं यष्टिमधुकंअयष्टीमधुकमित्यपि ॥ मधुयष्टिका मधुयष्टीइव चत्वारियष्टिमधुकस्य गोडेंकाष्ठ ज्येष्ठमधइतिख्या० ॥ १०९ ॥ विदारी विदारयति ध्वविदारणे विदारीशालपर्ण्योंचरोगेभेदेस्कगंधयोः ॥ क्षीरशुक्ला क्षीरमिवशुक्ला ॥ इक्षुगंधा इक्षुर्गंधोस्याः इक्षुशब्दस्तद्गंधसदृशोगौणः ॥ क्रोष्ट्री क्रोशति क्रुशआह्वाने क्रोष्ट्रीशृगालिकाकृष्णाविदारीलांगलीषुचेतिमेदिनी चत्वारिशुक्लभूमिकोहळाइतिख्यातस्य याक्षिता शुक्लाविदारीत्यन्वयः ॥ क्षीरविदारी क्षीरवतीविदारी ॥ महाश्वेता

कालामसूरविदलाऽर्धचंद्राकालमेषिका मधुकंक्लीतकंयष्टिमधुकंमधुयष्टिका १०९ विदारीक्षीरशुक्लेक्षुगंधाक्रोष्ट्रीतुयासिता अन्याक्षीरविदारीस्यान्महाश्वेतर्क्षगंधिका ११० लांगलीशारदीतोयपिप्पलीशकुलादनी   श्रीकृष्णायनमः

महतीचासौश्वेताच ॥ ऋक्षगंधिका ऋक्षान्गंधयति गंधअर्दने यद्वा ऋक्षोगंधोऽस्याः ऋक्षशब्दस्तद्गंध सदृशोगौणः त्रीणिकृष्णाभूमिकूष्मांडस्य ॥ अन्येति सितायाअन्याकृष्णेत्यर्थः कृष्णाविदारीत्यक्तत्वात् यासितेतिपदछेदेमेदिन्यविरोधेनपूर्वंनामचतुष्कं कृष्णाभूकूष्मांडस्य ॥ क्षीरेतित्रयंशुक्लभूकूष्मांडस्येतिवा असितायाअन्याशुक्लेत्यर्थः ११० लांगली लांगलाकारोस्त्यस्याः मत्वर्थेअच् लांगलीतोयपिप्पल्यांक्लीबंतुकुसुमांतरे ॥ शारदी शरदिभवा संधिवेलेत्यण् शारदीसप्तपर्णांबुपिप्पल्योरितिहेमः ॥ तोयपिप्पली तोयस्यपिप्पली ॥ शकुलादनी शकुलैरद्यते अदभक्षणे चत्वारिशाकभेदस्य मोशुडजळपिंपळी इतिख्यातस्य ॥

खराश्वा खरमश्नुते अश्नूव्याप्तौसंघातेच खरैरश्यतेवा एतत्पक्षेअशभोजने॥कारवी केनजलेनरौति रुशब्दे करवस्यमयूरस्येयं॥दीप्यः दीपसाधुः॥मयूरः मी नातिरोगं मीञ्हिंसायां मयूरोनीलकंठेपिस्यान्मयूरशिखौषधौ इतिरभसः॥लोचमस्तकः लोचयति लोचृभासने लोचृदर्शने लोचोदर्शनीयोभासमानोनामस्त कोऽस्य लोचमर्कटइत्यपि पंचमयूरशिखायाः मोरशेंडाइतिख्यातायाः अजमोदाइत्यपिमतं १११ गोपी गोपायति गुपूरक्षणे गोपाइत्यपि गोपीश्यामागोप वल्लीगोपागोपालिकाचसेतिवाचस्पतिः॥श्यामा श्यायते श्यैङ्गतौ मक्प्रत्ययः॥सारिवा सरणंसारिः अचइः सोऽस्तियस्याः शृहिंसायां शारिवेत्यपिपाठः अनंता नास्त्यंतोऽस्याः अनंताचविशल्यायामित्युक्तत्वात् उत्पलशारिवा उत्पलमस्त्यस्याः उत्पलाकारपुष्पत्वात् यद्वा उर्ध्वंतंपलमनया उत्पलाचासौशारिवाच

खराश्वाकारवीदीप्योमयूरोलोचमस्तकः १११ गोपीश्यामाशारिवास्यादनंतोत्पलशारिवा योग्यमृद्धिःसिद्धिलक्ष्म्यौवृद्धेरप्याह्वयाइमे ११२

पंच उत्पलशारिवायाः उपरसाळ उपलसरीइतिख्यातायाः॥योग्यं यूज्यते यूजिरयोगे ण्यत् यद्वा योगायप्रभवति योगाद्यच्च॥ऋद्धिः ऋध्नोति ऋधुवृद्धौ ऋद्धिःस्यादोषधीभेदेसमृद्धावपियोषिति॥सिद्धिः सिध्यति षिधुसंराद्धौ यद्वाकरणे सिद्धिस्तुमोक्षेनिष्पत्तियोगयोरितिहैमः॥लक्ष्मीः लक्ष्यते लक्ष्यते वा लक्षदर्शने लक्ष्मीःसंपत्तिशोभयोरित्युक्तं चत्वारिऋद्धिनामकस्य ओषधिविशेषस्यकेवणी मुरडशेंग इतिख्यातस्य इमेयोग्यादयश्चत्वारोवृद्धे र्वृद्धिनामकौषधेरप्याह्वयाःस्युः ११२ ७ ७ ७ ७

कदली कंदते कंद्यतेवा कदिआव्हानेरोदनेच रंभारक्षेऽथकदलीपताकामृगभेदयोः अजादित्वाट्टापिकदला कदलोपि कदलअंकदल्यसावितिव्याडिः॥ वारणबुसा वारणानां बुसा बुस्यतेवा बुसउत्सर्गे बुषेतिमूर्धन्यांतइतिकेचित्॥ रंभा रभ्यते रंभाकदल्याप्सरसोरिति॥ मोचा मुंचति मुच्यतेवा मुच्लृमोक्षणे॥ अंशुमत्फला अंशवोंति सूक्ष्मावय वंतिफलान्यस्याः यद्वा अंशुमानिवफलान्यस्याः॥ काष्ठीला॥ षट्कदल्याः॥ मुद्गपर्णी मुद्गपर्णवत्पर्णयस्याः॥ काकमुद्गा काकेनेषज्जलेनमुदंगच्छति इत्याद्यूह्यं॥ सहा अयंकाक मूगरानमूगइतिख्यातायाः काकमुद्गायाः ११३ वार्ताकी वार्तंआरोग्यंआकयति अकक्रुटिलायांगतौ यद्वा वार्तंफल्गुअकंदुःखंयस्याः पुंस्यपिवार्ताकइति वार्ता वार्ताकुरित्य न्यत्र पतिंगणस्तुवार्तांगोवार्ताकःशाकबिल्वकइतिरभसः॥ वार्तावातिंगणेरक्तावितिविश्वः वार्ताकुरेषागुणसमयुक्तेतिवैद्यकाद्वार्ताकुरपि॥ हिंगुली हिंगुलाति हिंगुलोवर्णकद्रव्ये

कदलीवारणबुसारंभामोचांशुमत्फला काष्ठीलामुद्गपर्णीतुकाकमुद्गासहेत्यपि ११३ वार्ताकीहिंगुलीसिंहीभंटाकीदुष्प्रधर्षिणी ना
कुलीसुरसारास्नासुगंधागंधनाकुली ११४ नकुलेष्टाभुजंगाक्षीछत्राकीसुवहाचसा

नामभंटाक्यांतुहिंगुली॥ सिंही हिनस्ति हिंसिहिंसायां॥ भं-
टाकी भट्यते भण्यतेवा भटभृतौ भणशब्दे॥ दुष्प्रधर्षिणी दुःखेनप्रधर्षितुमशक्या निदुपाभागली पंचवार्ताक्याः रानवांगी डोरलीइतिख्याता॥ नाकुली नकुलानामि यं नञाकूलत्वंययावा नाकुलीकुकुटीकंदरास्नायांचपंक्तौस्त्रियामित्युक्तं॥ सुरसा शोभनोरसोऽस्याः सुरसंतुत्रिषुस्वादोपर्णासेनानपुंसकं॥ रास्ना राति रायतेवा रस्यतेवा रा दाने रसआस्वादने रास्नातुस्याद्भुजंगाख्यामेलापर्ण्यामपिस्त्रियां॥ सुगंधा सुगंधोस्त्यस्याः मत्वर्थेअच् इत्याद्यूह्यं गंधनाकुली गंधवतीनाकुली ११४ नकुलेष्टा नकुलाना मिष्टा॥ भुजंगाक्षी भुजंगानक्षति अक्षूव्याप्तौ कर्मण्यण् यद्वा भुजंगोऽक्षियस्याः भुजंगशब्दस्यभुजंगाक्षिसदृशोलक्षणात्॥ छत्राकी छत्रमकति छत्राकारपर्णत्वात् अक कुटिलायांगतौ॥ सुवहा सुष्ठुवहति नवरास्नायाः मुंगसी मुंगसवेलइतिख्यातायाः॥

तांबूलवल्ली पृषोदरादिः ताम्यति तमु ग्लानौ बौलति बूलमज्जने ताम्यचासौबूलीच इत्यांग्रूह्यं॥तांबूली तांबूलीनागवल्यांस्त्रीक्रमुकेतुनपुंसकं॥नागवल्ली नागलोकस्यव ल्ली त्रीणिनागवल्ल्याः पानवेलइतिख्यातायाः॥द्विजा द्विर्जाता द्विजोविप्रक्षत्रिययोर्वैश्येदंतेविहंगमइतिचंद्रः॥हरेणुः मूलेसंयोदीर्घः हरिति कषायेपिहरेणुर्नारेणुकायां स्त्रियांभवेदितिरुद्रः॥रेणुका रेणुरस्यास्तीतिव्रीह्यादित्वाट्ठन्कादेशः रेणुकापिहरेणौचजामदग्न्यस्यमातरि॥कौंती कुंतीषुदेशेषुभवा॥कपिलोवर्णोस्त्यस्याः स्त्रीरेणुका यांकपिलावर्णेनाकुकुरेमुनौ अनलेवासुदेवेनकपिलःपरिकीर्तितः॥भस्मगंधिनी भस्मनोगंधः भस्मगंधोस्त्यस्याः षट्रेणुकाख्यगंधद्रव्यस्यरेणुकाबीजइतिप्रसिद्धस्य॥ एलावालुकं एलयति पचाद्यच् टाप् इलप्रेरणे एलाइववलते वलप्राणने बाहुलकादुण् स्वार्थेकन् एलवालुकमितिस्वामी॥ऐलेयं इलायाअपत्यं॥सुगंधि शोभनोगंधो

तांबूलवल्लीतांबूलीनागवल्यप्यथद्विजा हरेणूरेणुकाकौंतीकपिलाभस्मगंधिनी १२० एलावालुकमैलेयंसुगंधिहरिवालुकं वालु कंचाथपालंक्यामुकुंदःकुंदकुंदरू १२१ वालंन्हीबेरबर्हिष्ठोदीच्यंकेशांबुनामच

ऽस्य गंधस्येतिइत्वं॥हरिवालुकं हरिद्वर्णवालुकं॥वालुकं वलप्राणने बाहुलकादुण् पंचवालुकाख्यगंधद्रव्यस्य वालुक काकडी इतिख्यातस्येत्यपिमतं॥पालंक्या पालाअंक्यते अंकपदेलक्षणेच॥मुकुंदः मुक्तिंददाति मुक्तिपूर्वाद्दाधातोः केमुक्तिशब्दस्यपृषोदरादित्वात्मुकुम् मुकुंदःपारदेविष्णौरत्नभेदेचकुंदरौ॥कुंदः कुंभूमिमुनत्ति उंदीक्लेदने॥कुंदरूः कुमुनत्ति उदयतिवा उपायत्रशकंध्वादित्वात्पररूपं चत्वारि पालकी पोईशाक वास्तुकाकारा पालख इतिचख्यातस्य १२१ वालं वालयति वलसंवरणे वालोनाकुंतलेऽश्वस्यगजस्यापिचवालधौ वा च्यलिंगोऽर्भकेमूर्खेन्हीबेरेपुंनपुंसकमिति मेदिनी॥न्हीबेरं-न्हीयुक्तंबेरमस्य॥बर्हिष्ठं बर्हिषिकुशेतिष्ठति॥उदीच्यं उदीचिजातं॥केशांबुनाम केशाश्चांबुचतयोर्नामय स्यतत्केशांबुनाम यावत्केशांबुनोश्चनामानितानिसर्वाणिपंचवालस्यज्ञेयानि॥

कालानुसार्यं कालेनानुस्रियते॥ वृद्धं वर्धतेस्म वृद्धवृद्धो गत्यर्थेनिक्तः वृद्धो जीर्णेप्रवृद्धेत्रिषुक्लीबंतुशैलजे॥ अश्मपुष्पं अश्मनः पुष्पमिव अश्मभवत्वात्॥ शीतशिवं शीतंचच्छिवंच १२२ शैलेयं शिलायांभवं नद्यादिभ्योढक् शैलेयंतालपर्ण्यांनसैंधवेशैलजेतुना पंचशैलेयस्य फूलशिलाजितइतिरव्यातस्य॥ तालपर्णी नालः पर्णमस्याः तालशब्दस्तालपर्णसदृशैलाक्षणिकः॥ दैत्या दितेरियं॥ गंधकुटी गंधस्यकुटीव॥ मुरा मुरति मुरवेष्टने॥ गंधिनी प्रशस्तोगंधोऽस्याः चत्वारिसुरायाः तालिसपत्रमोरमांशीइतिरव्यातायाः॥ गजभक्ष्या गजैर्भक्ष्यते गजभक्षाइत्यपि॥ सुवहा सुष्ठुवहति॥ सुरभी सुष्ठुरभते सुरभिरित्यपि सुरभीरसेत्येकमपिपदं सुरभिः शल्लकीमातृभिन्नरागेषुयोषितीतिमेदिनी॥ रसा रस्यते रसआसादने रसःस्वादेजलेवीर्येशृंगारादौविषेद्रवे बालेरागेगृहेधातौतिक्तादौपारदेपिचेति

कालानुसार्यवृद्धाश्मपुष्पशीतशिवानितु १२२ शैलेयंतालपर्णीतुदैत्यागंधकुटीमुरा गंधिनीगजभक्ष्यातुसुवहासुरभीरसा १२३
महेरणाकुंदुरुकीसल्लकीह्लादिनीतिच अग्निज्वालासुभिक्षेतुधातकीधातुपुष्पिका १२४ पृथ्वीकाचंद्रवालैलानिष्कुटिर्बहुलाथसा

हैमः १२३ महेरणा महदीरणमस्याः महमुत्सवमीरयतिवा॥ कुंदुरुकी॥ सल्लकी सलति षलगतौ सल्लत्यलक्ष्यतेवा लक्आस्वादने शल्लकी सिल्लकी शलचलने षिल उंछे इत्यन्यत्र श्वाविद्भेदेशल्लक्याविततालव्यादेरभसः सल्लकीसिल्लकीह्लादिनीरुद्रः॥ ह्लादिनी ह्लादयति अष्टसालईइतिरव्यातायाः॥ अग्निज्वाला अग्नेर्ज्वालेव रक्तपुष्पत्वात्॥ सुभिक्षा सुष्ठुभिक्ष्यते॥ धातकी धातुंकरोति तत्करोतिइतिणिचंतात्ण्वुल्॥ धातुपुष्पिका धातुपुष्पमस्याः मत्वर्थेठन् ४ धायटीइ० १२४ पृथ्वीका प्रथते प्रथप्रख्याने औणादिकः॥ चंद्रवाला चंद्रस्यकर्पूरस्यवालेव कर्पूरगंधित्वात्॥ एला एलयति इलप्रेरणे॥ निष्कुटिः निश्चिताकुटिःकौटिल्यमस्याः निष्कुटीइत्यपि॥ बहुला बहूनि बीजानिलाति॥ बहुलानीलिकायांस्यादेलायांदिवियोषिति पंचएलायाः॥

सागलासूक्ष्मासूक्ष्मपरिमाणान्वेव उपकुंचिका उपकुंचति कुंचकौटिल्याल्पीभावयोः॥ तुत्था तुदति तुदव्यथने तुत्थमंजनभेदेस्यान्नीलीसूक्ष्मैलयोःस्त्रियां॥ कोरंगी कुरति कुरशब्दे बाहुलकादंगच्॥ त्रिपुटा त्रयःपुटायस्याः त्रिपुटामल्लिकायांचसूक्ष्मैलात्रिवृतोःस्त्रियां॥ त्रुटिः त्रुटति त्रुटछेदे॥ त्रुटिस्त्रीसंशयेस्वल्पेसूक्ष्मैलाकालमानयोः इतिपंचसूक्ष्मैलायाः १२५ व्याधिः विगतःआधिरनेन व्याधिः कुष्ठेन्वरोगेनेत्यन्त्कं॥ कुष्ठं कुष्णातिरोगं कुषनिष्कर्षे कुष्ठंरोगेपुष्करेस्त्री॥ परिभाव्यं परिभावेसाधुः तत्रसाधुरितियत् ततःस्वार्थेअण्॥ व्याप्यं व्याप्यते आप्लृव्याप्तौ वाप्यमितिक्वचित्पाठः आप्यमित्यपि॥ पाकलं पाकंलाति पाकलंकुष्ठभैषज्येपुंसिस्यात्कुंजरज्वरे॥ उत्पलं उत् पलति पलगतौ रक्षणेवा धातूनामनेकार्थत्वात् षट् कडुकोष्ठगोडेंकोष्ठइतिख्यातस्य॥ शंखिनी शंखाःसंत्यस्याः शंखाकारपुष्पत्वात्॥ चोर

सूक्ष्मोपकुंचिकातुत्थाकोरंगीत्रिपुटात्रुटिः १२५ व्याधिःकुष्ठंपारिभाव्यंव्याप्यंपाकलमुत्पलम्

शंखिनीचोरपुष्पीस्यात्केशिन्यथवितुन्नकः १२६ झटामलाःझ्झटातालीशिवातामलकीतिच

पुष्पी चोरइवपुष्पंयस्याः रात्रिविकाशित्वात्॥ केशिनी केशाःसंत्यस्याः नयंचोरवल्ल्याः चोरशंखाहुली सांखवेलइतिख्यातायाः॥ वितुन्नकः वितुद्यतेस्म तुदव्यथने क्तांतात्स्वार्थेकन् १२६ झटाःमला नमलोऽस्याः झटयते झटसंघाते झटविवा झटावासौअमलाच॥ अझ्झटा अद्व्ययमाश्चर्ये अत् आश्चर्यस्यझटःसंघातोःस्यां॥ ताली तलयति तलप्रतिष्ठायां तालःकरतलेंगुष्ठमध्यमायाश्वसंमिते गीतकालक्रियामानेकरस्फालेद्रुमांतर इत्यन्त्कं॥ शिवा शिवमस्त्यस्यां मत्वर्थेअच्॥ तामलकी तनुश्चासावामलकीच पृषोदरादिः षट्भूम्यामलक्याः झटामलेत्यत्रझटेतिपृथक्पदंवा अमलेतिछेदः आहच तामलक्यमलातालीझटातामलकीतिचेति॥

प्रपौंडरीकं तस्येदमित्यण् मेणसमासः पुंडयति पुडिखंडने॥ पौंडर्यं पुंडस्यार्यंप्रधानं शकंध्वादित्वात् ईपौंडर्यस्य इदंशालपर्णीतुल्यपत्रंज्ञेयं स्थलपद्ममि तिगौडाः॥ तुन्नः तुद्यतेस्म तुदव्यथने॥ कुबेरकः कुत्सितंबेरमस्य १२७ कुणिः कुणति कुणसंकोचे तुणिरितिक्वचित्पाठः तत्रैवं तूणयति तूणसंकोचे एषोद रादित्वात्ह्रस्वः॥ कच्छः कचतिकचदीप्तौ बाहुलकाच्छः॥ कांतलकः काम्यते कमुकांतौ लकति लकआस्वादने कांतश्चासौलकश्च॥ नंदिवृक्षः नंद्याःवृ क्षः षट्नंदिवृक्षस्य नादरुखीइतिख्यातस्य अयमश्वत्थाकारपत्रः॥ राक्षसी रक्षसः इयं॥ चंडा चंडते चंडिकोपे तत्राह चंडाधनहरीशंखपुष्पास्त्रिष्वतिको पने॥ धनहरी धनंहरति हरतेर्वा॥ क्षेमः क्षिणोति क्षिहिंसायां मन्प्रत्ययः॥ दुष्पत्रः दुष्टानिपत्राणियस्य॥ गणहासकः गणंहासयति हसेर्ण्वुल् षट्चोराख्य

प्रपौंडरीकंपौंडर्यमथतुन्नःकुबेरकः १२७ कुणिःकच्छःकांतलकोनंदिवृक्षोऽथराक्षसी चंडाधनहरीक्षेमदुष्पत्रगणहासकाः
१२८ व्याडायुधंव्याघ्रनखंकरजंचक्रकारकं सुषिराविद्रुमलताकपोतांघ्रिर्नटीनली १२९ धमन्यंजनकेशीचहनुर्हट्टविलासिनी

गंधद्रव्यस्य चोरखोंवा किरमाणीखोवा गठोना गाठीवनमूळ इतिख्यातस्य गणइत्यप्यस्यनाम १२८ व्याडायुधं व्याडस्यव्याघ्रस्यायुधमिव॥ व्याघ्रनखं व्या घ्रस्यनखमिव॥ करजं कराज्जातं॥ चक्रकारकं चत्वारिव्याघ्रनखनामकगंधद्रव्यस्य लघुनखला वाघनख इतिख्यातस्य॥ सुषिरा सुषिरमस्ति मत्वर्थेऽच्॥ विद्रुमलता वि द्रुमस्येवलता॥ कपोतांघ्रिः कपोतस्यांघ्रिरिव॥ नटी नटति नटअवस्यंदने॥ नली नलति णलगंधे १२९ धमी धम्यते धमिःसौत्रः॥ अंजनकेशी अंजनमिवकेशायस्याः सप्तन लीनामकगंधद्रव्यस्य पवारीतिलोकेप्रसिद्धस्य इयंउत्तरपथेप्रसिद्धा॥ हनुः हंति हनुर्हट्टविलासिन्यांनृत्यारंभेगदेस्त्रियां॥ हट्टविलासिनी हट्टेविलसतितच्छीला लसक्रीडायाम्॥

शक्तिः शोचति शक्वशोके॥शंखः शाम्यति॥खुरः खुरति खुरछेदने खुरः शफेकोलदलइतिहैमः॥कोलदलं कोलस्यबदर्याइवदलं॥नखं नखंतुगंधद्रव्येस्यान्नखः करजपंद्यो
रितिहैमः समनखाख्यगंधद्रव्यस्य नखलाइतिख्यातस्य अत्रहनुरुदंतः स्त्रीसाहचर्यात् बदरीतुल्यपत्रत्वात्कोलदलं आढकी आढकमस्त्यस्याः परिछेदकत्वेन आढ
कीचतुर्वर्यास्त्रीपरिमाणांतरेत्रिषु १३० कांक्षी कक्षेभवा॥मृत्स्ना मृत्स्नाऽस्त्यस्याः क्षेत्रत्वेन तत्रेत्थं मृत्स्नामृत्सातुवर्योस्त्रीत्युक्तं॥तुवरिका तुवरोऽस्त्यस्याः मल
र्थेठन् वार्षिकः॥मृत्तिकातुवर्याढकीकुच्छुराशटीविवोपालितात् तुवरिकेत्यपिपाठः॥मृत्तालकं मृत्तमालयति अलंभूषणादौ॥सुराष्ट्रजं सुराष्ट्राज्जातं पद तुवरिकायाः

शक्तिः शंखः खुरः कोलदलंनखमथाढकी १३० कांक्षीमृत्स्नातुवरिकामृत्तालकसुराष्ट्रजे कुटंनटंदाशपुरंवानेयंपरिपेलवं १३१
प्लवगोपुरगोनर्दकैवर्तीमुस्तकानिच

तूरइतिख्यातायाः॥कुटन्नटं कुटन् चक्रीभवन् नटति नटअवस्पंदने॥दाशपुरं दाशान्कैवर्तान् पिपर्ति पृपाल
नपूरणयोः दाशपूरमितिपाठः दशापूरमितिक्वचित्पाठः मूलविभुजादित्वात्कः दशपुरमित्यपि तत्राह दशपूरंदशपुरंप्लवनंजीवितान्हयमितिवाचस्पतिः॥वानेयं
वने पानीये जायते॥परिपेलवं परितः पेलवं मृदु १३१ प्लवं प्लवते प्लुङ्गतौ॥गोपुरं गां जलं पिपर्ति पृपालने॥गोनर्दं गांजलंनर्दयति नर्दशब्दे॥कैवर्तीमु
स्तकं कैवर्त्याः मुस्तकं इत्याद्युक्तं अष्टकैवर्तीमुस्तकस्य केवडी जलमुस्ता कुद्रमोथा इतिख्यातस्य॥ ७ ७

ग्रंथिपर्णं ग्रंथौपर्णान्यस्य ग्रंथयइवपर्णान्यस्येतिवा॥शुकं शोचति शुच्शोके ग्रंथिपर्णेशिरीषेन्वशुकःस्यादितिविश्वः शुकौव्यासस्रुतेकीरेरावणस्यचमंत्रिणि शिरीषपाद पेपुंसिग्रंथिपर्णेनपुंसकं इत्युक्तत्वात्॥ बर्हपुष्पं बर्हं पत्रं प्रशस्तंयस्य पुष्प्यति पुष्पविकसने अच् शुकबर्हमित्येकमपिनाम॥ बर्हिपुष्पमित्यपि बर्हिः पुष्पं बर्हपुष्पंचे तिपृथगपि॥ स्थौणेयं स्थूणायाः अपत्यं॥ कुक्कुरं कुक्कुरोऽस्त्यस्य कुक्कुरशब्दस्तुतद्गंधेलाक्षणिकः पंचगंदीवन भटोराइतिख्यातस्य १३२ मरुन्माला मरुद्भिर्मल्यते मलधारणे समस्तव्यस्तनामेदं तत्राह मुनिर्माल्यवतीमालामोहनाकुटिलालवेतिवाचस्पतिः॥ पिशुना पिशति पिशअवयवे पिशुनंकुंकुमेपिच॥ स्पृक्का स्पृश्यते स्पृशसंस्पर्शने बाहुलकात्कक् पृषोदरादित्वात्सलोपेस्पृक्कापि पृक्कातुब्राह्मणीदेवीमरुन्मालालतालघुः समुद्रांतावधूःकोटिवर्षालंकोपिकामरुत्॥ देवी दिव्यति

ग्रंथिपर्णंशुकंबर्हपुष्पंस्थौणेयकुक्कुरे १३२ मरुन्मालातुपिशुनास्पृक्कादेवीलतालघुः॥
समुद्रांतावधूःकोटिवर्षालंकोपिकेत्यपि १३३ तपस्विनीजटामांसीजटिलालोमशामिशी॥

लता लतति लतआघाते सौत्रः लघुः लघते लघिगतौ समुद्रांता समुद्रोंऽतोयस्याः॥ वधूः वहति उह्यतेवा॥ कोटिवर्षा कोटिभिरग्रैर्वर्षति॥ मधु मृषुसेचने॥ लं कोपिका लंकायामुप्यते कुन् संभारणं टुवप्बीजतंतुसंताने दशार्कपिंडकेतिख्यातायाः १३३ तपस्विनी तपोऽस्त्यस्याः॥ जटिलात् जटामांसी मांसंस्यादामि षेक्लीबंकंकोलीजटयोःस्त्रियां॥ जटिला जटाऽस्त्यस्याः जटिलापिप्पलीमांस्योर्जटायुक्तेवाच्यवत्॥ लोमशा लोमानिसंत्यस्याः लोमशोमुनिमेषयोः॥ मिशी मस्य ति मसिपरिणामे पंचजटामांस्याः जटेतिपृथक्पदंवा तत्राह मांसाकृष्णाजटाहिंस्रानलदाजटिलामिसिः जटाचवशिनीपेशीत्र्यादीनितपस्विनीति॥

त्वक्पत्रं त्वगिवपत्रमस्य ॥ उत्कटं गंधित्वात् ॥ भृंगं विभर्ति ॥ त्वचं प्रशस्तात्वगस्यास्ति ॥ चोचं प्रशस्तंचोचं वल्कलादिकमस्यास्ति त्वक्त्वच चोचशब्दाः स्फर्वल्के
धर्मणिपत्रक इतिधरणिः ॥ वरांगकं वरमंगमस्त्यस्य इतिषट् दालचिनीतज इतिख्यातस्य १३४ कर्चूरकः कर्चति कर्जव्यथने ऊरः प्रत्ययः स्वार्थेकन् कर्बूरक इत्यपिपा॰ठः
॥ द्राविडकः द्रविडदेशेजातः तत्रजातइत्यण् स्वार्थेकन् ॥ काल्पकः कल्पेभवः तत्रभवइत्यण् ततः कन् ॥ वेधमुख्यकः वेधेमुख्यः स्वार्थेकन् चत्वारिकचूर इतिख्या
तस्य ॥ फलपाकांतानांब्रीह्यादीनांजातावेवओषध्यः स्युः ॥ ओषधिशब्दप्रयोगःस्यादित्यर्थः ॥ बहुत्वविवक्षायांबहुवचनं नतुनित्यं यदातु ओषधेः रोगहारित्वमा
त्रंप्रतीयते नत्वन्यत् तदा औषधशब्दप्रयोगः ओषधेरजातावित्यण् नकेवलमोषधिरेवौषधशब्दवाच्या किंतु रोगहरत्वेनघृतक्षौद्रत्रिफलाकल्कादिचौषधमि

त्वक्पत्रमुत्कटंभृंगंत्वचंचोचंवरांगकं १३४ कर्चूरकोद्राविडकःकाल्पकोवेधमुख्यकः ओषध्योजातिमात्रेस्युरजातौसर्वमौषधं
१३५ शाकाख्यंपत्रपुष्पादितंडुलीयोल्पमारिषः विशल्याग्निशिखाऽनंताफलिनीशक्रपुष्पिका १३६ तिसर्वविशेषणाज्ज्ञेयं १३५ यत्पत्रपु

ष्पादितच्छाकसंज्ञकं ॥ शाक्यतेभोक्तुं यद्वा श्यति श्योतनूकरणे एकंभोजनसाधनस्यपुष्पादेः आदिशब्दात्फलमूलादीनांग्रहणं तत्रोच्यते मूलपत्रकरीराग्रफलकां
डाधिरूढकं त्वक्पुष्पंकवकंचैवशाकंदशविधंस्मृतमिति तत्र करीरं वंशांकुरः कांडमिक्षुदंडादि अधिरूढकं बीजांकुरः कवकंछत्राकं शेषंस्पष्टं ॥ तंडुलीयः तंडुलायहितः ॥
अल्पमारिषः अल्पश्चासौमारिषश्च द्वे तांदलो तांदुळजा इतिख्या॰ ॥ विशल्या विगतं शल्यमनया विशल्यालांगलीदंतीगुडूचीत्रिपुटासुचेतिहेमचंद्रः ॥ अग्निशिखा अग्ने
रिवशिखासंतापोयस्याः ॥ अनंता नअंतोयस्याः ॥ फलिनी फलानिसंत्यस्याः ॥ शक्रपुष्पिका शक्रोऽर्जुनतरुः तत्पुष्पमिवपुष्पमस्याः पंचकमग्निशिखायाः कळलावी इतिम॰१३६

कक्षगंधा कक्षस्येवगंधोऽस्याः कथ्यगंधेत्यपिपाठः॥ छगलांत्री छगलांघ्री छगलांडी छगलेतिपृथक्पदंवा छागेतुछगलश्छागीवृद्धदारकयोःस्त्रियामित्यनेकार्थकोशः॥आवेगी आवेगोस्त्यस्याः॥वृद्धदारकः वृद्धोदारकोस्मात् वृद्धत्वंदारयतिवा वृद्धेतिभावप्रधानं॥ जुंगः जुंगति जुगिवर्जने पंचवृद्धदारकस्य वरधाराजीर्णफंजी इतिख्यातस्य॥ब्राह्मी ब्रह्मणइयं॥मत्स्याक्षी॥वयस्था वयसितिष्ठत्यनया वयस्थातुस्त्रियांब्राह्मीगुडूच्यामलकारुच सूक्ष्मैलायांचकाकोल्यांपथ्यायांतरुणेषुच॥सोमवल्लरी सोमस्यवल्लरी यस्याः शङ्कुपक्षेपर्णान्युद्भवंति कृष्णेचपतंति सासोमवल्ली सैवसोमवल्लरी इतिचत्वारिसोमलतायाः १३७ पटुपर्णी पटूनिपर्णान्यस्याः॥हैमवती

स्याद्कक्षगंधाछगलांत्र्यावेगीवृद्धदारकः जुंगोब्राह्मीतुमत्स्याक्षीवयस्थासोमवल्लरी १३७ पटुपर्णीहैमवतीस्वर्णक्षीरीहिमावती हयपुच्छीतुकांबोजीमाषपर्णीमहासहा तुंडिकेरीरक्तफलाबिंबिकापीलुपर्ण्यपि

हिमवतिजाता॥स्वर्णक्षीरी स्वर्णमिवक्षीरमस्याः॥हिमावती हिममस्त्यस्याः शरादीनांचेतिदीर्घः चत्वारिस्वर्णक्षीर्याःपिसोळाइतिख्यातायाः॥हयपुच्छी हयपुच्छमिवपर्णान्यस्याः॥कांबोजी कंबोजदेशेभवा तत्रभवइत्यण् ततोङीप्॥माषपर्णी माषस्येवपर्णान्यस्याः॥महासहा महतीचासौसहाच चत्वारिमाषपर्ण्याः रानउडिदइतिख्यातायाः १३८ तुंडिकेरी तुंडंवंतुरस्त्येषां तान्तुंडिकानीरयति ईरप्रेरणे कर्मण्यण् तुंडिकेशीइत्यपि॥रक्तफला रक्तंफलमस्या अजादित्वाट्टाप्॥बिंबिका बिंबीकायति कैशब्दे ङ्यापोरितिह्रस्वः॥पीलुपर्णी पीलोरिवपर्णमस्याः चत्वारितुंडिकेर्याः तोंडलीइतिख्यातायाः॥

बर्बरा वृणोति वृञ् वरणे बर्बरः पामरे केशे चक्रलेनोरुदंतरे फंजिकायां पुमान् शाकभेदपुष्पाभिदोः स्त्रियामिति मेदिनी बवयोरैक्यात् बर्बरा ॥ कबरी कस्य शिरसः व री कबरं लवणाम्लयोः कबरीकेशविन्यासशाकयोरिति हैमः कवरीइत्यपि बवयोरैक्यात् ॥ तुंगी तुंजति तुजि हिंसायां पचाद्यच् ङीप् तुंगी प्रोक्ता हरिद्रायां वर्वरायाम पीष्यत इति हैमः ॥ खरपुष्पा खरं पुष्पमस्याः ॥ अजगंधिका अजस्येव गंधोऽस्याः ॥ अजशब्दः स्वगंधेलाक्षणिकः अजगंधेत्यन्यत्र भंव बर्बरी तिळवणी कानफोडी इति ख्यातायाः ॥ १३९ ॥ एलापर्णी एलायाइवपर्णान्यस्याः पाककर्णेतिङीष् ॥ सुवहा सुवहति ॥ रास्ना रासते रासृ शब्दे रास्यतेवा ॥ युक्तरसा युक्तः रसोयस्याः चत्वारिए लापर्ण्याः कोळिंदण इति ख्यातायाः ॥ चांगेरी चांगमीरयति ईर प्रेरणे चांगस्तु शोभने दक्षे ॥ चुक्रिका चुक्रयति चुक्र व्यथने रन् प्रत्ययः ॥ दंतशठा दंतानां शठा शठ

बर्बराकबरीतुंगीखरपुष्पाऽजगंधिका १३९ एलापर्णीतुसुवहारास्नायुक्तरसाचसा चांगेरीचुक्रिकादंतशठांबष्ठाम्ललोणिका
१४० सहस्रवेधीचुक्रोऽम्लवेतसःशतवेध्यपि नमस्कारीगंडकारीसमंगाखदिरेत्यपि १४१

धातोः पचाद्यच् शप् ॥ अंबष्ठा अंबेतिष्ठति सुपीतिकप्रत्यये अंबाम्बेतिषत्वं अंबष्ठोदेशभेदेपिविप्राद्वैश्यासुतेपिच अंबष्ठाप्यम्ललोण्यांस्यात्पाठायूथिकयोरपि इत्युक्तत्वात् ॥ अम्ललोणिका अम्ललोलिकेत्य पि पंच अम्ललोणिकायाः चुका इति ख्यातायाः १४० सहस्रवेधी सहस्रं शतंवावेधितुं शीलमस्य विध विधाने ॥ चुक्रः चकत्यनेन चकतृप्तौ प्रतिघातेच ॥ अम्लवेतसः अ म्लश्चासौवेतसश्च अम्लत्वात् ॥ शतवेधी शतानि वेधितुं शीलमस्य चतुष्कमम्लवेतसस्य चांगेर्यादिनवपर्याया इत्यपि मतम् ॥ नमस्कारी नमस्करणशीला ॥ गंडकारी गंडेषुग्रं थिषुकारी ॥ समंगा समंगति समित्युपसर्गः अगि गतौ ॥ खदिरा खदति खदस्थैर्ये चत्वारि लज्जालु लाजाळु इति प्रसिद्धायाओषधेः १४१

जीवंती जीवति शतृप्रत्ययांतात् उगितश्चेतिङीप् जीवयतीतिविग्रहेअंतर्भावितण्यर्थः जीवयतिवा जीवप्राणधारणे॥ जीवनी करणेल्युट्॥ जीवा जीव्यतेऽनया करणेघञ्॥ जीवनीया जीवनायहिता छप्रत्ययः॥ मधुः मन्यते मनज्ञाने फलिपाटीत्युः धश्चादेशश्च॥स्रवा स्रवति स्रुगतौ मधुस्रवेत्येकंनामेत्यन्ये मधुपुष्परसेक्षौद्रेमद्येनातुमधुद्रुमे वसंतदैत्यभिच्चैत्रेस्याज्जीवंत्यांतुयोषितीतिमेदिनी॥ विश्वप्रकाशोप्येवं पंचजीवंत्याः हरणवेल हरणडोडीइतिख्यातायाः॥ कूर्चशीर्षः कूर्चश्मश्रुतद्वच्छीर्षमस्य॥ मधुरकः मधुरएव स्वार्थेकः॥ शृंगः शृणाति शृहिंसायां॥ ह्रस्वांगः ह्रस्वान्यंगान्यस्य॥ जीवकः जीवयति पंचजीवकस्य॥ किराततिक्तः किरातदेशोऽस्तिजन्मस्थानमस्य मत्वर्थेअच् किरातश्चासौतिक्तश्च किराततिक्तश्च भूनिंबहिमकावपीतिरभसः भूनिंबः भुवोनिंबइव॥ अनार्यतिक्तः अनार्यप्रियश्चासौतिक्तश्च शाकपार्थिवादिः

जीवंतीजीवनीजीवाजीवनीयामधुस्रवा कूर्चशीर्षोमधुरकःशृंगह्रस्वांगजीवकाः १४२ किराततिक्तोभूनिंबोऽनार्यतिक्तो ऽथसप्तला विमलाशातलाभूरिफेनाचर्मकषेत्यपि १४३ वायसोलीस्वादुरसावयस्थाऽथमकूलकः

अयंकिराईतइतिख्यातस्य॥ सप्तला सप्तलाति॥ विमला विगतोमलोयया॥ शातला शातंसुखंलाति विमलाशातलायांस्यादितिविश्वप्रकाशः॥ भूरिफेना भूरयः फेनायस्याः॥ चर्मकषा चर्मणःकषा पंचसप्तलायाः शिकेकाईइतिप्रसिद्धायाः॥ वायसोली वायसानोलंडति ओलडि उत्क्षेपे णिजभावेअन्येभ्योपीतिडः शकंध्वादित्वात् पररूपम्॥ स्वादुरसा स्वादुःरसोऽस्याः॥ वयस्था वयसिस्थीयतेऽनया वयस्थातुस्त्रियांब्राह्मीगुडूच्यामलकीषुच सूक्ष्मैलायांचकाकोल्यांपथ्यायांतरुणेषुच त्रीणिलाहानकावळीकाकोलीइतिचख्यातस्य॥ मकूलकः मंकति मकिमंडने ऊलच्प्रत्ययेस्वार्थेकः आगमानित्यत्वान्नुमन् पृषोदरादित्वाद्वत्वेमुकूलकोपि॥

निकुंभः कुं भूमिं बिभर्ति नियतः कुंभोनिकुंभो निकुंभः कुंभकर्णस्यतनयेदंतिकोषधौ॥ दंतिका दम्यतेऽनया दमुपशमे दंतिजेत्यपि॥ प्रत्यक्श्रेणी प्रत्यंचीश्रेण्य स्याः॥उदुंबरपर्णी उदुंबरस्येवपर्णान्यस्याः पंचदंत्याः दांतीइतिख्यातायाः यस्याः बीजंजयपालइतिख्यातं १४४ अजमोदा अजंमोदयति मुदहर्षे यद्वा अजेनमोद्यते मोद्यतेवा॥ उग्रगंधा उग्रोगंधोऽस्याः॥ ब्रह्मदर्भा ब्रह्मणादृश्यते दृभीग्रंथे॥ यवानिका इंद्रवरुणेतिङीष् आनुक् यमानिकेतिवा यमेनानितिण्वुल् ततःकन् ५ यवान्याः ओंवाइतिख्यातायाः यवानीद्वयस्यहेठनामनीत्यपिमतं॥ पुष्करं पुष्णाति पुष्यतिवा पुषपुष्टौ पुष्करंपंकजेव्योम्निपयः करिकराग्रयोः॥ काश्मीरं कश्मीरेषुभवं॥ पद्मपत्रं पद्मस्येवपत्रं अस्याः पद्मवर्णमिलिक्ष्वचित्। अः त्रीणिपौष्करमूले पुष्करमोषधिविशेषस्तस्यमूलेत्यर्थः १४५ अव्यथा नव्यथते व्यथभयसंचलनयोः॥

निकुंभोदंतिकाप्रत्यक्श्रेण्युदुंबरपर्ण्यपि १४४ अजमोदातूग्रगंधाब्रह्मदर्भायवानिका मूलेपुष्करकाश्मीरपद्मपत्राणिपौष्करे १४५
अव्यथातिचरापद्माचारटीपद्मचारिणी कांपिल्यःकर्कशश्चंद्रोरक्तांगोरोचनीत्यपि १४६ प्रपुन्नाडस्त्वेडगजोदद्रुघ्नश्चक्रमर्दकः

अतिचरा अतिचरति॥ पद्मा पदगतौ मन्प्रत्ययः॥ चारटी चारयतिसा॥ पद्मचारिणी पद्मेचरितुंशीलमस्याः॥ पंचउत्तरदेशेप्रसिद्धायाः पद्मचारिण्याः स्थलकमलिनी इतिख्यातायाः॥ कांपिल्यः कपिकिंचिच्चलने बाहुलकादिल्यः ततः स्वार्थेण् कांपिल्लइत्यन्यत्र चंद्रः कर्पूरकांपिल्लसुधांशुस्वर्णवारिषुवितिमेदिनी॥ कर्कशः करेकशति कशशब्दे शकंध्वादित्वात्पररूपं॥ चंद्रः चंदयति चदिआल्हादने॥ रक्तांगः रक्तमंगंयस्य॥ रोचनी रोचते रुचदीप्तौ रोचनीकर्कशेस्मृता इत्यु॰ रेचनीइत्यपिपाठः पंच शेंडारोचनीतिख्यातायारोचन्याः १४६ प्रपुन्नाडः पुमांसंनाडयति [illegible] प्रपुन्नाडः प्रपुनाडः प्रपुनडः॥ एडगजः एडोमेषएवगजोयस्य यद्वा एलगजः॥ दद्रुघ्नः दद्रुंरोगंहंति दद्रूघ्नइत्यपि॥ चक्रमर्दकः चक्रंदद्रुंमृद्नाति मृदक्षोदे॥

पद्माटः पद्ममिवपद्मांवा पद्मसमूहंवा टति अटगतौ ॥ उरणाख्यः उरणस्यमेषस्याख्यास्य ॥ उरणाक्षः उरणस्याक्षीवाक्षियस्य तत्तुल्यपुष्पत्वात् षडूंदाकळाइति ख्यातस्य ॥ पलांडुः पालयति पालरक्षणे बाहुलकादांडुः पृषोदरादिः ॥ सुकंदकः शोभनंअतीववाकंदयति कदिरोदने मस्तकजातिभ्रंशकत्वात् द्वे पलांडोः कांदाइतिम० ॥ १४७ ॥ हरितेहरिद्वर्णेतत्रपलांडौलतार्कः लतासु अर्च्यते अर्च्यतेवा अर्कस्तवने अर्चपूजायां ॥ द्रुद्रुमः दुष्टोद्रुमः इतिद्वे ॥ महौषधं महच्चतदौषधंच महौषधंतुशुंठ्यांस्याद्विषायांलशुनेपिचेत्युक्तत्वात् ॥ लशुनं अश्नाति अश्नुतेवा अशभोजने अशूव्याप्तौसंघातेचेतिवा अशेर्लशश्चेतिसाधुः लशूनमित्यपि ॥ गृं

पद्माटउरणाख्यश्चपलांडुस्तुसुकंदकः १४७ लतार्कदुद्रुमौतत्रहरितेऽथमहौषधम् लशुनंगृं
जनारिष्टमहाकंदरसोनकाः १४८ पुनर्नवातुशोथघ्नीवितुन्नंसुनिषण्णकं

जनः गृंज्यते भक्षणेनकथ्यते रोगेषु गृजि शब्दे कर्मणिल्युट् ॥ अरिष्टः नरिष्टमस्मात् अरिष्टोलशुनेनिंबेफेनिलेकाककंकयोः अरिष्टमशुभेतक्रेसूतिकागारआसवे शुभेमरणचिन्हेचेत्युक्तत्वात् ॥ महाकंदकः महत्कंदमस्य ॥ रसोनकः रसेआस्वादनेऊन्यते पातकहेतुत्वात् ऊनपरिहाणे एरच् घञ् वाणिलोपः स्वार्थेकन् षट्लशुनस्य लसूनइतिम० ॥ लशुनगृंजनयोराकृतिभेदेपि रसैक्यात् अभेदंबहवोमन्यंते १४८ पुनर्नवा पुनरपीस्थानंनवाभूयतेवा ॥ शोथघ्नी शोथंहंति द्वे पुनर्नवायाः घेटुळीइतिदेशेप्रसिद्धायाः ॥ वितुन्नं विगतंतून्नं व्यथनमस्मात् ॥ सुनिषण्णकं सुष्टुनिषण्णमस्मात् द्वे सुषुन कुरडू इतिख्यातस्यशाकभेदस्य ॥

संस्पर्शो सायकुस्पृशति स्पृश्यतेना स्पृशसंस्पर्शने ॥ मदूच्चक्रवर्तिन्याः चावक्तइतिख्यातायाः ॥ शादी शदति शदरुजादौ ॥ गंधमूली गंधः मूलमस्याः गंधमूलैषपि ॥ षड्ग्रंथिका षड्बहवोग्रंथयोस्याः ॥ कर्चूरः कर्चति कर्चगतौ कर्चुरोपि ॥ पलाशः पलमश्नाति अशभोजने पलेमांसेआशायस्यवा पंचशाम्याः कापुरकाचरी आंबेहळद इतिख्याताया: ॥ कारवेल्लः कारंवेल्लति वेल्लचलने ॥ कठिल्लकः कठति कटेवर्षावरणयोः कठिल्लकइत्यपि तत्रेत्थं कठति कठशोके १५४ सुषवी सूसवति सूप्रेरणे (सुसवी सूशवी) त्रीणिकारवेल्लस्य कारलीइतिख्यातस्य ॥ कुलकं कोलति कुलसंस्त्याने इगुपधेतिकेस्वार्थेकन् कुलकंतुपटोलेस्यात्संबद्धश्लोकसंहतौ पुंसिवल्मीककाकेंदुकुलश्रेष्ठपुक

नस्यांकटंभराराजबला। षड्ग्रंथिकेत्यपि कर्चूरोपिपलाशोऽथकारवेल्लः कठिल्लकः १५४ सुषवीचाथकुलकंपटोलस्तिक्तकःप टुः कूष्मांडकस्तुकर्कारुरुर्वारुःकर्कटीस्त्रियौ १५५

ष्यते पटोलः पाटयति पटगतौ अंतर्भावितात्ओलच् ॥ तिक्तकः स्वार्थेकः ॥ पटुः पटति पटगतौ पटुर्दक्षेचनीरोगेचतुरेप्यभिधेयवत् पटोलेतुपुमान्क्लीबेछत्रालवणयोरपि चत्वारिपटोलस्य पडवळ इतिख्यातस्य ॥ कूष्मांडकः कु ईषत् ऊष्म अंडेषुयस्य पित्तलत्वात् ॥ कर्कारुः कर्कशत्वकुवर्णमृच्छति ऋगतौ बाहुलकादुण् द्वेकूष्मांडस्य कोहळाइतिख्यातस्य ॥ उर्वारुः ऋधातोःसंपदादित्वात् क्विपि बाहुलकादुत्वेरणो तेर्बाहुलकादुण् पृषोदरादिर्वा यद्वा उर्वधातोर्घञिउर्वं संज्ञापूर्वकत्वाद्दीर्घाभावेततोभ्यादिगणस्थऋगतौ अस्मात्बाहुलकादुण् मापणार्थोह्रासः ह्रस्वाआर् इतिरुलाउर्वारुशब्दःसाधुः (ईर्वारुः ईरगतौ। इर्वारुः ह्रस्वः। इर्वालुः। एर्वारुः आङ्पूर्वकः इत्येतेपाठाः) उन्मत्तोधुस्तरिर्वारुः कर्कटिःस्यादितिपुंस्कांडेरत्नकोशात् ॥ कर्कटी करंकटति कटेवर्षादौ कर्कटिरित्यपिपाठः उभयंशाकंभ्यादि द्वेकर्कट्याः कांकडीइतिख्यातायाः १५५

इक्ष्वाकुः इक्षुमाकरोति यद्वा इक्षुरितिशब्दमकति अकुमतौ इक्ष्वाकुः कटुतुंब्यांस्त्रीसूर्यवंशेनृपेपुमान्॥ कटुतुंबी कटुश्चासौतुंबीच तुंबति रुचिं तुबिअर्दने अच्गौरादिः द्वेकटुतुंब्याः कडूदुध्याभोंपळाइतिख्यातायाः॥ अत्र इक्ष्वाकुपदं कट्वकटुतुंब्युभयसाधारणं तुंबी तुंबिः तुंबा ॥अलांबूः नलंबते लबिअवस्रंसने (आलाबुः आलाबूः लाबुः लाबूः अलाबुःस्त्रीपिंडफलातुंबिस्तुंबीमहाफला तुंबातुवर्तुलालाबूर्निबेतुंबीतुलाबुकेतिवाचस्पतिः अलाबूस्तुंबकःप्रोक्तइतिचंद्रः अलाबुर्न्हस्वांतोपिक्वचित्) द्वे काळा तांबडा भोंपळाइतिप्रसिद्धस्य॥चित्रा चीयते चित्राखुपर्णीगोडुंबासुभद्रादंतिकासुच मायायांसर्पभेदेस्त्रेनदीभेदेषुचस्त्रियामितिमेदिनी॥गवाक्षी गांभूमिमक्ष्णोति अक्षूव्याप्तौ गवाक्षीत्विंद्रवारुण्यांगवाक्षोजालकेकपावितिहेमः॥ गोतुंबा गांभुवंतुंबति तुबि

इक्ष्वाकुःकटुतुंबीस्यात्तुंब्यलांबूरुभेसमे चित्रागवाक्षीगोतुंबाविशालात्विंद्रवारुणी १५६ अर्शोघ्नःशूरणःकंदोगंडीरस्तु
समष्ठिला कलंब्युपोदकास्त्रीतुमूलकंहिलमोचिकाः १५७

अर्दने गोडुंबेत्यपिपाठः पृषोदरादिः इतित्रीणिकंवडळइतिख्यातस्य॥विशाला विशलति शलचलने णप्रत्ययः॥इंद्रवारुणी इंद्रंवारयति वृवरणे द्वेइंद्रवारुण्याः मोठीकंवडळइतिख्यातायाः॥ अर्शोघ्नः अर्शांसिहंति अमनुष्यकर्तृकेचेतिटक्॥शूरणः शूर्यते शूरीहिंसायां दंत्यादिरपि॥कंदः कंदयति कंद्यतेवा कदिआह्वाने त्रीणिसूरणइतिख्या०॥गंडीरः गंडति गडिवदनैकदेशे गंड्यतेवा यद्वा गंडीन्ग्रंथीन्ईरयति ईरप्रेरणे॥समष्ठिला सम्यगष्ठिलाबीजंयस्याः गंडीरोनासमष्ठिलेतिमाला द्वेगंडीराख्यशाकभेदस्य॥ कडूसूरणइतिख्यातस्य॥कलंबी कडति कडमदे डलयोःसावर्ण्यात् यद्वा केजलेलंबतेवा लबिअवस्रंसने कलंबीशतपर्वाचकलंबूर्वासवीरुधइतिवाचस्पतिः॥कलंबीशाक

भेदेपिस्याद्दंडशारयोपुमानितिमदिनी॥ उपोदका उपाधिकमुदकमस्याः अपोदकेत्यपिपाठः इतिद्वे वाळी थोरमयाळ पोईमावीवेल इतिप्रसिद्धायाः॥मूलकं मूल
यति मूलरोहणे मुळाइतिविख्यातं॥हिलमोचिका हिलति हिल्भावकरणे मोचयति हिलाचासोमोचिकाच चाकवनइतिप्रसिद्धा १५७ वास्तुकं वास्तोभवं अ
ध्यात्मादित्वात्ठञ्कादेशः चंदनबटवेतिप्रसिद्धं कलंब्यादिकाःपंचशाकभेदाज्ञेयाः प्रत्येकं तस्मिन्कलंबीवेणवाकृतिर्विद्यते वास्तूकमपिपाठः॥ दूर्वा दुर्वति
दुर्व्यतेवा दुर्विहिंसायां अच्घञ्वा ॥शतपर्विका शतंपर्वति·पर्वपूरणे शतपर्णिकेत्यपि तत्रेत्थं शतंपर्णान्यस्याः शतपर्विकातुदूर्वायांवचायामपियोषि

वास्तुकंशाकभेदाःस्युर्दूर्वातुशतपर्विका सहस्रवीर्याभार्गव्योरुहाऽनंताऽथसा
सिता १५८ गोलोमीशतवीर्याचगंडालीशकुलाक्षकः कुरुविंदोमेघनामामु
स्तामुस्तकमस्त्रियाम् १५९

ति॥सहस्रवीर्या सहस्रंवीर्याण्यस्याः॥ भार्गवी भृगोरियं॥ रुहा रोहति॥अनंता नअंतोऽस्याः
षट्दूर्वायाः १५८ सादूर्वासिता शक्लाऽस्तिचेत् तत्रगोलोमी गोलोमसुजाता॥शतवीर्या शतंवीर्याण्यस्याः॥ गंडालीगुंडति गडिवदनैकदेशे बाहुलकादालच्
इत्याद्यूह्यं॥शकुलाक्षकः शकुलस्येवमत्स्यस्येवाक्षियस्य बहुव्रीहौकप् इतिचत्वारिनामानिभवंति॥कुरुविंदः कुरून्विंदति विदृलाभे कुरुविंदरत्नभेदेमुस्ताकु
ल्याषयोः पुमानितिविश्वमेदिन्यौ॥मेघनामा मेघनामानिनामान्यस्य॥ मुस्ता मुस्तयति मुस्तसंघाते॥मुस्तकं तत्रमेघनामामेघपर्यायनामकः मुस्तकंच पुंस्यपिज्ञे
यं इतिचत्वारिमुस्तायाः मोथाइतिख्यातायाः १५९

भद्रमुस्तकः भंदते भदि कल्याणे रन्प्रत्यये भद्रमिति भद्रं करोति वा भद्रश्चासौ मुस्तकश्च भद्रसपि नाम तत्रैत्यं भद्रंस्यान्मंगले हेम्नि मुस्ते केकरणांतर इति रुद्रः॥ गुंद्रा गांजलंद्रा ति द्रागतौ आतोऽनुपसर्गे इति के पृषोदरादित्वात्साधुः द्वे मुस्ताविशेषस्य नागरमोथा इति ख्या० अस्त्रियामित्यनेन मुस्तकभद्रमुस्तकयोरन्वयः गुरवस्तु तत्र भेदमाहुः स यथा मुस्तकं बुधरो मेयो यनोराजीवशेरुकः भद्रमुस्तो वराहोद्वो गांगेयः कुरुविंदक इति॥ चूडाला चूडास्त्यस्याः चूडाला तूच्चटायां स्त्री चूडावत्यां च वाच्यवत्॥ चक्र ला चक्रं लाति॥ उच्चटा उच्चटति चटगतौ अंतर्भावितण्यर्थादच् इति त्रीणि उच्चटामूलस्य मुस्ताविशेषस्य॥ वंशः वमति डुवम् उद्गिरणे उशयत्वे बधिवा वशकां तौ वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेपि च॥ त्वक्सारः त्वक्त्वचि वा सारोऽस्य॥ कर्मारः कर्मक्रियामृच्छति ऋगतौ कर्मण्यण्॥ तृणध्वजः तृणेषु ध्वज इव १६० श

स्याद्भद्रमुस्तको गुंद्रा चूडाला चक्रलोच्चटा वंशे त्वक्सार कर्मार त्वचिसार तृणध्वजाः १६० शतपर्वा यवफलो वेणुमस्कर तेज
नाः वेणवः कीचकास्ते स्युर्ये स्वनंत्यनिलोद्धताः १६१ ग्रंथिर्ना पर्वपरुषी गुंद्रस्तेजनकः शरः

तपर्वा शतं पर्वाण्यस्य॥ यवफलः यव इव फ लान्यस्य यवफलो मांसिकायां कुटजत्वचिसारयोरिति हैमः॥ वेणुः वेणति वेणृ निशामनादौ॥ मस्करः मस्कते नेन वा मस्कगतौ यद्वा मंकते मकि मंडने आगमशास्त्र स्यानित्यत्वान्नुमन्न सुडागमश्च॥ तेजनः तेजयति शस्त्रमग्निं वा दशकं वेणोः॥ ये वेणवोऽनिलोद्धताः अनिलेन कीटकादिकृतरंध्रगतवायुना उद्धताः ताडिताः सन् तः स्वनंति शब्दायंते ते कीचकाः स्युरित्येकं नाम चीकति शब्दायंते चीकयतेराद्यंतविपर्ययश्चेति वुन् अकादेशो कीचकः साधुः इत्याद्यूह्यं १६१ ग्रंथिः ग्रंथिस्तु ग्रं थिपर्वणोर्नाबंधे रुग्भेदपर्वणोः॥ पर्व पर्वति पर्वपूरणे पर्वक्लीबं महे ग्रंथौ प्रस्तावे लक्षणांतरे दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्विति॥ परुः पिपर्ति पृपालनपूरण

योः परुरुदंतोपि बाहुलकादुप्रत्ययइतिभावः मृज्जासारोग्रंथि परुः परागः कुसुमरेणुरितिपुंस्कांडेरल्लकोशात् त्रीणिवंशादिग्रंथेः पेरंइतिख्यातस्य तत्र ग्रंथिर्नापुमान्॥ गुंद्रः गोदते गुदक्रीडायां॥तेजनकः तेजयति तिजनिशाने॥शरः शृणाति शृहिंसायां सरइत्यपि तत्र सरति सृगतौ शरस्तुतेजनेबाणेदध्यन्नेनाशरंजले सरस्तु मुंजोबाणाख्योगुंद्रस्तेजनकःशरइतिवाचस्पतेर्दत्यादिश्च त्रीणिशरस्य॥नडः नडति नडगहने नलइत्यपिपाठः डलयोःसावर्ण्यात्॥धमनः धमति धमध्माने सौ ञः धम्यतेवा॥पोटगलः पुटेनसंश्लेषेणगलति गलअदने स्रवणेच अथपोटगलःपुंसिनलेचाकाशमत्स्ययोरितिमेदिनी त्रीणिदेवनळइतिख्यातस्य॥काशं काशते काशदीप्तौ काशस्तृणेरोगभेदेकाशीवाराणसीपुरी कासकाशश्चतृणवाचकौशब्दौ॥१६२॥इक्षुगंधा इक्षुवद्गंधोऽस्याः॥पोटगलः इतित्रीणिकाशस्य॥काशंपुंनपुंस

**नडस्तुधमनःपोटगलोऽथोकाशमस्त्रियां १६२ इक्षुगंधापोटगलःपुंसिभूम्नितुबल्वजाः रसालइक्षुस्तद्भेदाःपुंड्रकांतार कादयः १६३ स्याद्वीरणंवीरतरंमूलेऽस्योशीरमस्त्रियां**

कं पूर्वमुक्तं बल्वजाइत्येकंपुल्लिंगंबहुवचनांतं मोळ लव्हाळे लवा इतिख्यातस्य एको बल्वजइतिभाष्यकारवचनादेकत्वेपि बलते बलसंवरणे वजति वल्लवासौवजश्च॥रसालः रसेनालति अल्यतेवा पूर्यते पूरयतिवा अलभूषणादौ॥इक्षुः इष्यते इषु इच्छायां हेइक्षोः॥पुंड्रः पुंड्यते पुंडिखंडने रक्प्रत्ययः॥कांतारकः इत्यादिकास्तस्येक्षोर्भेदाः आदिशब्देन कोशकारादिग्रहः सच इक्षुः कर्कटकोवंशः कांतारो वेणुनिःसृतिः इक्षूरस्यःपौंड्रकश्चरसालःस्यात्सुकुमारकः इतिएकैकं १६३ वीरणं विपक्षिणमीरयति॥वीरतरं अतिशायितंवीरं स्याद्वीरणेवीरतरंवीरश्रेष्ठेश रेचना इतिवृणभेदस्य काळावाळाइतिख्यातस्य अस्यवीरणस्यमूलेतु उशीरं उश्यते वशकांतौ॥ ८ ८

अभयं नभयमस्मात् अभयास्त्रीहरीतक्यामुशीरेत्वनपुंसकं निर्भयेवाच्यलिंगेस्यात् ॥ नलदं नलंगंधंददाति डुदाञ्दाने नलदंस्यात्पुष्परसोशीरमांसीषुनद्ध ये ॥ सेव्यं सेवितुमर्हतितत् षेट्टसेवने सेव्यंक्लीबंस्कषीरेस्यात्सेवार्हेपुनरन्यवत् ॥ अमृणालं मृणालमप्यत्र मृणालंनलदेक्लीबपुंन्नपुंसकयोर्विषे ॥ ज- लाशयं जलेआशेते अच् यद्वा जलोजडः आशयोयस्य जलाशयोजलाधारेस्यादुशीरेऽन्यलिंगकः १६४ लामज्जकं लातिदोषान् लामज्जासारोऽ स्य ॥ लघु लंघतेरोगान् लंघ्यतेवा भूस्थत्वात् लघिगतौ ॥ लयं लीयते लीङ्श्लेषणे ल्यस्तंनाम तत्रेदं लामज्जकंसवासंस्यादमृणालंलयंलघ्वितिसुश्रुतः सम स्तमपि तत्रलघुलयं अवदाहमिति अवलीयनेदाहोऽस्मादिति ॥ इष्टकापथं इष्टकेवहढः पंथायस्येत्याचूर्ल्यं ॥ लामज्जकंलघुलयमवदाहेष्टकापथे अवदानमिंद्रगुप्रम

अभयंनलदंसेव्यममृणालंजलाशयं १६४ लामज्जकंलघुलयमवदाहेष्टकापथे नडादयस्तृणंगर्मुच्छ्यामाकप्रमुखाअपि
१६५ अस्त्रीकुशंकुथोदर्भः पवित्रमथकत्तृणं वदाहेष्टकापथइतिवाचस्पतिः ॥ नडादयः नडकाशादयः ॥ तृणं तृण्यते तृणुअदने तृणजातौ यांइत्यर्थः नलादयइत्यपिपाठः येत्वगर्मुच्छ्यामाकप्रमुखाः गर्मुच्छ्यामाकौतृणधान्यविशेषौ गर्मुत् गिरति गीर्यतेवा गृनिगरणे ॥ श्यामाकः श्यायते श्यैङ्ग तौ यद्वा श्यामंवर्णमकति अकगतौ प्रमुखशब्दादुच्यमाणाः कुशादयः कंगुकोद्रवाद्याश्चतेपितृणजातीयाः अत्रप्रमुखशब्दान्नीवाराद्याग्राह्याः अन्यथाको द्रवादीनांहविष्यत्वापातात् ॥ शामकः शामकोपिचेतिहलायुधाच्छामकोपि एकं १६५ कुशं कौशेते यद्वा कुश्यति कुशिरश्लेषे ॥ कुथः कुथ्यतिकुथपूतीभावे कु थः स्त्रीपुंसयोर्वर्णकंबलेपुंसिबर्हिषि ॥ दर्भः दृभ्यते दृभिग्रंथे ॥ पवित्रं पूयतेनेन चत्वारिकुशस्य ॥ तत्रक्लीबपुंसोः ॥ कत्तृणं कुत्सितंतृणं ॥ ७

पौरं पुरेभवं पौरंविष्णुपुरोद्भूतेकतृणेपुंनपुंसकं ॥सौगंधिकं शोभनोगंधः सुगंधः प्रयोजनमस्य प्रयोजनमितिठक् ॥ध्यामं ध्यायतेपशुभिः ध्यैचिंतायां॥देवज
ग्धकं देवैरद्यते रौहिषं षड्गजाप रोहिस गवत इतिख्यातस्यतृणभेदस्य १६६ छत्रा छदति छादयतिवा छदअपवारणे ॥अतिच्छत्रः अतिक्रांतः छत्रं॥पालघ्नः
पालं क्षेत्रंहंतीतिपालघ्नः ॥मालातृणकं मालाकाराणितृणान्यस्य ॥भूस्तृणं भुवः तृणमितिविग्रहेपारस्करादित्वात्सुट् भूरव्ययंवा पंचवत्राकृतेर्जलतृणभेदस्य
अ॰ आद्यत्रयंरोतगवतइतिख्या॰ अंत्यद्वयंमालाकारतृणस्येत्यपिमतं ॥शष्पं शस्यते शष्यतिवा शसुहिंसायाम् शषशोषणेवा ॥बालतृणं बालंचतत्तृणंच

पौरसौगंधिकध्यामदेवजग्धकरौहिषं १६६ छत्रातिछत्रपालघ्नौमालातृणकभूस्तृणे शष्पंबालतृणंघासोयवसंतृणमर्जुनं
१६७ तृणानांसंहतिस्तृण्यानड्यातुनडसंहतिः तृणराजाह्वयस्तालोनालिकेरस्तुलांगली १६८

हे कोमलतृणस्य ॥घासः॥य
वसं यौति यूयतेवा यूमिश्रणे अमिश्रणेच गवादीनांभक्ष्यतृणस्य ॥तृणं तृणयते तृणुअदने॥अर्जुनं अर्ज्यते अर्जअर्जने तृणाख्यायां उनन् इत्य
न्यमात्रस्य॥ तृणानांसंहतिः समूहः तृण्या ख्यातइत्येकं॥नडसंहतिः नडानांसंहतिर्नड्येत्युच्यते एकं॥ तृणराजाह्वयः तृणानांराजा तृणराज इत्या
ह्वयोयस्य॥तालः तालयति तलप्रतिष्ठायां ॥नालिकेरः नलति नल्यतेवा णलबंधे एकीयमतं नालिश्चासौकेरश्च नारिकेलइत्यपि॥ लांगली लंगति ल
गिगतौ बाहुलकात् हैनालिकेरस्य नारळ इतिख्यातस्य लांगलीस्त्री औषधंतः इत्यंतःपुंसीत्यन्ये १६८ ७ ७ ७

घोंटा घोणते घुणभ्रमणे ॥ पूगः पवते पुनातिवा पुञ् पवने पूगः क्रमुकसंघयोरितिहेमः ॥ क्रमुकः क्रामति क्रमुपादविक्षेपे क्रमुकस्तुपुमान् भद्रमुस्तकेब्रह्मदारुणि ॥ गुवाकः गूवाकइत्यपि गुवाकोपिचगूवाकइतिनारपालः ॥ खपुरः खमिंद्रियमाकाशंवापिपर्ति पृपालनपूरणयोः पंचपूगवृक्षस्य सुपारी पोफळी इतिख्यातस्य ॥ अस्यपूगस्यफलं उद्वेगं उद्गतोवेगोऽस्मात् ॥ एतेत्रयः तालनारिकेरपूगाः हिंतालसहिताः हिंतालेनचतुर्थेनसहिताः सतुहिंतालः तालभेदः कथ्यते एवंचत्वारः खर्जूरादयश्चत्वारश्च एवमष्टौ एतेतृणद्रुमाइत्युच्यंते ॥ तत्रैकं स्यात् खर्जूरइतिख्यातस्य खर्जूरः खर्जति खर्जव्यथने खर्जूरंरूप्यफलयोः खर्जूरः कीटवृक्षयोरित्युक्त

घोंटातुपूगः क्रमुकोगुवाकः खपुरोऽस्यतु फलमुद्वेगमेतेचहिंतालसहितास्त्रयः खर्जूरः केतकीतालीखर्जूरीचतृणद्रुमाः

१६९ इतिवनौषधिवर्गः सिंहोमृगेंद्रः पंचास्योहर्यक्षः केसरीहरिः कंठीरवोमृगरिपुर्मृगदृष्टिर्मृगाशनः

त्वात् ॥ केतकी केतयति कितनिवासे ङीषंता केगद् केतक इतिख्याता ॥ तथा ताली तालयति ॥ खर्जूरी खर्जूरभेदः १६९ इतिवनौषधिवर्गः सिंहः सिंचति सिंचक्षरणे ॥ यद्वा हिनस्ति हिंसिहिंसायां ॥ मृगेंद्रः मृगाणामिंद्रः ॥ पंचास्यः पंचने पचिविस्तारे पंचंविस्तृतमास्यमस्य यद्वा मुखपादाश्चपंचास्यानीवयस्य ॥ हर्यक्षः हरिणी पिंगलेअक्षिणीयस्य ॥ केसरी केसराः स्कंधवालाः संत्यस्य केसरीतुरगेसिंहेपुन्नागेनागकेसरइत्युक्तत्वात् ॥ हरिः हरति हृञ् इतिषट्सिंहस्याभिधानानि ॥ कंठीरवोमृगरिपुर्मृगदृष्टिर्मृगाशनइत्यादयोप्यस्यपर्यायाः कंठीरवः ईयुक्तः रवोयस्यसईरवः कंठोऽस्यास्तीतिकंठी कंठीचासोईरवश्च इतिमतत्वर्थे ॥ मृगरिपुः मृगाणांरिपुः ॥ मृगदृष्टिः मृगेषुदृष्टिर्यस्य ॥ मृगाशनः मृगानश्नाति ॥

पुंडरीकः॥ पंचनखः पंचनखाान्यस्य॥चित्रकायः चित्रः कायोऽस्य॥मृगद्विट् मृगान्द्वेष्टि इ॰१४सिंहनाः॥शार्दूलः शारयति शॄहिंसायां दूयते टुपरितापे शारश्चासौदूलश्च यद्वा
शृणाति॥द्वीपी द्वीवर्णावीयते ईङ्गतौ द्वीपं चर्मास्यस्य॥व्याघ्रः व्याजिघ्रति घ्रागंधोपादाने इतित्रीणिव्याघ्रस्याभिधानानि॥तरक्षुः तरंगति मार्गंवाक्षिणो
ति क्षिणुहिंसायां मितंद्रुवत् तरक्षिरित्यपिपाठः क्षेः स्येबाहुलकात् किः आधिशब्दवत्साधुः॥मृगादनः मृगमत्ति अदभक्षणे इतिद्वेकुकुराकृतेः कृष्णरेखा
चित्रितस्यमृगविशेषस्य तरस इतिख्यातस्याभिधाने १ वराहः वरंश्रेष्ठंआहंति हंतेर्डः॥सूकरः सवंप्रसवं करोति षूङ् प्राणिगर्भविमोचने संपदादित्वाद्भावे
क्विप् ततोहेत्वादिषुटः शूकरइत्यपिपाठः तत्रेत्थं शूकंराति रादाने यद्वा शूइतिध्वनिंकरोति॥घृष्टिः घर्षति घृषुसंघर्षे॥कोलः कोलतिपानत्वात् कुलसंस्त्या

पुंडरीकः पंचनखचित्रकायमृगद्विषः १ शार्दूलद्वीपिनौव्याघ्रेतरक्षुस्तुमृगादनः वराहःसूकरोघृष्टिःकोलःपोत्रीकिरिः
किटिः दंष्ट्रीघोणीस्तब्धरोमाक्रोडोभूदारइत्यपि २ कपिप्लवंगप्लवगशाखामृगवलीमुखाः

ने यद्वा कोलंत्यंगान्यत्र हलश्चेतिघ
ञ्॥पोत्री पोत्रंमुखाग्रमस्त्यस्य॥किरिः किरति कॄविक्षेपे किरइत्यपिपाठः॥किटिः केटति किटगतौ॥दंष्ट्री दंष्ट्राऽस्त्यस्य॥घोणी घोणानासाऽस्य॥स्तब्ध
रोमा स्तब्धानिरोमाण्यस्य॥क्रोडः क्रोडति क्रुडघनत्वे यद्वा क्रोडोऽस्त्यस्य॥भूदारः भुवंदारयति इतिद्वादशसूकरस्याभिधानानि २ कपिः कंपते क
पिचलने॥प्लवंगः विहंगवत्साधुः प्लुङ्गतौ॥ प्लवगः प्लवेनगच्छति गमेर्डः॥शाखामृगः शाखाचारीमृगः शाकपार्थिवादिवत्॥ वलीमुखः वलीयुक्तंमुख
मस्य बलीमुखः बलिमुखइत्यपिपाठौ॥

मर्कटः मर्कति मर्कसौत्रोधातुर्ग्रहणे ॥ वानरः वनेभवंफलादिवानंराति राआदाने ॥ कीशः कीइतिशब्दंईष्टे मूलविभुजादिः ॥ वनौकाः वनंओकोऽस्य इतिनववा नरस्यअभिधानानि ॥ भल्लुकः भलते भलहिंसायां ३ ऋक्षः ऋक्ष्णोति ऋक्षहिंसायां ॥ अच्छभल्लः अच्छश्चासौभल्लश्च ॥ भल्लूकः भालुकः भाल्लूकइ त्यपिपाठौ अच्छः स्फटिकंभल्लूकनिर्मलेष्विनिमेदिनीकारः इतिचत्वारिअच्छभल्लस्य आस्वलरीस इतिख्यातस्याभिधानानि ॥ गंडकः गच्छति गम्लृग तौ यद्वा गंडतिसंहतोभवति गडिवदनैकदेशे ॥ खड्गः खदति खडभेदने ॥ खड्गी खड्गंशृंगमस्यास्ति इतित्रीणिगेंडाइतिख्यातस्याभिधानानि ॥ लुलायः लुड विपंके लुडसंश्लेषणे डलयोरेकत्वं आप्नोति आप्लृव्याप्तौ लुलश्चासावायश्चयद्वा लुड्यते लुडविलोडने लुलापइत्यपिपाठः तत्रेदं लुलाविलोडिताआपो

मर्कटोवानरःकीशोवनौकाअथभल्लुके ३ ऋक्षाऽच्छभल्लभल्लूकागंडकेखड्गखड्गिनौ लुलायोमहिषोवाहद्विषत्कासरसैरि भाः ४ स्त्रियांशिवाभूरिमायगोमायुमृगधूर्तकाः

येन लुलविमर्दने यद्वा अयने अयगतौ लुलश्चासौअयश्च ॥ महिषः महति मह्यतेवा मह पूजायां यद्वा मंहने महिङ् वृद्धौ ॥ वाहद्विषन् वाहानांद्विषन् यद्वा वाहेषु ॥ कासरः कैजले आसरति स्सगतौ यद्वा ईषत्सरतीति स्थूलकायत्वात् ॥ सैरिभः सीरस्यस् र्यस्यइभइवइभः शकंध्वादित्वात्पररूपम् स्वार्थेण् पुत्रवाहनत्वात् इतिपंचमहिषस्य गवाइतिप्रसिद्धस्याभिधानानि ४ शिवा शिवःशिवावादेवतास्त्यस्याः शकुनावेदकत्वात् शिवःकीलेशिवात्रोष्टाभवेदामलकीशिवेतिशाश्वतात् ॥ भूरिमायः भूरिर्मायायस्य ॥ गोमायुः गांविरुतंवाचंमिनोति डुमिञ्प्रक्षेपणे ॥ मृग धूर्तकः मृगेषुधूर्तइव ॥

सृगालः अत्रपक्षेसृजति मायामिति शादिपाते शृंगमित्यादि धृगंगन्लानि शृगालोवंचकेदैत्येसृगालोडमरेविदुरितिविश्वः॥ वंचकः वंचयते वंचुप्रलंभने वंचुकइ-त्यपिपाठः वंचकस्तुखलेधूर्तेगृहबभ्रौनजंबुकइतिकोशांतरात्॥ क्रोष्टा क्रोशति क्रुशआह्वाने॥ फेरुः फेइत्यव्यक्तंरौति॥ फेरवः फेइत्यव्यक्तोरवोऽस्य॥ जंबुकः जमति जमु अदने इतिदशजंबूकस्याभिधानानि स्त्रियामिति पुंव्यक्तावपि शिवाशब्दोनित्यंस्त्रीलिंगइत्यर्थः॥ ओतुः अवति आखुभ्यः गृहंवा अवरक्षणादौ॥ बिडालः बेडति बिडयतेवा बिडआक्रोशे॥ मार्जारः मार्ष्टिमुखमिति मृजूशुद्धौ॥ वृषदंशकः वृषान्मूषकान्दशति॥ आखुभुक् आखून्भुंक्ते आखुभ्यः भुनक्तिवा भुज पालनाभ्यवहारयोः इतिपंचमार्जारस्यनामानि॥ गौधेरः गोधायाःअपत्यं॥ गौधारः॥ गौधेयः एतेत्रयःशब्दाः गोधायांजातस्यलगोधायाः अपत्येगारइतिख्याते अयंहृ

**सृगालवंचकक्रोष्टुफेरुफेरवजंबुकाः ५ ओतुर्बिडालोमार्जारोवृषदंशकआखुभुक् त्रयोगौधेरगौधारगौधेयागोधिकात्मजे**

**६ श्वावित्तुशल्यस्तल्लोम्निशललीशललंशलं वातप्रमीर्वातमृगः कोकस्त्वीहामृगोवृकः ७**

घासपति गोधायांयोरपडइतिख्यातायांत तुण्डाज्जायते अस्यसर्पस्यदंशेनमानवः अवश्यंम्रियते॥ श्वावित् श्वानंविध्यति व्यधताडने क्विपिनहिवृतीतिदीर्घः॥ शल्यः शलति शलचलने इतिद्वेशल्यस्य साळईइतिप्रसिद्धस्याभि०॥ तल्लोम्नि तस्यशल्यस्यलोम्नि शलली शललं शलं इतित्रीणि॥ वातप्रमीः वातंप्रमिमीते वाताभिमुखधावनात् वातप्रमीःस्त्रियांतुल क्ष्मीवत्॥ वातमृगः वातइव वातस्यनामृगः इतिद्वेवातमृगस्य बाघूटइतिख्या०॥ कोकः कोकते कुकआदाने॥ ईहामृगः ईहांमृगयते मृगअन्वेषणे॥ वृकः वर्कते वृक-आदाने यद्वा वृणोति वृञ्वरणे इतित्रीणिवृकस्य। लांडुगाइतिख्यातस्याभिधानानि ७ ८ ८ ८ ८

मृगः मृग्यतेव्याधैरिति मृगअन्वेषणे॥कुरंगः कौरंगति रंगिगतौ॥वातायुः वातंअयते अयगतौ वानायुः वनायुरित्यपिपाठो॥हरिणः हरति मनोन्हियने गीतेनवा॥अजिनयोनिः अजिनस्ययोनिः इतिपंचहरिणस्याभिधाना०॥एण्याः चर्माद्यंआद्यशब्दात मांसादि ऐणेयं एण्याःविकारोऽवयवोवा इतिएकंनाम॥एणस्यतुचर्माद्यंऐणं एणस्यमृगस्य विकारोऽवयवोवा इत्येकं उभेऐणेयंऐणंचत्रिषुप्रोक्तं ८ कदली केदलति दलविशरणे॥कंदली कंजलंदलति यद्वा कंदेसस्यमूलेलीयते लीङ्श्लेषणे यद्वा कंदते क दिआह्वाने रंभावृक्षेचकदलीपताकामृगभेदयोः कलध्वनौकंदलीतुमृगगुल्मप्रभेदयोरितिनिर्लातेमेदिनीकारः॥चीनः चिनोति चिञ्चयने॥चमूरुः चम्वांऊरुर्यस्य॥ प्रियकः प्रियते प्रिञ्तर्पणे॥समूरुः शोभनावूरूयस्य इत्येतेषट्हरिणभेदाः अजिनयोनयोज्ञेयाः॥कृष्णसारः कृष्णोनसारः कृष्णशारइत्यपिपाठः कृष्णश्चासौशा

मृगेकुरंगवातायुहरिणाजिनयोनयः ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभेत्रिषु ८ कदलीकंदलीचीनश्चमूरुप्रियकावपि समू रुश्चेतिहरिणाअमीअजिनयोनयः ९ कृष्णसाररुरुन्यंकुरंकुशंबररौहिषाः गोकर्णपृषतैणर्श्यरोहिताश्चमरोमृगाः १०

रश्च शारः शबलकृष्णयोरितितालव्यादौरभसः॥रुरुः रौति रुशब्दे॥न्यंकुः नितरामंचति॥रंकुःरमते रज्यतेवा॥शंबरः शंवृणोति वृञ्वरणे शंवरः संवरइत्यपि पाठो॥रौहिषः रोहिषंतृणभेदमत्ति अत्रार्थेशैषिकोण् रोहिषंचतृणेक्लीबंपुंसिस्यात्हरिणान्तइतिविश्वप्रकाशः रोहिषइत्यपिपाठः॥गोकर्णः गोरिवकर्णावस्य गो कर्णोऽश्वतरेसर्पेमृगभेदेगणांतरइतिहेमचंद्रः॥पृषतः पृषताःसंत्यस्य यद्वा वर्षति वृषुसेचने॥ऐणः एण्याःअपत्यं॥ऋश्यः ऋश्यति ऋषीगतौ॥रोहितः रो हति रुहजन्मनिप्रादुर्भावेच॥चमरः चमति चम्यतेवा चमुअदने॥चमरंचामरेस्त्रीतुचमरीमृगभेदयोरित्युक्तत्वात् एतेद्वादशमृगभेदाः स्फुः १०

गंधर्वः गंधयति गंध्यतेवा गंधअर्दने अर्वगतौ गंधश्चासौअर्वश्च यद्वा गंधेर्वः बांधोऽस्य गंधर्वः पशुभेदेस्यात्पुंस्कोकिलतुरंगयोः अंतराभवसत्वेचगायनेखेचरेपिचेतिविश्वमे दिन्यां ॥ शरभः शृणाति शृहिंसायां ॥ रामः रमंतेऽस्मिन्वानेन ॥ सृमरः सरणशीलः सृगतौ ॥ गवयः गवते गुङ्शब्दे ॥ शशः शशति शशप्लुगतौ इत्यादयोयेप्रोक्ताः ये चपूर्वोक्ताः सिंहाद्याः वक्ष्यमाणाश्चयेगोमेषहस्त्यश्वादयः सर्वेतेपशुजातयः पशुशब्दवाच्याःस्युः पश्यतिसर्वमविशेषेण दृशिरप्रेक्षणे ११ उंदुरुः उनत्ति उंदिक्लेदने मूषकः मुष्णाति मुषस्तेये ॥ आखुः आखनति खनुअवदारणे इतित्रीणिमूषकस्याभिधानानि ॥ गिरिका गिरति गॄनिगरणे ॥ बालमूषिका बालाचासौमूषिकाच ख वोंखुर्बालमूषिकेतिदुर्गः इतिद्वेस्वल्पमूषकजातेःअभिधाने ॥ छुछुंदरी ॥ गंधमुखी गंधःमुखेऽस्याः ॥ दीर्घतुंडी दीर्घंतुंडमस्याः ॥ दिवांधिका दिवाअंधिका इतिछुछुंदर्याः

गंधर्वःशरभोरामः सृमरोगवयःशशः॰ इत्यादयोमृगेंद्राद्यागवाद्याः पशुजातयः ११ उंदुरुर्मूषकोप्याखुर्गिरिकाबालमूषि-
का छुछुंदरीगंधमुखीदीर्घतुंडीदिवांधिका सरटःकृकलासःस्यान्मुसलीगृहगोधिका १२ लूता स्त्रीतंतुवायोर्णनाभमर्क
टकाःसमाः

चत्वारिनामानि ॥ सरटः सरति सृगतौ ॥ कृकलासः कृकंशिरोग्रीवाकंठंवलासयति इतिद्वेसरडइतिख्यातस्याभिधाने ॥ मुसली मु सतिसंशायं मुसखंडने ॥ गृहगोधिका गृहेगाधिका गृहगोलिकेत्यपिपाठः इतिद्वेगृहगोधायाः पालइतिख्यातायाः अभिधाने ज्येष्ठास्त्रीकुड्यमत्स्याचगृहगोधा गृहालिकेतिकोशांतरम् १२ लूता लुनाति लूञ्छेदने ॥ तंतुवायः तंतून्वयति वेञ्तंतुसंताने तंत्रवायइत्यपिपाठः ॥ ऊर्णनाभः ऊर्णेवतंतुर्नाभावस्य ॥ मर्कटकः संज्ञायांकन् मर्कति मर्कः सौत्रोधातुर्ग्रहणार्थः इतिचत्वारिऊर्णनाभस्यकोष्टीकोळीइतिख्यातस्याभिधानानि ॥

नीलंगुः नितरांलंगति नीलंगूरपिनीलांगूरितिद्विरूपकोशः॥ कृमिः क्रामति क्रमुपादविक्षेपे क्रिमिरित्यपिपाठः क्रिमिर्नाक्रिमिवल्कीटलाक्षायांद्धमिलेखरइतिमेदिनी द्वे अपिपुंसिस्क्ष्मकीटमात्रस्याभिधाने॥ कर्णजलौकाः .कर्णस्यजलंओकोयस्य॥ शतपदी शतंपादायस्याः इतिद्वेकर्णजलौकसः घोण गोम वळोंजीइतिख्यातस्याभिधाने कर्णजलूकेत्यपिपाठः १३ वृश्चिकः वृश्चति ओव्रश्चूछेदने॥ शूककीटः शूकयुक्तः शूकंशूकाकारंलोमतद्युक्तसर्वांगः कीटः शूककीटइत्यर्थः शाकपार्थिवादिवत् इतिद्वेशूककीटस्यउर्णादिभक्षकस्यकसरइतिख्यातस्याभिधाने॥ अलिः अलति अलभूषणादौ आलिरित्यपिपाठः बाहुलकादिण् वृश्चिकोद्रुणआलिःस्यादिति वोपालितः अथालीस्याद्वृश्चिकेभ्रमरेपुमानितिकोशांतरम्॥ द्रुणः द्रुणति द्रुणहिंसागतिकौटिल्येषु इगुपधेतिकः॥ वृश्चिकः इतित्रीणिविंचूइतिख्यातस्यविषकीटस्य

**नीलंगुस्तुकृमिःकर्णजलौकाःशतपद्युभे १३ वृश्चिकःशूककीटःस्यादलिद्रुणौतुवृश्चिके पारावतःकलरवःकपोतोथशशादनः १४ पत्रीश्येनउलूकस्तुवायसारातिपेचकौ दिवांधःकौशिकोघूकोदिवाभीतोनिशाटनः**

तत्रालिरिदंतइन्नंतश्चभवति॥ पारावतः परंजीवमवति अवरक्षणादौ शत्रंतांतादिदमर्थेण्॥ कलरवः कलःरवोस्य॥ कपोतः कस्यवायोःपोतइव पारावतःकपोतःस्यात्कपोतोविहगांतरइतिविश्वः पारावतः कलरवः पत्रीश्येनःशशादनइतिरभसः इतित्रीणिपारावतस्यपार वारवबुतरइतिख्यातस्याभि०॥ शशादनः शशांअत्ति अदभक्षणे १४ पत्री अतिशायिनंप्रशस्तंवापत्रमस्य॥ श्येनः श्यायते श्यैङ्गतौ इतित्रीणिससाणाइतिख्यातस्यना०॥ उलूकः उचति उचसमवाये उलूकादयश्चेतिसाधुः॥ वायसारातिः वायसस्यअरातिः पेचकः पचति पच्यतेवा डुपचष् पाके पचिमव्योरिच्चोपधायाः अतइत्वं पुगंतेतिगुणः दुःखेनसंतपति संतप्यतेवेत्यर्थः॥ निशाटनः निशासुअटति॥

पंचकस्यपुल्लकस्य॥ व्याघ्राटः व्याघ्रंअटति अटगतौ व्याघ्रइवाटतिवा॥ भरद्वाजः इतिद्वेभरद्वाजस्यपक्षिणः कुंभारकोंबा इतिख्यातस्याभिधाने॥ खंजरीटः खंजइ वचरन्चलति अटगतौ॥ खंजनः खंजति खजिगतौ इतिद्वेचलत्पक्षस्य पक्षिविशेषस्य नाजवा दय्यर इतिख्यातस्याभिधाने १५ लोहपृष्ठः लोहमिवपृष्ठंयस्य॥ कंकः कं कते ककिगतौ॥ कंकस्तुयद्विजेख्यातोलोहपृष्ठरूतांतयोरित्यक्तत्वात् इतिद्वेबाणोपयोगीपत्रस्यपक्षिविशेषस्याभि॰॥ चाषः चाषयति चषहिंसायां॥ किकीदिविः कि किइतिदिव्यतिवाशेते इतिद्वेचाषइतिख्यातस्याभि॰॥ कलिंगः केमूर्ध्निलिंगंचूडाऽस्य॥ कलिंकलहंगच्छतिवा॥ भृंगः भृंगइव॥ धूम्याटः धूम्याधूमसमूहइवाटति॥ इतित्रीणि फेंचुहार मस्तकचूडपक्षीइतिख्यातस्याभिधानानि॥ शतपत्रकः शतंपत्राण्यस्य १६ दार्वाघाटः दारुआहंति इतिद्वेकटफोरा सुतारपक्षी काष्ठकु-

व्याघ्राटः स्याद्भरद्वाजः खंजरीटस्तुखंजनः १५ लोहपृष्ठस्तुकंकः स्यादथचाषः किकीदिविः कलिंगभृंगधूम्याटाअथस्या च्छतपत्रकः १६ दार्वाघाटोऽथशारंगस्तोककश्चातकःसमाः कृकवाकुस्ताम्रचूडःकुक्कुटश्चरणायुधः १७ चटकःकल विंकःस्यात्तस्यस्त्रीचटकातयोः

ट्टाकारीइतिख्या॰॥ शारंगः शारयति शीर्यतेवा शृहिंसायां सारंगइत्यपिपाठः सरति सृगतौ यद्वा सारमं गंयस्य सारंगश्चातकेख्यातःशबलेहरिणेपिचेतितालव्यादावजयः॥ तोककः तोकंकंजलमस्य तोकंकायतिवा कैशब्दे॥ चातकः चतति चतेयाचनेइतित्री- णिचातकस्याभि॰॥ कृकवाकुः कृकेनगलेनवक्ति वचभाषणे॥ ताम्रचूडः ताम्राचूडाऽस्य॥ कुक्कुटः कुटति कुटकौटिल्ये कुकआदाने संपदादित्वात्क्विप् कुकूलया ॥ चरणायुधः चरणःआयुधमस्य इतिचत्वारिकुक्कुटस्य कोंबडें इतिख्या॰॥ १७॥ चटकः चटति चटभेदने॥ कलविंकः इतिद्वेचटकस्यचिमणीइतिख्या॰॥ तस्य चटकस्यस्त्रीचटकेत्येकं अजादित्वाट्टाप्॥

तयोश्चटकस्यचटकायाश्च पुमपत्येचाटकैर इत्येकं॥ तयोः स्त्र्यपत्ये स्त्रीरूपापत्येचटकेत्येकमभिधानं॥१८॥ कर्करेटुः कर्केतिरेटति रेटभाषणे॥ करेटुः के वायोरेटति इतिहैअशक्तभवा दिनिपक्षिभेदे कंकरेट कंकपक्षी इतिरव्यातेअभिधाने॥ करेटुः कर्करेटुः स्यात्करटुः कर्कराटुक इतिरभसः॥ क्रकणः क्रकेण कंठेनअणति शकंध्वादिः अणशब्दे॥ क्रकरः क्र इतिशब्दक रणशीलः इतिहै करक इतिरव्यातस्य करेटुभेदस्याभिधाने॥ वनप्रियः वनंप्रियमस्य॥ परभृतः परेणकाकेनभृतः॥ कोकिलः कोकते कुक्आदाने॥ पिकः अपिकायति कैशब्दे इतिच त्वारिकोकिलइतिप्रसिद्धस्य॥ काकः कायति कैशब्दे॥ करटः के रटति रटपरिभाषणे॥ अरिष्टः नरिष्टमस्य॥ बलिपुष्टः बलिनापुष्टः॥ सकृत्प्रजः सकृत्प्रजायस्य॥ ध्वांक्षः ध्वां-

पुमपत्येचाटकैरस्त्र्यपत्येचटकैवसा॥१८॥ कर्करेटुःकरेटुःस्यात्क्रकणक्रकरौसमौ॥ वनप्रियःपरभृतःकोकिलःपिकइत्यपि १९ काकेतु करटारिष्टबलिपुष्टसकृत्प्रजाः॥ ध्वांक्षात्मघोषपरभृद्बलिभुग्वायसाअपि॥ सएवचचिरंजीवीचैकदृष्टिश्चमौकुलिः २० द्रोणकाकस्तु काकोलोदात्यूहःकालकंठकः॥

क्षति ध्वांक्षियोरवाशितेच॥ आत्मघोषः आत्मानंघोषयति घुषिरविशब्दने॥ परभृत् परंबिभर्ति॥ बलिभुक् बलिंभुंक्ते भुजपा लनादौ॥ वायसः वयते वयगतौ इतिदशकाकस्याभिधानानि॥ चिरंजीवी चिरंजीवति॥ एकदृष्टिः एकादृष्टिर्यस्य॥ मौकुलिः एतदपित्रयंकाकस्य॥२०॥ द्रोणकाकः द्रोणो- स्त्रियामाढकेस्यादाढकादिचतुष्टये पुमान्कृपीपतौकृष्णकाकेस्त्रीनीवृदंनरइतिमेदिनी॥ द्रोणः कृपीपतौकृष्णकाकइतिविश्वप्रकाशः॥ द्रोणकाकोदग्धकाकीवृद्धकाकोवना श्रयइतित्रिकांडशेषः॥ द्रुणाति द्रुणहिंसागतिकौटिल्येषु काकयति ककलौल्ये॥ काकोलः इतिहैकाकभेदस्य डोंबकावळा कृष्णकावळाइतिरव्यातस्य॥ दात्यूहः दातिंभारणं ऊहते ऊहवितर्के॥ कालकंठकः कालेवर्षाकाले कंठोध्वनिरस्य इतिहै डाहद अंधकाक जलकाकइतिरव्यातस्य॥

आतापी आतायते तन्छीलः ताय संतानपालनयोः आतापीत्यपिपाठः आतापिनि भवेच्चिल्लुइति विश्वप्रकाशः॥ चिल्लुः चिल्लुति चिल्लुशैथिल्ये इतिद्वे चिल्लुस्य घारइतिप्रसिद्धस्याभि॥ दाक्षाय्यः दक्षते दक्षवृद्धौ शीघ्रार्थे च दक्षाय्यस्यापत्यं तस्येदमित्यण्॥ गृध्रः गृध्यति गृधुअभिकांक्षायां इतिद्वे गृध्रस्य गीधइतिख्यातस्य नामनी॥ कीरः कीरयतीति॥ शुकः शोकति शुकगतौ शोभते शवतेवा शुभदीप्तौ शुगतौ इतिद्वे कीरस्य रावा राघू इतिख्यातस्याभिधाने २१ क्रुङ् क्रुंचति क्रुञ्च कौटिल्याल्पीभावयोः॥ क्रौंचः क्रौंचोद्वीपप्रभेदे स्यात्पक्षिपर्वतभेदयोः इतिद्वे टेक कुरकुंचा इतिख्यातस्याभि॰॥ बकः बंकते बकिकौटिल्येगतौच बवयोरैक्यं यद्वा वांतिवायतिवा वागत्यादौ॥ कह्वः केति शब्दं केजलेवा ह्वयति ह्वेञ् स्पर्धायांशब्देच इतिद्वे बकस्य बगळा इतिख्यातस्याभि॰॥ पुष्कराह्वः पुष्करं पद्मंतस्यआह्वा यस्य॥ सारसः सरसिभवः सारसः पक्षिभेदेस्यात्क्लीबेतुसरसीरु

आतायिचिल्लौदाक्षाय्यगृध्रौकीरशुकौसमौ॥२१॥ क्रुङ्क्रौंचोऽथबकःकह्वः पुष्कराह्वस्तुसारसः॥ कोकश्चक्रश्चक्रवाकोरथांगाह्वयनामकः २२ कादंबःकलहंसःस्यादुत्क्रोशकुररौसमौ॥ हंसास्तुश्वेतगरुतश्चक्रांगामानसौकसः २३

हे इतिद्वे सारसस्य अभिधाने॥ कोकः कोकते कुकआदाने॥ चक्रः क्रियते इति घञर्थे कविधानं हलन्तप्रकरणे कृञादीनामितिद्वित्वं॥ चक्रवाकः॥ रथांगाह्वयनामकः रथांगस्य चक्रस्य आह्वयो नामयस्य इति चत्वारि चक्रवाकस्याभिधानानि॥ २२॥ कादंबः कदंबे समूहे भवतीति॥ कलहंसः कलोमधुरवाक् सचासौहंसश्च इतिद्वे बकइतिप्रसिद्धस्य नामनी॥ उत्क्रोशः उत्क्रोशति क्रुशआह्वाने॥ कुररः कुरति कुरशब्दे इतिद्वे कुररस्य नामनी॥ हंसः हंति गच्छति भवेद्वर्णागमाद्धंस इतिवा॥ श्वेतगरुत् श्वेतागरुतोयस्य॥ चक्रांगः चक्राण्यंगान्यस्य॥ मानसौकसः मानसंसरः ओकोयेषां इतिचत्वारि हंसस्य नामानि॥ २३॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥

येसिताः देहेनशुक्लाः चंचुचरणैः चंचुराहिताश्चरणाः तैः लोहितैरुपलक्षितास्तेराजहंसाः हंसानांराजानः भवंति ॥ मलिनैः ईषत्कृष्णैश्चंचुचरणैस्तेहंसामल्लिकाक्षाः स्युः मल्लिका शणि अक्षीणियेषांते मल्लिकाख्या इत्यपिपाठः ॥ सितेतरैः कृष्णवर्णैः चंचुचरणैर्लक्षितास्तेधार्तराष्ट्राः धृतराष्ट्रेभवाः धृतराष्ट्रः स्त्रीराज्ञिस्यात्पक्षिक्षत्रियभेदयोरितिरभसः २४ शरारिः श रंऋच्छति शरहिंसायां ऋगतौ शरातिः शरंअतति अतसातत्यगमने ॥ आतिः अतधातोर्णिजंतादिः ॥ आटिः अटतीति ॥ आडिः अडति अडउद्यमने ॥ आडिःशरालिर्वरटोगंधोलीवा नरीकपीतिस्त्रीलिंगकांडेरत्नकोशः इतित्रीणि आडीतिख्यातस्यपक्षिणः अभिधानानि ॥ बलाका बलते बलसंवरणे बलेनाकतिवा ॥ बिसकंठिका बिसवत्कंठोऽस्याः इतिहैबाळे-

राजहंसास्तुतेचंचुचरणैर्लोहितैःसिताः ॥ मलिनैर्मल्लिकाक्षास्तेधार्तराष्ट्राःसितेतरैः २४ शरारिराटिराडिश्चबलाकाबिसकंठिका ॥ हं-
सस्ययोषिद्वरटासारसस्यतुलक्ष्मणा २५ जतुकाजिनपत्रास्यात्परोष्णीतैलपायिका ॥ वर्वणामक्षिकानीलासरघामधुमक्षिका २६

दोकबगळाइतिप्रसिद्धस्य बकभेदस्य ॥ हंसस्ययोषित्स्त्रीवरटास्यात् ॥ सारसस्यस्त्रीतु लक्ष्मणेत्युच्यते लक्ष्मणंनाम्निचिन्हेचसारस्यालक्ष्मणाक्वचिदितिविश्वः २५ जतुका जतिवद्वर्णप्रतिकृता इतिकन् ॥ अजिनपत्रा अजिनंचर्म तद्रूपेपत्रेपक्षौयस्याः इतिहै वटुरी वामचिराई इतिख्यातपक्षिभेदे अभिधाने ॥ परोष्णी परंशत्रूष्णंयस्याः ॥ तैलपा यिका तैलंपिबति पापाने इतिहैपक्षयुक्तेकीटकविशेषे तेलडवा वाघूळ इतिख्यातेअभिधाने ॥ वर्वणा वरितिवरित्यनुकरणं वणति वणशब्दे यद्वा वर्वति वर्वगतौ ॥ मक्षि का मशति मशशब्दे मक्षतिवा मक्षरोषेसंघातेच ॥ नीला नीलति नीलवर्णे इतित्रीणिमक्षिकायाः अभि० ॥ सरघा सरंगतिमंतं घातयति ॥ मधुमक्षिका इतिहैमक्षिकाभेदस्यम धमाशीतिख्यातस्य अभिधाने २६

पतंगिका पततीति॥ पुत्तिका पुत्तकुत्सितं तायते नायू संतानपालनयोः इति द्वे मधुमक्षिभेदस्य॥ इयंतु सरघातः क्षुद्रा यन्निमित्तो मधुभेदः माक्षिकं तैलवर्णस्या हृतवर्णं तुपौत्तिकमिति॥ दंशः दंशति दंशदशने, वनमक्षिका वनस्थमक्षिका इति द्वे मोठीडांस रानमाशी इतिख्यातस्यनामनी॥ तेषां दंशानां जातिर्यः ल्पासादंशी त्यच्यते डांस इतिख्यातस्यनाम॥ गंधोली गंधयति गंधअर्दने॥ वरटा वृणोति वृञ् वरणे॥ वरटावरटी हंस्योस्तत्पत्नी वरटः स्मृत इतितारपालः॥ इति द्वे वरटी गांधीणमाशी इतिख्यातस्यनामनी॥ वरटास्त्रीपुंसयोः २७ भृंगारी भृंगरूपमाराति आराआदाने उपसर्गबलात् यद्वा बिभर्ति यद्वा रूपेण भृंगमृच्छति ऋगतौ झीरुका झी इतिरौति॥ चीरी ची इतिरौति॥ झिल्लिका झिल्लति झिल्लशैथिल्ये तत्रप्रयोगो दृश्यते अदृश्यझिल्लीस्वनकर्णशूलैरिति इतिचत्वारि सुरकुट निलट इतिख्यातस्याभिधानानि॥ पतंगः पतति॥ श

पतंगिकापुत्तिकास्याद्दंशस्तुवनमक्षिका॥ दंशीतज्जातिरल्पास्याद्गंधोलीवरटाद्वयोः २७ भृंगारीझीरुकाचीरीझिल्लिकाचसमाइमाः॥ समौपतंगशलभौखद्योतोज्योतिरिंगणः २८ मधुव्रतोमधुकरोमधुलिण्मधुपालिनः॥ द्विरेफपुष्पलिड्भृंगषट्पदभ्रमरालयः॥ २९॥

लभः शलति शलचलने इति द्वे टोळ दीपपतंग इतिख्यातस्याभिधाने॥ खद्योतः खेद्योतते द्युतदीप्तौ खंद्योतयतिवा॥ ज्योतिरिंगणः ज्योतिर्नक्षत्रं तद्वदिंगति इगिगतौ इति द्वे खद्योतस्य काजवा इतिख्यातस्यनामनी २८ मधुव्रतः मधुव्रतं भक्ष्यंयस्य॥ मधुकरः मधु करोति॥ मधुलिट् मधु लेढि लिह आस्वादने॥ मधुपः मधु पिबति पापाने॥ अली अलति अलभूषणादौ॥ द्विरेफः द्वौ रेफौ नाम्नियस्य॥ पुष्पलिट् पुष्पं लेढि॥ भृंगः बिभर्ति भृञः किन्नुट् चेतिसाधुः॥ षट्पदः षट्पदान्यस्य॥ भ्रमरः भ्रमति भ्रमुअनवस्थाने॥ अलिः अलति इत्येकादश भ्रमरस्याभिधानानि॥ अमधुकरे मधुकरशब्दो रूढः २९ ५ ६

मयूरः मयते मयगतौ मह्यांरौतिवा पृषोदरादिः॥ बर्हिणः बर्हमस्त्यस्य॥ बर्ही॥ नीलकंठः नीलः कंठोऽस्य॥ भुजंगभुक् भुजंगंभुङ्क्ते भुजपालनादौ॥ शिखावलः॥ शिखी शिखाःसंत्यस्य॥ केकी केकास्त्यस्य॥ मेघनादानुलासी मेघनादेनानुलसति लसश्लेषणक्रीडनयोः॥ बर्हिणोदंतः बर्हीदन्नंत शिख्यादित्रयमिन्नंतं इतिनवमयूरस्यनामानि ३० मयूरवाणी केकेत्युच्यते एकंनाम केका केमूर्ध्नि कायतिकैशब्दे॥ चंद्रकः चंद्रइव॥ मेचकः मे चकोवर्णोस्त्यस्य इतिद्वेपिच्छस्यनेत्राकारचिन्हस्याभिधाने॥ बर्हिकंठसमवर्णमेचकंब्रुवतेबुधाइतिकात्यः॥ शिखा शेते॥ चूडा चुड्यते चुडसमुच्छ्राये इतिद्वेमयूरशिखायाअभिधाने॥ शिखंडः शिखंडोबर्हचूडयोरिति

मयूरोबर्हिणोबर्हीनीलकंठोभुजंगभुक्॥ शिखावलःशिखीकेकीमेघनादानुलास्यपि ३० केकावाणीमयूरस्यसमौचंद्रकमेचकौ॥ शिखाचूडा शिखंडस्तुपिच्छबर्हेनपुंसके ३१ खगेविहंगविहगविहंगमविहायसः॥ शकुंतिपक्षिशकुनिशकुंतशकुनद्विजाः ३२ पतत्रिपत्रिपतगपतत्पत्ररथांडजाः नगौकोवाजिविकिरविविष्किरपतत्रयः ३३

हेमचंद्रः॥ पिच्छं पिच्छते पिच्छदि कुदने॥ बर्हं बर्हति बर्हवृद्धौ इतित्रीणिमयूरपिच्छस्याभिधानानि ३१ खगः खेगच्छति खगःसूर्येग्रहेदेवेमार्गणेचविहंगमे॥ विहंगः विहगः विहायसि गच्छति॥ विहंगमः विजहातिभुवं ओहाक्त्यागे॥ विहायाः यद्वा विहाययति हयगतौ विहायाःशकुनौपुंसिमगनेपुंन्नपुंसकं॥ शकुंतिः शक्नोति शक्लृशक्तौ॥ पक्षी पक्षौस्तः अस्य॥ शकुनिः॥ शकुंतः॥ शकुनः एतेषुत्रिषुशक्लृशक्ताविति धातुः शक्नोतीतिविग्रहः॥ द्विजः द्विर्जायतइति ३२ पतत्री पतत्रमस्त्य॥ पत्री पत्राणिसंत्यस्य॥ पतगः पतेनपक्षेणगच्छति॥ पतत् पतति पत्लृगतौ॥ पत्ररथः पत्रंरथइवयस्य॥ अंडजः अंडाज्जायते स्म॥ नगौकाः नगो नगेवा ओकोयस्य॥ वाजी वाजापक्षाःसंत्यस्य॥ विकिरः विकिरति कॄविक्षेपे॥ विः वाति वागतौ॥ विष्किरः विपूर्वःअग्रेकॄविक्षेपेविष्किरःशकुनौवेतिसुट्॥ पतत्रिः पतेरत्रिन् ३३

नीडोद्भवः नीडेउद्भवोयेषां॥ गरुत्मंतः गरुतः पक्षाः संतियेषां॥ पित्सतंः पतितुमिच्छवः॥ नभसंगमाः नभः खंसंगच्छंति इतिसप्तविंशतिः पक्षिमात्रस्यनामानि॥ अथतेषांविशेषाव स्थतइतिशेषः॥ हारीतः हारिःमनोहरं इतंगमनमस्य इतिदेशांतरभाषयाहारिल तिलगिरूपपक्षिणएकंनाम॥ मद्गुः मज्जति द्रुमस्जोशद्गौ इत्येकं जलकाकस्य पाणकावळाइ तिख्यातस्यअभिधानं॥ कारंडवः कारंडंवाति इत्येकंकरडुवाइतिख्यातस्या॰॥ प्लवः प्लवते प्लुगतौ प्लवः प्लसेप्लुतौकपौ॥ शब्देकरंडवेम्लेच्छजातौभेलकभेलयोः क्रमनिम्नम हीभागेकुलकेजलवायसे जलांतरेप्लुवंगंधतृणेमुस्तकभिद्यपीतिहेमचंद्रः इत्येकं पुडेशपाणकोंबडाइतिख्यातस्याभि॰॥३४॥ तित्तिरिः तित्तिशब्दंराति॥ तित्तिरिः पक्षिणिमु नावितिहेमः इतितित्तिरिपक्षीप्रसिद्धः॥ कुक्कुभः कुगित्यव्यक्तशब्दंकौति कुशब्दे बाहुलकाद्भः॥ लावः लावयति लूञ्छेदने इतिलावापक्षीप्रोक्तः॥ जीवजीवः जीवंजीवय

**नीडोद्भवागरुत्मंतः पित्संतोनभसंगमाः॥ तेषांविशेषाहारीतोमद्गुः कारंडवः प्लवः ३४ तित्तिरिः कुक्कुभोलावो जीवजीवश्चकोरकः॥ कोयष्टिकष्टिट्टिभकोवर्तकोवर्तिकादयः ३५ गरुत्पक्षच्छदाः पत्रंपतत्रंचतनूरुहम्॥**

ति तद्दर्शनेनविषनाशनात्॥ मयूरतुल्यपत्रकः प्रोक्तः चकोरकः चकति चकतृप्तौ योयंचंद्रिकयातृप्यति॥ कोयष्टिकः कंजलंयष्टिरिवअस्य पृषोदरादिः इत्येकंकोंडाइतिख्यातस्य अभिधानं॥ टिट्टिभकः टिटिशब्दंभाषते टिटिशब्देनभातिवा इतिटिटवीख्यातः॥ वर्तकः वर्तते वृतुवर्तने चित्रपक्षः पक्षिभेदः गांजिणपक्षीइतिप्रोक्तः॥ वर्तिका उदीचांमतेइलं व टई वनचरकइतिप्रोक्ता॥ स्त्रियांवर्तकेत्यपि आदिशब्दात्सारिकाकपिंजलादयः एकैकाएकैकं ३५ गरुत् गिरति गृनिगरणे यद्वा गृणाति गृशब्दे॥ पक्षः पक्षति पक्षतेवा पक्षप रिग्रहे॥ छदः॥ पत्रं पतंत्यनेन पत्रंतुवाहनेपर्णेस्यात्पक्षेशरपक्षिणोरित्युक्तत्वात्॥ पतत्रं पतंतंत्रायते त्रैङ्पालने॥ तनूरुहं तनौरोहति इतिषट्पक्षस्याभिधाना॰ गरुत्पक्षेतरोछ दमिति क्लीबकांडेबोपालितः॥

पक्षतिः पक्षस्यमूलं ॥ पक्षमूलं पक्षतिः इत्येकं ॥ चंचुः चंचति चंचुगतौ ॥ त्रोटिः त्रोटयते त्रुट छेदने इतिद्वेपक्षितुंडस्याभिधाने ॥ चंचुश्चंचूस्तथात्रोटिरितिहलायुधः ३६ प्रडीनं तिर्यग्गमनं ॥ उड्डीनं ऊर्ध्वगमनं ॥ संडीनं संगतगमनं ॥ एताः तिस्रः खगानांगतिक्रियाः गमनव्यापाराः गतिविशेषाइत्यर्थः ॥ पेशी पिंशति पिशअवयवे चने ॥ कोशः कुशति निष्क्रमत्यस्मात्स्वयमेव षपावे कुषनिष्कर्षे कुष्णातिइतिविग्रहः ॥ अंडं तत्रपेशीस्त्री कोशोस्त्रियां क्लीबेइत्यर्थः रूपभेदेनैवक्लीबत्वेसिद्धेद्विहीनइत्युक्तिः साहचर्येण प्राप्तमस्त्रीत्वंवारयति इतित्रीणि अंडस्यनामानि ॥ कुलायः कुलंपक्षिसंतानमयतेऽत्र अयगतौ यद्वा कौलायोगतिरस्मात् ॥ नीडं नितरां ईड्यते इतिद्वेपक्षिगृहस्य घस्टा खोपा कोठें इतिख्यातस्यनामनी ॥ ३७ ॥ पोतः पुनाति पवनेवा पुञ्पवने पुङ्पवने ॥ पाकः पायते पिबतिवा पारक्षणे पापानेवा ॥ अर्भकः निपातनात् अर्यते वृद्धिंप्राप्य

स्त्रीपक्षतिःपक्षमूलंचंचुस्त्रोटिरुभेस्त्रियौ ३६ प्रडीनोड्डीनसंडीनान्येताःखगगतिक्रियाः ॥ पेशीकोशोद्विहीनेंडंकुलायोनीडमस्त्रियां ३७ पोतःपाकोऽर्भकोडिंभः पृथुकःशावकःशिशुः ॥ स्त्रीपुंसौमिथुनंद्वंद्वंयुग्मंतुयुगलंयुगम् ३८

ऋगतौ प्राप्णोपिच ॥ डिंभः डिंभयति डपडिपसंघे ॥ पृथुकः पर्थयति पर्थ्यतेवा पृथप्रक्षेपे प्रथतेवा प्रथप्रख्याने ॥ शावकः शाव्यते शवगतौ श्यती श्यायतेवा शोतनूकरणे ॥ शिशुः शाशंति प्लुतेनगच्छति शशप्लुतगतौ इतिसप्तशिशुमात्रस्याभि० ॥ स्त्रियांतु पोती ॥ पाका ॥ अर्भका ॥ डिंभा ॥ पृथुका एतेचटाबंताः ॥ स्त्रीपुंसौ स्त्रीचपुमांश्च ॥ मिथुनं मेथति मेथृसंगमे ॥ मिथुनंनद्वयोराशिभेदेस्त्रीपुंसयुग्मकइति ॥ द्वंद्वं द्वंद्वंरहस्येकलहेनथामिथुनयुग्मयोरित्युक्तत्वात् इतित्रीणिस्त्रीपुरुषरूपयुग्मस्यनामानि ॥ युग्मं युज्यते युजिरयोगे ॥ युगुलं युगंलाति युगमस्त्यस्यवा ॥ युगं युगोरथेहलायंगेनद्वयोर्युकुलादिष्वित्युक्तत्वात् इतित्रयंयुग्मस्य ३८ ७ ७

समूहः समूह्यते ऊहवितर्के॥ निवहः नितरामूह्यते वहप्रापणे॥ व्यूहः व्यूह्यते॥ संदोहः संदुह्यते दुहप्रपूरणे॥ विसरः विसरति सृगतौ॥ व्रजः व्रजति व्रजगतौ॥ स्तोमः स्तूयते ष्टुञ्स्तुतौ॥ ओघः आउह्यते॥ निकरः निकीर्यते कृविक्षेपे॥ व्रातः वृत्यते वियस्यते॥ वारः वार्यते आच्छाद्यतेऽनेन वृञ्वरणे वारः सूर्यादिदिवसेद्वारेवसरवृंदयोः कुब्जवृक्षेहरेवारोवारमद्यस्यभाजनइतिविश्वप्रकाशः॥ संघातः संहन्यते संघातः पुंसिघातेचसंहतौनरकांतरइत्य॰॥ संचयः संचीयते चिञ्चयने ३९ समुदायः समुदायते अयगतौ आङ्पूर्वः॥ समुदयः समुदीयते इणगतौ इगतौवा॥ समवायः समवायते अयगतौ घञ्॥ चयः चीयते चिञ्चयने चयः समूहेप्राकारेमूलबंधेसमाहृ

समूहोनिवहव्यूहसंदोहविसरव्रजाः॥ स्तोमौघनिकरव्रातवारसंघातसंचयाः ३९ समुदायःसमुदयःसमवायश्चयोगणः॥ स्त्रियांतुसंहतिर्वृंदनिकुरंबंकदंबकं ४० वृंदभेदाःसमैर्वर्गः संघसार्थौतुजंतुभिः॥ सजातीयैःकुलंयूथंतिरश्चांपुंनपुंसकं ४१ पशूनांसमजोऽन्येषांसमाजो

तावित्युक्तत्वात्॥ गणः गण्यते गणसंख्याने गणः प्रथमसंख्यायेचंडीसैन्यप्रभेदयोरित्युक्तत्वात्॥ संहतिः संहन्यते॥ वृंदं वृण्यते वृणुभक्षे॥ निकुरंबं निकुरति निकुर्यतेवा कुरछेदने॥ कदंबं कुत्सितमंबतेवा अविशब्दे कदति कद्यतेवा कदिसौत्रोधातुः॥ तत्र संहतिः स्त्रियां ४० वृंदभेदः वृज्यते वृजिवर्जने समुदायविशेषाःउच्यंतइतिशेषः॥ समैर्हिसजातीयैः प्राणिभिः अप्राणिभिर्वासमूहोवर्गइतिप्रोच्यते॥ एकं॥ यथा मनुष्यवर्गः॥ शैलवर्गः सजातीयैर्विजातीयैरपिजंतुभिः प्राणिभिरेवसमूहः संघसार्थइतिप्रोच्यते इतिहृअभिधाने॥ यथापशुसंघः वणिक्सार्थः॥ सजातीयैर्जंतुभिरेवकुलं कोलति कुलसंस्त्याने कुलंजनपदेगोत्रेसजातीयगणेपिचेत्य॰ इत्येकं॥ तिरश्चामेवसजातीयानां समूहोयूथं॥ यौति यूयतेवा यूमिश्रणे यूथंतिर्यक्समूहेस्त्रीपुष्पभेदेचयोषितीत्युक्तत्वात्॥ इत्येकं ४१

पशूनामेववृंदंसमजइतिप्रोच्यते इत्येकं॥संवीयतेऽत्र अजगतिक्षेपणयोः समजः पशुवृंदेनाविपिनेपिनपुंसकमित्युक्तत्वात् ॥ अन्येषांपश्वतिरिक्तानांवृंदं समाजः प्रोच्यते॥ इत्येकं॥ सधर्मिणांएकधर्मवतांसमूहोनिकायः निचीयते चिञ्चयने॥पुंजः पिंजयति पिंज्यतेवा पिजिहिंसाबलादाननिकेतनेषु पिंजरित्यपिपाठः॥ राशिः अश्नुते अशूव्याप्तौ ॥उत्करः उत्कीर्यते कृविक्षेपे॥ कूटं कूटयति कुत्स्यतेवा कुटअप्रदाने कुटदाहे अमंत्रणेवा कूटंपुंनपुंसकम् चत्वारिधान्यादिराशेःनामानि ४२ तद्गणे तेषांकपोतादीनांसमूहेकापोतादीनिभवंति॥ यथा कापोतं कपोतानांसमूहः॥ शौकं शुकानांसमूहः॥ मायूरं मयूराणांसमूहः॥तैत्तिरं तित्तिराणांसमूहः कपोतादिभ्यः अनुदात्तेरञ् आदिशब्दात्काकमित्यादि॥ येगृहासक्ताः क्रीडार्थंपंजरादौस्थापितास्तेपक्षिमृगाः छेकागृह्यकाइतिचस्युः इतिद्वेनामनी॥ गृह्याएवगृह्यकाः स्वार्थेकन्॥ ४३॥ इतिसिं

पशूनांसमजोऽन्येषांसमाजोऽथसधर्मिणाम्॥ स्यान्निकायःपुंजराशीतूत्करःकूटमस्त्रियां ४२ कापोतशौकमायूरतैत्तिरादीनितद्गणे॥गृहासक्ताःपक्षिमृगाश्छेकास्तेगृह्यकाश्चते ४३ इतिसिंहादिवर्गः मनुष्यामानुषामर्त्यामनुजामानवानराः॥स्युःपुमांसःपंचजनाःपुरुषाःपूरुषानरः १

हादिवर्गः॥ ॥मनुष्याः मनोरपत्यानिपुमांसः यत्प्रत्ययेषुगागमः॥ मानुषाः अञ्प्रत्ययेषुगागमः विग्रहः पूर्ववत्॥ मर्त्याः म्रियंतइति मृङ्प्राणत्यागे॥ मनुजाः मनोःजाताः जनीप्रादुर्भावेडप्रत्ययः॥ मानवाः मनोःइमे इदमर्थेण् इत्याद्यूह्यं॥ नराः नरंति नृणंतिवा। नरोजेमनुजेऽर्जुने यद्वा नयंतिपूर्वपुरुषानुत्तमांगतिं॥ पुमांसः पुनंति पुञ्पवने॥ पंचजनाः पंचभिः पृथिव्यादिभूतैःजन्यंतइति॥ पुरुषाः पुरंति पुरअग्रगमने यद्वा पुर्यांशेरते॥ नरः नयंति नयतेर्डिच्चेति ऋन्प्रत्ययः डित्वाट्टिलोपः तत्रैवं पुमांसइत्यादिपंचकंपुंव्यक्तावेवप्रायेणप्रयुज्यते यथा पुंस्कोकिलः केचित्स्त्रीव्यक्तावपिप्रत्ययसंस्कारेण इत्येकादशमनुष्याणांनामानि॥

स्त्री स्त्र्यावधूर्योषितारामेतिद्विकांडशेषः स्त्यायतः शक्रशोणितेयस्यां॥ योषित् योषति युष्यतेवा युषःसौत्रःसेवायांजनेवा इतिमन्ययः॥ अबला अल्पंबलमस्याः अल्पार्थेनञ् अनुदराकन्येतिवत्॥ योषा योषति योषयतिवा इत्यायूह्यं॥ जोषेत्यपिपाठः तत्रैवं जुषति जुष्यतेवा जुषिप्रीतिसेवनयोः नारी नृनरयोर्वृद्धिश्चेतिङीन् वृद्धिश्च॥ सीमंतिनी सीमंतोस्त्यस्याः॥ वधूः वहति ऊह्यतेवा॥ प्रतीपदर्शिनी प्रतीपंद्रष्टुंशीलमस्याः अपांगनिरीक्षणत्वात्॥ वामा वमति स्नेहमित्यध्याहारः टुवमुउद्गिरणे ज्वलितिकसंतेभ्योणः इतिणप्रत्ययः यद्वावामः कामोऽस्त्यस्याः तत्रैवं वामंधर्मेपुंसिहरेकामदेवेपयोधरइत्युक्तत्वात्॥ वनिता वनसंभक्तौ बाहुलकादितन् वन्यतेस्यक्तः॥ महिला महति मह्यतेवा महंउत्सवंलाति लादाने एषो॰ महपूजायां यद्वा महस्यउत्सवस्यइलाभूमिरितिविग्रहेमहेला इत्येकादशस्त्रियाः २ विशेषाःस्त्री

**स्त्रीयोषिदबलायोषानारीसीमंतिनीवधूः॥ प्रतीपदर्शिनीवामावनितामहिलातथा २ विशेषास्त्वंगनाभीरुःकामिनीवामलोचना॥ प्रमदामानिनीकांताललनाचनितंबिनी ३ सुंदरीरमणीरामाकोपनासैवभामिनी॥**

णांभेदावक्ष्यंतइतिशेषः अंगना प्रशस्तमंगंयस्याः अंगात्कल्याणेइतिनः इत्येकं॥ एवंरामापर्यंतमेकैकंज्ञेयं भीरुः भयशीला भीरुरितिदीर्घोकारांतःभीलुर्भीलूश्च एतावपिपाठौरलयोरैक्यात् भीरुरातंजनेस्त्रियामितिरभसः॥ कामिनी कामोऽस्यास्तीति॥ वामलोचना वामः कामोलोचनयोःयस्याः यद्वा वामे सुंदरेलोचनेयस्याः॥ प्रमदा प्रमदोहर्षोस्त्यस्याः प्रमदः सन्मदेमत्तेस्त्रियामुन्मदयोषिति इत्युक्तत्वात्॥ मानिनी मानोस्त्यस्याः मानश्चित्तोन्नतौग्रहे॥ कांता काम्यतेस्म कमुकांतौ॥ ललना ललते लल ईप्सायां णिजभावेल्युः युज्वा यद्वा लडति लडविलासे डलयोरैकत्वं ललनाकामिनीनारीभेदजिह्वासुयोषितोतिविश्वमेदिन्यौ॥ नितंबिनी नितंबोऽस्त्यस्याः ३ सुंदरी अनीयउन्नतीति उंदोक्लेदने सुपूर्वः बाहुलकादर उकारयोःशकंध्वादित्वात्पररूपं गौरादित्वात्ङीष्॥ रमणी रमणीपद

व्याख्याकर्तरिल्युट् अधिकरणेवा ॥ रामा रमापदेरमतेज्वलादित्वात्णेदाप् रमंते ऽस्यामिनिपक्षे बाहुलकादधिकरणेघञ्टाप् रमयति रम्यते ऽस्यांवा ॥ पक्षर्भेदेरू तेरामो राघवेरेणुकारुते रामंतुवास्तुकेकुष्टेरामाहिंगुलिनीस्त्रियोरितिहेमः ॥ कोपना कुप्यति तच्छीला कुपक्रोधे ॥ भामिनी अवश्यंभामते भामक्रोधे ॥ वरारोहा वरआरोहो-नितंबो ऽस्याः ॥ मत्तकाशिनि मत्ताक्षिवेवकाशते भाति उपपदार्थः कर्ता प्रत्ययार्थस्य कर्तुरुपमानं कर्तर्युपमानेइतिणिनिः मत्तकासिनीत्यपिपाठः ॥ उत्तमा उत्कृष्टेत्यर्थः ॥ वरवर्णिनी वरः वर्णो ऽस्त्यस्याः शीतेसुखोष्णासर्वांगीग्रीष्मेयासुखशीतला भर्तृभक्ताचयानारीविज्ञेयावरवर्णिनीतिरुद्रः यद्वा उत्तमेतिनपर्यायः किंतु उत्तमास्त्रीसेतत्पर्यायाज्ञेये तितदर्थः चत्वारि गुणैरुत्कृष्टायाः स्त्रियाः नामानि ४ या कृताभिषेका नृपस्त्री सामहिषीत्येकं कृतः अभिषेको ऽस्याः ॥ महिषी मह्यते महपूजायां ॥ अन्या अकृताभिषेकानृ

वरारोहामत्तकाशिन्युत्तमावरवर्णिनी ४ कृताभिषेकामहिषीभोगिन्यो ऽन्यानृपस्त्रियः ॥ पत्नीपाणिगृहीतीचद्वितीयासहधर्मिणी ५ भार्याजाया ऽथपुंभूम्निदाराःस्यात्तुकुटुंबिनी ॥ पस्त्रियो भोगिन्यइत्युच्यंते एकं ॥ अतिशयितो भोगोयासां ॥ पत्नी पत्या यज्ञीययोगोयस्याः ॥ पाणिगृहीती पा-णिर्गृहीतोयस्याः पाणिगृहीतीभार्यायामितिङीष् ॥ द्वितीया द्वयोः पूरणी या द्वितीयातिथिगेहिन्योर्द्वितीयः पूरणेद्वयोरितिहेमचंद्रः ॥ सहधर्मिणी सहधर्मो ऽस्त्यस्याः पत्या सहकर्मस्वधिकारात् सधर्मिणीत्यपि ५ भार्या भ्रियते भर्तृनेवा डुभृञ्धारणपोषणयोः भृभरणादोवा ॥ जाया जायते ऽस्यां जनेर्यक् जायायास्तुद्विजायात्वंयदस्यां जायतेपतिरितिमनुः ॥ दाराः दारयंतिभ्रातॄन् दृविदारणे। तत्रदार शब्दोनित्यंपुंसि बहुवचनांतश्च दारशब्दश्चाबंतो ऽपि क्रोडाहारातथादारात्रयएतेयथाक्रमं क्रोडेहारेच दारेषुशब्दाः प्रोक्तामनीषिभिरितिहेमचंद्रात् सम्यपरिणीतायाः स्त्रियाः ना० ॥ कुटुंबिनी कुटुंबमस्त्यस्याः कुटुंबंपोष्यवर्गेचेत्यमरमाला ॥ ७ ७

पुरंध्री पुरंधारयति धृञ् धारणे द्वेपतिपुत्रवत्याः पुरंच पुंसकेगेहइत्युक्तत्वात् पुरंध्रिरित्यपि स्वार्थणिजंतात् खच् णिलोपेगौरादित्वात्ङीष् पृषोदरादित्वात् आकारलोपेसाधुः॥ सुचरित्रा शोभनंचरित्रमस्याः॥ सती॥ साध्वी साध्नोतिपतिकार्यमिति पतिंयानातिचरतिमनोवाक्कायसंयता भर्तृभक्ताचयानारीसद्भिःसाध्वीतिचोच्यते इत्यक॰॥ पतिव्रता पत्यौव्रतमस्याः इत्याद्यूह्य पतिशब्दःसेवायां लाक्षणिकइतिशेष. चत्वारिपतिसेवातत्परायाः ६ कृतसापत्निका सपत्न्याःभावःसापत्न्यं कृतंसापत्न्यंयस्याः अत्रपक्षेयकारश्रवणापत्तिः अतोरामाश्रमोनिर्ग्राह्या सायथा सापत्न्यशब्दात्ङीषिस्वार्थेकन् यलोपः ह्रस्वः कृतासापत्निकायस्याः क्वचित्कृतसापत्नकेतिपाठः तत्रेत्थं सपत्न्या आगतंसापत्नकं कृतंसापत्नकमस्याः॥ अध्यूढा अधिउपरिऊढाऊढानुऊढायस्याः॥ अधिविन्ना अधिउपरिविन्नालब्धा॰स्याः यद्वा अधिका उपरिविन्नालब्धायस्याः इत्याद्यूह्यं त्रीणिअनेकभार्यस्यप्रथमोढायाः॥ स्वयंवरा स्वयंवृणीते वृङ् संभक्तौ॥ पतिंवरा पतिंवृणोति॥ वर्या व्रियतेऽनेकैर्या त्रीणि स्वेच्छयापतिवरणोद्युक्तायाः॥ कुलस्त्री कुलपालिकास्त्री शाकपार्थिवादिवत्॥ कुलपालिका कुलंपालयति पालरक्षणे कर्मण्यण् स्वार्थेकन्॥ द्वेकुलवत्याःस्त्रियाः ७ कन्या कनति कनदीप्तौ कन्यानार्योःकुमार्यांचराश्योषधिविशेषयोरितिहेमः॥ कुमारी कम्यते कमुकांतौ यद्वा कुमारयति कुमारक्रीडायां कुत्सितोमारोऽस्यावा द्वेप्रथमवयसिवर्तमानायाः॥ गौरी गूयते गूङ् शब्दे गौरीत्वसंजातरजाः कन्याशंकरभार्ययोरितिविश्वः॥ नग्निका नज्जतेस्म ओणस्त्री व्रीडे नग्निकातुकुमार्यांस्यात्सुमान्कृपणवादिनोः॥ अनागतार्तवा अनागतमार्तवंरजोऽस्याः त्रीणिअदृष्टरजस्कायाः तत्रेत्थंच अष्टवर्षाभवेद्गौरीदशमेनग्निकाभवेदितितस्याअवांतरभेदः॥

पुरंध्रीसुचरित्रातुसतीसाध्वीपतिव्रता ६ कृतसापत्निकाध्यूढाऽधिविन्नाथस्वयंवरा॥ पतिंवराचवर्याथकुलस्त्रीकुलपालिका ७ कन्या
कुमारीगौरीतुनग्निकाऽनागतार्तवा॥

५ ५ ५

मध्यमा बालयौवनयोर्मध्ये भवा गर्भं बान्धौवंनयाँ मौराभाग्यस्यांवा॥ दृष्टरजा दृष्टंरजोयस्याः द्वे प्रथमप्राप्तरजोयोगायाः॥ तरुणी तरति तॄ प्लुवनतरणयोः औरस्ब्लोवेत्युनन् वयसिप्रथमेइत्यन्न वयस्यचरमइतिनान्यामिति ङीप् तलुनी नल्नूनः पवनेयूनियुवत्यांतलुनोस्मृतेतिमेदिनी॥ युवतिः युवतीतिङीषंतेतिकेचित् यूनीतिङीषंतोऽन्यत्र द्वे मध्यमवयसिवर्तमानायाः ८ स्नुषा स्नौति स्नुप्रस्रवणे॥ जनी आयतेवंशोऽस्यां जनिरित्यपि कृदिकारादितिङीष् विकल्पात्॥ वधूः वहति वहप्रापणे वधूः पत्न्यांस्नुषानार्योः स्पृक्कासारिवयोरपि इत्यक० अयंपुत्रादिभार्यायाः नवपरिणीतायांचेतिहैमात् वधूरित्येकं नवोढायाःस्त्रियाअपि॥ चिरिंटी चिरेणाटति पितृगेहाद्भर्तृगेहं पृषादरादिः॥ चिरंटी चिरिहिंसायां चिरंटीतुसुवासिन्यांस्याद्वितीयवयस्त्रियामितिविश्वप्रकाशः॥ सुवासिनी सुष्ठुवसति स्ववासिनीत्यपिपाठः तत्रैवं स्वेषुपित्रादिषुवस्तुंशीलमस्याः स्ववासिन्यांचिरिंटीस्याद्वितीयेव

स्यान्मध्यमादृष्टरजास्तरुणीयुवतिः समे ८ समाः स्नुषाजनीवध्वश्चिरिंटीतुसुवासिनी॥ इच्छावतीकामुकास्याद्वृषस्यंतीतुकामुकी ९
कांतार्थिनीतुयायातिसंकेतंसाभिसारिका॥ पुंश्चलीधर्षिणीबंधक्यसतीकुलटेत्वरी १०

यसिस्त्रियामितिरुद्रः इतिद्वेकिंचिल्लब्धयौवनायांपरिणीतायाँ॥ इच्छावती इच्छाविद्यतेऽस्याः॥ कामुका कामयते कमुकांतौ इतिद्वेधनादीच्छावत्याः॥ वृषस्यंती वृषंनरंआत्मनः इच्छति क्यचिसुगागमः शतृप्रत्ययांतात्ङीप्॥ कामुकी कामयते कमुकांतौ द्वे रुषवन्मैथुनेच्छावत्याः ९ या कांतार्थिनी कांतस्यअर्थोयस्याः भर्तुःसंकेतस्थानंगच्छति साऽभिसारिका अभिसरति सृगतौ तदाह हित्वालज्जाभयेश्लिष्टामदेनमदनेनया अभिसारयतेकांतंसाभवेदभिसारिका इत्यक० एकं॥ पुंश्चली पुंसोभर्तुःसकाशाच्चलतिपुरुषांतरंगच्छति चलगतौ॥ धर्षिणी धर्षयति ञिधृषाप्रागल्भ्ये आवश्यकेणिनिः धर्षणीत्यपि ल्युट् धृषधातोरनिः कर्षणिः कर्षतिमनः धर्मिणीतिक्वचित्पाठः॥ बंधकी बध्नातिमनोऽन्यत्र॥ असती सत्याभिन्ना॥ कुलटा अटति अटगतौ कुलस्यअटा कुलंजनपदेगृहेइतिविश्वः॥ इत्वरी एतितच्छीला इत्वर्यसत्यांपथिकेक्रूरकर्मणिचनिषु १०

स्वैरिणी स्वयाइच्छया स्वेनस्वातंत्र्येणवाईरितुंशीलमस्याः ईरगतौ ॥ पांशुला पांशुःपापमस्त्यस्याः अष्टस्वैरिण्याः ॥ या शिशुनाविनारहिता सा अशिश्वी नशिशुर्यस्याः एकं ॥ निष्पतिसुता निर्गतोपतिसुतोयस्याः सा अवीरा एकं पतिपुत्रवतीवीरेतिनाममाला ॥ विश्वस्ता विफलंश्वसितिस्म स्वसप्राणने विश्वस्तोजातविश्वासोविश्वस्ता विधवास्त्रियामितिविश्वः ॥ विधवा विगतोधवोस्याः द्वेरंडायाः ११ आलिः अलति अलभूषणे आलिः सखीसेतुरालिरालिरावलिरिष्यतइतिशाश्वतः ॥ सखी समानंख्यायतेजनैः सखामित्रेसहायेचवयस्यायांसखीमता ॥ वयस्या वयसातुल्या ॥ पतिवत्नी पतिरस्त्यस्याः ॥ सभर्तृका सहभर्त्रास्ति ॥ द्वेजीवद्भर्तृकायाः ॥ वृद्धा वर्धतेस्म वृधुवृद्धौ गत्यर्थेति-

स्वैरिणीपांशुलाचस्यादशिश्वीशिशुनाविना ॥ अवीरानिष्पतिसुताविश्वस्ताविधवेसमे ११ आलिःसखीवयस्याथपतिवत्नीसभर्तृका ॥
वृद्धापलिक्नीप्राज्ञीतुप्रज्ञाप्राज्ञातुधीमती १२ शूद्रीशूद्रस्यभार्यास्याच्छूद्रातज्जातिरंगना ॥ आभीरीतुमहाशूद्रीजातिपुंयोगयोःसमा
१३ अर्याणीस्वयमर्यास्यात्क्षत्रियाक्षत्रियाण्यपि ॥

क्तः वृद्धोजीर्णप्रवृद्धेज्ञेत्रिषुक्लीबंतुशैलजेइत्युक्तत्वात् ॥ पलिक्नी पलितमस्त्यस्याः द्वेपक्वकेश्यां ॥ प्राज्ञी प्रज्ञास्यात् प्रज्ञाऽस्त्यस्याः ॥ प्राज्ञातु धीमतीस्यात् धीर्विद्यते द्वेप्रशस्तबुद्धेः १२ या शूद्रस्यभार्या सा विजातीयाऽपि शूद्रीत्युच्यते शूद्रस्यस्त्री एकं ॥ तज्जातिः शूद्रजातिः अन्यभार्याऽपि शूद्रेत्युच्यते ॥ आभीरी आभीरस्यस्त्री ॥ महाशूद्री अमहत्पूर्वेतिटाब् निषेधात्ङीष् द्वेगोपालिकायाः ॥ जातिपुंयोगयोः महाशूद्रस्यजातौ महाशूद्रस्यस्त्रीत्येवंरूपपुंयोगेचसमा उभयत्रापि नाम ङ्यंङीष्प्रत्ययांतमेवेत्यर्थः १३ अर्याणी अर्यस्य वैश्यस्यजातिः ॥ अर्या द्वेवैश्यजात्युत्पन्नायाः स्त्रियाः ॥ स्वयंवैश्यजातिः भार्यातुयस्यकस्यचिदस्तु इत्यर्थोबोध्यः ॥ तथा क्षत्रियाणी क्षत्रियस्यजातिः क्षत्रिया द्वेस्वयंक्षत्रियजातिः भार्यातुयस्यकस्यचित् ॥

उपाध्याया ॥ उपाध्यायी द्वेस्वयंयाअध्यापिकातस्यां उपेत्याधीयतेऽस्याः सकाशादित्युपाध्याया युगांतरेतु नारीणांव्रतबंधनमुच्यते अध्यापनंचवेदानांसावित्रीवचनंतथे तिपराशरमाधवीयेयमः ॥ तथास्वतः स्वयंमंत्रव्याख्याकृदाचार्यास्यात् एकं मध्यमपिसमानार्थमित्येके १४ पुंयोगे आचार्यानी आचार्यस्यस्त्रीत्येवंरूपेर्थेएकं आचार्यादणत्वं चेतिणत्वाभावः एवंआर्या आर्यस्यस्त्रीइत्यर्थेएकं ॥ क्षत्रियी क्षत्रियस्यस्त्रीइत्यर्थेएकं ॥ उपाध्यायानी उपाध्यायस्यस्त्री ॥ एवमेव उपाध्यायी द्वेउपाध्यायस्यभार्यायां ॥ पोटा स्त्री पुंसलक्षणा स्तनश्मश्रुरूपेणस्त्री पुंभचिन्हेनयुक्तापोटेत्युच्यते पोटयति पुटभासने चुरादिः पुटति पुटसंश्लेषणे एकं १५ वीरपत्नी वीरः पतिरस्याः ॥ वीरभार्या

उपाध्यायाप्युपाध्यायीस्यादाचार्यापिचस्वतः १४ आचार्यानीतुपुंयोगेस्यादर्याक्षत्रियीतथा ॥ उपाध्यायान्युपाध्यायीपोटास्त्रीपुंसलक्षणा १५ वीरपत्नीवीरभार्यावीरमातातुवीरसूः ॥ जातापत्याप्रजाताचप्रसूताचप्रसूतिका १६ स्त्रीनग्निकाकोटवीस्याद्दूतीसंचारिकेसमे ॥ कात्यायन्यर्धवृद्धायाकाषायवसनाऽधवा १७

वीरस्यभार्या द्वे वीरभार्यायाः ॥ वीरमाता वीरस्यमाता ॥ वीरसूः वीरंसूयते षुङ् प्राणिगर्भविमोचने द्वे वीरमातुः ॥ जातापत्या जातमपत्यंयस्याः ॥ प्रजाता प्रजायतेस्म अंतर्भावितण्यर्थाज्जनेर्गत्यर्थेतिक्तः ॥ प्रसूता प्रकर्षेणसूता ॥ प्रसूतिका प्रकर्षेणसूतेसा चत्वारिप्रसूतायाः १६ या नग्निका नग्नास्त्री ॥ सा कोटवीत्येकं कोटंबानि कुटकौटिल्ये घञ्कोटं कोट्टवीत्यपि कु इञ्छेदने ॥ दूती दवति दुगतौ यद्वा दूयते दूङ् उपतापे दुतनिभ्यांदीर्घश्चेतिक्त गौरादित्वात् ङीष् वा हुलकात्क्तिन् दूतिरित्यपि ॥ संचारिका संचरति संचारयतिवा प्रापयतिस्वामिसंदेशं चरगतौ द्वे दूतिकायाः अर्धवृद्धा अर्धेनवृद्धा ॥ काषायवसना काषायंवस्त्रंयस्याः ॥ अधवा नविद्यतेधवोयस्याः इतिविशेषणत्रयविशिष्टायासा कात्यायनीत्युच्यते एकं ॥ अर्धवृद्धेतिधर्मप्रधानत्वात् अर्धवृद्धत्वेनयुक्तेत्यर्थः १७ ७ ७

या परवेश्मस्था परवेश्मनितिष्ठतिसा॥ स्ववशा स्वस्यवशा॥ शिल्पकारिणी केशप्रसाधनादिशिल्पकारिणी चेतिविशेषणत्रयोपेता तस्यां सैरंध्रीतिनामैकं सीरंधरतीति धृञ्धा
रणे मूलविभुजादित्वात्कः बाहुल्कात् मुम् सीरंध्रस्येयंइदमर्थेण् यद्वा स्वैरंस्वाच्छंद्यंधर ति पृषोदरादिः सैरंध्रीयरवेश्मस्थाशिल्पकृत्स्ववशास्त्रियामितिरभसः तथा
चतुःषष्टिकलाभिज्ञाशीलरूपादिसेविनी प्रसाधनोपचारज्ञासैरंध्रीपरिकीर्तितेतिकात्यायनः इकारमध्यपाठेपृषोदरादित्वंबोध्यं एकं॥ असिक्नी ॥ प्रेष्या प्रेष्यतेराज्ञी
भिः॥ अंतःपुरचारिणी अंतःपुरंचरति इतिचविशेषणत्रयोपेतायासा॥ सिक्नीस्यादित्येकं सिनोति षञ्बंधने इत्याद्यूह्यं १८ वारस्त्री वारस्य वृंदस्यस्त्री साधारणत्वात्॥
गणिका गणः समूहोस्त्यस्याः मर्तृत्वेनगणयतिवा गणसंख्याने। वेश्या वेशेननेपथ्येनशोभते वेशः प्रवेशोस्त्यस्यावा वेश्यंवेश्यागृहे क्लीबंगणिकायांतुयोषिति वेवेष्टि

सैरंध्री परवेश्मस्थास्ववशा शिल्पकारिका॥ असिक्नी स्यादवृद्धायाप्रेष्यांतःपुरचारिणी १८ वारस्त्री गणिका वेश्या रूपाजीवाऽथसाजनैः॥ सत्कृता
वारमुख्यास्यात्कुट्टनी शंभलीसमे १९ विप्रश्निका त्वीक्षणिका दैवज्ञाऽथरजस्वला॥ स्त्रीधर्मिण्यविरात्रेयीमलिनी पुष्पवत्यपि २०

व्याप्नोति वेषशब्दात्क
र्मवेषायत्॥ रूपं जीवा अंध्यादिरूपमाजीवोऽस्याः चत्वार्येनेश्यायाः॥ सावेश्यागुणवत्वाज्जनैः सत्कृतासतीवारमुख्यास्यात् वारे वेश्यावृंदेमुख्यावारमुख्या एकं॥ कुट्टनी कुट्टयति
कुट्टच्छेदने॥ शंभली शंसनं भलते भल्परिभाषणे संभलीतितालव्यादिरपि द्वेपरनारींपुंसायोजयित्र्यां नामनी १९ विप्रश्निका विविधः प्रश्नोऽस्त्यस्याः मत्वर्थेठन्॥ ईक्षणिका शुभा
शुभयोरीक्षणमस्त्यस्याः ईक्षतेवा ईक्षदर्शने॥ दैवज्ञा दैवं शुभाशुभंजानाति त्रयंशुभाशुभनिरूपिण्याः॥ रजस्वला रजोस्त्यस्याः॥ स्त्रीधर्मिणी स्त्रीधर्मोरजोऽस्त्यस्याः॥ अविः अव
ति लज्जया अवरक्षणादौ अविंस्त्रीधर्मिणीविद्यादितिकात्यः अवीतिदीर्घांतोपि॥ आत्रेयी अत्रेरपत्यंस्त्री आत्रेयीवदगम्यत्वादात्रेयी आत्रेयिकेत्यन्यत्र आत्रेयोमुनिरात्रेयीपुष्पवत्यां
सरिद्भिदीतिहैमः॥ मलिनी मलमस्त्यस्याः मलिनंरूप्यादावयोरित्युः॥ पुष्पवती पुष्पंरजोऽस्त्यस्याः २०

ऋतुमती ऋतुरस्त्यस्याः॥ उदक्या उदकंअर्हति॥ अप्ररजस्वलायाः॥ रजः रज्यतेऽनेन रजरागे रजः क्लीबंगुणांतर इत्युक्तत्वात्॥ पुष्पं पुष्प्यते पुष्पविकसने पुष्पंविकाशिकुसुमंस्त्रीरजः स. नपुंसकमित्युक्तत्वात्॥ आर्तवं ऋतुरेवार्तवम् प्रज्ञाद्यण् आर्तवंस्त्रीरजः पुष्पेक्लीबंस्यादृतुजेत्रिषु त्रीणिरजसः॥ श्रद्धालुः श्रद्धते तच्छीला॥ स्पृहिगृहि इत्यालुच्॥ दोहदवती दोहदःग र्भिण्यभिलाषोऽस्त्यस्याः दोहदंगर्भवशादन्नादिविशेषाभिलाषिण्याः॥ निष्कला॥ कलान्निष्क्रांता निर्गतंकलंशुक्रंयस्यावा निष्कलस्तुकलाशून्येनष्टबीजेतुवाच्यवदित्युक्तत्वात्॥ विग तार्तवा विगतंआर्तवंरजोऽस्याः॥ द्वेरजोहीनायाः २१ आपन्नसत्वा आपन्नंसत्वंजंतुरनयाऽस्यांवा॥ गुर्विणी गुरुर्दुर्जरोऽद्युवोगर्भोऽस्त्यस्याः यद्वा गर्वीति गर्वगतो॥ अंतर्वत्नी अंतरस्त्यस्यांगर्भः॥ गर्भिणी गर्भोऽस्त्यस्याः॥ गणिकादेर्गणेसमूहेगाणिक्यादि यथा गाणिक्यं गणिकानांसमूहः॥ गार्भिणं गर्भिणीनांसमूहः॥ यौवनं युवतीनांसमूहः इ

ऋतुमत्यप्युदक्यापिस्याद्रजः पुष्पमार्तवम्॥ श्रद्धालुर्दोहदवतीनिष्कलाविगतार्तवा २१ आपन्नसत्वास्याद्गुर्विण्यंतर्वत्नीचगर्भिणी॥ गणि कादेस्तुगाणिक्यंगार्भिणंयौवनंगणे २२ पुनर्भूर्दिधिषूरूढाद्विस्तस्यादिधिषुः पतिः॥ सतुद्विजोग्रेदिधिषूः सैवयस्यकुटुंबिनी २३

सैवेकं २२ यास्त्री द्विः द्विवारंऊढा वृता तत्रपुनर्भूः पूर्वमेकस्य भूत्वा पुनः अन्यस्य भवतीति॥ दिधिषूः दधातिपापं धिष्यतेवा डुधाञ्धारणपोषणयोः धिष्शब्देवा दीक्षित मतेदिधिंधैर्यंस्यति इत्याद्यूह्यं दिधिषूः दिधिषुरपि बाहुलकात्ह्रस्वविकल्पः द्वेपुनर्भुवः अक्षताचक्षताचैव पुनर्भूः संस्कृतापुनरित्युक्तं॥ तस्याद्विरूढायाः पतिर्दिधिषुरित्यु च्यते विग्रहस्तुपूर्ववत् एकं॥ पुनर्भूः पतिरन्यस्मपुनर्भूर्दिधिषूस्तयेत्येषोप्यूदंतइतिस्वाभिचरणाः मनुस्तु ज्येष्ठायांयद्यनूढायांकन्यायामुह्यतेऽनुजा सचाग्रेदिधिषूर्ज्ञेयापूर्वा तुदिधिषूर्मतेत्याह सापुनर्भूर्यस्याद्विजस्यकुटुंबिनी कुटुंबपोष्यादिपोष्यवर्गस्तद्वतीसोग्रेदिधिषूरित्येकम् अग्रेप्रधानंदिधिषूर्यस्य अग्रेदिधिषुरितिह्रस्वांतोऽपि दिधिषूः परपूर्वाग्रेदि

धिषु स्तत्पुरंध्रिकद्रतिनाममाला ॥ द्विजशब्दाद्दूर्णत्रयस्यापिसंग्रहः २३ कन्यकाजातः कन्यकायाअपरिणितायाजातः सुतः कानीनइत्युच्यते एकं ॥ सुभगासुतः सौभागिनेयः सुभगायाअपत्यं द्वे सुभगापुत्रस्य ॥ यः परस्त्रियः सुतः पारस्त्रैणेयः परस्त्रियाअपत्यं एकं २४ पितृष्वसुः पितुः स्वसुः सुतः पैतृष्वसेयः ॥ पैतृष्वस्रीयः पितृष्वसुःअपत्यं द्वे ॥ मातृष्वसुः सुतोप्येवं तदाह मातृष्वसेयः मातृष्वस्रीयः पूर्ववत् द्वे ॥ विमातृजः विरुद्धामाता प्रादयइतिसमासः तस्याः जातः वैमात्रेयइतिप्रोच्यते ॥ एकं ॥ वैमात्रोप्यन्यत्र एवमेव २५ बांधकिनेयः बंधक्याअपत्यं कल्याण्यादीनामिनङ् ॥ बंधुलः बंधुंलाति ॥ असतीसुतः असत्याः सुतः ॥ कौलटेर कुलटायाअपत्यं ॥ कौलटेयः पूर्ववत् ॥ पंचकुलटापुत्रस्य

कानीनः कन्यकाजातः सुतोऽथसुभगासुतः ॥ सौभागिनेयः स्यात्पारस्त्रैणेयस्तुपरस्त्रियाः २४ पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्चपितृष्वसुः ॥ सुतोमातृष्वसुश्चैवंवैमात्रेयोविमातृजः ॥ २५ ॥ अथबांधकिनेयः स्याद्बंधुलश्चासतीसुतः ॥ कौलटेरः कौलटेयो भिक्षुकीतुसतीयदि २६ तदाकौलटिनेयोस्याः कौलटेयोऽपिचात्मजः ॥ आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियांत्वमी २७ आहुर्दुहितरंसर्वेऽपत्यंतोकंतयोःसमे ॥

२६ यदितुसतीभिक्षुकी भिक्षार्थिनी तर्हि कुलानिभिक्षार्थंअटति नतुजारार्थं तस्या कुलटायाआत्मजः आत्मनोदेहाज्जातः कौलटिनेयः कौलटेयः तदितरायाः कौलटेरइतिभेदः कुलंजनपदगृहइतिविश्वः ॥ आत्मजः आत्मनः तनयः तनोतिकुलं तन्यतेवा तनुविस्तारे ॥ सूनुः सूयते षूङ् प्राणिप्रसवे सूयतेस्म षूयतेस्म सुतः स्यात्पार्थिवेपुंसिकन्यायांतुसुतास्मृतेत्युक्तत्वात् ॥ पुत्रः पुनाति पूयतेवा पुञ्पवने यद्वा पुन्नरकात्त्रायते पुंनाम्नोनरकाद्यस्मात्पितरंत्रायतेसुतः तस्मात्पुत्रइतिप्रोक्तः स्वयमेवस्वयंभुवेति अमीआत्मजादयः सर्वे स्त्रियांतुवर्तमानाः २७ दुहितरंआहुः यथा आत्मजा तनया सूनुः सुता पुत्री पुनाति पूयतेवा शेषंपूर्ववत् सुतासुदुहितापुत्रीतित्रिकांडशेषः दुहितेत्यपिऋदंतं स्वस्रादिन्वान्ङीप्नतुराबंतं ॥ दोग्धि दुहप्रपूरणे दहतिवा दहभस्मीकरणे नप्तृनेष्टृतिसाधुः ॥ अपत्यं नपतंतिपितरोऽनेन पत्लृगतौ ॥ तोकं तोकंसंतानसूतयोरितिहैमः द्वे तयोः समेपुत्रेदुहितरिचक्लीबलिंगेएवेत्यर्थः

औरसः उरसानिर्मितः ॥ उरस्यः औरस्यइत्यपि विग्रहस्तु पूर्ववत् द्वे ॥ स्वजातेसवर्णायामूढायांस्वस्माज्जातेपुत्रेनत्वुदश्विमादौ ॥ तातः तातोऽनुकंप्येपितरीतिहेमचंद्रः तनोति ॥ जनकः जनयति जनकःपितृसूपयोरितिहैमः ॥ पिता पातात्रीणिपितुः २८ जनयित्री जनयति अंतर्भावितण्यर्थाज्जनित्री जनेस्तृचिड्डागमे ऋदंतत्वात्ङीप् ॥ प्रसूः प्रकर्षेणसूयते सत्सूद्विषेतिक्विप् ॥ माता मान्यते मानपूजायां पातिवा मातिगर्भोऽस्यांवा ॥ जननी जनयति जननिरित्यपि ॥ चत्वारिजनन्याः ॥ भगिनी भगंकल्याणं यत्नोवाऽच्छावाऽस्त्यस्याः इन्नंतात्ङीप् ॥ स्वसा सुष्ठुअस्यति अस्यतेवा असुक्षेपणे द्वेस्वसुः ॥ या पत्युःस्वसा सानन्नांदेतिप्रोक्तंएकंनाम ऋदंतमिदं ननंदेत्यपि ननंदति नतुष्यति ननंदयति भ्रातृजायाभि

स्वजातेत्वौरसौरस्यौ तातस्तु जनकः पिता २८ जनयित्री प्रसूर्माता जननी भगिनी स्वसा ॥ ननांदा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा २९ भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परं ॥ प्रजावती भ्रातृजाया मातुलानी तु मातुली ३० पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ३१

तिवा ननांदा तु स्वसापत्युर्ननंदा नंदिनी चसेतिरभसः ॥ नप्त्री नपतंतिपितरोऽनया नप्तानप्त्री चपौत्रिकेतिरभसः ॥ पौत्री पुत्रस्यपुत्र्याश्चापत्यं द्वे सुतस्यसुतायाश्चात्मजा तत्र २९ भ्रातृवर्गस्यभार्याःपरस्परंयातरः स्युः एकं यतते यतीप्रयत्ने ॥ प्रजावती प्रजास्त्यस्याः ॥ भ्रातृजाया भ्रातुर्जाया द्वे भ्रातुर्जायायाम् ॥ मातुलानी मातुलस्यस्त्री पुंयोगादितिङीष् ॥ मातुली पूर्ववत् मातुलेत्यपि द्वे मातुलभार्यायाः ३० पत्युः पत्न्याश्चप्रसूर्माता श्वश्रूरित्युच्यते एकं ॥ तयोः पतिपत्न्योः पिता श्वशुर इत्युच्यते शुइति आश्वर्येपूजायांवा शुआशु अश्नुते अश्यतेवा अशूव्याप्तौसंघातेच श्वश्रूशिशुश्वशुरा इति शभेदाद्वितालव्यः एकं ॥ पितुर्भ्राता पितृव्यः एकं ॥ मातुर्भ्राता मातुल इत्युच्यते एकं ३१

ዓ ዓ ዓ

पत्न्याः भ्रातरः श्यालाइत्येकं श्यायते श्यैङ् गतौ श्यालशब्दस्तालव्यादिर्दंत्यादिर्वा उच्छिष्टमधुपर्कवाची श्याशब्दः तत्र श्यां लातीति श्यालः स्वामिनः पत्युर्भ्रातरि
कनिष्ठे देवा॥ देवरः दीव्यति देवतेवा देहदेवने देवृशब्दस्य देवादेवरौ इत्यादि देवृदेवरदेवानइतिशब्दार्णवादन्यत्रनांतोपि देवेति॥ स्वस्रीयः स्वसुरपत्यं ढक्छते॥स्वस्रियः द
कि॥ स्वस्रेयः भागिनेयः भगिन्याअपत्यं द्वे भगिनीसुतस्य॥ दुहितुः पतिः जामाता जायांमिमीते मिनोतिवा माङ् माने डुमिञ् प्रक्षेपणेवा॥ ३२॥ पितामहः पितामहः प
श्योनोजनकेजनकस्यचेतिद्वे मः॥पितृपिता द्वे पितुःपितरि तस्यपितामहस्यपिताप्रपितामह इत्येकं॥एवंमातुःपितुःपित्रादौ मातामहादिनदाह मातुःपिता मातामहएकं तत्पिताप्रमातामह

श्यालाःस्युर्भ्रातरःपत्न्याः स्वामिनोदेवृदेवरौ॥ स्वस्रीयोभागिनेयःस्याज्जामातादुहितुःपतिः ३२ पितामहःपितृपितातत्पिताप्रपितामहः
मातुर्मातामहाद्येवंसपिंडास्तुसनाभयः ३३ समानोदर्यसोदर्यसगर्भ्यसहजाःसमाः॥ सगोत्रबांधवज्ञातिबंधुस्वस्वजनाःसमाः ३४ ज्ञाते
यंबंधुतातेषांक्रमाद्भावसमूहयोः॥ एकं सपिंडाःसमानःएकःपिंडोदेहोमूलपुरुषोनिर्वाप्योवाऽस्य सहपिंडेन वर्ततइतिवा॥सनाभयः समानोनाभिर्मूलपुरुषोऽस्य ३३ स
मानोदर्यः समानेउदरेशयितः॥ सोदर्यः पूर्ववत्॥ सगर्भ्यः समानेगर्भेभवः यद्वा सहतुल्येगर्भेकुक्षौभवः सहकल्याणसादृश्ययोगपद्यसमृद्धिष्वितिविश्वः॥सहजः सहतुल्ये
उदरेजातः चत्वारिएकोदरस्यभ्रातुः॥ सगोत्रः समानंगोत्रंकुलमस्य॥ बांधवः बध्नाति बंधबंधने बांधवोबंधुमित्रयोरिति॥ ज्ञातिः जानाति जायतेवा॥ बंधुः॥ स्वः स्वनति स्व
नशब्दे अन्येभ्योपीतिडः॥ स्वजनः स्वआत्मीयश्चासौजनश्च षट्सगोत्रस्य अत्रस्वशब्दस्यरूपाणि स्वः स्वौ स्वाः इत्यादि ३४ तेषांभावसमूहयोः क्रमात् ज्ञातेयंबंधुतास्या
त् ज्ञातेर्भावः ज्ञातेयं एकं॥ बंधूनांसमूहः बंधुता एकं॥

धवः धवति धूयतेवा धूञ्कंपने धवः पुमान्नरे धूर्ते पत्यौ तरुशांतरेऽपिच ॥ प्रियः प्रीणाति प्रीञ्तर्पणे प्रियोहृद्यौषधे धवेइतिहैमः ॥ पतिः पाति पारक्षणे ॥ भर्ता बिभर्ति डुभृञ् धारणपोषणयोः चत्वारिपत्युः ॥ जारः जरयति जॄष्वयोहानौ ॥ उपपतिः उपमितः पत्या उपसृष्टः पतिरनेनवा प्रादिभ्योधातुजस्यवाच्योवाचोत्तरपदलोपश्चेतिसमासः ३५ अमृतेभर्तरिजाराज्जातः कुंडइत्युच्यते एकं ॥ कुंडयते कुलमनेन कुडिदाहे स्त्रियांतुकुंडी कुंडमग्न्यालयेमानभेदेदेवजलाशये कुंडीकमंडलौजारात्पतिवत्नीसुतेपुमान् ॥ मृतेभर्तरिजाराज्जातः गोलकइत्येकं ॥ गुड्यते गुडरक्षायां डलयोरेकत्वात् गोलकोविधवापुत्रेजारात्स्यान्मणिकेगुडे एकं ॥ भ्रात्रीयः भ्रातुरपत्यं ॥ भ्रातृजः भ्रातुर्जातः द्वे भ्रातृपुत्रस्य ॥ भ्रातृभगिन्यौ भ्राताचभगिनीच भ्रातरौस्यातां भ्रातापरासाच भ्राजते भ्राजृदीप्तौ एकं उभावितिसहोक्तौसत्यामितिसूचनार्थं ॥ भ्रातृपुत्रौ स्वसृदुहितृभ्यामित्येकशेषः ३६

धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ ३५ अमृते जारजः कुंडो मृते भर्तरि गोलकः ॥ भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरावुभौ ३६
मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ॥ श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ३७ दंपती जंपती जायापती भार्यापती च तौ ॥

मातापितरौ आनङ् ऋतोद्वंद्वे इतिमातृशब्दस्यानङ् माताच पिताच पितरौ मात्रासहोक्तेः पितरि पितामात्रेत्येकशेषः मातरपितराविंत्यत्र मातृऋकारस्यारङ् भावोनिपात्यते उभयत्रापीति मतांतरं तेनमातरपितराभ्यामितिप्रयोगइतिन्यासः ॥ श्वश्रूश्वशुरौ श्वश्रूश्चश्वशुरश्च श्वशुरौ श्वशुरःश्वश्र्वेतिएकशेषोवा द्वे सहोक्तयोः श्वश्रूश्वशुरयोः ॥ पुत्रश्चदुहिताचएकशेषे पुत्रौस्यातामित्यर्थः रुक ३७ दंपती जायाचपतिश्च ॥ जंपती जायापती पूर्ववत् ॥ भार्यापती भार्याचपतिश्च नावित्यनेनैते शब्दाद्विवचनांताः पुंसीतिसूचितम् ॥ स्त्रीत्वमप्युक्तं तद्यथा शाल्मलीमैथिलीमैत्रीदंपतीजंपतीचसेतिवाचस्पतौद्रेयं ॥ ७ ५ ५

गर्भाशयः गर्भआशेतेऽत्र पुंसि संज्ञायामितिघः॥ जरायुः जरामेति जरायुरुदंतः॥ उल्बं उल्लीयते लीङ्श्लेषणे यद्वा ओलति उल्यतेवा उल्सौत्रोदाहे श्रोणियेनवेष्टितोगर्भः कुक्षौ निर्घ्रतितस्यचर्मणः॥ कललं कल्यते कलसंख्याने एवं॥ शुक्रशोणितसन्निपातस्यप्रसिद्धत्वादस्यपर्यायेनोक्तः किंतु अस्त्रीत्वमात्रंविधीयते॥ उल्बपर्यायः कललइत्येके तदाहुः तदुल्बंकललंचतदिति ३८ सूतिमासः सूतेःप्रसवस्यमासः॥ वैजननः विजायतेऽस्मिन् अधिकरणेल्युट् विजननएवं स्वार्थेण् यद्वा विजनस्यगर्भमोचनस्यायं तस्येदमित्यणि आदिवृद्धिः तदुक्तमाहुः नवमेदशमेवापिप्रबलैःसूतिमारुतैः निःसार्यतेबाणइवजंतुश्छिद्रेणसत्वरमिति द्वे प्रसवमासस्य यत्रनवमेवादशमेमासिप्रसूयतेतस्येत्यर्थः॥ गर्भः गीर्यते उद्गीर्यते शब्द्यतेवा गॄनिगरणे॥ गर्भोभ्रूणेऽर्भके कुक्षौसंधेपनसकंटक इतिविश्वमेदिन्यौ॥ भ्रूणः भ्रूण्यते भ्रूणआशाविशंकयोः द्वे कुक्षिस्थगर्भस्य॥ तृतीयाप्रकृतिः स्त्री

**गर्भाशयोजरायुःस्यादुल्बंचकललोऽस्त्रियाम् ३८ सूतिमासोवैजननोगर्भोभ्रूणइमौसमौ॥ तृतीयाप्रकृतिःषंढःक्लीबःपंडोनपुंसके ३९**
**शिशुत्वंशैशवंबाल्यंतारुण्यंयौवनंसमे॥**

पुंसावपेक्ष्य तृतीयाप्रकृतिः तृतीयःप्रकारः असमस्तमेतत् समासेतु तृतीयप्रकृतिः तृतीयाप्रकृतिरितिषडक्षरंनामसंज्ञापूरण्योश्चेतिनिषेधादत्रपुंवद्भावोन तृतीयप्रकृतिरित्यपिनञ्घटितमितिन्यायेनउक्तनिषेधानित्यत्वात्पुंवद्भावः॥ षंढः शाम्यति शमुउपशमे षंढःस्यात्पुंसिगोपतौ अकृष्टांडेवर्षवरेतृतीयप्रकृतावपीतिकोशांतरात् तत्रप्रथमाप्रकृतिःस्त्री द्वितीयापुमान् तृतीयाक्लीबइतिषंढोमूर्धन्यादिस्तालव्यादिर्वा क्लीबः क्लीबंषंढश्चकंचुकीतितालव्यादेरभासः॥ अस्त्रीनपुंसकेक्लीबंवाच्यलिंगमविक्रमइतिरुद्रः॥ पंडः पंडते पडिगतौ पचाद्यच् यद्वापणते पणव्यवहारे अमंताडुः नपुंसकंनस्त्रीपुमानित्यत्रस्त्रीपुंसयोःपुंसकभावोनिपातनात् ३९ शिशुत्वं शिशोर्भावः॥ शैशवं एवमेव॥ बाल्यं बालस्यभावः अयंबालत्वे॥ तारुण्यं तरुणस्यभावः॥ यौवनं यूनोभावः द्वे॥

स्थाविरं स्थविरस्यभावः युवादित्वात् अण्॥ वृद्धत्वं वृद्धस्यभावः वार्धकं वृद्धाच्चेतिवक्तव्यं इतिवुञ्॥ तथैव वार्धक्यमित्यपि ष्यञिसाधुः वार्धक्यंवार्धकेवृद्धसंघातेवृद्धकर्मणीतिविश्वः त्रीणिवृद्धत्वे॥ तत्रवार्धकमित्येकंवृद्धसंघेऽपि वृद्धानांसमूहेऽपि ४० केशादौजरसायत्शौक्ल्यंधवलिमातत्पलितमुच्यते आदिशब्दाल्लोम्नांग्रहणं॥ पलतिस्म पलगतौ गत्यर्थेतिक्तः पलनंवा नपुंसकेभावेक्तः यद्वा फलति फलनंवा फलनिष्पत्तौ ञिफलाविशरणेवा औणादिकः पलितंशैलजेतापेकेशपाकेचकर्दमे इत्यक्तत्वात्॥ विस्रसा विस्रस्यतेऽनया स्रंसुअधः पतने भिदाद्यङ्॥ जरा जीर्यत्यंगमनया जृष्वयोहानौ षित्वादङ् ङेर्जरयाः॥ उत्तानशया उत्तानंशेतेऽसौ उत्तानादिषुकर्तृषुइत्यच्॥ डिंभा डिंभयति डिंभिसंघे चुरादिः अच् डिंभ्यतेवा कर्मणिघञ् डिंभोऽपिबालिशेबाले इत्यः॥ स्तनपा स्तनौपिबति॥ स्तनंधयी स्तनंधयति नासिकास्तनयोरितिरवच् धेटः

स्यात्स्थाविरंतुवृद्धत्वंवृद्धसंघेपिवार्धकम् ४० पलितंजरसाशौक्ल्यंकेशादौविस्रसाजरा॥ स्यादुत्तानशयाडिंभास्तनपाचस्तनंधयी ४१

बालस्तुस्यान्माणवकोवयस्थस्तरुणोयुवा॥ टित्वात्ङीप् चत्वारिस्तनंधयस्य त्रिषुवक्ष्यंते उत्तानशयादयः शब्दाइतिशेषः स्त्रीत्वेननिर्देशः स्त्रीत्वेरूपभेदप्रदर्शनार्थः डिंभशब्दः सिंहादिवर्गेउक्तोऽपिस्त्रियांटाबंतत्वप्रदर्शनायपुनरिहोक्तः ४१ बालः बल्यते बलतिवा बलसंचलने बालोज्ञेःश्वेभपुच्छयोरित्युक्तत्वात् बालोन्हीबेररवचयोर्बालातुत्रुटियोषितोः बालीभूषांतरमेधाविनिहेमः॥ माणवकः मनोरयंतस्येदमित्यण् ब्राह्मणमाणववाडवेतिसूत्रेनिपातनाण्णत्वं अल्पार्थेकः हारभेदोमाणवकेबालेकुपुरुषेऽपिचेतिरभसः हेवालस्य॥ आषोडशाद्बालः॥ वयस्थः वयसितिष्ठति वयः पक्षिणिबाल्यादौवयोयौवनमात्रकइतिविश्वः॥ तरुणः तरति तॄप्लवनतरणयोः तरुणंकुब्जपुष्पेभारुचकेयूनितुत्रिष्वितिविश्वः॥ युवा यौति युमिश्रणे औणादिकःकनिन् त्रीणियूनि॥

प्रवयाः प्रगतंवयोऽस्य ॥ स्थविरः तिष्ठति ॥ वृद्धः वर्धतेस्म वृधुवृद्धौ वृद्धः प्राज्ञेस्थविरेचवृद्धंशैलेयगृध्रयोरितिहेमः ॥ जीनः जिनातिस्म ज्यावयोहानौक्ते संप्रसारणदीर्घेरूपं ॥ जीर्णः जीर्यतिस्म जॄष्वयोहानौ गत्यर्थेतिक्तः ॥ जरन् जीर्यते स्म जॄन् षट् वृद्धस्य प्रवयसो जरंतो एवंरूपाणि ४२ वर्षीयान् अतिशयेनवृद्धः ॥ दशमी दशमोवस्थाविशेषोऽस्यास्ति ॥ ज्यायान् अतिशयेनवृद्धः वृद्धस्यचेतिज्यादेशः त्रीणिवृद्धस्य ॥ पूर्वजः पूर्वस्मिन्कालेजातः ॥ अग्रियः अग्रेजातः अग्रिमइत्यपिपाठः ॥ अग्रजः पूर्ववत् त्रीणिज्येष्ठभ्रातुः ॥ जघन्यजः जघन्येऽवरकालेजातः ॥ कनिष्ठः अतिशयेनयुवा अतिशायनइतीष्ठन् कनीयानित्यपि ॥ यवीयान् यविष्ठः पूर्ववत् ॥ अवरजः अवरस्मिन्कालेजातः ॥ अनुजः अनुपश्चाज्जातः पंचकनिष्ठभ्रातुः ४३ अमांसः अल्पंमांसमस्य अल्पार्थेनञ् ॥ दुर्बलः दुष्टंबलमस्य ॥ छातः छ्यतिस्म छोछेदने छायतेस्मवा छातश्चंवर्गादिः शातइत्यपिपाठः त्रीणिअबलस्य ॥ बलवान् बलमस्यास्ति ॥ मांसलः मांसमस्त्यस्य ॥ अंसलः अंसोबलमस्यास्ति त्रीणिबलवतः ॥ तुंदिलः अतिशयितंतुंदमुदरमस्य तुंदादिभ्यइलच् इतिइलच् तुंडिलइत्यपि ॥ तुंदिभः तुंदिशब्दात्मत्वर्थेभप्रत्ययः ॥ तुंदी तुंदं उदरमस्त्यस्य ॥ बृहत्कुक्षिः बृहत्कुक्षिरस्य ॥ पिचंडिलः अतिशयितंपिचंडमुदरमस्य पिच्छादिभ्यइलच् इतिइलच् पंचबृहदुदरस्य ४४ ७

प्रवयाः स्थविरोवृद्धोजीनोजीर्णोजरन्नपि ४२ वर्षीयान्दशमीज्यायान्पूर्वजस्त्वग्रियोऽग्रजः ॥ जघन्यजेस्युःकनिष्ठयवीयोवरजानुजाः ४३ अमांसोदुर्बलश्छातोबलवान्मांसलोंसलः ॥ तुंदिलस्तुंदिभस्तुंदीबृहत्कुक्षिःपिचंडिलः ४४

अवटीटः॥ अवनाटः॥ अवभ्रटः॥ नतनासिकः नता नासिका यस्य॥ चत्वारि चिपिटनासिकस्य अवशब्दान्नासिकायाननमनेवाच्ये टीटच् नाटच् भ्रटचः एते प्रत्यया भवंति॥ विग्रहस्तु नासिकायाननं अवनाटं इत्यादि नतंनमनंनदस्ति अस्याः अवटीटा नासिका इत्यादि अर्शआद्यच् तादृशी नासिका अस्त्यस्य अवटीटः पुरुषोऽवनाटः अवभ्रटः गणपाठसामर्थ्या न्न पुनः प्रत्ययः सरूपः प्रत्ययो नष्ट इत्यस्य बाधइति भावः॥ केशवः प्रशस्ताः केशाः संत्यस्य॥ केशिकः॥ केशाद्वान्यतरस्यामिति पाठः अयं भावः प्राणिस्थेति सूत्रे अन्यतरस्यांग्रहणं समुच्चयार्थं कृतं तस्यानुवृत्त्या सिद्धे केशाद्वेति सूत्रे तद्ग्रहणं इनिठनोः समावेशार्थं तेन चतुर्णां प्रत्ययानां सिद्धिः केशाद्वानिनि सम्यगेव॥ केशी॥ त्रयं प्रशस्तकेशस्य॥ बलिनः बलिस्त्वक्संकोचोऽस्ति यस्य॥ बलिभः पूर्ववत् द्वे जरयाश्लथचर्मणः॥ ४५॥ विकलांगः विकलमंगमस्य॥ पोगंडः पोगंडो विकलांगः स्यादिति हलायुधः पोगंडो विकलांगक इ-

अवटीटोवनाटश्चावभ्रटो नतनासिके॥ केशवः केशिकः केशी बलिनो बलिभः समौ ४५ विकलांगस्तु पोगंडः खर्वो ह्रस्वश्च वामनः॥ खरणाः

स्यात्खरणसो विग्रस्तु नतनासिकः ४६

तिरलकोशश्च तत्रेत्थं पोगंड एकदेशोऽस्य पोगंडश्चेत्यपि पोगंड एव पौगंडः स्वार्थे अण् अपोगंड इति पाठे तु नञ्समासः अपोगंडस्तु शिशुके विकलांगे च भीरुक इति विश्वः ह्रस्वभावन्यूनाधिकांगस्य॥ खर्वः खर्वति खर्व गतौ खर्वः संख्यांतरे क्लीबमित्युक्तं॥ ह्रस्वः ह्रसति ह्रस्यते वा ह्रस शब्दे॥ वामनः वामयति टुवमु उद्गिरणे भाष्योक्तातिरिक्तव्यवस्थितविभाषाणामप्रामाणिकत्वे पामादित्वं कल्पनीयं॥ वामनो नाविखर्वे च त्रिषु पुंसीति दिग्गजे त्रयं ह्रस्वस्य खुजा वेंगु इति ख्यातस्य॥ खरणाः खरा तीक्ष्णा नासिकास्य॥ खरणसः खुरखराभ्यां वा नस् अस्याभावे पूर्ववत् खरणाः सांतः द्वे तीक्ष्णनासिकस्य सरळनाका इति ख्यातस्य॥ विग्रः विगता नासिका यस्य वेर्ग्रो वक्तव्य इति नासिकास्थाने ग्रादेशः॥ विखः॥ विख्रुः इमौ शाकटायनमते॥ विख्यः ख्यश्चेति नासिकास्थाने ख्यादेशः विग्रो विख्रुर्विना

सिकइतिरभसः ॥ गतनासिकः गतानासिकायस्य द्वे गतनासिकस्य नकटाइतिख्यातस्य ४६ खुरणाः खुरइवनासिकाऽस्य नासिकास्थानेनस् अंघ्रिसंतु अच् प्रत्ययेनसा देशोसाधु ॥ खुरणसः प्राग्वत् द्वे खुरनासिकस्य ॥ प्रज्ञुः ॥ प्रज्ञः ॥ प्रगतजानुकः प्रगतेविरलेजानुनीयस्य प्रसंभ्यांजानुनोर्ज्ञुरितिसूत्रेणजानुस्थानेज्ञुरादेशः द्वेवाता दिनाविरलजानुकस्य फेंगडाइतिख्यातस्य ॥ ऊर्ध्वज्ञुः "ऊर्ध्वज्ञः" ॥ ऊर्ध्वजानुः ऊर्ध्वेजानुनीयस्य द्वे उच्चजानुकस्य ॥ संज्ञुः "संज्ञः" ॥ संहतजानुकः संहतेजानुनी यस्य द्वेसंलग्नजानुकस्य ॥ प्रज्ञःप्रगतजानुःस्यात्प्रज्ञोप्यत्रैवदृश्यते संज्ञुः संहतजानौच भवेत्संज्ञोपितत्रहि ऊर्ध्वज्ञुरूर्ध्वजानुःस्यादूर्ध्वज्ञोप्यूर्ध्वजानुकइतिसाहसांकः ४७ आसर्वतः ईडयते ईड्वा इडस्कतो यद्वा आइडति इलस्वप्ने अच् आएलइत्यत्रगुणेडपररूपम् डलयोरैक्यम् ॥ बधिरः बध्नाति,कर्णं बध्यतेवा बंधबंधने द्वे श्रवणेंद्रियहीन-

खुरणाःस्यात्खुरणसः प्रज्ञःप्रगतजानुकः ॥ ऊर्ध्वज्ञुरूर्ध्वजानुःस्यात्संज्ञःसंहतजानुकः ४७ स्यादेडेबधिरः कुब्जोगडुलःकुकुरेकुणिः ॥
पृश्निरल्पतनौश्रोणःपंगौमुंडस्तुमुंडिते ४८

स्यबहिराइतिख्यातस्य ॥ कुब्जः कौउब्जति उब्जआर्जवे यद्वा कुईषदुब्जं आर्जवमस्य शकंध्वादित्वात्पररूपम् कुब्जोवृक्षप्रभेदेनान्युब्जेस्याद्वाच्यलिंगकइतिमेदिनी न्युब्जइत्यपि ॥ गडुलः गडति गड्यतेवा गडसेचने ॥ गडुः पृष्ठगुडेकुब्जेइतिमेदिन्यां द्वे कुब्जस्य कुबडाइतिख्यातस्य ॥ कुकुरः कुत्सितःकरोऽस्य ॥ कुणिः कुणति कुण्यतेवा कुणशब्दोपकरणयोः ॥ कूणिः निसर्गतःकूणिर्यंगुयोगंडाइतिनामसमाजा द्वेरोगादिनादूषितकरस्य ॥ पृश्निःस्पृशति स्पृश्यतेवा स्पृशसंस्पर्शे घृणिपृश्निपार्ष्णीतिसाधुः घृणिः पृच्छति पृच्छ्यतेवा पर्षति पृष्यतेवा पृषुसेचनेवा ॥ अल्पतनुः अल्पातनुरस्य द्वे अल्पशरीरस्य ॥ श्रोणः श्रोणति श्रोणृसंघाते ॥ पंगुः पनते पनस्कतो द्वे जंघाविकलस्य ॥ मुंडः मुंड्यते मुडिखंडने मुंडोमुंडोत्तशीर्षयोरितिहेमः ॥ मुंडितः मुंड्यतेस्म द्वेमुंडितकेशस्य ४८

वलिरः वलते वलसंवरणे संचरणेच ॥ केकरः केमूर्ध्नि कर्तुं शीलमस्य हेत्वादिषु टः टेरोबलिरकेकराविति रभसः द्वे नेत्रवियुक्तस्य काणा केरा तिरवा इति वाख्यातस्य खोडः खोडति खोडृगतिप्रतिघाते ॥ खंजः खंजति खजिगतिवैकल्ये अथखंजकेखोडखोराविति रभसः द्वे गतिविकलस्य लंगडा इति ख्यातस्य ॥ त्रिष्विति जरावराः जराशब्दादवराः अर्वाचीनाउत्तानशयाद्याः त्रिलिंगाः वाच्यलिंगा इत्यर्थः ॥ जडुलः जलति जलघातने जटुलइत्यपि ॥ कालकः कालयति कलक्षेपे ॥ पिप्लुः प्लुवते प्लुङ्गतौ मितं द्रुवत् अपेर कारलोपः श्रीणिद्धआवर्णस्य देहगतचिन्हविशेषस्य लासेइतिख्यातस्य ॥ तिलकः तिल इव ॥ तिलकालकः तिलइवकालकः ४९ अनामयं आमयस्याभावः अर्थाभावे व्ययी

वलिरः केकरेखोडेखंजास्त्रिपुजरावराः ॥ जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः ४९ अनामयंस्यादारोग्यंचिकित्सारुक्प्रतिक्रिया ॥ भेषजौषधभैषज्यान्यगदोजायुरित्यपि ५० स्त्रीरुग्रुजाचोपतापरोगव्याधिगदामयाः ॥

भावः ॥ आरोग्यं अरोगस्यभावः द्वे रोगाभावस्य ॥ चिकित्सा अ प्रत्ययादितिभावे अकारप्रत्ययः ॥ रुक्प्रतिक्रिया रुजः प्रतिक्रिया निरसनं द्वे रोगनिवारणस्य ॥ भेषजं भेषयति भेषृभये भेषंरोगंजयतिवा इत्याद्यूह्यं औषधं ओषधेः इदं ॥ भैषज्यं भेषजमेवभैषज्यं ॥ अगदः नगदः स्यादिति ॥ आयुः जयति रोगान् जिअभिभवे अगदसाहचर्यज्जायुरुरुदंतः पुंसि पंचौषधस्य ५० रुक् रुजतिदेहं रुजोभंगे क्विप् ॥ रुजा भिदाद्यङ् टाप् रुजात्वाभयोगयोरितिहेमः ॥ उपतापः उपतापयति उपतापोगदेतापेइतिहेमचंद्रः ॥ रोगः रुजति पदरुजेतिकर्तरिघञ् ॥ व्याधिः विविधाआधयोऽस्मात् ॥ ग दः गदति गदः कृष्णानुजेरोगेगदाप्रहरणांतरइतिहेमः ॥ आमयः आमयत्यनेन याआपणे यद्वा आमयनमनेन मीङ्हिंसायां करणे एरच् सप्तरोगमात्रस्य तेषु रुक् रुजाज कारांतदावंतौज्ञेयौ उभेस्त्रियौ ॥

क्षयः क्षयति देहं अंतर्भावितण्यर्थः क्षिक्षये क्षयेगेहेत्वकल्पांतेऽपचयेरुजीतिहैमः शोषः शोषयति शुषशोषणे अच् तत्रेत्थं शोषः शोषणयक्ष्मणोरितिहैमः यक्ष्मा यक्षय-
ते यक्ष्यतेवा यक्षपूजायां त्रीणिक्षयरोगस्य ॥ प्रतिश्यायः प्रतिक्षणंश्यायते श्यैङ्गतौ ॥ पीनसः पीनंस्यति अयंमुहुर्नासाजलस्रावी ॥ आपीनसःप्रतिश्यास्यादितिरभ-
सः द्वेपीनसरोगस्यपडसेंइतिख्यातस्य प्रतिश्येत्यपिनाम ५१ क्षुत क्षवणं टुक्षुशब्दे ॥ संपदादित्वात्क्विप् ॥ क्षुतं स्त्रियांक्षुत्क्षुतंहं छिकेतिरभसः ॥ क्षवः क्षवः क्षुतेराजि
कायामित्युक्तत्वात् त्रीणिक्षुतः शिंकेतिख्यातायाः ॥ कासः कासतेऽनेन कासृशब्दकुत्सायां ॥ क्षवथुः क्षौत्यनेन टुक्षुशब्दे क्षवथुः कासेछिक्कायामितिहेमचंद्रः द्वे कासरो
गस्यखोकलाइतिख्यातस्य ॥ शोफः शवति शवगतौ इत्याद्यूह्यं ॥ श्वयथुः श्वयति अनेन ॥ शोथः शोफओषधिभेदेस्यादुत्कृतेत्वग्विवर्धने इतिहैमः त्रीणिशोफस्यसूजइ

क्षयःशोषश्चयक्ष्माचप्रतिश्यायस्तुपीनसः ५१ स्त्रीक्षुत्क्षुतंक्षवःपुंसिकासस्तुक्षवथुःपुमान् ॥ शोफस्तुश्वयथुःशोथःपादस्फोटोवि-
पादिका ५२ किलाससिध्मेकच्छूस्तुपामपामाविचर्चिका ॥

तिख्यातस्य ॥ पादस्फोटः स्फुटनं स्फुटविकसने पादस्यस्फोटः यद्वा पादोस्फोटयति ॥ वि-
पादिका विपद्यतेऽनया पदगतौ द्वे पादस्फोटनरोगस्यइसबइतिख्यातस्य ५२ किलासं किलति किलश्वैत्यक्रीडनयोः असक्षेपणे अच् किलंचतत् असंचेति इत्याद्यू-
ह्यं ॥ सिध्मं सिध्यति षिधुगत्यां द्वेसिध्मस्य शिबें श्वेतकुष्टइतिख्यातस्य ॥ कच्छूः कषहिंसायां कषेश्छश्चेत्यूः ॥ पाम पायत्यंगं पैशोषणे सतुनांतः नपुंसकलिंगश्च उक्त-
रस्तुस्त्रीलिंगः तस्यरूपंतु पामा पामानौइत्याद्यूह्यं ॥ पामा द्वितीयोनांतः टाबंतश्च ॥ विचर्चिका विचर्च्यते चर्चअध्ययने चर्चधातोरोगाख्यायांण्वुल् बहुलंइतिण्वुल्
चतुष्कंस्त्रीलिंगंज्ञेयम् चत्वारिखर्जूविशेषस्य ओलीखरूजइतिख्यातस्य ॥

५ ५ ५

कंडूः कंडूयनं कंडूञ् गात्रविघर्षणे कंडुरित्यपि॥खर्जूः खर्जनं खर्जनं खर्जमार्जनेच चात्व्यथने संमतिपूजनेचेतिपाठोदृश्यते खर्जूः खर्जूरीकीटकंडुष्विति हैमः॥ कंडूया अप्रत्ययात् भ यंस्त्रीलिंगं खर्ज्वाः सुकोरखरूजइतिख्यातायाः॥विस्फोटः विस्फोटयति स्फुटिरविशरणे॥पिटकः पिटति पिटशब्दसंघातयोः विस्फोटाविटिकास्त्रियामित्यमरमालायांवकारादिरपि॥ पिटकःस्यात्तुविस्फोटेमंजूषायामपीष्यतइतिहेमचंद्रः स्त्रियांपिटका द्वे फोडइतिख्या०॥५३॥ व्रणः व्रणति व्रणशब्दे यद्वा व्रणयति व्रणगात्रविचूर्णने॥ईर्मं इरयतिसत्त्वं ईरग तिप्रेरणयोः॥अरुः इयर्ति ऋगतौ॥ईर्मं अरुषी अग्निव्रणिरूपाणि योव्रणः नैरंतर्येणस्रवति तस्मिन् नाडीव्रणइत्येकंनाम॥पुमानिति पुंस्त्वावधारणार्थं निर्देशः इतित्रीणिव्रणस्य॥ कोठः कुंठति कुठिप्रतिघाते॥मंडलकं मंडलइव॥कुष्ठं कुष्णात्यंगं कुषनिष्कर्षे कुत्सितंतिष्ठतिवा कुष्ठंभेषजरोगयोरितिहैमः॥श्वित्रं श्वेतते श्विताववर्णे रक् चत्वारिकुष्ठस्य कोठादिद्वयं

कंडूः खर्जूश्चकंडूयाविस्फोटःपिटकस्त्रिषु ५३ व्रणोस्त्रियामीर्ममरुः क्लीबेनाडीव्रणः पुमान्॥ कोठोमंडलकं कुष्ठश्वित्रे दुर्नामका ऽर्शसी ५४
आनाहस्तुविबंधःस्याद्ग्रहणीरुक्प्रवाहिका॥ प्रच्छर्दिकावमिश्चस्त्रीपुमांस्तुवमथुःसमाः ५५

डुलारुतिकुष्टस्य गजकर्णइतिप्रसिद्धस्य कुष्ठादिद्वयं श्वेतकुष्ठस्येत्येके॥दुर्नामकं दुष्टंनामास्य॥पापरोगत्वात्॥ अर्शः ऋच्छति ऋगतौ द्वे अर्शोरोगस्यसुळव्याधइतिख्यातस्य अर्शमितिक्लीबमप्यन्यत्र ५४ आनाहः आन हनं णहबंधने॥निबंधः विबंधनं बंधबंधने द्वेमलसूत्रनिरोधस्य मलबद्धरोगइतिख्यातस्य॥ग्रहणीरुक् गृण्हाति जाठराग्निं रुगितिनामत अर्थाद्रुक्तं ग्रहउपादाने॥प्रवाहिका प्रकर्षे णवहति बहुस्रवतिगुदमस्यांसा मलप्रवहणंप्रवाहिकेतिस्वामी॥प्रवाहिकारुक् रोगः ग्रहणीस्यादित्यन्वयोऽत्र ग्रहणिरितीकारोन्हस्वोपि द्वेसंग्रहणीरोग०॥प्रच्छर्दिका प्रच्छर्दनं छर्दवमने रोगाख्यायामितिण्वुल्॥वमिः वमनं टुवमुद्गिरणे वमी इक् कृष्यादिभ्यइतिइक् वमइतिपुंस्यपि॥वमथुः वमथुःपुंसिवमनेगजस्यकरशीकरे श्रीणिवमनरोगस्य तस्मि न्पूर्वद्वयंस्त्रियां समाः तुल्यार्थाः ५५

अथव्याधिभेदाउच्यंते विद्रधिः सचउदरादौगंडभेदः फोडइतिख्यातः विद्रंवेदनं दधातीति विदधातोरक्प्रत्ययेरूपंविद्रं आदिशब्दात्कपालकर्णप्रमेहानांपीडकावाच्याः॥विद्रधिः स्त्रियां॥ज्वरः ज्वरति ज्वररोगे॥मेहः मेहति मूत्रयतेऽनेन मिहसेचने सचरक्तमेहः सितमेहइत्यादिना बहुविधः॥भगंदरः भगंदारयति सोपिगुह्यद्वाराद्विस्फोटविशेषः॥श्लीपदं॥पादवल्मीकं पादयोर्वल्मीकमिव हूयंश्लीपदरोगस्य वारूळइतिख्यातस्य॥केशघ्नः केशान्हंति॥इंद्रलुप्तकः हूयंमस्तककेशरोगस्य चाई टक्कल इतिख्यातस्य॥अश्मरी अश्मानंराति कांतात् गौरादिङीष्॥मूत्रकृच्छ्रं मूत्रेकृच्छ्रं अश्माकारंशर्करानिददातीत्यनेनमूत्रकृच्छ्रं अश्मर्याः पर्यायइतिसूचितम् मूत्रविघ्नमात्रेमूत्रकृच्छ्रमितिनायमश्मर्याः पर्याय इति केचि

व्याधिभेदाविद्रधिःस्त्रीज्वरमेहभगंदराः॥ "श्लीपदंपादवल्मीकंकेशघ्नस्त्विंद्रलुप्तकः॥" अश्मरीमूत्रकृच्छ्रंस्यात्पूर्वेशुक्रावधेस्त्रिषु ५६ रोगहार्यगदंकारो भिषग्वैद्यौचिकित्सके॥ वार्तोनिरामयःकल्यउल्लाघोनिर्गतोगदात् ५७ ग्लानग्लास्नूआमयावीविकृतोव्याधितोपटुः॥ त इतः परंकथिष्यमानशब्दास्पूर्वे

मूर्च्छितांताशब्दाःस्त्रिषुवाच्यलिंगाइत्यर्थः ५६ रोगहारी रोगंहरतितच्छीलः अगदंकारः अगदं अरोगं जंतुंकरोति॥भिषक् भिषज्यति भिषजरुग्जये संप्रतिचिकित्सायामितिपाठोदृश्यते॥वैद्यः विद्यामधीते॥चिकित्सकः चिकित्सति पंचवैद्यास्य॥वार्तः वृत्तिरस्यास्ति वार्तानुवर्तनेवार्तंगणेफल्ग्वाद्युदंतयोः निःसाराऽरोगयोः क्लीबंवृत्तिमत्तारुजोस्त्रिषु॥निरामयः निष्क्रांतआमयात्॥निरामयस्तुपुंसिस्यादेडकेविगतामयइतिहेमः॥निरामयस्तुपुंसिस्यादेडकेत्रिषुनीरुजइतिविश्वमेदिन्यौ॥कल्यः कलासुसाधुः कल्यंप्रभातेमधुनिसज्जेदत्तेनिरामये॥कल्याकल्याणवाचिस्यादितिहेमः त्रीणिरोगरहितस्य॥कल्यस्तात्स्व्यातः उल्लाघइत्येकंरोगान्मुक्तस्य उल्लाघतेस्म लाघृसामर्थ्ये अयमपिपूर्वस्यैवपर्यायइत्येके ५७ ग्लानः ग्लायतिस्म ग्लैहर्षक्षये॥ग्लास्नुः ग्लानशीलः द्वेरोगादिवशात्हर्षरहितस्य॥आमयावी आमयोऽस्यास्ति॥विकृतः विक्रियतेस्म॥व्याधितः व्याधिःसंजातोऽस्य॥अपटुः नपटु पटुर्दक्षेचनीरोगइ०॥

आतुरः आतुतोर्ति आतोरयनीतिवासंज्ञा पूर्वोविधिर नित्यः॥ अभ्यमितः अभ्यम्यतेस्म अमरोगेणिचोवैकल्पिकत्वं अमतिस्मवा अमगतो॥ अभ्यांतः समकरोगिणः॥ पामनः पामा-स्यास्ति॥ कच्छुरः कच्छूरस्यास्ति कच्छुराशरूकशिब्यांचशटादुःस्पर्शयोरपि॥ कच्छुरः पुंश्चलेकच्छूयुक्तेपीनिविश्वः द्वे पामायुक्तस्य ५८ दद्रुणः दरिद्राति दरिद्रादुर्गतौ॥ दद्रु रोगी दद्रूरस्यास्ति दद्रूश्चासौरोगश्च दद्रूः खर्जूभेदः दादइतिप्रसिद्धा द्वे दद्रूयुक्तस्य॥ अर्शोरोगेणयुतः अर्शसइत्युच्यते अर्शांसिसंत्यस्य एकं॥ वातकी वातोऽतिशयितोऽस्य वातातीसाराभ्यांकुक्चेतिइनिप्रत्ययेकुगागमः रोगेचायमिष्यते नेहवातवतीगुहा॥ वातरोगी वातरोगोऽस्यास्ति द्वे वातरोगयुक्तस्य॥ सातिसारः अतिसारेणवर्ततइतिसातिसारः अतिसारकी अत्रापिवातातीसारेतिइनिप्रत्ययेकुक्॥ अतिसारोऽस्यास्ति द्वे अतिसारयुक्तस्य ५९ क्लिन्नाक्षः॥ चुल्लः॥ चिल्लः॥ चिल्लः खगेसचुल्लश्चपिल्लवत्क्लिन्नलोचने क्लिन्नाक्षी

आतुरोऽभ्यमितोऽभ्यांतः समौपामनकच्छुरौ ५८ दद्रुणोदद्रुरोगीस्यादर्शोरोगयुतोऽर्शसः॥ वातकीवातरोगीस्यात्सातिसारोऽतिसारकी ५९ स्युःक्लिन्नाक्षेचुल्लचिल्लपिल्लाःक्लिन्नेऽक्ष्णिचाप्यमी॥ उन्मत्तउन्मादवतिश्लेष्मलःश्लेष्मणःकफी ६० न्युब्जोभुग्नेरुजावृद्धनाभौतुंदिलतुंदिभौ॥ तिहेमः॥ पिल्लः

चत्वारिक्लेदयुक्तेअक्षिणीयस्य तस्यपुंसः चिपडाइतिख्या० अमीचुल्लचिल्लपिल्लास्त्रयः क्लिन्नेऽक्षिणचक्लेदयुक्तेनेत्रेऽपिवर्तंते चिपडेडोळेइतिख्यातेषु॥ उन्मत्तः उन्मादोस्त्यस्य मदी हर्षे उन्मुत्तोमुचुकुंदेस्यात्धूत्तूरमदयुक्तयोरितिहेमः॥ उन्मादोवातपित्तादिकृतश्चित्तविभ्रमइत्य०॥ श्लेष्मलः सिध्मादित्वाल्लच् श्लेष्माऽस्यास्ति॥ श्लेष्मणः पामादित्वान्नः पूर्ववत्प्रवि ग्रहइतिभावः॥ कफी कफोस्यास्ति द्वंद्वोपेतिइनिः त्रीणिकफयुक्तस्य ६० रुजारोगेणभुग्नेवक्रपृष्ठेऽधोमुखेपुरुषेन्युब्जोवर्ततइत्येकं न्युब्जनं न्युब्जः उब्ज आर्जवे भुजन्युब्जौपाण्युपतापयोरितिनिपातनात्साधुः आर्जवे न्युब्जः कुब्जोकुशस्रुचि इत्युक्तत्वात् अधोमुखेपिचन्युब्जंकर्मरंगतरोः फलइतिहेमचंद्रः॥ वृद्धनाभिः वृद्धाउन्नतानाभिरस्य॥ तुंदिलः तुंद्यते तुडि तोडने सिध्मादिः॥ तुंदिभः तुंदिबलिइतिभः तुंदिलतुंडिभावित्यपिपाठे तुंदिलइतिपाठेतुंदादिभ्यइलच् त्रीणिवातादिनोन्नतनाभेः॥

किलासी किलासमस्यास्ति॥ सिध्मलः सिध्ममस्यास्ति सिध्मलामस्त्र्यविकृतौवाच्यवत्तुकिलासिनीतिविश्वः द्वे सिध्मयुक्तस्य शिंब्याइतिख्यातस्य॥ अंधः अंधयति अंधदृष्ट्यु पघाते॥ अदृक् नदृगस्य द्वेनेत्ररहितस्य आंधळाइतिख्या०॥ मूर्छालः मूर्च्छास्यास्ति सिध्मादिषुक्षुद्रजंतूपतापाच्चेतिलच्॥ मूर्तः मूर्छामोहसमुछ्राययोः मूर्तस्यांक्तिषुमूर्छा लेकठिनेमूर्तिमत्यपीतिविश्वमेदिन्यौ॥ मूर्छितः मूर्छासंजातास्य मूर्छितंसोछ्रुयेमूढे इतिहेमः त्रीणिमूर्छावतः॥ शक्रं शोचत्यनेन शुचशोके शोचयतिवा शक्रंतुरेतोक्षिरु जोरितिहेमः॥ तेजः तेजयति तिजनिशाने॥ रेतः रीङ्गतिरेषणयोः॥ बीजं विशेषेणईजते ईजगतिकुत्सनयोः बवयोरभेदः यद्वा बीजयति वीज्यतेऽनेनवा बीजव्य जने इत्यादूतं॥ वीर्यं वीरेक्तौबेसाधु यद्वा वीरयति वीरविक्रांतौ वीर्यतेअचोयत् वीर्यंतेजःप्रभावयोरित्य०॥ इंद्रियं इंद्रस्यात्मनोलिंगं षडेतस्ः॥ मायुः मिनोतीनि देहेऊष्माणं

किलासीसिध्मलोंधोदृक्मूर्छालिमूर्तमूर्छितौ ६१ शक्रंतेजोरेतसीचबीजवीर्येंद्रियाणिच॥ मायुःपित्तंकफःश्लेष्मास्त्रियांतुत्वगसृग्धरा ६२ पिशितंत रसंमांसंपललंक्रव्यमामिषं॥

डुमिञ् प्रक्षेपणे उण्॥ पित्तं अपिदीयतेस्मा दोअवखंडने देङ्पालनेवा अचउपसर्गात्तः द्वे पित्तस्य मायुरुदंतः पुंसि॥ कफः केनजलेनफ लति फलनिष्पत्तौ यद्वा के शिरसिफणति फक्कतिवा अन्येभ्योपीतिडः श्लेष्मा श्लिष्यति श्लिषआलिंगने सर्वधातुभ्योमनिन् द्वे कफस्य त्वक् त्वचति त्वचसंवरणे कर्तरिक्विप्॥ असृग्धरा असृजोरक्तस्यधरा असृग्धारेत्येके द्वे चर्मणः त्वचइत्यदंतः त्वचेतिटाबंतश्चान्यत्र ६२ पिशितं पिंशति पिशअवयवे पिश्यतेस्मवा पिशितामांसिकायांस्यादितिहेमः॥ तरसं तरोबलमस्त्यस्मिन् अर्शआद्यच्॥ मांसं मन्यते मनज्ञाने मनेर्दीर्घश्चेतिसः पललं पलति पल्यतेऽनेनवा पलगतौ पललंतिलमिश्रेस्यात्पललंपिशितेपिचेतिशाश्वतः॥ क्रव्यं क्रूयते क्रुङ्गतावितिस्वामिचरणाः अचोयत् रलयोरैकत्वं क्लुव्यतेस्म क्लुवक्षये॥ आमिषं आमिषति मिषस्पर्धायां मेषतिवा मिषुसेचने षट्मांसस्य॥ ६९

उत्तप्तं उत्तप्यतेस्म उत्तप्तंचंचलेशुष्कमांससंतमयोरपीतिहैमः ॥ शुष्कमांसं शुष्कंचतन्मांसंच ॥ वल्लूरं वल्लते वल्यतेवा वल्लुसंवरणे वल्लूरात्रिषुसंशुष्कमांससूकरमांसयोरितिवि
श्वः ॥ तन्नवल्लूरंत्रिषु वल्लुरमितिन्हस्वोकारमपि ६३ रुधिरं रुणद्धि रुध्यतेवा रुधिर्आवरणे किरेच् रुधिरोंगारके पुंसिक्लीबंतुकुंकुमास्रजोरित्युक्तत्वात् ॥ असृक् अस्यते असु
क्षेपणे नसृजनिवा सृज विसर्गे ॥ लोहितं रोहति रुह्यतेवा तच्लादेशश्च लोहितंरक्तगोशीर्षकुंकुमेचकुचंदने ॥ पुमानन्दांतरे भौमेवर्णेचत्रिषुतद्वति इत्युक्तत्वात् ॥ अस्रं अस्य
ते बहुलमन्यत्रापीतिरक् ॥ अस्रः कोणेकचेपुंसिक्लीबमश्रुणिशोणितंइतिविश्वः ॥ रक्तं रज्यतेस्म रंजरागे रक्तोनुरक्तेनील्यादिरंजितेलोहितेत्रुच क्लीबंतुकुंकुमेताम्रेप्राची
नामलकेसृजोत्युक्तत्वात् ॥ क्षतजं क्षताज्जातं ॥ शोणितं शोणतिस्म शोणृवर्णगत्योः सम्मंकरुधिरस्य ॥ बुक्का बुक्कते स्वादुत्वान्मृग्यते बुक्क भक्षणे शोणितेषुक्स्त्रियांबु-

उत्तप्तंशुष्कमांसंस्यात्तद्वल्लूरंत्रिलिंगकं ॥ ६३ ॥ रुधिरेऽसृक्लोहितास्ररक्तक्षतजशोणितम् ॥ बुक्काग्रमांसंहृदयंहृन्मेदस्तुवपावसा ६४ पश्चा-
द्ग्रीवाशिरामन्यानाडीतुधमनिः शिरा ॥

क्काबुक्कस्तुसमन्योर्हृद्योरितिरभसः ॥ अग्रमांसं अग्रंमुख्यंमांसं बुक्काग्रमांसमित्यपिसमस्तंज्ञेयं द्वे हृदयांतर्गतमांसविशेष
स्य काळिज इतिख्यातस्य ॥ हृदयं तदेवाह पद्मकोशप्रतीकाशंरुचिरंचाप्यधोमुखं हृदयंतद्विजानीयाद्विश्वस्यायतनंमहदिति ॥ हृत् द्वे हृदयकमलस्य ॥ चत्वारिबुक्का
दिशब्दाः पर्यायाइत्येके ॥ मेदः मेद्यति ञिमिदास्नेहने ॥ वपा वपति उप्यतेवा डुवप्बीजसंताने वपाविवरमेदसोरितिहैमः ॥ वसा वसति वस्तेवा वसनिवासे ॥ वसआच्छादनेवा ॥ त्रीणि
मांसजन्यस्नेहस्य ॥ चरबी मादें इतिख्यातस्य ॥ यापश्चात्तिष्ठति ग्रीवाशिरासामन्येत्यूह्या ग्रीवायाः शिराग्रीवाशिरा मन्यतेऽनयाइत्येकं ॥ नाडी नडयति नाड्यतेवा नड भ्रंशे ॥ धमनिः
धमति ध्मानेधमिः सौत्रः ॥ शिरा सिनोति षिञ्बंधने तालव्यादिरपि शिरानापिप्पलीमूलेस्याद्धमन्यांचयोषितीत्युक्तत्वात् शिनोति शिञ्निशाने त्रीणिशिरायाः ॥ ३७

निलकं नेलति निलगतौ निलतिवा निलस्नेहने इगुपधेनिकेस्वार्थेकन् तिलकोद्रुमरोगस्य भेदेषुतिलकालके. क्लोबंसौवर्चलक्लोम्नोर्नस्त्रियांतुविशेषकइतिविश्वमेदिन्यौ॥ क्लोम क्लु बते क्लुङ्गतौ॥ द्वे मांसपिंडविशेषस्य फुफुसइतिप्रसिद्धस्य॥ क्लोममित्यदंतमपि॥ मस्तिष्कं मस्यते मसनंवा मसीपरिणामे मस्तिस्त्वमपीत्यन्यत्र॥ अथमस्तिस्कोमस्तुलिंगो पीतित्रिकांडशेषः॥ गोर्दं गूर्यते गुरुतेवा गुरीउद्यमने औणादिकः द्वे मस्तकसंभूत घृततुल्यस्नेहस्य गोद मेदू इतिख्यातस्य॥ किट्टं केतनंतस्य किटगतौ॥ मलः मलते मलधा रणे मलोऽस्त्रीपापविट्किट्टे कृपणेत्यभिधेयवत्॥ द्वे कर्णादिगतमलस्यना०॥ तत्रेत्थंवसाशुक्रमसृक्मज्जाकर्णविण्मूत्रविण्नखाः॥ श्लेष्माश्रुदूषिकास्वेदोद्वादशैतेनृ- णांमलाः ६५ अंत्रं अमति अम्यतेवा अमगतौ॥ पुरीतत् पुरीशरीरंतनोति पुरीततौ पुरीतंति एवंरूपाणीत्यूह्यं पुरीतदस्त्रियामितिवाचस्पतिकोशात्पुंस्यपिज्ञेयं द्वे अंत्रस्य

निलकंक्लोममस्तिष्कंगोर्दंकिट्टंमलोऽस्त्रियाम् ६५ अंत्रंपुरीतद्गुल्मस्तुप्लीहापुंस्यथवस्नसा॥ स्नायुःस्त्रियांकालखंडयकृतीतुसमेइमे ६६ सृ णिकास्यंदिनीलालादूषिकानेत्रयोर्मलम्॥ नासामलंतुसिंघाणंपिंजूषंकर्णयोर्मलम्॥

आंतडेइतिख्यातस्य॥ गुल्मः गुडयतेऽस्मात् गुडरक्षायां॥ प्लीहा प्लेहति प्लिहगतौ॥ प्लीहा प्लीहानौ एवंरूपाणिउन्नेयानि प्लीहाशब्दश्चादंतोपि द्वे वामकुक्षिस्थमांसपिंडविशेषस्य॥ वस्नसा वस्तेशरीरं वसआच्छादने॥ स्नायुः स्नाति ष्णाशौचे द्वे अं गप्रत्यंगसंधिबंधनरूपायाः स्नायोः शिराइतिख्याना०॥ कालखंडं कालंचतत्खंडंच कर्मधारयः महास्नायुः कालेयंकालखंडकइतिरभसः॥ यकृत् यंसंयमंकरोति यमेःसंपदादि त्वात्क्विपि मलोपेआगमानित्यत्वात्तुगभावेसाधुः लिंगकार्यानुत्पत्तिर्भिन्नत्वात् द्वे कुक्षेर्दक्षिणभागस्थमांसखंडस्य ६६ सृणिका सरति सृवृषिभ्यांकिदितिनिः॥ स्पंदिनी अव श्यंस्पंदते स्पंदृ प्रस्रवणे॥ लाला लालयते ललइप्सायां भौणिलालायाः स्पंदिनीदंत्यादिः॥ दूषिका दूषयति दुषवैकृत्ये दूषीचदूषिकापिचेतिवाचस्पतिः एकंनेत्रयोर्मल स्य उकीर पू इतिख्या०॥ सिंघाणमित्येकंनासामलस्य॥ सिंहाणं सिंहा नंचेत्यपिपाठः॥ पिंजूषइत्येकंकर्णमलस्य॥

मूत्रं मूत्र्यते मूत्रप्रस्रावे प्रस्रावः प्रस्रूयते स्नुप्रस्रावे द्वेमूत्रस्य॥ उच्चारः उच्चार्यते त्यज्यते चरगतौ॥ अवस्करः अवकीर्यते अधः क्षिप्यते कॄविक्षेपे॥ शमलं शाम्यति श
म्यतेवा॥ शकृत् शक्नोति शक्यतेवा निःसर्तुं निःसारयितुंवा ६७ पुरीषं पिपर्तिशरीरं पॄपालनपूरणयोः॥ गूथं गूयते गुङ्‌शब्दे गुपुरीषोत्सर्गेवा॥ वर्चस्कं वर्चति वर्च्य
तेवा वर्चदीप्तौ॥ विष्ठा विनिष्ठते उदरे मूर्धन्यपाठेविष्ठ्व्याप्तौ तालव्यांतपाठेतु विट् विशौ एवमूह्यं तत्रेत्थं विशति विशप्रवेशने गूथंपुरीषंवर्चस्कमित्यपिपाठः गूथं
पुंसिक्लीबेच वर्चस्कमपि नवविष्ठायाः॥ कर्परः कल्पते कृपूसामर्थ्ये॥ कपालः कंपालयति यद्वा कंपते कपिंचलने कपालोऽस्त्री शिरोस्थ्निस्याद्घटादेः शकलव्रजइत्यु०
॥ द्वेशिरोस्थिखंडस्य कपालः पुंसिक्लीबेच॥ कीकसं कीनिकसति कसगतौ ज्वलादिः अच् कीकसः कृमिजातौस्यात्पुंसिकुल्येनपुंसकं सजातीयगणेगोत्रे देहेविकथितं

मूत्रंप्रस्रावउच्चारावस्करौशमलंशकृत् ६७ पुरीषंगूथवर्चस्कमस्त्रीविष्ठाविशौस्त्रियौ॥ स्यात्कर्परःकपालोऽस्त्रीकीकसंकुल्यमस्थिच ६८ स्या
च्छरीरास्थ्निकंकालःपृष्ठास्थ्नितुकशेरुका॥ शिरोस्थनिकरोटिःस्त्रीपार्श्वास्थनितुपर्शुका ६९ कुलमितिविश्वप्रकाशः कुल्यं कुलेभवं तत्रसाधुरितिवा को

लति कुल्यतेवा कुलसंस्त्याने कुल्यः कुलोद्भवेमान्येकुल्यास्यान्निहितेपिच कुल्यंस्यात्कीकसेस्पष्टेद्रोणीशूर्पामिषेषुच पयःप्रणालीसरितोः कुल्याजीवंनिकौषधाविति-
विश्वः॥ अस्थि अस्यते त्रीणिअस्थिमात्रे६८ कंकालः कमित्यव्ययं संस्रवेशिरसिच कालयति कलविक्षेपे यद्वा कंकते ककिगतौ एकं त्वङ्मांसरहितशरीरास्थिपंजरस्य॥ सांगा
डा पिंजराइतिख्या०॥ कशेरुका कंवायुंशृणाति केनशीर्यते यद्वा कशति कश्यतेवा कशशब्दे एकंपृष्ठवंशास्थ्यकणाइतिख्यातस्य॥ करोटिः कंवायुंरोटते रुटदीप्तौ प्रतिघा
तेच केनरुद्ध्यतेवा एकं शिरोगतास्थिसंघस्य करोटीतिङीषंतोप्यन्यत्र तदेवाह नृकरोटीपरिकरइतिपुष्पदंतकृतशिवमहिम्निज्ञेयमिति॥ पर्शुका स्पृशति स्पृश्यतेवा स्पृ
शसंस्पर्शने इत्याद्यूह्यं एकंपार्श्वगतास्थि॥

अंगं अंगति अगिगतौ ॥ प्रतीकः प्रत्येति प्रतीयतेवा इण्गतौ प्रतीकोऽवयवेऽपिस्यात्प्रतिकूलविलोमयोः इत्युक्तत्वात् ॥ अवयवः अवयौति यूमिश्रणे ॥ अपघनः अपहन्यते अपघ नोंगमितिसाधुः चत्वारिहस्तादयवयवस्य ॥ कलेवरं कलेशाक्रेमधुराव्यक्तध्वनौवा वरंश्रेष्ठं ॥ गात्रं गाते गाङ्गतौ ष्ट्रन् एतिवा गात्रंगजाग्रजंघादिभागेप्यंगेकलेवरइतिविश्वमे दिन्यौ ॥ वपुः वपति उप्यतेवा वपुः क्लीबंतनौशस्ताकृतावपि ॥ संहननं संहंति संहन्यतेवा यद्वा संहन्यंतेऽस्मिन् भूतानि ॥ शरीरं शृणाति शीर्यतेवा शृहिंसायां वर्ष्म वर्षति व ष्यतेवा वृषुसेचने ॥ विग्रहः विविधंसुखादिगृह्णाति विविधैर्व्याधिभिर्गृह्यतेवा विग्रहः कायविस्तारेविभागेनारणेस्त्रियामित्यु॰ ॥ ७० ॥ कायः चीयतेऽन्नादिभिः चिञ्च यने कायःकदेवतेमूर्तौजंघेलक्षस्वभावयोः मनुष्यतीर्थेकायंस्यादित्युक्तत्वात् ॥ देहः दिह्यते दिहउपचये ॥ मूर्तिः मूर्छति मूर्छामोहसमुछ्राययोः ॥ तनुः तनोति तन्यतेवा

अंगंप्रतीकोऽवयवोऽपघनोऽथकलेवरम् ॥ गात्रंवपुःसंहननंशरीरंवर्ष्मविग्रहः ७० कायोदेहःक्लीबपुंसोःस्त्रियांमूर्तिस्तनुस्तनूः ॥ पादाग्रंप्र पदंपादःपदंघ्रिश्चरणोऽस्त्रियाम् ७१ तद्ग्रंथीघुटिकेगुल्फौपुमान्पार्ष्णिस्तयोरधः ॥

तनुर्वपुस्त्वचोरितिहेमः ॥ तनूः ऊङ् पूर्ववत् हादशमूर्तेः ॥ पादा ग्रं पादस्याग्रं ॥ प्रपदं प्रकृष्टं प्रारब्धंपदं प्रादयोगतेतिसमासः ॥ द्वेअग्रपादस्य ॥ पादः पद्यते पदगतौ पदरुजेतिघञ् पादोबुध्नेतुरीयांशेशैलप्रत्यंतपर्वते ॥ चरणेचमयूखे च ॥ पत् पद्यतेऽनेन ॥ अंघ्रिः अंहति अनेन अहिगतौ ॥ चरणः चरत्यनेन चरणोस्त्रीबह्वचादौमूलेगोत्रेपदेऽपिच चतुष्कंचरणस्य पादोंघ्रिरितिपाठेतु अदंतः पदशब्दः ७१ तद्ग्रं थी तस्यपदःपार्श्वस्थग्रंथी घुटिकेगुल्फाविंतिसंज्ञकौ घोटतेनया घुटपरिवर्तने ॥ गुल्फौ गलति गल्यतेवा गलअदने घुटिकास्त्री द्विवचनाद्वित्वंविधीयतेनतुनित्यं द्वेपादग्रंथ्योः पायां चेघोटेइतिख्या॰ ॥ तयोर्गुल्फयोरधःप्रदेशःपार्ष्णिरित्येकं पृष्यतेनेन पृषुसेचने पार्ष्णिःस्त्रीपुंसयोःपादमूलेस्यात्ध्वजिनीकटावितिरंतिदेवः एकं पादपश्चाद्भागस्यपायाचीटाचइतिख्या॰

जंघा जायते जनिप्रादुर्भावे यद्वा जंघते कुटिलंगच्छति॥ प्रसृता प्रसरनिस्म प्रस्त्रियतेस्म प्रकृष्टंसृतंगमनमनयावा द्वे जंघायाः पोटरीइतिख्यातायाः॥जानु जायते॥ ऊरुपर्व ऊर्णूयते ऊर्णोतेर्णुलोपश्चेतिकुः ऊरोः पर्व॥ अष्ठीवत् अतिशयितमस्थियस्मिन् तत्राष्ठीवत्क्लीबे पुंसिच श्रोणिजानुनः गुडघाइतिख्या॰ ७२ सक्थि सजजति सज्यतेवा षंजसंगे॥ ऊरुः अर्यतेऽनेन ऋगतौ द्वेजानुपरिप्रदेशस्य मांडीइतिख्यातस्य "ऊरोरुपरिभागः सक्थीतिकश्चिद्भेदोदृश्यते" तत्संधिः तस्योरोः संधिः वंक्षणइत्येकं वांक्षति वांक्ष्यतेवा वाक्षिकांक्षायां बाहुलकाद्युतो ईत्वः॥ गुदं गोदते गुदक्रीडायां यद्वा गूयतेऽनेन गुपुरीषोत्सर्गे इत्यादयूत्वं॥ अपानं अपानित्यनेन अनप्राणने॥ पायुः पातिमलनिःसारणेन पारक्षणे इत्यादयूत्वं श्रोणिविष्ठानिर्गमद्वारस्य पायुरुदंतः पुमान्॥ बस्तिः द्वयोः स्त्रीपुंसोः वसनिमूत्रमत्र यद्वा वस्तेऽस्यतेवा वसनिवासे वसआच्छादनेवा इत्येकं नाभेरधोमूत्राशयस्य॥ ७३॥ श्रोणिफलकं

जंघातुप्रसृताजानूरुपर्वाष्ठीवदस्त्रियां ७२ सक्थिक्लीबेपुमानूरुस्तत्संधिः पुंसिवंक्षणः॥ गुदंत्वपानंपायुर्नाबस्तिर्नाभेरधोद्वयोः ७३
कटोनाश्रोणिफलकंकटिःश्रोणिः ककुद्मती॥पश्चान्नितंबः स्त्रीकट्याःक्लीबेतुजघनंपुरः ७४

श्रोणिः फलकमिव चर्माकारत्वात् ललकस्इतिज्ञेयं कट्यते कटेवर्षावरणयोः घप्रत्ययः वशेकटोकलिंजेत्रगजगंडेभृंशेकटइतिशाश्वतः इत्येकं॥ कटिः कट्यते कटे आवरणे कटीतिङीषंतोपि॥ श्रोणिः श्रोणति शोणसंघाते श्रोणीइत्यपि॥ ककुद्मती ककुद्रूपांसदृशमांसपिंडः सोऽतिशयितोऽस्यां श्रोणिस्त्रीलिंग्यांकट्याः॥ स्त्रीकटिः स्त्रियाः कटिः॥ तस्याः पश्चाद्भागोनितंबः नितंबति नितंब्यतेवा तंबगतौ अच् यद्वा निभृतंतम्यते कामुकैः तमुकांक्षायां ताम्यति सुरतसंमर्दाद्वा तमुग्लानौ इत्येकं स्त्रीकट्याः पुरः अग्रभागेजघनं ओटीइतिज्ञेयम् एकं हन्यतइति जघनंस्यात्स्त्रियाः श्रोणिपुरोभागेकटावपि॥ ७४॥ ६ ६

नितंबस्थौ नितंबेनिम्नतः पृष्ठवंशादधोगर्ते कूपकौ कूपाविव इवेनिकन् कूपकेगुणवृक्षेस्यात्तैलपात्रेककुंदरेइतिहैमः ॥ कुकुंदरे भवतः कुंभूमिंदरयति कुंदरं कुत्सितंकुंदरं ईषत्कुंदरमत्रेतिवा यद्वा स्कुद्यते कामिना स्कुदिआप्रवणे कुकुंदरे इयहीने द्वाभ्यांस्त्रीपुंभ्यां हिस्वंतु अनित्यं अकारादिरपि इत्येकं पृष्ठवंशाधोगर्तयोः ॥ स्फिचौ स्फायेते स्फायीवृद्धौ बाहुलकात्डिच् ॥ कटिप्रोथौ कट्याः प्रोथौमांसपिंडौ प्रोथति प्रोथृपर्याप्तौ कटीप्रोथावितिनामद्वयंवा स्त्रियांस्फिचौकटीप्रोथौ कटिप्रोथौचपूलकावितिरभसः प्रोथश्चघोणाध्वगयोः कट्यामितिहैमः द्वे कटिस्थमांसपिंडयोः ढिगीनिरव्यातयोः ॥ वक्ष्यमाणयोः भगशिश्नयोःउपस्थइत्येकं उपनिष्ठते उपस्थःशेफसिक्रोडेतथा मदनमंदिरइतिविश्वमेदिन्यौ ७५ भगं भज्यते भजसेवायां रवनोघचेतिघिल्करणात्भजेरपिघः ॥ भगंश्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु महात्म्येश्वर्ययत्नेषुधर्मेमो

कूपकौतुनितंबस्थौद्वयहीनेकुकुंदरे ॥ स्त्रियांस्फिचौकटिप्रोथावुपस्थोवक्ष्यमाणयोः ७५ भगंयोनिर्द्वयोःशिश्नोमेढ्रोमेहनशेफसी ॥ मुष्कोंडकोशोवृषणः पृष्ठवंशाधरेत्रिकम् ७६

क्षे॰ यशस्वार्कयोर्नितिविश्वमेदिन्यौ ॥ योनिः यौति यूमिश्रणे ॥ द्वयोरितियोनिनान्वेति योनिः स्त्रीपुंसयोश्चस्यादाकरेस्मरमंदिरइतिविश्वः द्वेस्त्रीणामुपस्थस्य ॥ शिश्नः शाशति शशाप्लुतगतौ शिनोतिवा शिञ्निशाने ॥ मेढ्रं मेहंत्यनेन मिहसेचन मेहनंमूत्रशिश्नयोः ॥ शेफः शेते रेतःपाते शेपइत्यपि चत्वारिशिश्नस्य ॥ मुष्कः मुष्णातिरेतः मुषस्तेये मुष्कोमोक्षकवृक्षेस्यात्संघातेवृषणेऽपिच ॥ अंडकोशः अंडयोःकोशः मूर्धन्यांतोऽपि वृषणः वर्षति वृषुसेचने त्रीणिअंडकोशस्य आंडकुली इतिरव्यातस्य ॥ पृष्ठवंशाधरे अधोभागे त्रिकं त्रयाणांसंघः त्रिरस्थाभिर्घटितमित्यर्थः एकं माकडहाडइतिरव्यातस्य ७६                ७                ५

पिचंडः पिचंडोजठरेप्रोक्तः पशोरवयवेपिचेतिहैमः पिचिंडइत्यपि॥ कुक्षिः कुष्यते निष्कास्यतेमलोऽस्मात् कुषनिष्कर्षे क्सि प्रत्ययः॥ जठरं जायतेऽजंतुर्मलोवा॥ जठरोनस्त्रियांकुक्षौवद्धकर्कटयो स्त्रिषु॥ गुरुचरणास्तु जमत्याहारं जठरं॥ उदरं उद्गृणाति ऋगतौ इत्यादिसूत्र्यं उदरंतुंदरणयोरितिहैमः॥ तुंदं तुदति तुदव्यथने यद्वा तर्णोऽस्यन्नं तृणुअदने पंचजठरस्य तत्रपिचंडकुक्षीपुमांसौ॥ स्तनः स्तनति कथयति यौवनोदयं स्तन्यते शब्द्यतेवा कामुकैः स्तनशब्दे॥ कुचः कुचते कुचसंकोचे इगुपधेतिकः द्वेउरोजस्य॥ चूचुकं चूष्यते पीयते चूषपाने चूचुइत्यव्यक्तंकायतिवा कुचस्याग्रंचूचुकोनाकुचाननमितिरत्नकोशः द्वयंस्तनाग्रस्य॥ क्रोडं क्रुडयते क्रुडवाल्येदने क्रोडः कोलेशनौक्रोडमंकेइतिहैमः क्रोडः शनौशंकरेनानघुमानंकरस्त्वसौरितिविश्वः॥ भुजांतरं भुजयोरंतरं तत्रक्रोडंनापुंसि नअपितुनपुंसकस्त्रियोः ७७

**पिचंडकुक्षीजठरोदरंतुंदंस्तनौकुचौ॥ चूचुकंतुकुचाग्रंस्यान्ननाक्रोडंभुजांतरम् ७७ उरोवत्संचवक्षश्चपृष्ठंतुचरमंतनोः॥ स्कंधोभुजशिरोंऽसोऽस्त्रीसंधीतस्यैवजत्रुणी ७८**

उरः इयर्ति ऋगतौ उरोवक्षसिमुरव्यैस्यादितिहैमः॥ वत्सं वदतिसामर्थ्यं वदव्यक्तायांवाचि वदस्थैर्येवा वत्सः पुत्रादिहृर्षयोरित्युक्तत्वात् पुत्रादौतर्णकेवर्षेवत्सो वत्संतुवक्षसीतिरुद्रः॥ वक्षः वक्षति वक्षसंघाते पंचवक्षसि॥ तनोः शरीरस्यचरमंपश्चाद्भागः पृष्ठमित्येकं पृष्यतेपृषुसेचने पृष्ठंचरमपात्रेऽपिदेहस्यावयवांतरे॥ स्कंधः स्कंद्यते स्कंदिरगतिशोषणयोः स्कंधः प्रकांडेकायेऽसेविज्ञानादिषुपंचस्कु नृपेसमूहेव्यूहेचेतिहैमः॥ भुजशिरः भुजस्यअंसः अस्यतेसमाहन्यते भारादिना अंससमाघातेच यद्वा अमति अम्यतेवा अमगतौ अंसः स्कंधेतिभारेस्यादितिहैमः त्रीणिभुजशिरसः खांदाइतिख्यातस्य॥ तस्यैवस्कंधस्यैवसंधी जत्रुणी जत्रुवाचकोपकं क्लीबं ७८

५ ५ ५ ५ ५

बाहुमूलं बाहोर्मूलं॥कक्षः कष्यते कषहिंसायां कक्षः स्यादंतरीयस्य पश्चादंचलपल्लवे स्पर्धापदे च दोर्मूले च कक्षो वीरुत्तृणेषु च इत्येकक्षस्य॥तयोः कक्षयोरधः प्रदेशः पार्श्वमितिद्वे यम्॥एकंनाम स्पृश्यते स्पृशस्पर्शने॥मध्यमं मध्येभवं॥अवलग्नं अवलग्यतेस्म लगेसंगे अवलग्नोस्त्रियांमध्येत्रिषुस्याल्लग्नमात्रके॥मध्यः मध्येशरीरस्यभवं यद्वा मां शोभांधत्तेसौ मध्यंविलग्नेनस्त्रीस्यान्न्यायेंतरेधमेत्रिषु॥श्रोणिदेहमध्यस्य माज कंबर इतिख्यातस्य अस्त्रीत्यनेनत्रयाणामन्वयः परौभुजबाहू द्वौशब्दौ द्वयोः स्त्रियांप्रं सिचज्ञेयौ ७९ भुजः भुज्यतेऽनेन भुजपालनाभ्यवहारयोः यद्वा भुजति भुजोकौटिल्ये बाह इत्यपि तत्रेत्थं बाहते बाहृप्रयत्ने बाहोश्च भुजयोः पुमानितिदामोदरः बाहो बाहुरितिस्मृतइतिदेशीकोशः॥प्रवेष्टः प्रवेष्टते वेष्टवेष्टने॥दोः दाम्यत्यनेन दमउपशमे दोर्दोषाच भुजौबाहुः पाणिर्हस्तः करस्तयेतिधनंजयः स्त्रियांतु भुजावाहे स्यातां॥दो

बाहुमूलेउभेकक्षौपार्श्वमस्त्रीतयोरधः॥मध्यमंचावलग्नंचमध्योऽस्त्रीद्वौपरौद्वयोः ७९ भुजबाहूप्रवेष्टोदोः स्यात्कफोणिस्तुकूर्परः॥अस्योप रिप्रगंडः स्यात्प्रकोष्ठस्तस्यचाप्यधः ८० मणिबंधादाकनिष्ठंकरस्यकरभोबहिः॥

षेत्यपिदावंतः प्रातिपदोक्तधनंजयकोशाद्वर्तते इतिचत्वारिभुजस्य॥कफोणिः कंखुरवंस्फोरयति स्फुरस्फोरणे संचलनेच पृषोदरादिः यद्वा केनजरवेनफयाति स्फुरतिवा फणगतौ स्फुरसंचलनेवा॥कफोणिः कफणि द्वयोरितिशब्दार्णवः॥कूर्परः कुरति कुरशब्दे क्विप् पिपर्ति पृपालनपूरणयोः पचाद्यच् कूर्चासोपरश्चइत्याद्यूह्यं कफोणिः कूर्परोरत्नेपृष्ठमितिनाममाला द्वेकोपरइतिख्यातस्य॥अस्यकूर्परस्योपरिऊर्ध्वेप्रगंड इत्येकं॥प्रत्यासन्नोगंडः तस्यकूर्परस्याधोभागेप्रकोष्ठइत्येकं॥प्रकुष्यतेऽनेन कुष्णुलादन्नं कुषनिष्कर्षे प्रकोष्ठमंतरंविद्यादरत्निमणिबंधयोरितिकात्यः प्रकोष्ठांमणिबंधेस्यात्कूर्परस्योत्तरेऽपिच मूपकक्षांतरेऽपिस्यात् ८० पाणिप्रकोष्ठसंधिर्मणिबंधः॥मणिर्बध्यतेऽत्र बंधबंधने तंमर्यादीकृत्य कनिष्ठापर्यंतंकरस्यतुंदित्वेबहिर्भागः करभइतिज्ञेयं एकं करणाति किरत्यनेनवा कॄहिंसायां कॄविक्षेपेवा अभच्प्रत्ययः करेभाति भादीप्तौ करभांमणिबंधादिकनिष्ठांतोप्युनत्सूने॥

पंचशारवः पंचशारवाइवांगुलयोऽस्य॥शयः शेनेऽस्मिन् शमइत्यपिपाठांतरं नत्रेत्थं शाम्यतिकंडूरनेन शमुउपशमे॥पाणिः पणायत्यनेन पणव्यवहारे पण्यतेऽनेनवा पाणिः शमः शयोहस्तइत्यमरमाला श्रोणिकरस्य॥तर्जनी तर्ज्यतेऽनया तर्जभर्जने॥प्रदेशनी प्रदिश्यतेऽनया दिशअतिसर्जने ल्युट् प्रदेशिनीत्यपिपाठः नत्रेत्थं प्रादिशतिप्रदेशो स्त्यस्यावा ङ् अंगुष्ठसमीपांगुल्याः॥८१ अंगुली अंगति अभिगनौ यद्वा अंगुंपाणिपादमवयवंलातिवा अंगुलस्त्वयवोमतइत्यमरदत्तः अंगुलोनायवमानमितिवाचस्पतिः॥ करशारवा करस्य शारवाइव ङ् अंगुलीमात्रस्य॥ताः अंगुल्यः वक्ष्यमाणसंज्ञाभिरूढाः॥अंगुष्ठः अंगुष्ठशब्दोऽगवाची अंगोपाणौतिष्ठति पुंसि तर्जनी पूर्वमुक्तापिसंख्या प्रदर्शनार्थंपुनरुक्तेति नदोषभाक्॥मध्यमा मध्येभवा देहमध्येमध्यदेशेमध्यमाकर्णिकांगुलिः राकारजस्वलाचापीतिहेमः॥अनामिका ननामग्रहणंयोग्यमस्याः ब्रह्म

पंचशारवः शयः पाणिस्तर्जनीस्यात्प्रदेशनी ८१ अंगुल्यः करशारवाः स्युः पुंस्यंगुष्ठः प्रदेशिनी॥मध्यमानामिकाचापिकनिष्ठाचेतिताः क्रमा
त् ८२ पुनर्भवः कररुहोनरवोऽस्त्रीनरवरोस्त्रियाम्॥प्रादेशतालगोकर्णास्तर्जन्यादियुतेतते ८३

णोनयाशिरश्छेदनात् अतएवास्यांपवित्रीक्रियते॥कनिष्ठिका अत्यल्पा कनिष्ठोऽल्पेयुजेयूनिकनिष्ठात्वंतिमांगुलीतिहेमचंद्रः क्रमेणएकैकं॥पुनर्भवः पुनर्भवति पुनर्नवइतिवापाठः॥कररुहः करेरोहति॥नरवः नरवमस्य यद्वा नरवनति नरवन्त्यनेवा॥नरवोस्त्रीक्लीबयोःशक्तोनरवरेपुंनपुंसकं नरवरः नरवंराति नरवंत्रिष्वित्यमरमाला चत्वारिनरवस्य॥तर्जन्यायुतेंगुष्ठेततेवि स्तृतेप्रादेशः स्यात् प्रदिश्यते दिशअतिसर्जने नत्रेत्थं प्रादेशोदेशमात्रेचतर्जन्यंगुष्ठसंमिते एवंच मध्यमायुतेंगुष्ठेविस्तृतेतालः स्यात् तलत्यत्र तलप्रतिष्ठायां तत्र तालः कर तलेंगुष्ठमध्यमाभ्यांचसंमिते गीतकालक्रियामानेकरस्फालेद्रुमांतरे॥अनामिकायुतेंगुष्ठेतते गोकर्णः गौःकर्णइव गोकर्णोश्वतरेऽपिस्यान्मृगसर्पगणांतरे अंगुष्ठानामिकोन्माने

गोकर्णोमूर्विकोषधौ॥ इत्येवंतर्जन्यादिसहितेविस्तृतेंगुष्ठेक्रमेणैवैकंज्ञेयं ८३ कनिष्ठयासहविततेंगुष्ठेवितस्तिः वितस्यति वितस्यतेवा तसु उपक्षये॥ द्वादशांगुलः द्वादश अंगुलयः प्रमाणमस्य प्रमाणेद्वतिमात्रच् द्विगोर्नित्यमितिलुक् तत्पुरुषस्यांगुलेरित्यच् द्वे माहत्वर्यो द्वितस्तिः पुमान् स्त्रियामितिसफूर्तिः॥ चपेटः चपति चपसांत्वने एटति इरगतौ चपश्चासाविटश्च चर्पटइत्यन्यत्र चर्पटः स्फारविपुलेचपेटेत्वर्पटोपिचेतिमेदिनी विश्वप्रकाशौ॥ प्रतलः प्रतलति तलप्रतिष्ठायां तलंस्वरूपाधरयोः खड्गमुष्टिचपेटयोरितिविश्वः प्रतलंपातालभेदे 'पातालभेदप्रतलं इतिपाठश्छंदोयोग्यः' ततांगुलिकर पुमान्॥ प्रहस्तः प्रसृतोहस्तः श्रीणिविस्तृतांगुलोपाणौ ८४ वामदक्षिणौ द्वौप्रतलौ प्रततौविस्तृततलौ च संहतौ मीलितौस्तः चेत् संहतलः स्यात् संहतंसयद्दृशानि सिंहतलइतिपाठांतरं तत्र सिंहस्येवतलमत्र संहतलः प्रतलश्चेतिनामद्वयंवा तत्रसंहतलम्

अंगुष्ठेसकनिष्ठेस्याद्वितस्तिर्द्वादशांगुलः॥ पाणौचपेटप्रतलप्रहस्ताविस्तृतांगुलौ ८४ द्वौसंहतौसंहतलप्रतलौवामदक्षिणौ॥ पाणिर्निकुब्जः प्रसृतिस्तौयुतावंजलिः पुमान् ८५ प्रकोष्ठेविस्तृतकरेहस्तोमुष्ट्यातुबद्धया॥

तलावित्यविसर्गपाठः॥ निकुब्जः नितरांकुब्जः पाणिश्चेत्प्रसृतिःस्यात् प्रसृतइत्यपिपाठः तत्र प्रकृष्टंसृतमस्य प्रसृतः सप्रसारेस्यात् विनीतेवेगितेत्रिषु अर्धांजलौनुपुल्लिंगो जंघायांप्रसृतामतेतिमेदिनीकोशात् एकं॥ द्वौ द्वौ प्रसृतौसंहतौचेदंजलिरित्येकंपुंसि अज्यतेऽनेन अंजूव्यक्त्यादौ अंजलिस्तुपुमान् हस्तसंपुटेकुडवेऽपिच ८५ विस्तृतकरे विस्तृतः करोयत्र॥ प्रकोष्ठेकूर्पराधोभागेहस्तइतिप्रोक्तंनाम हसति हस्यतेवानेन हसहसने हस्तः करेकरिकरेप्रकोष्ठेसकरेऽपिच ऋक्षेइत्यक्त०॥ अयंचतुर्विंशत्यंगुलपरिमितोज्ञेयः सतुबद्धयामुष्ट्यायुक्तश्चेत् रत्निरित्येकम् मुष्यतेऽनया मुषस्तेये यद्वा मुष्णाति श्रृच्छति अर्यतेऽनेनवा रत्यरत्नोस्त्रियौबद्धमुष्टितनांगुलीइत्यमरमाला॥

निष्कनिष्ठेन निर्गताकनिष्ठायस्मात्तेनमुष्टिनोपलक्षितोहस्तः अरत्निरित्येकं ॥सरत्निः स्त्रियांपुंसिचं नारत्निः कफणोहस्तेप्रकोष्ठेविततांगुल्याविनिरुद्धविश्वप्रकाशौ ॥मुष्ट्या
मुष्टिनेतिनिर्देशेनमुष्टिर्द्वयोरितिज्ञातव्यं ८६ तिर्यकृततयोः विस्तृतयोः करसहितयोर्बाह्वोरंतरं व्यामः विशेषेण अम्यते ऽनेन अमगतौ एकं ऊर्ध्वविस्तृतदोष्पाणि नृमाने
दोषोचपाणीच तत् ऊर्ध्वविस्तृतंदोष्पाणियेन सतादृशोना तस्ययन्मानंतत्र पौरुषमित्येकं पुरुषः प्रमाणमस्य त्रिषु पौरुषोनदः पौरुषीनदी पौरुषंसरः ८७ कंठः कणति कण
शब्दे यद्वा कंठते कठिशोके कंठोगलेसन्निधानेध्वनौमदनपादपे इतिविश्वः समीपगलशब्देषुत्रिषुकंठंविदुर्बुधाइतिशाश्वतः ॥गलः गलति गलअदने गलः कंठेसर्जरसे इ-
त्यन्तत्वात् ईशोवाग्रभागस्य गोंकनळी गोंकटीइतिख्यातस्य ॥ग्रीवा गीर्यते ऽनया निपातनात्साधुः ॥शिरोधिः शिरोधीयते ऽस्यां कर्मण्यधिकरणेचेतिकिः ॥कंधरा कंशिरोधा

सरत्निःस्यादरत्निस्तु निष्कनिष्ठेनमुष्टिना ८६ व्यामोबाह्वोःसकरयोस्ततयोस्तिर्यगंतरम् ॥ ऊर्ध्वविस्तृतदोष्पाणिनृमानेपौरुषंत्रिषु ८७ कंठोगलोऽथ
ग्रीवायांशिरोधिः कंधरेत्यपि ॥ कंबुग्रीवात्रिरेखासाऽवटुर्घाटाकृकाटिका ८८ वक्त्रास्येवदनंतुंडमाननंलपनंमुखं ॥

रयति इत्याद्यूह्यं कंधरोवारिवाहेस्याद्ग्रीवायांकंधरामता श्रोणिमानइतिख्यातस्य शिरोधिरपिस्त्री साग्रीवा ॥त्रिरेखा तिस्रोरेखायस्यां कंबुग्रीवास्यात् एकं कंबुरिव शंखइवग्रीवा ॥
अवटुः अवटलति टलवैक्लव्ये इत्याद्यूह्यं ॥घाटा घाटयति घाट्यतेवा घटसंघाते ॥कृकाटिका कृकंकंठमटति अटगतौ श्रोणिग्रीवाशिरःसंधेः पश्चाद्भागस्य ग्रीवायामुन्नतभागस्य
घाटीइतिख्यातस्येतिकेचित् तत्रावटुः पुमान् ८८ वक्त्रं उच्यते ऽनेन वचभाषणे वक्त्रमास्येछंदसीतिहेमचंद्रः ॥आस्यं आस्पंदते अन्नादिनाप्रस्रवति अस्पंद्यतेवा अन्नादिना-
द्रवीक्रियते स्पंदूप्रस्रवणे अन्येष्वपीतिडः यद्वा अस्यंतेवर्णायेन अस्यतेग्रासोवाऽस्मिन् असक्षेपणे बाहुलकात्करणेधिकरणेप्यत् मुखंमुखांतरालंचद्वयमास्यमितीरितं इतिशाश्व
तः आस्यंमुखेचतत्राध्यस्तद्भवेचस्त्रियांस्थितौ ॥वदनं वदंत्यनेन वदव्यक्तायांवाचि ॥तुंडं तुंडति तुडितोडने ॥आननं आअनंत्यनेन अनप्राणने ॥लपनं लप्यते ऽनेन लपव्यक्तायांवाचि ॥
मुखं खन्यते ऽनेन खनुअवदारणे डित् खनेर्मुट् चोदात्तइत्यच् धातोर्मुडागमः मुखमुपायेप्रारंभेश्रेष्ठेनिःसरणास्ययोरितिहेमः सप्तमुखस्य ॥

घ्राणं घ्रायतेनेन घ्रागंधोपादाने घ्राणंक्लीबंनासिकायांघ्रानेस्याद्वाच्यलिंगकं घ्राणंगंधवहानासानस्यानस्याचनासिकेतिसाहसांकः॥गंधवहा वहति वहप्रापणे गंधस्यवहा स्याद्गंधवहानासायांपुल्लिंगेमातरिश्वनि॥घोणा घोणति अनया घुणभ्रमणे॥नासा नासतेनया णासृशब्दे नासातुनासिकायांचद्वारोर्ध्वदारुणिस्त्रियां॥नसा नस्येत्यपि॥नासिका नासेर्ण्वुल् कुल्यागंधवहाघोणाघ्राणंनासानासिकेतिकात्यः पंचनासिकायाः ८९ ओष्ठः उष्यते उष्णाहारेण उषदाहे॥अधरः नध्रियते धृङ् अनवस्थाने अधरस्तु पुमानोष्ठेहीनेनूर्ध्वेचवाच्यवत्॥रदनच्छदः रदनाश्छाद्यंतेनेन छदसंवरणे पुंसिसंज्ञायामितिघः छादेर्घेइतिन्हस्वः॥दशनवासः दशनानांवासस्थावरकत्वात् चत्वारिओष्ठस्य॥ओष्ठाभ्यांसहितावधरौ केचिदुपरिवर्त्योष्ठः अधोवर्त्यधरइतिमन्वते तदयुक्तं अधरोष्ठः बिंबोष्ठात्यादिप्रयोगदर्शनात्॥चिबुकं चीव्यति चीव्यतेवा चीवृआ

क्लीबेघ्राणंगंधवहाघोणानासातुनासिका ८९ ओष्ठाधरौतुरदनच्छदौदशनवाससी॥अधस्ताच्चिबुकंगंडौकपोलौतत्पराहनुः ९० रदनादशनादंतारदास्तालुतुकाकुदम्॥

दानसंवरणयोः चिनोतिशोभांवा चिबुःस्याच्चिबुकंतथेतिनिगमः एकं अधस्तादधराधोभागे॥गंडः गंडति गडिवदनैकदेशे गंडःस्यात्पुंसिखड्गिनि॥कपोलः कंपते कपिचलने कंस्करवंपोलतिवा पुलमहत्वे द्वेकपोलस्य गालइतिख्या०॥तत्रापिनेत्रकपोलमध्यदेशोगंडइतिग्रंथांतरम्॥तत्परा ताभ्यांकपोलाभ्यांपराचिबुकस्याधोहनुरित्येकं हंति हनुर्हट्टविलासिन्यांनृत्यारंभेगदेस्त्रियां हनुः पुंस्यपि प्रायःस्त्री ९० रदनः रद्यते दश्यतेचानेन रदविलेखने दंशदशने दाम्यन्ति दमुउपशमे दंतोद्विकदंतेकुंजेदशनेपर्वतेऽस्त्रियाम्॥रदः रदति चत्वारिदंतस्य॥तालु तालयति तलप्रतिष्ठायां॥काकुदं काकुर्जिह्वाउद्यतेनुद्यतेवास्मिन् अनेकार्थत्वाद्वदिरुत्क्षेपणेवर्तते घञर्थेकः पृषोदरादिः ईषत्ककवतेवा कुङ्शब्दे यद्वा निम्नेर्धकंकुदंशिरः ककुदेभवं तत्रभवइत्यण् द्वेतालुनः॥

रसज्ञा रसंजानाति ज्ञाअवबोधने॥ रसना रसयति रसआस्वादने यद्वा रसयंत्यनया रसति रसशब्दे बहुलमन्यत्रापीतियुच् तालव्या अपिदंत्याश्चेत्यादौजिव्हायांरसनानथेत्युक्तेः
रसनाशब्दोदंत्यतालव्यमध्यः रसनमितिक्लीबमपि रसनंस्वेदनेध्वनौ जिव्हायांतुनपुंसिस्यादितिमेदिनी॥ रसनंतुध्वनौस्वादेरसज्ञारास्नयोः स्त्रियामितिरभसश्च॥ जिव्हा लेढि
लिहंत्यनयावा लिहआस्वादने औणादिकः त्रीणिजिव्हायाः॥ ओष्ठद्वयस्यसव्यापसव्यौप्रांतौसृक्किणीस्यातां सृजति लात्यादि प्रांतावोष्ठस्यसृक्किणीतिक्लीबकांडे मरद
न्तः ईबंतस्यस्त्रियामेकवचनं नांतस्यक्लीबेवाद्विवचनमेतत् सृक्किइति इदंतस्यक्लीबेद्विवचनंवा सृक्किण्यांसृक्किसृक्वचेतिशब्दभेदात् सृक्वेतिनांतस्यक्लीबेसृक्वणीतिपाठः
कवयुक्तमितिमतेतु यथासृक्किणीस्त्रियाम् सृक्किनांतमिदंतंच सृक्वेतिनांतं सृक्व सृक्वमदंतंचेत्यत्र एकमोष्ठांतयोः ११ ललाटं ललनं ललईप्सायाम् लडविलासेवा डल-

रसज्ञारसनाजिव्हाप्रांतावोष्ठस्यसृक्किणी ११ ललाटमलिकंगोधिरूर्ध्वेदृग्भ्यांभ्रुवौस्त्रियौ॥ कूर्चमस्त्रीभ्रुवोर्मध्यंतारकाक्ष्णःकनीनिका १२

योरेकत्वम् ललंविलासमीप्सांवा अटति अटगतौ ललतिवा अलिकं अलति अल्यतेवा अलभूषणादौ अलीकमप्रियेपीतिकात्यः अलीकं ह्रस्वमध्यमितिराजदेवः॥
गोधिः गुध्यते गुधपरिवेष्टने गावोनेत्रेधीयतेयस्मिन् पुंस्यप्ययं गोधिभालोमहाशंखइतित्रिकांडशेषात् त्रीणिभालपट्टस्य॥ दृग्भ्यांऊर्ध्वेउपरितनौभ्रुवौ एकं भ्रम
ति भ्रमुचलने यद्वा भ्राम्यति एकंनेत्रोपरिभागस्थरोमराशेः॥ भ्रुवोर्मध्येकूर्चइत्येकं कुरति कुर्यतेवा कुरशब्दे कूर्चमस्त्रीभ्रुवोर्मध्येकत्यनश्मश्रुकैतवे अक्ष्णः कनीनि
कामध्यगतकृष्णमंडलंतारकेत्युच्यते एकं तारयति तॄप्लवनादौ तारकोदैत्यभित्कर्णधारयोर्नद्वयोर्दृशि॥ कनीनिका कनति कनीदीप्तौ कनीनिकायामक्षेचपुमान्त्रा
तरितुत्रिषु कनीनिकातारकेक्ष्णः स्यात्कनिष्ठांगुलावपीत्युक्तत्वात् १२

लोचनं लोच्यतेऽनेन ॥ नयनं नीयतेनेन णीञ् प्रापणे नेत्रं अथिगुणेवस्त्रभेदेमूलेद्रुमस्यच रथेचक्षुषिनद्यांचरयनाभ्यांचयोषिति ॥ नेत्रं ॥ ईक्षणं ईक्ष्यतेनेन ईक्षदर्शने ईक्षणंदर्शनेदृशीनिर्हेमः ॥ चक्षुः चष्टे चक्षतेनेनवा ॥ अक्षि अश्नुतेऽनेन अशूव्याप्तौ यद्वा अक्षति अक्षूव्याप्तौ ॥ दृक् पश्यति दृशिर्प्रेक्षणे यद्वा दृश्यतेनया सं पदादिः ॥ दृष्टिः दृष्टिर्ज्ञानेक्षिणदर्शने इतिहेमचंद्रः अष्टनेत्रस्य ॥ अस्रु अस्यति अश्नुतेवा ॥ नेत्रांबु नेत्रयोः अंबु ॥ रोदनं रुद्यते रुदिर् अश्रुविमोचने ॥ अस्रं अस्रः कोणेकचेपुंसिक्लीबमश्रुणिशोणिते दंतमध्यं अंत्यंतालव्यमध्यं अस्रमदंलं दंत्यमध्यं तालव्यमपि पंचनेत्रोदकस्य १३ नेत्रयोरंतौ अपांगोस्तः एकं अपांगति अ गिगतौ अपकृष्टानि अंगान्यस्माद्वा अपांगस्त्वंगहीनेस्यान्नेत्रांतेतिलकेपित्रेतिविश्वः ॥ अपांगदर्शनंकटाक्षः स्यात् अपांगेनदर्शनं कटावतिशायितो अक्षिणी

लोचनंनयनंनेत्रमीक्षणंचक्षुरक्षिणी ॥ दृग्दृष्टीचास्रुनेत्रांबुरोदनंचास्रमस्रुच १३ अपांगोनेत्रयोरंतौकटाक्षोऽपांगदर्शनम् ॥ कर्णशब्द ग्रहौश्रोत्रंश्रुतिःस्त्रीश्रवणंश्रवः १४ उत्तमांगंशिरःशीर्षं मूर्धानामस्तकोऽस्त्रियां ॥ यत्र. कटेगंडेअक्षतिवा अक्षूव्याप्तौ कर्मण्यण् एकं ॥ कर्णः

कीर्यते शब्दग्रहणायक्षिप्यते यद्वा कीर्यते शब्दोस्मिन् किरतिवाशरीरेस्फुरंवा कृविक्षेपे औणादिकः यद्वा कर्णयति कर्णभेदने दंतः कर्णः पृथासुतेन्ध्येष्ठस्कवर्णालिंग्धु तावपि ॥ शब्दग्रहः शब्दोगृह्यतेनेन करणेअप् ॥ श्रोत्रं श्रूयतेऽनेन श्रुश्रवणे ॥ श्रुतिः श्रूयतेऽनया स्त्रियांक्तिन् ॥ श्रवणं श्रवणंतुश्रुतोकर्णेनक्षत्रेनपुंसकम् ॥ अवः षट् कर्णस्य १४ उत्तमांगं उत्तमंचतदंगंच सन्महदितिसमासः ॥ शिरः श्रीयतेउष्णीषादिना श्रयतेः स्वांगेशिरः किञ्चेत्यसुन् शिरःप्रधानेसेनाग्रेशिखरेमस्तकेपिचेत्यु क्तत्वात् ॥ शीर्षं कुमारशीर्षयोर्णिनिरितिज्ञापकात् शिरः शब्दस्यशीर्षादेशः ॥ मूर्धा मुह्यत्यस्मिन्नाहतेवा मुहवैचित्ये ॥ मस्तकः मस्यतेस्म मसीपरिणामे परिमाणेवा के स्वार्थेकः ना पुंसि पंचशिरसः ॥

चिकुरः चीति अव्यक्तं कुरति कुर शब्दे चिकूर इत्यपि कुंतलाः मूर्धजास्त्वंस्त्रश्चिकूराश्चिकुराः कचा इति दुर्गः॥ कुंतलः कुंतं कुंताग्राकारं लाति कुंतलश्च षके वालं यवेना मू-श्चिनीच्चति इत्युक्तं०॥ वालः वलति वल प्राणने वल्यते वरुध्यतेवा वालोनाकुंतले ऽश्वस्य गजस्यापि च वालधौ वाच्यलिंगमवेदज्ञे न्हीवेरे पुनपुंसकम् अलंकारांतरेऽमे-ध्येवाली वालाश्रुटौ स्त्रियामिति विश्वप्रकाशः॥ कचः कच्यते कच बंधने कचत्यात्मानं वा कचः शुष्कव्रणे केशबंधे पुत्रे च गीष्पतेः इत्युक्तं०॥ कचाकरेयवा मिति हैमः॥ केशः क्लिश्यते क्लिशबंधने क्लिशउपतापं वा क्लिश्नाति वा क्लिशविबाधायां के शिरसि शेतेवा कस्य शिरस ईशोवा केशः स्यात्पुंसि वरुणे न्हीवेरे कुंतलेऽपि चेत्युक्तत्वात्॥ शिरोरु-हः शिरसि रोहति षट्केशस्य १५ कैशिकं केशानां समूहः॥ एवमपि केश्यं इति द्वे तद्वृंदे तेषां वृंदं तस्मिन्॥ अलकाः अलंति अल्यंतेवा अल भूषणादौ अलकाकुबेरपु

चिकुरः कुंतलो वालः कचः केशः शिरोरुहः॥ १५॥ तद्वृंदे कैशिकं कैश्यमलकाश्चूर्णकुंतलाः॥ ते ल
लाटे भ्रमरकाः काकपक्षः शिखंडकः १६ कबरी केशवेशोऽथ धम्मिल्लः संयताः कचाः॥

र्यामस्त्रियां चूर्णकुंतले इत्युक्तं०॥ चूर्णकुंतलाः चूर्णस्य कर्चूरादिक्षोदस्य कुंतलाः द्वे कुटिलकेशानां ते अलकाः ललाटे भ्रमरकाः स्युः भ्रमरा इव भ्राम्यंति वा अथ भ्रमरको भृंगे गैरिके चूर्णकुंतले एकं॥ काकपक्षः काकस्य पक्ष इव॥ शिखंडकः शिखाया अंड इव शिखंडक शिखंडिका विति वाचस्पति स्मृती शिखंडो बर्हचूडयोरिति मेदिन्यां द्वे कुमारचूडा याः १६ कबरी कूपते कुङ् शब्दे कं शिरो वृणोत्याच्छादयति कवरं लवणाम्लयोः इत्युक्तं० कबरी केशविन्यास शाकयोरिति हैमः॥ केशवेशः केशानां वेशः मार्जनानंध विशेषः द्वे केशबंधरचनायाः कबरीस्त्री॥ संयताः मौक्तिकदामादिबद्धाः कचाः केशसमूहो धम्मिल्लः स्यात् एकं धमति धम ध्वाने सौत्रः मिलति मिल संगमे धमश्चासौ मिल्लश्च बुनडा इति रत्न्याः

शिखा शेते शिखाशाखाबर्हिचूडालांगलिक्यग्रमात्रके चूडामात्रेशिफायांच ज्वालायांप्रपदेपिच ॥ चूडा चूडयते चूडसमुच्छ्राये चूडाशिखाग्रयोरित्युक्तत्वात् बाहुभूपावल्योश्चेतिहेमः ॥ केशपाशी केशानांपाशः गौरादिः त्रीणिशिरोमध्यस्थचूडायाः ॥ सटा सटति षट्अवयवे सटाजटाकेसरयोः कोटीरस्तूसटाजटेतिरभसः ॥ जटा जायते जयतेवा जनेष्टन्लोपश्च यद्वा जटति जटसंघाते जटालग्नकचेमूलेमांस्यांप्ररोहेपुनर्जटी द्वेव्रतिनः शिखायां १७ वेणिः वेणति वेणीसेतुप्रवाहयोरित्युक्तत्वात् वेणीत्यपि ॥ प्रवेणी प्रवेणीस्त्रीकुथावेण्योरितिमेदिनी प्रवेणिरित्यपि द्वेसर्पाकाररचितकेशवेशस्य ॥ शीर्षण्यः शिरसिभवः शिरस्यः पूर्ववत् द्वेविशदेकचे कचादित्यर्थप्रधानोनि

शिखाचूडाकेशपाशीव्रतिनस्तुसटाजटा १७ वेणिःप्रवेणीशीर्षण्यशिरस्यौविशदेकचे ॥ पाशः पक्षश्चहस्तश्चकलापार्थाःकचात्परे १८ तनूरुहंरोमलोमतद्वृद्धौश्मश्रुपुंमुखे ॥

र्देशः तेनकचपर्यायात् परे ॥ पाशः पाश्यते पाशबंधने पाशस्तुमृगपक्षादिबंधने ॥ पक्षः पक्ष्यते पक्षपरिग्रहे पक्षोमासार्धकेगेहपार्श्वसाध्यविशेषयोः केशादेःपरतोवृंदेरवलेसखिसहाययोः ॥ हस्तः हसति हस्यतेवा हसेहसने हस्तःकरेकरिकरेसप्रकोष्ठकरेपिच इतित्रयःकलापार्थाः कलापोर्थोयेषां केशसमूहवाचिनइत्यर्थः यथाकचपाशः केशपाशः केशपक्षः कुंतलहस्तः १८ तनूरुहं तन्वांरोहति मूलविभुजादिः तनूरुहंतुलोम्निस्यात्पत्रेचननपुंसकमितिविश्वः ॥ रोम रोहति यद्वा रूयते रुशब्दे रुङ्गतौ भाषणेवा ॥ लोम पूर्ववत् ललविकल्पात् त्रीणिरोम्णः ॥ पुंमुखे पुंसः मुखंतत्र तद्वृद्धौ तस्यरोम्णः वृद्धिस्तस्यांसत्यांश्मश्रुज्ञेयं श्मश्रुखंश्रयति श्रिञ्सेवायां इत्यादयूद्यां एकंदाढीइति

आकल्पः आकल्पनं क्लृप्तसामर्थ्यं आकल्प्यतेवा आकल्पयतिवा आकल्पः कल्पनेवेशे इत्युक्तत्वात् ॥ वेषः वेषणं विष्यतेवा विष्लृव्याप्तौ घञ् वेशइतितालव्यांतोऽपि वेशो वेश्यागृहेगृहे नेपथ्येचनिमेदिनी ॥ नेपथ्यं नयतेर्विच् गुणः नेशब्देनपथ्यशब्देनसमासः नेपथ्यंतुप्रसाधने रंगभूमौवेषभेदे इतिहैमः नेपथ्यः स्यादलंकारेरंगव्यायांन पुंसकमितिमेदिनीकोशात् ॥ प्रतिकर्म प्रत्यंगंप्रतिरव्यातंवाकर्म शाकपार्थिवादिवत् ॥ प्रसाधनं प्रसाध्यतेऽनेनांगं पंचअलंकृतस्यशोभायां प्रतिकर्मादिद्वयमलंकरण स्यवा ९९ एतेवक्ष्यमाणारोचिष्णुपर्यंताः दशशब्दास्त्रिषुवाच्यलिंगाः ॥ अलंकर्ता अलंकरोति ॥ अलंकरिष्णुः अलंकर्तुंशीलंयस्य द्वे अलंकर्तरि ॥ मंडितः मंड्यतेस्म

आकल्पवेषौनेपथ्यंप्रतिकर्मप्रसाधनम् ९९ दशैतेत्रिष्वलंकर्ताऽलंकरिष्णुश्चमंडितः ॥ प्रसाधितोऽलंकृतश्चभूषितश्चपरिष्कृतः १००
विभ्राड्भ्राजिष्णुरोचिष्णुभूषणंस्यादलंक्रिया ॥ अलंकारस्त्वाभरणंपरिष्कारोविभूषणं १०१ मंडनंचाथमुकुटंकिरीटंपुंनपुंसकम् ॥

मडिभूषायां ॥ प्रसाधितः प्रसाध्यतेस्म साधसंसिद्धौ ॥ अलंकृतः अलंक्रियतेस्म ॥ भूषितः भूष्यतेस्म भूषअलंकारे ॥ परिष्कृतः परिक्रियतेस्म पंचअलंकृतस्य १०० वि भ्राट् विशेषेणभ्राजतेसौ ॥ भ्राजिष्णुः भ्राजते तच्छीलः ॥ रोचिष्णुः रोचतेतच्छीलः त्रयमतिशयेनशोभमानस्य ॥ भूषणं भूष्यतेनेन ॥ अलंक्रिया अलंक्रियतेऽनया द्वेभू षणक्रियायाः भूषातुस्यादलंक्रियेत्यपिपाठः ॥ अलंकारः अलंकारःकंकणादिभूषणादावितिहैमः ॥ आभरणं आभ्रियतेनेन भृञ्भरणे ॥ परिष्कारः परिस्कारइत्यपि ॥ विभूषणं विभूष्यतेऽनेन १०१ मंडनं मंड्यतेऽनेन मडिभूषायां मंडनंतुप्रसाधनइत्यर्थः पंचालंकारस्य ॥ मुकुटं मंकतेनेन मकिमंडने मकुटमित्यपि ॥ किरीटं किरति अनेन कृविक्षेपे नत्र किरीटंपुंसिक्लीबेच द्वे मुकुटस्य ॥

चूडामणिः चूडामणिः काकचिंचाफले मूर्धमणावपीति हैमः ॥ शिरोरत्नं शिरसो रत्नं द्वे शिरोमणेः ॥ तरलः तरंलागि तरलं चंचले विन्ने भास्करेपि त्रिलिंगकं हारमध्यमणौ पुंसि यवागूसुरयोः स्त्रियामित्यकारान्तान् ॥ हारमध्यगः हारस्य मध्यं गच्छति हारमध्यगतो नायकमणिः तरलः स्यात् एकं १०२ वालपाश्या वालपाशो केशसमूहे साधुः वालेषु पाश्या पाशसमूहो वा ॥ पारितथ्या परितस्तथाभूता एव पारितथ्या स्वार्थे ष्यञ् द्वे सीमंतभूषणस्य ॥ पत्रपाश्या पाशसमूहः पाश्या पत्रमिव पाश्या ॥ ललाटिका ललाटस्यालंकारः कर्णललाटात्कनलंकारे इति कन् द्वे ललाटभूषणस्य ॥ कर्णिका कर्णस्यालंकारः प्राग्वत् कर्णिका कर्णभूषणे तालपत्रं तालस्य पत्रं ताडपत्रमपि द्वे ताटंकस्य नानवडइति ख्या० ॥ तालपत्रं तु कुंडले स्यात्तालपत्रो रंडायामिति हेमचंद्रः ॥ कुंडलं कुंडते कुडयने वा कुडि दाहे कुडि रक्षायां वा धातूनामनेकार्थत्वाद्वा

चूडामणिः शिरोरत्नं तरलो हारमध्यगः १०२ वालपाश्या पारितथ्या पत्रपाश्या ललाटिका ॥ कर्णिका तालपत्रं स्यात्कुंडलं कर्णवेष्टनं १०३ ग्रैवेयकं कंठभूषा लंबनं स्याल्ललंतिका ॥ स्वर्णैः प्रालंबिकाथोरः सूत्रिका मौक्तिकैः कृता १०४ हारो मुक्तावली देवछंदोसौ शतयष्टिका ॥

कुंडकुंडाकारं लातिवा कुंडलं कर्णभूषायां पाशेपि वलयेपि च ॥ कर्णवेष्टनं कर्णस्य वेष्टनं वेष्ट्यतेऽनेन वेष्ट वेष्टने द्वे कुंडलस्य तत्र कर्णिका स्त्रीभिरेव धार्यते इदं पुरुषैरपि १०३ ग्रैवेयकं ग्रीवायां भवं ॥ कंठभूषा भूष्यतेऽनया भूष अलंकारे कंठस्य भूषा द्वे ग्रीवाभरणस्य ग्रैवेयं ग्रैवमित्यन्यत्र ॥ लंबनं लंबते लबि अवस्रंसने ॥ ललंतिका लडयति लड विलासे शर्लारिडः पिडलयोरेकत्वं ललंत्येव स्वार्थे कन् ह्रस्वः द्वे आनाभिलंबिन कंठिकायां सैव ललंतिका स्वर्णैः कृता प्रालंबिका स्यात् एकं ॥ सैव ललंतिका मौक्तिकै रचिता चेदुरःसूत्रिकेत्येकं १०४ हारः मनो ह्रियतेऽनेन ह्रियते वा यद्वा हारयति मनः हारो मुक्तासरे युधि ॥ मुक्तावली मुक्तानामावली हारो मुक्तावली हार इति रभसः द्वे मुक्ताहारस्य असौ मुक्तावली शतयष्टिका चेत् देवछंदः देवैः छंद्यते छदि संवरणे यष्टिहारलताशस्त्रभेदयोरिति विश्वः यष्टिर्लता सरः सरिरिति अनेकार्थमाधवी ॥

यष्टिभेदाद्गुच्छादयोहारभेदाः स्युः गुच्छगुच्छार्धगोस्तनाः तेयथा गुच्छः गुड्यते गुडशब्दे स्याद्गुच्छकस्तस्तबकेहारभेदकलापयोरित्यक्तं० द्वात्रिंशल्लतिकोगुच्छइत्यर्थः॥ गुच्छार्धः गुच्छस्यार्धः समप्रविभागाभावात्पुंस्त्वंचतुर्विंशतियष्टिकोगुच्छार्द्धइत्यर्थः॥गोस्तनः गोस्तनइव चतुस्त्रिंशल्लतोहारश्चतुःसरिश्चगोस्तनः चतुर्यष्टिकोगोस्तनइत्यर्थः गुत्सगुत्सार्धगोस्तनाइत्यपिपाठः १०५ द्वादशयष्टिकोऽर्धहारः अर्धेनएकदेशेनकृतोहारः शाकपार्थिवादिः॥विंशतियष्टिकोमाणवकः माणवकइव बालइव माणवकोहारभेदेबालेकुपुरुषेबटाविन्युक्तत्वात्॥एकयष्टिका एकावलीस्यात् एकाचासावावलिश्च सैवएकावल्येवसप्तविंशतिमौक्तिकैः कृतानक्षत्रमालास्यात् नक्षत्राणांमालेव एकैकं १०६ आवापकः आउप्यते डुवप्॥पारिहार्यः परिह्रियते भृहञोर्ण्यत् ततः स्वार्थेण्॥कटकः कटति कट्यतेवा कटेवर्षावरणयोः कटकोस्त्रीनितं

हारभेदायष्टिभेदाद्गुच्छगुच्छार्धगोस्तनाः १०५ अर्धहारोमाणवकएकावल्येकयष्टिका॥ सैवनक्षत्रमालास्यात्सप्तविंशतिमौक्तिकैः १०६ आवापकः पारिहार्यः कटकोवलयोस्त्रियां॥केयूरमंगदंतुल्यंअंगुलीयकमूर्मिका १०७ साक्षरांगुलिमुद्रास्यात्

बोद्रेर्दंतिनांदंतमंडने

सानुद्वलवणेराजधानीवलययोरपि॥वलयः वलति वलसंवरणे वलयः कंठरोगेनाकंकणेपुंनपुंसकं चत्वारिमकोष्ठाभरणस्य पौंचीइतिख्यातस्य॥केयूरं केबाहुशिरसियौति यु मिश्रणे॥अंगदं अंगंद्यते दायतिद्यतिवा देङ्पालने दैपृशोधनेवा दोअवखंडनेवा अंगदः कपिभेदेनाकेयूरेतुनपुंसकं द्वेप्रगंडभूषणस्यबाहुवटेः बाजुबंदइतिख्यातस्य॥अंगुलीयकं अंगुलौभवं जिह्वामूलांगुलेः छः॥ऊर्मिका ऊर्मिरिव ऊर्मिप्रकाशंकायतिवा ऊर्मिःस्त्रीपुंसयोर्वीच्यांप्रकाशेवेगगंधयोरित्यक्तं० द्वेअंगुल्याभरणस्यआंगठीइतिख्या० १०७ साऊर्मिका अक्षरैः रामकृष्णादिभिः सहिताचेत् अंगुलिमुद्रा अंगुल्यासुदंराति मोदतेवा मुदहर्षे रफायितंचीतिरक् एकं

कंकणं कंशब्दंकणति कणशब्दे कंकनेवा कणिनौल्वे अनुदात्तेतश्चहल्लादेरिनियुच् कंकणंकरभूषायांसूत्रमंडनयोरपि ॥ करभूषणं करंभूषयति करोभूष्यतेऽनेनवा क्लीं ।
बंस्यान्मंडनेसूत्रेकंकणंकरभूषणमितिरभसः हस्तमंडनसूत्रेस्यात्कंकणोनामनीमरइतिरत्नकोशः कांकणीइतिरव्यातस्य ॥ मेखला मखंगतिंलाति पृषोदरादिः मेखला
द्रि नितंबेस्याद्रशनाखड्गबंधयोरितिहैमः ॥ कांची कांचने कचिर्दीमिबंधयोः कांचीस्यान्मेखलादाम्निभेदेनगरस्यच ॥ समंकी सपति षपसमवाये बहुल्व -भ
सभिरनेकाभिः किंकिणीभिर्वासमस्वरान्वा कारानि ॥ रशना अशुते अशूव्याप्तौ संघातेच अशभोजने इत्यायूक्ष्यं रशनापिचजिव्हायामितिविश्वः रसनंनिस्वनेनादे
रसनाकांतिजिव्हयोरिति अजयधरणी रसनंचापिरास्नायामितिविश्वप्रकाशः एवंउभयंउभयत्रसाधुः १०८ सारसनं सारसमुत्कर्षंसनमस्य वनषणासंभक्तौ पंच-

कंकणंकरभूषणम् ॥ स्त्रीकट्यांमेखलाकांचीसप्तकीरशनातथा १०८ क्लीबेसा
रसनंचाथपुंस्कट्यांशृंखलंत्रिषु ॥ पादांगदंतुलाकोटिर्मंजीरोनूपुरोःस्त्रियाम् १०९

स्त्रीकटिभूषणस्य
दाब केबरपट्टाइतिरव्यातस्य एकयष्टिर्भवेत्कांचीमेखलात्वष्टयष्टिका रसनाषोडशज्ञेयाकलापः पंचविंशकइतिभेदास्त्विहनविवक्षिताः शृंखलमित्येकं शृंगेः खलति ख
लसंचये शृंखलंपुंश्चलीकांच्योर्लोहरज्जौचबंधने पुंसः कटिभूषणस्य कडदोराइतिरव्यातस्य ॥ पादांगदं पादस्यांगदमिव यद्वा पादएवांगंपादांगं द्यतिदायति दयने-
वा दोअवखंडने दैपशोधने देङ्पालनेवा ॥ तुलाकोटिः तुलांतुलयावाकोटयति कुटप्रतापने तुलाकारंकोटिरग्रमस्य तुलाकोटिर्मानभेदेंबुदेस्यान्नूपुरेपिचेतिहैमः
तुलाकोटीइत्यपि ॥ मंजीरः मंजति मजिध्वनौसोत्रः मंजीलइत्यपि ॥ नूपुरः णूस्तवनेसंपदादिः नुविपुरति पुरअग्रगमने मंजीरोःस्त्रीसनूपुरइतिरभसः १०९

हंसकः हंसइवकायति॥ पादकटकः पादस्यकटकः वलयः यद्वानूपुरस्य तोरडयापैंजणइतिख्यातस्य॥ हंसादिद्वयंपादकटकस्यवाळेइतिख्यातस्येतिमतं तुलाकोटिः स्त्रियाम् मंजीरः अस्त्रियां॥ किंकिणी किंचित्किणंकरोति कंकणीतिगुरवः कंकेगतौ अणति शब्दंध्वादिः यद्वा कंस्कस्वंकणति कणशब्दे किंकिणिरित्यपि कंकणः स्यात्प्रतिसरः कंकणोक्षुद्रघंटिकेतिभागुरिः॥ क्षुद्रघंटिका घंटेव यद्वा घंटयति घंटतिवा क्षुद्राचासौघंटिकाच घुंघुरइतिख्यातस्य॥ त्वगादिचतुष्कंवस्त्रस्ययोनिःकारणं कारणचतुष्टयेनकार्यस्यवस्त्रस्यचातुर्विध्यमितिज्ञेयम्॥ क्षौमादीत्येतद्भिनावाल्कफाळादयोनिष्प्रमाण्यंतादशत्रिषु तंत्रकंचचकारादेकादशत्रिषुच वक्ष्यमाणदुकूलसाहचर्यात्क्षौमं क्लीबमेव त्रिष्वित्येके ११० क्षौमादि क्षुमायाः अतस्याः विकारः आदिशब्दात्शाणमित्यादि॥ वाल्कं वाल्कलस्यविकारः वाल्कंज्ञेयं एकंलज्ञायस्य॥ फालं फलस्यविकारः॥ कार्पासं

हंसकः पादकटकः किंकिणी क्षुद्रघंटिका॥ त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दशत्रिषु ११० वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत्॥ कौशेयं कृमिकोशोत्थं रांकवं मृगरोमजं १११ अनाहतं निष्प्रवाणि तंत्रकं च नवांबरे॥ तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगं ११२ पत्रोर्णं धौतकौशेयं बहुमूल्यं महाधनं॥

कार्पास्याः विकारः॥ बादरं बदरायाश्चविकारः त्रीणिकार्पासवस्त्रस्य कृमिकोशोत्थं कृमेःकोशःतस्मादुत्थंकौशेयंस्यात् एकं॥ मृगरोमजं मृगरोम्णः जातं वस्त्रंरांकवं एकं अत्रमृगशब्देनपशुमात्रंग्राह्यं तेनकंबलाद्यपि १११ अनाहतं नआहतं॥ निष्प्रवाणि निर्गताप्रवाणीतंतुवायशलाकाऽस्मात् तंत्रकं तंत्रादचिरापहृतं॥ नवांबरं नवंचतदंबरं चत्वारिछेदभोगक्षालनरहितस्यवस्त्रस्य॥ धौतयोर्वस्त्रयोर्युगंयत्तदुद्गमनीयंस्यात् एकं उद्गम्यतेऽभिलष्यते गम्यतेऽनेन युगमित्यविवक्षितंटिप्पणेस्पष्टं ११२ यद्धौतकौशेयंतत्पत्रोर्णं धाव्यतेस्म धौतंचतत्कौशेयंच पत्रेषुकृतोर्णापत्रोर्णास्त्यत्र पत्रोर्णंधौतकौशेयेपत्रोर्णः शोणकद्रुमइतिहेमः एकं॥ बहुमूल्यं यद्वस्त्रादिकंतन्महाधनं इत्येकं बहुमूल्यमस्य महद्धनमूल्यमस्य त्रिषु॥

क्षौमं क्षौति क्ष्णूयतेवा टुक्षुशब्दे क्षौमंपट्टे दुकूलेस्यात् गुरवस्तु क्षुमायाविकारः क्षौममिति पर्यायांतरायाभिधानायपुनरभिहितं ॥ दुकूलं दुष्टंकूलयति कूल आवरणे इगुपधेतिकः पृषोदरादिः द्वेपट्टवस्त्रस्यपाटांबइतिख्यातस्य ॥ निवीतं निवीयतेस्म व्येञ्संवरणे ॥ प्रावृतं प्राव्रियतेस्म वृञ्वरणे द्वे प्रावृतवस्त्रस्य ११३ वस्त्रस्यद्वयोर्वस्त्रयोः प्रांतयोर्दशाः स्युः एकं वस्यते वसआच्छादने वसस्तिहनादौ वस्तिर्द्वयोर्निनूहेनाप्यधोमूर्ध्निदशास्तुच दशयते दंशदशने दशावर्त्यामवस्थायांवस्त्रांतेमूर्ध्निपुंस्त्रियोरितिरभसः वस्त्योर्द्वयोरितिपाठेतु दशाः वस्तयः द्वेवस्त्रप्रांतयोः स्त्रियांमूर्ध्निदशाः स्त्रीपुंसयोर्बहुत्वेचवस्तयः ॥ दैर्घ्यं दीर्घस्यभावः ॥ आयामः आयम्यतेनेनआयमनंवा आयाति याप्रापणेवा आनह्यतेनेन णहबंधने आरोहइतिक्वचित्पाठः तत्र आरुह्यतेनेन आरोहस्त्ववरोहेचवरयोषित्कुटावपि आरोहणेगजारोहेदीर्घत्वेचसमुच्छ्रये त्रयंवस्त्रादेर्दैर्घ्यस्य लांबाइतिख्यातस्य ॥ परिणाहः परिणह्यतेनेन ॥ विशालता विशालस्यभावः द्वेविस्तारस्य रुंदीइतिख्यातस्य ११४ पटच्चरं पटते पटगतौ यद्वा पटदित्यव्यक्तशब्दंचरतिकरोति यद्वा पटइवाचरति ॥ जीर्णवस्त्रं जीर्णंचतद्वस्त्रंच द्वेजीर्णवस्त्रस्य ॥ नक्तकः नक्तंकंसुखमस्मात् क्वचिल्लक्तकइत्यपिपाठः तत्र लक्यतेस्म लकआस्वादने ॥ कर्पटः किरति कृणातिवा कृविक्षेपे कॄहिंसायांवा करोतिवा कर्चासौपटश्च यद्वा करस्यपटः शकंध्वादिः द्वेजीर्णवस्त्रखंडस्य फडकेछाटीइतिख्यातस्य ॥ गुरवस्तु द्रवद्द्रव्यंयेनपूयतेतत्रक्तकोयमित्याहुः ॥

क्षौमंदुकूलंस्याद्द्वेतुनिवीतंप्रावृतंत्रिषु ११३ स्त्रियांबहुत्वेवस्त्रस्यदशास्युर्वस्त्योर्द्वयोः ॥ दैर्घ्यमायामआनाहः परिणाहोविशालता ११४ पटच्चरंजीर्णवस्त्रंसमौनक्तककर्पटौ ॥

५ ५ ६ ७

वस्त्रं वस्यतेनेन वस आच्छादने॥ आच्छादनं आच्छाद्यतेनेन॥ वासः वस्यतेनेन वसेर्णिदित्यसञ्॥ चैलं चिल्यतेनेन चिलवसने चेलमित्यपिपाठः चेलोधमेत्रिषु॥ वसनं व
स्यतेऽनेन वसनंछादनेवस्त्रे नपुंसकंतुवसनइतिविश्वः॥ अंशुकं अंशुभिः काशते काशृदीप्तौ इत्याद्यूह्यं अंशुकंश्लक्ष्णवस्त्रेस्याद्दृस्त्रमात्रोत्तरीययोरितिरभसः ११५
सचेलकः शोभनंचेलमेव स्वार्थेकन्॥ पटः पटति पटगतौ पटविस्तारेवा यद्वा पट्यतेनेन पटभासने पटश्चिमपटेवस्त्रे स्त्रीभियाल्लद्रुमेपुमान् तत्रपटोस्त्री पटः
स्त्रीकर्पटःशाटः सिचयप्रोतलक्तकाइतिरभसः द्वेशोभनवस्त्रस्य॥ वराशिः वरंश्रेष्ठंवरणंवा शुनं वराशिरप्यन्यत्र तदाह वराशिस्स्यात्वङ्गवस्त्रेवराशिः स्थूलशाटकइति
द्व्यांतेषुरभसः वराशिनेत्यन्वयः स्त्रीनाइतिपाठे स्थूलशाटकः शटति शटरुजादौ स्थूलश्चासौशाटकश्च द्वेस्थूलपटस्य चत्वारएकार्थाइत्येके॥ निचोलः निचोल्यते

वस्त्रमाच्छादनंवासश्चैलंवसनमंशुकम् ११५ सुचेलकःपटोस्त्रीस्याद्वराशिःस्थूलशाटकः॥ निचोलःप्रच्छदपटः समौरल्लककंबलौ ११६ अंतरीयोपसंव्यानपरिधानान्यधोंशुके॥

चुलसमुच्छ्राये यद्वा चोड्यते चुडकृतौ डलयोरैकत्वं निचुलोपि निचुलस्तुनिचोलेस्याद्धिज्जलेरव्यमहीरुहइत्युक्तेः निचोलंतुनपुं
सकमितिरभसः स्त्रियांनिचोलीत्यपीतिराजदेवः॥ प्रच्छदपटः प्रच्छदति प्रच्छादयतेवा छदसंवरणे इत्याद्यूह्यं प्रच्छदश्चासौपटश्च द्वेऽङ्गिकाद्यावरणपटस्य स्त्रीपि
धानपटस्यबुरकेतिख्यातस्येत्यन्ये येनतूलशय्यादिप्रच्छाद्यतेतस्येति गुरुचरणाः॥ रल्लकः रमतइति रञ्चासौलकश्च स्वार्थेकन् इत्याद्यूह्यं रल्लकः कंबलेस्मृतइत्युक्तेः
कंबलः कंबति कंब्यतेवा कंबगतौ नागभेदेप्रावरणेचैलस्येकंबलंजलइतिहेमः द्वेकंबलस्य ११६ अंतरीयं अंतरेभवम् गहादित्वाच्छः॥ उपसंव्यानं उपसंवीयतेनेन
व्येञ्संवरणे॥ परिधानं परिधीयते डुधाञ्धारणे॥ अधोंशुकम् अधोदेहभागस्यअंशुकं चत्वारिपरिधानवस्त्रस्य॥ ६ ७

प्रावारः प्रव्रियतेनेन इतिघञ् वृञ्वरणं वृणोतेराच्छादने प्रावरइत्यपि ॥ उत्तरासंगः उत्तरे ऊर्ध्वभागेआसज्यते ॥ बृहतिका बृहत्येव बृहत्याआच्छादनेइतिकन् ११७ संव्यानं संवीयतेनेन संव्यानंछंदनेंःशःकइतिविश्वमेदिन्यौ ॥ उत्तरीयं उत्तरस्मिन्देहभागेभवं पंचवामस्कंधेयच्छार्थनेतस्यउत्तरीयस्य ॥ चोलः चोल्यतेनेन चुलसमुछ्राये ॥ कूर्पासकः कूर्परेआस्यते असक्षेपणे आसउपवेशनेवा पृषोदरादिः इत्यादूह्यं कूर्पासस्त्वर्धचोलकइतिहारावली द्वेस्त्रीणांस्तनादिपिधायकस्य कंचुकीतिप्रसिद्धस्य अस्त्रियां नीशारः नितरांशीर्यते हिमानिलावनानेनवा शॄहिंसायां एकं ११८ यद्वरस्त्रीणां अर्धोरुकं अंशःकंत चंडातकंस्यात् ॥ ऊर्वोरर्धं अर्धोरु नच्चकाशनेडप्रत्ययः अर्धोरुकं चंडांकोपनांस्त्रियमतनि अर्धोरुकंवरस्त्रीणांवासश्चंडातकःस्मृतइतिपुंस्कांडेवोपालितात् पुंसिच एवं परकर लहंगाइतिख्यातस्य ॥ यत् आप्रपदं प्रपदाद्यापदं

द्वौप्रावारोत्तरासंगौसमौबृहतिकातथा ११७ सव्यानमुत्तरीयंस्याच्चोलःकूर्पासकोस्त्रियां ॥ नीशारःस्यात्प्रावरणेहिमानिलनिवारणे ११८ अर्धोरुकंवरस्त्रीणांस्याच्चंडातकमस्त्रियाम् ॥ स्यात्त्रिष्वाप्रपदीनंतत्प्राप्नोत्याप्रपदंहियत् ११९ अस्त्रीवितानमुल्लोचोदूष्याद्यंवस्त्रवेश्मनि

आप्रपदंतत्प्राप्नोतिं वस्त्रादितत् आप्रपदीनं यदाप्रपदंप्राप्नोतितदाप्रपदीनं त्रिषु एकं पादाग्रपर्यंतलंबमानवस्त्रस्य ११९ वितानं वितन्यते वितानोयज्ञउल्लोचेविस्तारेपुंन्नपुंसकम् क्लीबंवृत्तविशेषेस्यात्त्रिलिंगोमंदतुच्छयोः ॥ उल्लोचः ऊर्ध्वंलोचति लोचृभासने ऊर्ध्वंलोच्यतेवा लोचृदर्शने द्वेआतपाद्यपनयार्थमुपरिबद्धस्यचंद्रकाख्यस्यवाससः चांदवाइतिख्यातस्य पुंसिवितानः दूष्याद्यं दूष्यते दूषवैकृत्ये दूष्यंत्रिषुदूषणीयेक्लीबंवस्त्रेचतद्गृहे आद्यशब्दात्परकुटीपटवासादिग्रहणम् ॥ वस्त्रवेश्मनि वस्त्ररचितगृहेस्यात् दूष्यमपिलाल्व्यमध्यमपिएकं डेरा रावटी इत्यादिकस्यनाम ॥

प्रतिसीरा प्रतिसिनोति प्रतिसीयतेवा षिञ्बंधने ॥जवनिका जवत्यस्यां जुः सौत्रोगतौवेगेच अनादेशेकन् यमनिकेतिपाठः तत्रेत्थं यमयति यमउपरमे॥ निरस्करणी निरस्करोति निरस्क्रियतेऽनयावा तिरस्करिणीइत्यपि त्रीणिव्यवधानपटस्याः पडदा कनाथइतिख्यातायाः १२० परिकर्म परिमलवर्जनार्थाक्रिया स्नानोद्वर्तनादीत्यर्थः प्रतिकर्मेतिक्कचित्पाठः॥ अंगसंस्कारः अंगंसंस्क्रियतेऽनेन द्वे कुंकुमादिनाशरीरसंस्कारमात्रस्य॥ मार्ष्टिः क्तिन् ॥ मार्जना युच् ॥ मार्जनंशुद्धिकरणेमार्जनामुरजिध्वजाविति हैमः ॥ मृजा अङ्प्रत्ययः त्रीणिप्रोक्षणादिनानिर्मलीकरणस्य ॥उद्वर्तनं उद्वर्त्यतेऽनेन वृतुवर्तने॥उत्सादनं उत्साद्यतेऽनेन षद्लृविशरणादौ उत्सादनंसमुल्लेखव्योद्वर्तनोद्वहने छुन्चेतिहैमः द्वे उद्वर्तनद्रव्येणांगनिर्मलीकरणस्य ॥आप्लावः विभाषाडिरूपधुवोरितिघञ् पक्षेअप् ॥ आप्लवनं प्लुङ्गतौ॥आप्लवः १२१ स्नानं ष्णाशौचे त्रीणिस्नानस्य ॥चर्चा चर्चनं चर्चअध्ययने चिंतीत्यङ् चर्चास्याच्चर्मसुंडायांचिंतास्थासकयोरपीतिहैमः॥ चार्चिक्यं चर्चिकैवचार्चिक्यम् ॥स्थासकः निष्ठनि ष्ठागतिनिवृत्तौ बाहुलकात्सः स्वार्थेकन् स्थासकःपुंसिचार्चिक्येजलादेरपिबुद्बुदइतिविश्वः त्रीणिचंदनादिनादेहविलेपविशेषस्यउटीइतिख्यातस्य ॥प्रबोधनम् उभयत्रभावेघञ् ॥अनुबोधः द्वे गतगंधस्यपुनर्गंधव्यक्तीकरणे यथा कस्तूरिकादेर्मद्यादिना॥ पत्रलेखा पत्राकारालेखा शाकपार्थिवादिः॥ पत्रांगुलिः पत्रार्थैऽगुलिः इमेस्त्रियांसमे द्वे कुचगल्लादौरचितस्यकेशरकस्तूर्यादिनातिलकविशेषस्य १२२

प्रतिसीराजवनिकास्यात्तिरस्करिणीचसा १२० परिकर्मांगसंस्कारः स्यान्मार्ष्टिर्मार्जनामृजा ॥ उद्वर्तनोत्सादनेद्वेसमेआप्लाव आप्लवः १२१ स्नानंचर्चातुचार्चिक्यंस्थासकोथप्रबोधनम् ॥ अनुबोधः पत्रलेखापत्रांगुलिरिमेसमे १२२

तमालपत्रं तमालगन्धित्वात् तमालपत्रं तापिच्छपत्रं चापि चेति विश्वः॥ तिलकं तिलति तिल स्नेहने तुदादिः तिलकमिवा ति लगति तिलवत्तोयवद्भूमावेति पुंड्रं कतिल कालकं तिलकं रुचकं क्लोम्नीति हेमः॥ चित्रकं चित्रयति चित्रा वयाया चित्रं करोति वा चित्रकं तिलकाजनुव्याघ्रपुच्छं चुपादि पु॥ विशेषकं विशिनष्टि विशेषं विशेषणं गम्भुल॥ विशेषकोऽस्त्री तिलकं विशेषणेन त्रिषु तमालस्तिलकं स्वद्रु इति विश्वात्तमाले ऽपि अन्यत्रोक्तं॥ द्वितीयं॥ तिलकं॥ तुरीयं॥ विशेषकमिति च द्वितीयतुरीये पुंनपुंसकयोः च त्वारि ललाटे कस्तूर्यादिना कृतविरचितस्य॥ अथ कुंकुमं कुनकुमिति शब्दे॥ अव्युत्पन्नमस्य अर्शआद्यच् यद्वा कुक्यते कुक आदाने बाहुलकादुमक् आचीयते त्रिपुनियोग विभागान्तुम॥ काश्मीर जन्म काश्मीरे जन्मास्य काश्मीरं कुंकुमेऽपि स्यात् पुष्करमूलयोः काश्मीरजं वह्निशिखं वाल्हीकं पीतनं वरमितिनामानि सर्वाणि॥ अग्निशिखं अग्निरिवशि

तमालपत्रतिलकचित्रकाणिविशेषकं॥ द्वितीयंचतुरीयंचनस्त्रियामथकुंकुमं १२३ काश्मीरजन्माग्निशिखंवरंबाल्हीकपीतनं॥ रक्तंसंकोचपिशुनंधीरंलोहितचंदनं १२४

खाकेसरोऽस्य अथाग्निशिखमुद्दिष्टं कुसुंभेकुंकुमेपि च॥ वरं व्रियते वृञ्वरणे वरं तु घुसृणे किंचिदिष्टे इति हेमः॥ बाल्हीकं बल्हते बल्ह प्राधान्ये बाहुलकादीकन् वल्हीकदेशभवं बाल्हीकं बाह्लिकं धीरहिंगुनोनामदेशयोरिति त्रिकांडशेषः काश्मीरं चारु बाल्हीकं संकोचं पिशुनं वरमिति हलायुधः॥ पीतनं पीतं करोति यद्वा पीयते पीङ् पाने बाहुलकात्तनन्॥ रक्तं रज्यते वा गत्यर्थे तिक्तः रक्तं नील्यादिरंजिते॥ संकोचः संकोचति संकुच्यते वा यद्वा संकोचयति संकोच्यते वा कुचसंपर्चने कौटिल्याल्पीभावयोश्च विलेखने पु संकोचो मीनभेदे च बंधे क्लीबे तु कुंकुमइति विश्वमेदिन्यौ॥ पिशुनं पिंशति पिश अवयवे पिशुनं कुंकुमे पिचे त्यत्वात्॥ धीरं दधाति धीयते वा डुधाञ् धारणादौ धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुंकुमे लोहितचंदनं लोहितं च तच्चंदनं च लोहितमपि लोहितं रक्तगोशीर्षं कुंकुमे च कुचंदने एकादश कुंकुमस्य १२५

लाक्षा लक्ष्यतेऽनया राक्षा रक्ष्यतेऽनया लक्षदर्शने रक्षपालने गुरोश्च हलः इत्यप्रत्ययः प्रज्ञाद्यण्॥जतु जायते॥ यावः यौति शूयतेवा यवएव प्रज्ञाद्यण् यावोऽलक्तो पान्भिदीतिहैमः॥अलक्तः नलज्जतेऽस्मा ओलस्जीदीत् गत्‌लकात्वात् यद्वा नलक्यतेऽस्मा यद्वा नरक्तोऽस्मात्॥ द्रुमामयः द्रुमाणामामयः॥लवंगं लुनाति लूयतेवा॥दे वकुसुमं देवानांकुसुमं कुसुमेषुदेवइव देवयोग्यंकुसुमंवा शाकपार्थिवादिः॥श्रीसंज्ञं श्रियःसंज्ञाः यस्य लक्ष्मीपर्यायनामकमित्यर्थः श्रीणिलवंगस्य॥जायकं जय ति गंधांतरं जिअभिभवे १२५ कालीयकं कालस्यवर्णस्येदं कालशब्दात्स्वेऽर्थेकन् क्वचित्कालेयमितिपाठः तत्रेत्थं कलेरिदंमर्वत्राग्निकलीतिढक् कालीयकंचकालेयंच- र्णकंकांतिदायकमितिव्याडिः॥कालानुसार्यं अनुस्रियते स्रगतौ कालेनवर्णेनानुसार्यं कालानुसार्यंशैलेयेकालायेशिंशुपाद्रुमइतिविश्वमेदिन्यौ श्रीणिसुगंधद्रव्यविशेष-

राक्षालाक्षाजतुक्लीबेयावोऽलक्तोद्रुमामयः॥लवंगंदेवकुसुमंश्रीसंज्ञमथजायकं १२५ कालीयकंचकालानुसार्यंचाथसमार्थकं॥वंशिकागुरुराजा र्हंलोहंकृमिजजोंगकं १२६ कालागुर्वगुरुस्यात्तुमंगल्यामल्लिगंधियत्॥ स्यपीतचंदनइतिख्यातस्य॥वंशिकं वंशोऽस्त्यत्र अतइनिठनौ क्वचिदंशकमपि तत्रेत्थं

वंशइवइवार्थेकन्॥अगुरु नगुरुयस्मात्॥राजार्हं राजानमर्हति अर्हप्रशंसायामित्यच् इदंचिंत्यं अनेनशतृविधानात्॥राजार्हंजोंगकेक्लीबंराज्ययोग्येभिधेयवदितिविश्वः॥ लोहं लुह्यते लुहगार्ध्ये रोहति इदंसमीचीनं रलयोरैक्यंवा लोहोऽस्त्रीशस्त्रकलहे जोंगकेसर्वतैजसइतिमेदिनीकोशाल्लोहंपुंस्यपि॥कृमिजं कृमिभिर्जन्यते॥जोंगकं जुंग ति जुंग्यतेवा जुगिवर्जने १२६ कालागुरु कालंचतदगुरुच इतिसमकंसमार्थकंज्ञेयम् कृष्णागुरुणःपर्यायाइत्यर्थः॥अगुरु नगुरुयस्मात्तदगुरु अगुरुर्जोंगकेलघ्वावितिहे मादगुरुः पुंस्यपि अगरुरितिक्वचित् अगुरुइत्यस्ययच्छब्देनसंबंधःस्यादित्यस्यत्वनन्वयत्वादुत्तरेणसंबंधः यदगुरुमल्लिगंधि सा मंगल्यास्यादित्यर्थः क्लिव्यत्रतादितिपाठस्त-

त्र्यदशुरुमल्लिगंधिनत्मंगल्येत्यर्थः मल्लिकापुष्पस्येवगंधोस्य मंगले साधुः मंगल्यास्यात्त्रायमाणाश्वत्थबिल्वमसूरके॥ स्त्रियांशस्यामधःपुष्पीमिसिराकूवचासु च गो वनायामयोदभ्रिक्लीबंशिवकरेभ्रिध्धिनिविश्वमेदिन्यो अत्रजोंगकांतानिअगुरुणः कालागुर्वादिद्वयंकृष्णागुरुणः॥ यक्षधूपः यक्षान्धूपायति धूपसंतापे॥ सर्जरसः सर्जस्य सालस्यरसः॥ अरालः नरानिदुःखं रालइतिगुरूच्चरणाः अरालःसर्जवक्रयोरिति रालःसर्जरसोरालोधूपकोवन्हिवल्लभइतिचरभसः॥ सर्वरसः सर्वैरस्यते रसआस्वादने यद्वा सर्वेरसायस्मिन् १२७ बहुरूपः बहूनिरूपाण्यस्य नानाकृतिगंधत्वात्॥ बहुरूपःस्मरेविष्णौसरलेधूपकेशिवेइतिहेमः इतिपंचधूपस्य राळइति॥ वृकधूपः वृकइवधूपः वृकधूपस्तुसरलद्रवकृत्रिमधूपयोः॥ कृत्रिमधूपकः कृत्रिमश्चासौधूपश्च स्वार्थेकन् इ अनेकपदार्थकृतधूपस्य॥ तुरुष्कः तुतोर्ति तुरत्वरणे टिप्पणी

**यक्षधूपःसर्जरसोरालसर्वरसावपि १२७ बहुरूपोप्यथवृकधूपकृत्रिमधूपकौ॥ तुरुष्कःपिंडकःसिल्होयावनोप्यथपायसः १२८ श्रीवासोवृकधूपोपिश्रीवेष्टसरलद्रवौ॥**

यं तुरुष्कःसिल्हकेम्लेछजातौदेशांतरेपिचेतिविश्वमेदिन्यौ॥ पिंडकः पिंडने पिडिसंघाते पिंडोबोलेबलेसांद्रेदेहागारैकदेशयोः देहमात्रेनिवापेचगोलसिल्हकयोरपि ओंड्रपुष्पेचपुंसिस्यात्क्लीबमाजीवनायसोः पिंडीतुपिंडतगरेलालूखर्जूरिभेदयोरित्य०॥ सिल्हः स्त्रिह्यतिनि ष्णिहप्रीतौ॥ यावनः यवनदेशेभवः इत्यादयूर्ध्वं चत्वारिसिल्हाख्यगंधद्रव्यस्य ऊद लोबानइतिख्या०॥ पायसः पयएव पयसोविकारोवा पायसस्तुक्लीबपुंसोः श्रीवासपरमान्नयोरितिमेदिनी १२८ श्रीवासः श्रियोवासः श्रीवासोवृकधूपेस्यात्पंकजेमधुसूदनइ० श्रीश्चासौवासश्चेतिवा॥ वृकधूपः धूप्यतेऽनेन धूपसंतापे वृकनामाधूपः शाकपार्थिवादिवत् वृकःस्यात्कृत्रिमेनेकधूपेपिसरलद्रवइतिरभसः॥ श्रीवेष्टः श्रीसंज्ञकः श्रियोवावेष्टोनिर्यासः॥ श्रीपिष्टइत्यपि तत्रैव श्रियःसरलद्रवस्यपिष्टः पिष्टचूर्णेनजनितत्वात् सरलद्रवः सरलस्यदेवदारोर्द्रवः पंचसरलद्रव्यस्य विशेषनामकधूपइति॥

मृगनाभिः मृगस्यनाभिः पुंसि ॥ मृगमदः मृगस्यमदः ॥ कस्तूरी कसतिगंधोऽस्याः पृषोदरादिः कसेगतौ अयंकस्तूर्याः मृगनाभिर्मृगमदोमृगः कस्तूरिकापिचेति माधवः मृगोपि मदोपि मदोरेतसिकस्तूर्यामितिमेदिनी मुखव्यादूक्षत्रिये नाभिः पुंसिप्राण्यंगकेद्वयोः चक्रमध्येमपानेनत्स्त्रियांकस्तूरिकामदइतिरभसः ॥ कोलकं कोलति कुलसंस्त्याने रलयोरेकत्वात्कोरकमपि कोरकोऽस्त्रीकुड्मलेस्यात्कंकोलकमृणालयोरित्य० १२९ कंकोलकं कंकतेऽत्र ककुलोल्ये सम्पदादिः कोलति कक्कोलं ॥ कोशफलं कोशेफलमस्य त्रीणिकंकोलगवलाइतिख्या० ॥ कर्पूरं किरति शृणातिवा करोतिवा कृविक्षेपे हिंसायांवा कुञ्ज डुकृञ्करणेवा पूर्यते पूरी आप्यायने करश्चासौपूरश्च ॥ धनसारः धनोदृढः सारोऽस्य धनःसान्द्रेदृढेदार्ढ्येइतिविश्वः धनस्यसारइववा धनसारस्तुकर्पूरेदक्षिणावर्तपारदइतिहेमः ॥ चंद्रसंज्ञः चंद्रस्यसंज्ञाय

**मृगनाभिर्मृगमदः कस्तूरीचाथकोलकं १२९ कंकोलकंकोशफलमथकर्पूरमस्त्रियां धनसारश्चंद्रसंज्ञः सिताभ्रोहिमवालुका १३० गंधसारो मलयजोभद्रश्रीश्चंदनोऽस्त्रियां ॥ तैलपर्णिकगोशीर्षेहरिचंदनमस्त्रियां १३१**

स्य चंद्रपर्यायनामक इत्यर्थः ॥ सिताभ्रः अभ्रति अभ्रगतौ सितंशीतलाम भ्रयति स्वसंबद्धमितिवा सिताभ्रइतिवापाठः सिता आभाअस्य ॥ हिमवालुका हिमाचासौवालुकाच रेणुकावर्णकर्पूरंचंद्रभस्महिमाह्वयमितित्रिकांडशेषः १३० गंधसारः गंधवान्सारः स्थिरभागोस्य गंधएववासारोस्य ॥ मलयजः मलयेजातः ॥ भद्रश्रीः भद्राश्रीरस्य हस्तिजात्यंतरभद्रोवाच्यवच्छ्रेष्ठसाधुनोरितिविश्वः ॥ चंदनः चंदयति चदि आल्हादने चलारिचंदनस्य मलयागुरुशैलागिरीइतिख्या० ॥ तैलपर्णिकं तिलपर्णोवृक्षभेदेजाता स्वार्थेकन् तैलपर्णगोशीर्षौ गिरी अकारावस्येतिस्वामी तैलपर्णीमलयजेश्रीवासेसिल्हकेपिच इत्येकंधवलशीतलचंदनविशेषस्य ॥ गोशीर्षकम् गोःशीर्षमिव इत्येवमुत्पलगंधिचंदनस्य ॥ हरिचंदनं हरेरिंद्रस्यचंदनं हरिचंदनमस्त्रीस्यात् त्रिदशानांमहीरुहे नपुंसकंतुगोशीर्षेज्योत्स्नाकुंकुमयोरपीत्य० ॥ इत्येकंकपिलवर्णचंदनस्य एवंत्रयोभेदाः १३१

तिलपर्णी तिलस्येवपर्णान्यस्याः यद्वा तिलपर्णीनदी आकरोऽस्याः॥ पत्त्रांगं पत्त्रमेवांगमस्य इत्याद्यूह्यं पत्त्रांगंनद्वयोर्भूर्जेपद्मकेरक्तचंदने॥ रंजनं रंजयति रंजरागे रंजनो रागरजने रंजनंरक्तचंदने॥ रक्तचंदनं रक्तंचतच्चंदनंच॥ कुचंदनं कुत्सितंचंदनं निर्गंधत्वात् कोचंदनमिववा कुत्सितान्यन्यचंदनान्यस्माद्वा कुचंदनंचपत्त्रांगेद्रुभेदेरक्तचंदनइतिविश्वमेदिन्यौ पंचरक्तचंदनस्य॥ जातीकोशं जात्याः कोशः जातिरपि जातिर्जातीफलेपिचेतिरभसः जातीवा कोशं फलं इतिपृथगपि फलंक्लीबेजातिकोशेबाणाग्रेफलकेपिचेतिरुद्रः कोशोऽस्त्रीकुड्मलेपत्त्रेदिव्येरत्नद्रुपिधानके जातिकोशोऽतिविश्वप्रकाशौ द्वेजायफळइतिख्याः॥ १३२॥ कर्पूरादिभिः समभागैः पिंडीकृतोलेप

तिलपर्णीतुपत्त्रांगंरंजनंरक्तचंदनं॥ कुचंदनंचाथजातीकोशजातीफलेसमे १३२ क
पूरागरुकस्तूरीकक्कोलैर्यक्षकर्दमः॥ गात्रानुलेपनीवर्तिर्वर्णकंस्याद्विलेपनम् १३३

विशेषोयक्षकर्दमइत्येके तदुक्तं कर्पूरागरुकस्तूरीकक्कोलघुसृणानिच एकीकृतमिदंसर्वंयक्षकर्दमइष्यतइतिव्याडिः कुंकुमागरुकस्तूरीकर्पूरंचंदनंतथा महासुगंधिरित्युक्तंनामतोयक्षकर्दमइतिधन्वंतरिश्च घुसृणंकेसरं अन्यत्स्पष्टं॥ गात्रानुलेपनी गात्रमनुलिप्यतेयया॥ वर्तिः वर्त्यते वृतुवर्तने वर्तादचइः वर्तिर्भेषजनिर्माणेनयनांजनलेखयोः गात्रानुलेपनीदीपदशादीपेषुयोषिति इत्यु॰॥ वर्णकं वर्णकरोति तत्करोतीतिणिच्॥ विलेपनं विलिप्यतेनेन लिपउपदेहे चत्वारिमान्यनुलेपयोग्यस्यपिष्टस्य सुगंधद्रव्यस्य तत्र द्वौद्वौभिन्नार्थौइत्येके तदाह गात्रानुलेपनीवर्तिर्विगंध्यथविलेपनम् वर्णकंचाथविच्छित्तिः स्त्रीकषायोंगरागकइतिरभसात् आद्यद्वयमुक्तार्थमेव वर्णकादिद्वयंतुस्पष्टचंदनादिलेपमात्रस्य १३३

चूर्णं चूर्यते चूर्णप्रेरणे चूर्णोधूलोक्षारभेदे चूर्णानिवासयुक्तिषु ॥ वासयोगः वासेस्सुगंधीकरणेयोगउपायोवासयोगः हे पटवासादिचूर्णमात्रस्य ॥ भावितं भाव्यतेस्म भावितंवासितेप्राप्तेइतिहैमः ॥ वासितं वास्यतेस्म वसस्नेहादौ वासितंभावितेरुतेइतिहैमः हेद्रव्यांतरभावितस्य त्रिषु गंधमाल्यधूपादिभिर्यः संस्कारः वस्त्रतांबूलादी नांसौरभाधानंतदधिवासनमित्युच्यतेएकं १३४ माल्यं मल्यते मलधारणे ण्यंतात्घञ् चतुर्वर्णादित्वात्ष्यञ् यद्वा मालायाः मांलातीति माल्यंकुसुमतत्स्रजोः ॥ मा ला केवलंघञंतमेव ॥ स्रक् सृज्यते संपदादिः सृजतिवा सृजविसर्गे एतत्त्रयंमूर्ध्निधृतायाः कुसुमपंक्तेः उपचारादन्यत्रापिप्रयोगः केशमध्येधृतास्रक् गर्भकइत्येकं ग र्भइव इवेतिकन् यन्माल्यंशिखायांलंबमानंतत्प्रभ्रष्टकमित्येकं प्रभ्रंशितंप्रभ्रष्टं भ्रंशुअधःपतने पुरोन्यस्तंललाटपर्यंतंक्षिप्तंललामकमित्येकं ललाममिव इवा

चूर्णानिवासयोगाः स्युर्भावितंवासितंत्रिषु ॥ संस्कारोगंधमाल्याद्यैर्यःस्यात्तदधिवासनं १३४ माल्यंमालास्रजौमूर्ध्निकेशमध्येतुगर्भकः ॥ प्र भ्रष्टकंशिखालंबिपुरोन्यस्तंललामकं १३५ प्रालंबमृजुलंबिस्यात्कंठाद्वैकक्षकंतुतत् ॥ यत्तिर्यक्क्षिप्तमुरसिशिखास्वापीडशेखरौ १३६ रचनास्यात्परिस्पंदआभोगःपरिपूर्णता ॥

र्थेकन् १३५ यन्माल्यंकंठादृजुलंबि ऋजुलंबितुंशीलमस्यतत्प्रालंबमित्येकं प्रालंबते लबिअविस्रंसने यन्माल्यं तिर्यगुपवीतमनृजुउरसिक्षिप्तंतत्वैकक्षिकं विकक्षमुरस्तत्रभवं वैकक्षकमित्यपि एकं ॥ आपीडः आपीड्यति पीडअवगाहने ॥ शेखरः शिखति शिखिगतौ द्वेशिखासु न्यस्तमाल्यमात्रस्य १३६ रचना रचनाशब्दोयुच्प्रत्ययांतः ॥ परिस्पंदः परिस्पंदनं स्पंदिकिंचिच्चलने परिस्पंदइत्यपिपाठः तत्रस्पंदूप्रस्रवणे द्वेमाल्यादिरचनायाः ॥ आभोगः आभोजनं आभोगोवरुणच्छत्रेपूर्णतायत्नयोरपीतिविश्वमेदिन्यौ ॥ परिपूर्णता परितःपूर्यतेस्म पूरीआप्यायने द्वेसर्वोपन्नासपरिपूर्णतायाः ॥

उपधानं उपधीयतेशिरोत्र डुधाञ्,उपबर्हः उपबृह्यतेऽनेनवा बृहबृहि वृद्धौ बृहू उद्यमनेवा द्वे उच्छीर्षस्य उशीइतिख्यातस्य शय्यास्याच्छयनीयेपिशुंफनेःपिनयोधि ति शयनीयं १३७ शयनं शयनंसुरतेनिद्राशय्ययोश्चनपुंसकं वदिनिउत्तरेणसमत्वद्योतनाय त्रीणिशय्यायाः॥ मंचः मंचते मचिधारणे च्छायपूजनेषु॥ पर्यंकः परितोंक्यते अकिलक्षणे कर्मणिघञ्॥ पल्यंकः पल्यंकोमंचपर्यंकवृषीपर्यस्तिकासुचेतिविश्वः॥ खट्वा खट्यते निद्रालुभिः खटकांक्षायां चत्वारिखट्वायाः प लंगबाजइतिख्यातायाः॥ गेंदुकः गेगगनेइंदुरिवेतिइत्याद्यूह्यं॥ कंदुकः कंद्यते कदिआल्हादनेरोदनेच कंसुखंददाति दयते धतियच्छतिवा कंशिरोदुनोतिवा

उपधानंतूपबर्हःशय्यायांशयनीयवत् १३७ शयनंमंचपर्यंकपल्यंकाःखट्वयासमाः॥
गेंदुकःकंदुकोदीपःप्रदीपःपीठमासनम् १३८ समुद्गकःसंपुटकःप्रतिग्राहःपतद्ग्रहः॥

दुदुउपतापे द्वेगेंदइतिख्यातस्य क्रीडाकारणस्य गिरदीगालउशीइतिख्यातस्येतिकेचित्॥ दीपः दीप्यतेऽनेन दीपयतिवा दीपीदीप्तौ॥ प्रदीपः द्वे दीपस्य॥ पीठं पी यतेत्र पीङ्पाने बाहुलकात्ठः विष्टरःपीठमस्त्रियामितित्रिकांडशेषः॥ आसनं आस्यतेत्र आसउपवेशने अधिकरणेल्युट् द्वे॥ समुद्गकः समुद्गच्छति इमत्य यांतात्स्वार्थेकन्॥ संपुटकः संपुट्यते पुटसंश्लेषणे द्वेसंपुटस्य डबा चौकुलाइत्यादिख्यातस्य॥ प्रतिग्राहः प्रतिगृण्हाति प्रतिग्रहः स्वीकरणेसैन्यपृष्ठेपतद्ग्रहे यो ग्येभ्योविधिवद्देयतंद्ग्रहेचग्रहांतरइतिमेदिनी॥ पतद्ग्रहः द्वेपिकदानीइतिख्यातस्य॥ ५ ५ ५

प्रसाधनी प्रसाध्यतेनया प्रसाधनीतुकंकत्यांसिद्धौवेगेप्रसाधनीतिविश्वमेदिन्यौ॥कंकतिका कंकते ककिगतौ बाहुलकादतच् गौरादिङीष् स्वार्थेकन्ह्रस्वः कंकतीतुप्रसाधनीतित्रिकांडेऽमरमाला कंकतंतुप्रसाधनमितिक्लीबकांडेमरमाला द्वे गजदंतादिरचितायाः केशमार्जन्याः फणीइतिख्यातायाः॥पिष्टातः पिष्टमतति॥ पटवासकः पटोवास्यतेनेन वासउपसेवायां पटंवासयतिवा द्वे बुकाइतिख्यातस्य चूर्णविशेषस्यच १३९ दर्पणः दर्पयति दृपहर्षणमोचनयोः दृपसंदीपने आदर्शोदर्पणःप्रोक्तइत्यमरमाला॥मुकुरः मकिमंडने मकुरइत्यपि मकुरःस्यान्मकरवद्दर्पणेबकुलद्रुमे कुलालदंडेइतिमेदिनी मंकुरइत्यपिकेचित्॥आदर्शः आदृश्यतेरूपमत्र दृशिरप्रेक्षणे आदर्शोदर्पणेटीकाप्रतिपुस्तकयोरपि शोणिदर्पणस्यआरसाइतिख्या०॥व्यजनं व्यजत्यनेन वायुरितिशेषः अजगतिक्षेपणयोः

प्रसाधनीकंकतिकापिष्टातःपटवासकः १३९ दर्पणेमुकुरादर्शौव्यजनंतालवृंतकम्॥ इतिमनुष्यवर्गः संततिर्गोत्रजननकुलान्यभिजनान्वयौ॥

तालवृंतकं तालस्येववृंतमस्य तालेकरतलेवृंतमिवबंधनमस्यवा वृंतंप्रसवबंधेस्याद्वृत्धाराकुचाग्रयोरितिविश्वः द्वे तालपत्रादिनिर्मितस्यव्यजनस्य इतिमनुष्यवर्गः संततिः संतन्यते तनुविस्तारे॥ गोत्रं गूयते गुङ्शब्दे॥जननं जन्यते जनीप्रादुर्भावे जनजननेवा कर्मणिल्युट् जननंवंशजन्मनोः॥ कुलं कूयते कुङ्शब्दे बाहुलकात्लक् कोलयति कुलसंस्त्याने इगुपधेतिकः कुंभूमिंलातिवा कोलायतेवा लीङ्श्लेषणे अन्येभ्योपीतिडः कुलंजनपदेगोत्रेसजातीयगणेपिच भवनेचतनौक्लीबंकंटकार्योषधौकुली॥ अभिजनः अभिजन्यते भवेदभिजनःख्यातौजन्मभूम्यांकुलध्वजे इत्यनेकार्थात्॥अन्वयः अन्वीयते ईङ्गतौ इणगतौवा॥

वंशः उश्यते वशाकानो कर्मणिघञ् शुभाशुभनियोगविभागान्नुम् यद्वा धन्यते वनसंभक्तौ बाहुलकान्शः वंशोयणमकुलनंगपृष्ठाद्यवयवः।णनेतिविश्वमेदिन्यौ अन्ववा
यः अन्ववायते अयगतौ॥संतानः संतन्यते कर्मणिघञ् कर्तृकरणाधिकरणेष्वपिविग्रहः संभवति॥वर्णः वर्ण्यते वर्णयतिवा वर्णोद्विजादिशुक्लादियशोगुणकथासु
च स्तुतौनानाक्रियाभेदरूपाक्षरविशेषण इतिविप्रादिवर्णाःस्युः एवं १ विप्रश्चक्षत्रियश्चविट्चशूद्रश्चचत्वारएववर्णाः॥राजबीजी राज्ञोबीजियितुंशीलमस्य यद्वा रा
ज्ञोबीजमस्यास्ति॥राजवंश्यः राजवंशेसाधुः द्वे राजवंशोत्पन्नस्यनामनी॥बीज्यः बीज्यते यद्वाबीजमस्यास्ति अन्यथापिदृश्यतइतियप् बीजेभवः साधुर्वा कुलसंभवः
कुलेसंभवति कुलेसंभवोऽस्यवा यद्वा कुलंसंभावनत्यस्मात् सत्कुलसंभवस्यद्वेनामनी २ महाकुलः महच्चतत्कुलंच महाकुलं तस्यापत्यं महाकुलादञ्खञौ इत्यञिअ

वंशोन्ववायःसंतानोवर्णाःस्युर्ब्राह्मणादयः १ विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिदंस्मृतं॥राजबीजीराजवंश्योबीज्यस्तुकुलसंभवः २
महाकुलकुलीनार्यसभ्यस्तज्जनसाधवः॥ ब्रह्मचारीगृहीवानप्रस्थोभिक्षुश्चतुष्टये ३ द्विरुद्धोमाहाकुलः ह्रस्वआग्रमोविग्रहः महत्कुलमस्येतिवा॥कु

लीनः कुलेभवः कुल्यंस्यात्कीकसेप्यष्टद्रोणीसूर्याभिधेषुच॥कुल्यापयःप्रणाल्यांचनद्यांजीवंतिकौषधौ कुलोद्भवेकुलहितेत्रिषुमान्येपुनःपुमान् आर्यः आर्यते ऋगतौ
॥सभ्यः सभायांसाधुः॥सज्जनः सन्चासौजनश्च॥साधुः साध्नोतिधर्मंसाध संसिद्धौ साधुर्वार्धुषिकेचारेसज्जनेचाभिधेयवत् षट्कुलीनस्यना०॥ब्रह्मचारी ब्रह्म
वेदः तदध्ययनार्थंव्रतमपिब्रह्म तच्चरितुंशीलमस्य यद्वा ब्रह्मतपोज्ञानंवाचरतीति॥गृही गृहाः दाराः संत्यस्य॥वानप्रस्थः वनमेवप्रस्थो वनस्यवाप्रस्थःप्रदेशः वनप्र
स्थेभवः॥भिक्षुः भिक्षणशीलः भिक्षयांच्याचायां॥ अन्नभिक्षुः यतिः इत्याश्रमाणांचतुष्टयम् ३ ५ ६

आश्रमः आसमंतात्श्रमोस्त्वधर्मे साधनक्लेशःती आश्रमोब्रह्मचर्यादौवानप्रस्थेवनेस्त्रियामितिविश्वमेदिन्यौ इत्येकं ॥ द्विजातिः द्वेजातीजन्मनीयस्य मातुरग्रेविजन नंद्वितीयंमौंजीबंधनात् द्विजातिर्विप्रांडजयोश्चपुल्लिंगकः। अग्रजन्मा अग्रेआदौजन्मयस्य अग्रात्सऽस्वाद्वाजन्मास्य अग्रजन्माद्विजेश्रेष्ठेभ्रातरिब्रह्मणिस्मृतः इतिविश्वः॥ भूदेवः भुवोभुविवादेवः॥ वाडवः वडवाद्विजयोषितीतिमेदिनी वडवाः कुंभदास्यश्वस्त्रीविशेषाद्विजन्मनामितिरभसः वडवायांजातः वाडआप्लावे वाडंवातिवा वाडवंकरणेस्त्रीणांघाटिकौघेनपुंसकम् पातालेनास्त्रियांपुंसिप्रस्रावेवडवानलेइतिविश्वमेदिन्यौ ॥ विप्रः विप्राति प्रापूर्तौ विपतिवा विपक्षेपे॥ ब्राह्मणः ब्रह्माधीते ब्रह्मज्ञानंवावेत्ति॥ षट्कर्मा षट्कर्माणियस्य कर्माण्युच्यंते इज्याध्ययनदानानियाजनाध्यापनेतथा प्रतिग्रहश्चतैर्युक्तः षट्कर्माविप्रउच्यतेइ

**आश्रमोस्त्रीद्विजात्यग्रजन्मभूदेववाडवाः विप्रश्चब्राह्मणोऽसौषट्कर्मायागादिभिर्युतः ४ विद्वान्विपश्चिद्दोषज्ञःसन्सुधीःकोविदो बुधः॥ धीरोमनीषीज्ञःप्राज्ञः संख्यावान्पंडितः कविः ५**

त्येकं षट्ब्राह्मणस्य यज्ञादिभिःषट्कर्मास्यात्॥४॥ विद्वान् विदज्ञाने विद्वान्ज्ञानिनिधी रेस्त्वविद्वानध्यात्मवेदकः इतिधरणी॥ विपश्चित् विप्रकृष्टंनिश्चिनोतिचिंतयतिवा॥ दोषज्ञः दोषंजानाति सन् असभुवात्प्रत्ययः सन्साधौधीरशस्तयोः मान्येसत्येविद्यमानेत्रिषुसाध्वमुनयोःस्त्रियां॥ सन् साधुः॥ सुधीः सुष्ठुध्यायति ध्यैचिंतायां॥ कोविदः कुङ्शब्दे विद्गुणः कोर्वेदस्यविदइत्याद्यूह्यं॥ बुधः बुध्यते बुध ज्ञाने बुधोबुद्धिज्ञपंडिते॥ धीरः धियंराति रादाने धियंईरयतिवा ईरगतौ धीरोधैर्यान्वितेस्थैर्येबुधेक्लीबंतुकुंकुमे॥ मनीषी मनीषाअस्यास्ति॥ ज्ञः जानाति ज्ञोऽवबोधविद्वत्सु॥ प्राज्ञः प्रज्ञायस्यास्ति प्राज्ञस्तुपंडितेवाच्यलिंगोबुद्धौतुयोषितिइतिमेदिनी॥ संख्यावान् संख्याविचारणास्त्यस्य॥ पंडितः पंडःशंडे धियिस्त्रीस्यात् पंडयते नया पडिगतौ पंडासंजाताऽस्य॥ कविः कवते कौतिवा कुङ्शब्दे कुशब्दे अचइः कविर्वाल्मिकिकाव्ययोः सूरौकाव्यकरेपुंसिस्यात्खलिनेतुयोषिति ५

धीमान् धीरस्तियस्य धीमान्पंडितेचबृहस्पती॥सूरिः सूते सूयते षूङ्‌प्राणिगर्भविमोचने षूङ्‌प्रसवे सूरोःकर्हलयोः पुंसि सूरः सूर्य उपास्योयस्यास्ति अत्रप क्षेड्न्तंतः सरी इति॥कृती प्रशस्तंकृतंकर्मास्य कृतमनेनवा॥कृष्टिः कर्षति कृषविलेखने॥लब्धवर्णः लब्धः वर्णः स्तुतिर्येन॥विचक्षणः चक्षिङ्‌व्यक्तायांवाचि॥दूर दर्शी दूरान् दूराद्वापश्यति दृशिरप्रेक्षणे॥दीर्घदर्शीतथैव इतिपंडितस्य द्वाविंशतिनामानि॥श्रोत्रियः छंदोधीतेइत्यर्थेनिपातनम्॥छांदसः छंदोधीतेवेत्ति वा तदधीतेतद्वेद इसंपूर्णशाखाध्यायिनः ६ उपाध्यायः उपेत्यअधीयतेऽस्मात्॥अध्यापकः अध्यापयते॥निषेकादिकृत् निषेकोगर्भाधानं आदिशब्देनपुं सवनादिकंतस्यकर्ता पित्रादिः॥गुरुः गिरत्यज्ञानं गॄशब्देनिगरणेवा निषेकादीनिकर्माणियः करोतियथाविधि सविप्रोगुरुरुच्यते इत्येकं॥मंत्रव्याख्याकृत् मं

धीमान्सूरिः कृतीकृष्टिर्लब्धवर्णोविचक्षणः॥ दूरदर्शीदीर्घदर्शीश्रोत्रियच्छांदसौसमौ ६ उपाध्यायोऽध्यापकोऽथस्यान्निषे कादिकृद्गुरुः॥मंत्रव्याख्याकृदाचार्यआदेष्टात्वध्वरेव्रती ७ यष्टाचयजमानश्चससोमवतिदीक्षितः॥इज्याशीलोयायजूकोयज्वा तुविधिनेष्टवान् ८

त्रस्यवेदस्यव्याख्यानंकरोति॥आचार्यः चरगतौ ण्यत् व्याख्यानलक्षणंतु पदच्छेदः पदार्थोक्तिर्विग्रहोवाक्ययोजना आक्षेपोऽ थसमाधानंच व्याख्यानंपंचलक्षणं उपनीयतुयः शिष्यंवेदमध्यापयेद्द्विजः सांगंचसरहस्यंचतमाचार्यंप्रचक्षते॥आदेष्टा ऋत्विजः यागेइष्टसंपादनायप्रेरयति दिशअतिसर्जने सव्रती व्रतेभोजनादिनियमोऽस्यास्ति यद्वा व्रतयतीति ७ यष्टा यजते तृच्प्रत्ययः॥यजमानः यजेःशानच् सः सोमवतियज्ञेदीक्षितः दीक्षासंजाताअ स्य इत्येकं॥ईज्याशीलः ईज्याशीलमस्य ईज्यांशीलतिशीलयतिवा॥यायजूकः पुनः पुनः भृशंयजते इयजनशीलस्य॥ विधिनायः इष्टवान् सः यज्वा एकं॥ ८ ॥

गीष्पतीष्ट्याबृहस्पतिसवनयागेनइष्टवान् सः स्थपतिरित्येकं॥सोमपीथी सोमपीतमस्यास्ति॥सोमपः सोमंपिबति आतोनुपसर्गेकः दीर्घपाठेक्किप् हेसोमयाजिनः स
र्वस्वंदक्षिणायत्रविश्वजिदादौसयेनेष्टः हृतः सः सर्ववेदाः सर्ववेत्ति विदलाभे ९ अनूचानः सांगेशिक्षाद्यंगोपेतेप्रवचनेवेदे अधीतीव्याकरणेइतिवत् क्तस्येन् विषय
स्यकर्मण्युपसंख्यानंइतिसप्तमी अधीतीकृतानुज्ञोनूचानइत्येकं अनुज्ञाविनाध्ययनासंभवात्कृतानुज्ञइतिद्रष्टव्यम्॥गुरोःसकाशात्गृहस्थाद्याश्रमांतरप्राप्तयेल
ब्धानुज्ञाआज्ञायेनससमावृत्तः समावर्ततेस्म गुरुकुलवासान्निवृत्तस्येकं॥अभिषवेअवभृथेकृतेसत्वास्यात् एकनाम १० छात्रः गुरुदोषाच्छादनंछत्रंतच्छीलम

सगीष्पतीष्ट्यास्थपतिःसोमपीथीतुसोमपाः॥सर्ववेदाःसयेनेष्टोयागःसर्वस्वदक्षिणः ९ अनूचानःप्रवचनेसांगेधीतिगुरोस्तुयः॥ल
ब्धानुज्ञःसमावृत्तःसुत्वात्वभिषवेकृते १० छात्रांतेवासिनोशिष्येशैक्षाःप्राथमकल्पिकाः॥एकब्रह्मव्रताचाराःमिथःसब्रह्मचारि
णः ११ सतीर्थ्याएकगुरवश्चिक्तवानग्निमग्निचित्॥पारंपर्योपदेशेस्यादैतिह्यमितिहाव्ययम् १२

स्य शीलमित्यनुवर्तमानेछत्रादिभ्योणइ
तिणप्रत्ययः अंतेवासी अंतेसमीपेवस्तुंशीलमस्य॥शिष्यः त्यलुक् अंतेवासीतुशिष्येपिचांडालेप्यंतगेपिचइतिहेमः शिष्यते शास्अनुशिष्टौ इतिन्नोणिशिष्य
स्यनाः॥शैक्षाः शिक्षायाःइमे यद्वा शिक्षांलभंतेते प्राथमकल्पिकाः प्रथमकल्पः आद्यारंभः प्रयोजनंयेषांते प्रयोजनमितिठक् यद्वाप्रथमकल्पंअधीयते विद्यालक्षण
कल्पांताच्चेतिठक् कल्पःशास्त्रेविधौन्याये इत्प्रथमारब्धवेदानां॥एकब्रह्मव्रताचाराः एकस्मिन्ब्रह्मणिव्रताचरणंयेषांते मिथः परस्परंसब्रह्मचारिणः समानंब्रह्मचरंति इ
तिएकं ११ सतीर्थ्याः समानेतीर्थेगुरौवसंति॥एकगुरवः एकोगुरुर्येषांते इत्येकं॥यः अग्निंचितवान्सःअग्निचित् चिञ्चयने इत्येकं॥पारंपर्योपदेशे परंपरायाआग
तः ततआगतइत्यणंतात् स्वार्थेष्यञ् पारंपर्यश्चासावुपदेशश्च॥ऐतिह्यं ह अव्ययं इतिहेतिनिपातसमुदायात्स्वार्थेज्यः १२

उपज्ञा यदाद्यं प्रथमं ज्ञानं सा उपज्ञा स्यात् एकं॥ ज्ञात्वा यः आरंभः क्रियते स उपक्रमः ज्ञानपूर्वक आरंभ इत्यर्थः एकं॥ यज्ञः ईज्यतेऽनेन वा यज देवपूजादौ यज्ञः स्यादा त्मनि मखे नारायणहुताशयोरिति हैमः॥ सवः सूयते सौ षूञ् अभिषवे॥ अध्वरः अध्वरति ध्वृ कौटिल्ये अध्वानं राति वा अध्वरः सावधाने स्याद्वसुभेदे क्रतौ पुमान् इ-त्यनेकम्॥ यागः ईज्यतेऽनेन करणे घञ्॥ सप्ततंतुः सप्तभिः छंदोभिः जिह्वाभिर्वा तन्यते॥ मखः मखंति देवा अत्र अनेन वा मख गतौ॥ क्रतुः करोति क्रियते वा क्रतु-र्यज्ञे मुनौ पुंसि इत्यनेकत्वात् इति सप्त यज्ञस्य नामानि १३ पाठः पठनं पाठनं वा पाठश्च पठने ख्यातो हृद्यू कण्यां तु योषिति इति विश्वः॥ होमः हवनं॥ अतिथीनामद्य पूर्वाणां गृहागतानां सपर्या पूजा॥ तर्पणं तृप प्रीणने॥ बलिः बलिहरणं बलिर्दैत्योपकारयोः करे चामरदंडे च गृहदारुप्रकारांशयोरिति हैमः तदेवं स्वधाक्रियते विधिना

उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारंभ उपक्रमः॥ यज्ञः सवोऽध्वरो यागः सप्ततंतुर्मखः क्रतुः १३ पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः
एते पंच महायज्ञा ब्रह्मयज्ञादिनामकाः १४ समज्या परिषद्गोष्ठी सभा समिति संसदः॥

वेदाध्ययनं स ब्रह्मयज्ञः॥ होमः वैश्वदेवः स देवयागः॥ अतिथिपूजनं स मनुष्ययज्ञः॥ तर्पणमन्नोदकादिना तृप्तिकरणं स पितृयज्ञः॥ बलिः बलिहरणं स भूतयज्ञः॥ मनुः अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनं एते ब्रह्मयज्ञादिनामकाः ब्रह्मयज्ञः आदिर्येषां तानि ब्रह्मयज्ञादीनि नामानि येषां ते १४ समज्या समजंत्यस्यां अज गतौ॥ परिषत् परितः सीदंत्यस्यां षद्लृ विशरणादौ षत्वं सदिरप्रतेरिति शास्त्रेणेति॥ गोष्ठी गावोऽनेका वाचस्तिष्ठंत्यस्यां॥ सभा सह भांत्यस्यां भा दीप्तौ सभा सामाजिके गोष्ठ्यां द्यूतमंदिरयोरपि॥ समितिः समानामितिर्मिलनं यस्यां सपक्ष इतिवत् योगविभागात् सादेशः॥ संसत् संसीदंत्यस्याम्॥ ७ ७

आस्थानी अतिष्ठंतिर्मान्चति अंचुगतिपूजनयोः आस्थानंपूर्वक्लीबे नपुंसकेसदःसांतं स्त्रीलिंगेतुसदाः १५ प्राग्वंशः हविर्गेहात्प्राक्पूर्वस्मिन्प्रदेशेसदस्यादीनां-यद्गृहंसप्राग्वंशइत्येकं ॥ यज्ञशालायाः पूर्वपश्चिमस्तंभयोरर्पितंदीर्घकाष्ठंप्राग्वंशइतिकश्चित् ॥ वेदोक्तविधिनाविपश्यंतियेतेसदस्याः सदसिसाधवः यद्वा विधिंद्रष्टुंशीलंयेषां ॥ सभासदः सभायांसीदंति सत्सूद्विषेतिक्विप् ॥ सभास्तारः सभांस्तृणंति स्तृञ्आच्छादने ॥ सभ्याः सभायांसाधवः तेसामाजिकाः समाजंरक्षंति इतिच-त्वारिसभ्यनामानि १६ अध्वर्युः अध्वरंइच्छतिचरतिवायातिवायजुः यजुर्वेदवित्अध्वर्युः अध्वरशब्दात्क्यच् ततः क्याच्छंदसि ॥ उद्गाता उद्गायतिसाम गैशब्दे।

**आस्थानीक्लीबमास्थानंस्त्रीनपुंसकयोःसदः १५ प्राग्वंशःप्राग्घविर्गेहात्सदस्याविधिदर्शिनः ॥ सभासदःसभास्ताराःसभ्याःसामाजिकाश्चते १६ अध्वर्यूद्गातृहोतारोयजुःसामर्ग्विदःक्रमात् ॥ आग्नीध्राद्याधनैर्वार्याऋत्विजोयाजकाश्चते १७ वेदिःपरिष्कृताभूमिः समेस्थंडिलचत्वरे ॥**

सामवित् उद्गाता ॥ होता जुहोति ऋग्वेदवित् होताइतिक्रमेण ॥ आग्नीध्राः अग्नींधे इंधिदीप्तौ ॥ धनैर्वार्याः यज्ञकर्मार्थंधनादिदत्वावरणीयायेआग्नीध्राद्याः आग्नीध्र आद्यायेषांब्रह्मोद्गातृहोत्रध्वर्यादयः षोडश ॥ ऋत्विजः ऋतौयजंति ॥ तेयाजकाः यजंतितेः इताः कुर्वंतियेयज्ञमृत्विजोयाजकाश्चते १७ वेदिः विद्यतेशोधनेन ज्ञायतेविचार्यते प्राप्यतेवा यद्वा वेदयति वेद्यतेवा विदनिंवासादौ वेदिःस्यात्पंडितेपुमान् ॥ परिष्कृता परितः कृतापरिष्कृता भूमिः वेदिःस्यात् एकं ॥ स्थंडिलचत्वरेसमे स्थलंत्यस्मिन् चलंत्यस्मिन् ॥

चषालः चषते चषभक्षणे॥ यूपकटकः यूपस्यशिरसिवलयाकारकाष्ठविकारः चषालः स्यात्॥ कुंबा कुंब्यते॰नया कुबिच्छादने यागभूमावंत्यजादिदर्शनवारणाय सुगहनावृतिर्वेष्टनंकुंबास्यात् एकंस्त्रियां १८ यूपाग्रं यूपस्यअग्रं॥ तर्म तरति मनिन्॥ निर्मंथ्यदारुणि मथ्यते मंथविलोडने निर्मंथ्यंचतद्दारुच॥ अरणिः ऋच्छति ऋगतिप्रापणयोः अरणिशब्दः स्त्रीपुंसयोः अरणिर्वन्हिमंथनेनाहूयोर्निर्मंथ्यदारुणि एकं॥ दक्षिणाग्निः दक्षिणः अग्निः॥ गार्हपत्यः गृहपतिनासंयुक्तः॥ आहवनीयः आहूयते प्रीण्यते प्रक्षिप्यतेवाहविरत्र यद्वा आहवनमर्हति गार्हपत्यश्चआहवनीयश्च एतेअग्नयस्त्रयः १९ अग्नित्रयमिदंत्रेताइत्येकं त्रित्वं इतात्रेतास्त्रीलिंगे त्रेतायुगेग्नित्रितयेइतिहैमः प्रणीतः प्रकर्षेणनीतः॥ मंत्रादिनासंस्कृतो॰नलो॰ग्निः प्रणीतः एकं॥ समूह्यः समूह्यते वहप्रापणे ऊहवितर्के॥ प॰

चषालोयूपकटकः कुंबासुगहनावृतिः १८ यूपाग्रंतर्मनिर्मंथ्यदारुणित्वरणिर्द्वयोः॥ दक्षिणाग्निर्गार्हपत्याहवनीयौत्रयोग्नयः १९ अग्नित्रयमिदंत्रेताप्रणीतःसंस्कृतोनलः॥ समूह्यःपरिचाय्योपचाय्यावग्नौप्रयोगिणः २० योगार्हपत्यादानीयदक्षिणाग्निःप्रणीयते॥ तस्मिन्नानाय्यो॰थाग्नायीस्वाहाचहुतभुक्प्रिया २१

रिचाय्यः परिचीयते॥ उपचाय्यः उपचीयते एतेत्रयःअग्नौप्रयोगिणः प्रयोगोस्त्येषांते अग्निधारणार्थेस्थंडिलविशेषेप्रयुक्ताः २० गार्हपत्यात् आनीय उद्धृत्य दक्षिणाग्निःप्रणीयते प्रवेश्यते तत्रआनाय्य उच्यते आनाय्यः आनीयतेसौ॥ अथ आग्नायी॥ स्वाहा॥ हुतभुक्प्रिया॥ आग्नायी अग्नेः स्त्री॥ स्वाहा सुष्ठुआहूयंतेदेवा अनया॥ हुतभुक्प्रिया इतिस्त्रीत्रयमग्नेः॥ स्वाहाशब्दस्याव्ययत्वंन कुतः द्रव्यवाचकत्वात् अतएव स्वाहांतुदक्षिणेपार्श्वे इतिप्रयोगः संगच्छते २१ ७ ७ ७

सामिधेनी अग्निसमिंधनेसमित्प्रक्षेपणवन्हिज्वलनेयाऋक् प्रयुज्यते सासामिधेनी॥ सैवधाय्याचस्यात्॥ गायत्रीप्रमुखंछंदःस्यात् तत्रछंदांसिउच्यंते गायत्री उष्णिक् अनुष्टुप् बृहती पंक्ति त्रिष्टुप् जगती इतिच्छंदांसि॥ छंदः चदिआल्हादने॥ हव्यपाके पच्यते पाकः हव्यस्यपाकोयस्मिन् तत् अग्निमुखेहूयमाने ऽन्नेचरुरित्येकं चर्यते भक्ष्यते चरगतौभक्षणेवा चरुर्हव्यांतभांडयोरितिमेदिनी विश्वप्रकाशेतु चरुर्भांडेचहव्यान्ने २२ आमिक्षा आमिष्यते मिषुसेचने॥ शृतोष्णे शृतंपक्वंचतदुष्णंचतस्मिन् क्षीरेपयसिदधियोगतः याविकृतिः साआमिक्षास्यात् एकं॥ धवित्रं धूयतेऽनेन धूञ्कंपने धूञ्विधूननेवा॥ मृगचर्मणा रचितंयत् व्यजनंतद्धवित्रं वीज्यतेऽनेन अग्नेः संधुक्षणार्थमृगत्वचारचितस्यव्यजनस्येत्येकं २३ पृषदाज्यं पर्षति पृष्यतेवा पृषुसेचने पृषद्भिः स

**ऋक्सामिधेनीधाय्याचयास्यादग्निसमिंधने॥ गायत्रीप्रमुखंछंदोहव्यपाकेचरुःपुमान् २२ आमिक्षासाशृतोष्णेयाक्षीरेस्याद्दधियोगतः॥ धवित्रंव्यजनंतद्यद्रचितंमृगचर्मणा २३ पृषदाज्यंसदध्याज्येपरमान्नंतुपायसं॥ हव्यकव्येदैवपित्र्येअन्नेपात्रंस्रुवादिकं २४**

हितेदध्नासहितेघृतेपृषदाज्यं पृषातकंसदध्याज्येपृषदाज्यंतदुच्यते एकंदधिमिश्रितघृतस्य॥ परमान्नं परमंचतदन्नंच यद्वा परमानामन्नंपायसंस्यात् पयसिसंस्कृतं पायसंपरमान्नके इतिहैमः द्वे॥ हव्यकव्ये॥ हव्यं हूयतेप्रीण्यंतेदेवायेन हूयतेप्रक्षिप्यतेवा हुदानादनयोः॥ कव्यं कूयतेपितृभ्यः कुशब्दे देवान्नंहव्यं पित्रन्नंकव्यं॥ दैवपित्र्येदेवपितृसंबंधिनिअन्नेक्रमेणहव्यकव्येस्यातां पैत्रमित्यपिपाठः नस्येदमित्यण्॥ पितरः देवताः यस्य अन्नपक्षेयत्प्रत्ययः देवान्नंहव्यं पित्रन्नंकव्यं॥ पात्रं पाति पिबंत्यनेनवा पात्रमन्नेत्रिषुक्लीबंस्रुवादौराजमंत्रिणि तीरद्वयांतरेयोग्यइस्रुक्त्वात्॥ स्रुवः स्रवतिघृतादिकं स्रुस्रवणे सः आदिर्यस्यतत् आदिशब्देनचमसोलूखलादिभवेत् स्रुवोहेमपात्रेगल्लुकीमूर्खयोः स्त्रियामित्यक०७४

ध्रुवा ध्रुवति ध्रुवस्थैर्ये पाठांतराभिप्रायं ध्रुवः शंकौ हरे विष्णौ वटे चोत्तानपादजे वृक्षयोगभिदोः पुंसि ध्रुवं खे जस्रतर्कयोः स्थिरं नित्ये निश्चिते च ध्रुवं क्लीबं प्रकीर्तितम्
इत्यक्लृप्तत्वात्॥ उपभृत् उपबिभर्ति॥ जुहूः जुहोति स्रुग्निर्गाभिं जुहोतीनां हूश्चेति क्विप् दीर्घश्च एते त्रयः स्रुचो भेदाः स्रुक् स्त्रीलिंगे स्रुवस्तु नापुल्लिंगे॥ स्रुवः स्रवति स्रुवः॥
उपाकृतः उपाक्रियते कृञ् हिंसायाम्॥ उपाकृतोऽध्वरे हते पशौ नोपद्रुते त्रिषु इति विश्वमेदिन्यौ॥ अभिमंत्र्य अभितः मंत्रयित्वा मत्रि गुप्तभाषणे॥ हतः हंतुमारब्धः
एवं क्रतौ अभिमंत्र्य हतः पशुः उपाकृतः स्यात् २५ परंपराकं परंपराया अकं अक कुटिलगतौ यद्वा परमित्यव्ययमतिशये परंपरः श्रेष्ठः आकोऽस्यादिति॥ शम
नं शमु उपशमे भावे ल्युट् शमनः श्राद्धदेवे ते इति विश्वमेदिन्यौ॥ शमनं तु यमे श्राद्धे शमनं शांतिसिंह्योरिति हैमः॥ प्रोक्षणं प्रपूर्वः उक्षणं उक्ष सेचने प्रोक्षणं से

ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः॥ उपाकृतः पशुरसौ योऽभिमंत्र्य क्रतौ हतः २५ परंपराकं शमनं प्रोक्षणं च वधार्थकम्॥ वाच्यलिंगाः प्र
मीतोपसंपन्नप्रोक्षिता हते २६ सान्नाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम्॥ दीक्षांतोऽवभृथो यज्ञे तत्कर्मार्हं तु यज्ञियम् २७ क्कवधयोरिति हैमः त्रयं वधा

र्थकं वधो हिंसार्थोऽस्य त्रीणि यज्ञार्थपशुहननस्य॥ प्रमीतोपसन्नः प्रमीयते स्म मीञ् हिंसायां उपसंपद्यते स्म पद गतौ प्रमीतं वाच्यलिंगं स्यात् प्रोक्षितेऽपि मृतेऽपि चेति-
विश्वः॥ प्रोक्षितः प्रोक्ष्यते स्म उक्ष सेचने प्रोक्षितं निहिते सिक्त इति रभसः प्रमीतोपसंपन्नप्रोक्षिताः वाच्यलिंगाः स्युः त्रीणि यज्ञे हतस्य पशोः २६ सान्नाय्यं सन्नीयते
णीञ् प्रापणे॥ हविः हूयते हविर्विशेषः सान्नाय्यं स्यात् द्वे अग्नौ हुतं प्रक्षिप्तं आज्यादि वषट्कृतं वषडिति मंत्रोपलक्षणं वषट्मंत्रेण कृतं प्रक्षिप्तं द्वे हुतस्य॥ अवभृ
थः अवभ्रियतेऽनेन भृञ् भरणे॥ दीक्षांतः दीक्षायाः अंतः प्रधानकर्मसमाप्तौ क्रियमाणो यज्ञः इष्टिपूर्वकः स्नानविशेष इत्येकं॥ तत्कर्मार्हं तस्य यज्ञस्य कर्म क्रि
यामर्हति यज्ञमर्हति एवं क्रतुक्रियासंपादनयोग्यस्य हि जद्रव्यादेः त्रिषु २७

अथ क्रतुकर्म क्रतुश्चयज्ञः कर्मचदानानि इष्टशब्दवाचकंवाच्यंस्यात् बहुव्रीहिर्वास्यात् इष्टंयोगेचवांछिते एकाग्निकर्महवनंत्रेतायांयच्चहूयते अंतर्वेद्यांचय-
द्दानंइष्टंतदभिधीयते इतिमनुः॥इष्टमाशांसितेपिस्यात्पूजितेप्रेयसित्रिषु समंततोसुमान्क्लीबसंस्कारेक्रतुकर्मणि एकं॥खातादि पुष्करणीखननमादिर्यस्यदे
वालयारामादिनिर्माणं तत्कर्मक्रिया तस्मिन्पूर्तंस्यात् पूर्यतेस्म पॄपालनपूरणयोः पुष्करिण्यःसभावापीदेवतायतनानिच आरामश्चविशेषेणपूर्तकर्मविनि
र्दिशेत् इतिमनुः पूर्तंत्रिषुपूरितेस्यात्क्लीबंखातादिकर्मणि एकं॥अमृतं अमृतमिव अमृतसाधनत्वात्॥विघसः विशिष्टैरद्यते अदभक्षणे अमृतंयज्ञशे
षेस्यात्पीयूषेसलिलेघृते अयाचितेचमोक्षेचनाधन्वंतरिदेवयोः यज्ञशेषभोजनशेषयोः यज्ञस्यशेषोहोमावशिष्टाज्यपुरोडाशादि देवपित्रतिथिगुर्वादिभुक्तस्य

त्रिष्वथक्रतुकर्मेष्टंपूर्तंखातादिकर्मयत्॥अमृतंविघसोयज्ञशेषभोजनशेषयोः २८ त्यागोविहापनंदानमुत्सर्जनविसर्जने॥विश्राणनंवितर
णंस्पर्शनंप्रतिपादनं २९ प्रादेशनंनिर्वपणमपवर्जनमंहतिः॥मृतार्थंतदहेदानंत्रिषुस्यादौर्ध्वदेहिकं ३०

शेषः तयोः क्रमेणैकैकं २८ त्यागः त्यजनं
॥विहापनं॥दानं दानंगजमदेत्यागेपालनेदेशशकदूपु इतिविश्वंमेदिन्यौ विसर्जनंपरित्यागेदानेसंप्रेषणेपिचेतिहेमः॥उत्सर्जनं॥विसर्जनं॥विश्राणनं॥वितरणं॥
स्पर्शनं स्पर्शनोमारुतेपुंसि इतिविश्वः॥प्रतिपादनं प्रतिपादनंतुदानेप्रतिपत्तौप्रबोधनेइतिविश्वः २९ आदेशनं दिशअतिसर्जने॥निर्वपणं निःपूर्वकात्वपतेर्भावे
ल्युट्॥अपवर्जनं वृजीवर्जने॥अंहतिः हंतिदुरितमनया. अंहतिस्त्यागरोगयोरितिहेमः त्रयोदशनामानिदानस्य॥मृतार्थं मृतायइदं॥तदहे तच्चतद्देहश्च तस्या
हरितिवा॥तदहेप्रेतदिनेऔर्ध्वदेहिकं देहादूर्ध्वं ऊर्ध्वदेहः ऊर्ध्वदेहेभवं प्रेतमुद्दिश्यमरणदिनमारभ्यसपिंडीकरणपर्यंतंप्रत्यहंदीयमानस्यजलपिंडादेरित्येकं तत्त्रिषु ३०

पितृदानं पितृभ्योदानं॥ निवापः न्युप्यते निवपनंवा द्वेनामनीसपिंडीकरणादूर्ध्वंपित्रुद्देशेनदानस्य॥ शास्त्रतः शास्त्रविधानेन॥ तत्कर्म तेषांकर्म॥ श्राद्धं श्रद्धाऽऽस्ति प्रज्ञाश्रद्धेतिणः॥ अन्वाहार्यं अनुआन्हीयने ह्ञ्हरणे॥ मासिके मासेभवं पिंडान्वाहार्यकंश्राद्धंकुर्यान्मासानुमासिकमितिमनुवचनं द्वेपंचदशमुहूर्तात्मकस्यदिनस्याष्टमांशः भागः कुतुपः स्यात् कुत्सितंतपति तपसंपाते यद्वा कुंभुवंतपति दिवसस्याष्टमेभागेमंदीभवतिभास्करः सकालः कुतुपोज्ञेयः पितृणांदत्तमक्षयं कुतुपोस्त्रियांदोहित्रेवाद्येछागजबले कुशेदिनस्याष्टमांशेनास्त्र्येकुतुपीपुनः इत्येकं ३१ पर्येषणा परीष्टिः परेर्वाइनियुजभावेक्तिन् परी-

पितृदानंनिवापःस्याच्छ्राद्धंतत्कर्मशास्त्रतः॥ अन्वाहार्यंमासिकेंशोऽष्टमोऽन्हः कुतुपोस्त्रियां ३१ पर्येषणापरीष्टिश्चान्वेषणाच गवेषणा॥ सनिस्त्वध्येषणायाच्ञाभिशस्तिर्याचनार्थना ३२ षट्तुत्रिष्वर्घ्यमर्घार्थेपाद्यंपादायवारिणि॥ क्रमादातिथ्यातिथेयेअतिथ्यर्थेऽत्रसाधुनि ३३

ष्टिः परिचर्यायांप्राकाम्येऽन्वेषणेस्त्रियाभितिविश्वः॥ अन्वेषणा इषेरनिछायस्यैतिस्युच्॥ गवेषणा गवेषमार्गणेयुच् चत्वारिपर्याद्यन्वेषणस्यनामानि॥ सनिः षणुदानेइक्॥ तु अध्येषणा इषेर्युच् द्वेगुर्वाद्याराधनस्य॥ याच्ञा याचृयाच्ञायां॥ अभिशस्तिः शंसुस्तुतौयाचनेच अभिशस्तिःपुनर्लोकापवादेप्रार्थितेपिचेतिहेमः॥ याचना॥ अर्थना॥ एतच्चतुष्टयं अर्थयाच्ञायां॥ आगंतुपर्यन्ताः षट् अर्घार्थेजले॥ अर्घ्यं अर्घायइदं॥ पाद्यं पादायइदं॥ पादार्घाभ्यांचेतिनादर्थ्येयत् एकेकं॥ आतिथ्यं अतिथयेइदं अतिथेर्ञ्यइतितादर्थ्येयत्॥ आतिथेयं अतिथौसाधु पथ्यतिथिइतिढञ् एकेकं अत्रसाधुनिअतिथ्यर्थे एतानिनामानिभवंति ३३

आवेशिकः अवेशंअगृहेभवः अध्यान्यादिः वेशोवेश्यागृहेःगृहे भैक्ष्यग्रामिणमतिथिंविप्रंसांगतिथिंतथा॥ आगंतुः आगच्छति॥अतिथिः पुल्लिंगे गृहागतेविप्रेएते शब्दाः भवंति अध्वनीनोःतिथिर्ज्ञेयः अतिथिः कुशपुत्रेस्यात्पुमानागंतुकेपिचेतिविश्वमेदिन्यौ दूराच्चोपगतंश्रांतंवैश्वदेवउपस्थिते अतिथिंतंविजानीयान्ना तिथिः पूर्वमागतइतिव्यासः॥प्राघुणिरस्त्वतिथिर्द्वयोः प्राणिगृहागतस्य तिथिपर्वोत्सवाः सर्वेत्यक्तायेनमहात्मना सोतिथिः सर्वभूतानांशेषानभ्यागतान्विदुः॥ प्राघूर्णिकः प्राघुणिकः॥अभ्युत्थानं तु गौरवं हेउत्थानपूर्वकसत्कारस्य ३४ पूजा पूजनं॥ नमस्या नमस्करणं॥ सपर्या सप रपूजायाम्॥ अर्चा अर्चपूजायां ॥अर्हणा अर्हपूजायां एताःसमाः षट्पूजानामानि॥वरिवस्या वरीवसशब्दः पूजार्थः क्यजंतादकारः॥शुश्रूषा शुश्रूषणं श्रुश्रवणे॥परिचर्या परिचरणं॥उपास

स्त्वावेशिकआगंतुरतिथिर्नागृहागते॥प्राघूर्णिकःप्राघुणिकश्चाभ्युत्थानंतुगौरवं ३४ पूजानमस्यापचितिःसपर्यार्चार्हणाःसमाः॥
वरिवस्यातुशुश्रूषापरिचर्याप्युपासना ३५ व्रज्याटाट्यापर्यटनंचर्यात्वीर्यापथेस्थितिः॥उपस्पर्शस्त्वाचमनमथमौनमभाषणम् ३६

ना आसउपवेशने॥ उपासनंशराभ्यासेप्युपास्तावासनेःपिचेतिविश्वमेदिन्यौ चत्वारिसेवायाः परिचर्यातु पसर्पेतिभागुरिः ३५ व्रज्या व्रजनं व्रजगतौ॥अटा अ टनं॥ अस्या॥ पर्यटनं अटापर्यटनंभ्रम इतिरत्नकोशः इतिचत्वारिपर्यटननामानि॥चर्या गदमदेतियत्॥तु ईर्या ईर्यते ज्ञायते ईरगतौ ण्यत् तस्याःप थाः ईर्यापथः ईर्या॥ पथेस्थितिः ईर्यापथेध्यानाद्युपायेपरिव्राजकानांस्थितेरेकं॥ उपस्पर्शः उपस्पर्शनं स्पृशसंस्पर्शे उपस्पर्शः स्पर्शमात्रेस्नानाचमनयोरपि ॥तु आचमनं चमुअदने यद्वा उपस्पृश्यंतेखान्यत्र आचम्यतेंभोत्र हेना०॥मौनं मुनेःकर्मभावोवा॥अ भाषणं भाषव्यक्तायांवाचि अभाषणस्यद्वे ३६

आनुपूर्वी पूर्वपूर्वंअनुइत्यनुपूर्वंभावः वर्णदृढादिभ्यष्यञ्चेतिष्यञ् षित्वात् ङीष् आनुपूर्वी स्त्रियांवानपुंसकमानुपूर्व्यं॥आवृत् आवर्तनं वृतुवर्तने संपदादिः॥ परिपाटी परिपाटनं पटगतौ ण्यंतादच्इः प्रगृह्यत्वात्संध्यभावः॥ अनुक्रमः अनुक्रमणं क्रमुपादविक्षेपे घञिनोदात्तोपदेशेतिनवृद्धिः परिपाटीअनुक्रमइत्यत्रद्विवचनत्वा
त्ययण्न॥ पर्यायः पर्ययणं पर्यायः प्रकारेवसरेक्रमइतिविश्वःसर्वाद्यायी पंचनामानिक्रमस्य॥ अतिपातः अतिक्रम्यपतनं पत्लृगतौ॥पर्ययः पर्ययणं इण्गतौ॥
उपात्ययः उपगतस्यातिक्रम्यायनं त्रीणिक्रमोल्लंघनस्य ३७ नियमः नियमनं नियमोयंत्रणायांचप्रतिज्ञानिश्चयेव्रते॥व्रतं व्रीयते हेव्रतमात्रस्य अस्त्रीपुंनपुंस
कयोः तच्च उपवासादि उपवासःआदिर्यस्य कृच्छ्रचांद्रायणप्राजापत्यनक्तभोजनादितदुपवासादिव्रतं पुण्यकर्मेष एकमुपवासादिविहितव्रतस्य॥ औपवस्तं उपवसनं

**आनुपूर्वीस्त्रियांवावृत्परिपाटीअनुक्रमः॥पर्यायश्चातिपातस्तुस्यात्पर्ययउपात्ययः ३७ नियमोव्रतमस्त्रीतच्चोपवासादिपुण्य**
**कं॥औपवस्तंतूपवासोविवेकःपृथगात्मता ३८ स्याद्ब्रह्मवर्चसंवृत्ताध्ययनर्द्धिरथांजलिः॥पाठेब्रह्मांजलिःपाठेविप्रुषोब्रह्मबिंदवः ३९**

वसस्तंभे भावेक्तांतात्प्रज्ञाद्यण् औपवस्त्रमितिपाठः नृजंतात्तस्येदमित्यण्॥ तु॥ उपवासः उपवसति उपवसनं वसनिवासे द्वे भोजनरहितस्य॥ विवेकः
विवेचनं विवेकःस्याज्जलद्रोण्यांपृथग्भावविचारयोः॥ पृथगात्मता स्यात् पृथक् आत्मास्वरूपंयस्यतस्य भावः प्रकृतिपुरुषादिभेदज्ञानस्य द्वेनामनी ३८
ब्रह्मवर्चसंवृत्ताध्ययनर्द्धिः स्यात् ब्रह्मणः वेदस्यतपसोवावर्चः वृत्तंसदाचारपालनं अध्ययनं गुरुमुखाद्वेदाक्षरग्रहणंतयोः ऋद्धिः द्वेनामनी॥ पाठे वेदपठन
कालेयः अंजलिः सब्रह्मांजलिः ब्रह्मणःअंजलिः पाठेवेदपठने येविप्रुषः मुखान्निर्गताजलबिंदवः तेब्रह्मबिंदवः ३९ ७ ७

ध्यानयोगासने ध्यानंप्रत्ययैकताननता योगश्चित्तवृत्तिनिरोधता यद्वा ध्यानस्ययोगउपायः ध्यानमेवयोगोवा तस्यआसनं स्वस्तिकसिद्धपद्मादि॥ब्रह्मासनं ब्रह्मणःसंबंधि आसनं एकं एकतानेनमनसास्मरणंध्यानमुच्यते चित्तवृत्तिनिरोधस्तुसद्भिर्योगइतिस्मृतः॥कल्पोविधिक्रमौ कल्पतेनेन कृपूसामर्थ्ये कल्पःशास्त्रेविधौन्यायेसंवर्तेब्रह्मणोदिने॥विधिः वेधनं विधविधाने विधिर्नानियतौकालेविधानेपरमेष्ठिनि॥क्रमः ज्ञेयमिदंनियोगशास्त्रस्य॥क्रमश्चानुक्रमेशक्तौकल्पेचाक्रमणेपिच॥ यःप्रथमःकल्पः आद्योविधिःसमुख्यःस्यात् एकं॥ततः मुख्यात्अधमः गौणः अनुकल्पःस्यात् ४० संस्कारपूर्वश्रुतेर्ग्रहणंउपाकरणंस्यात् उपाक्रियतेऽनेन वेदपाठारंभविधिविशेषस्य॥पादग्रहणं पादयोर्ग्रहणं स्पर्शः॥अभिवादनं अभिमुखीकरणार्थवंदनं यद्वा आभिमुख्येनवाद्यते आशीः कार्यतेऽनेन नामोच्चारणपूर्वकसंस्कृतप्रयोगेणनमस्कारस्य ४१

ध्यानयोगासनेब्रह्मासनंकल्पोविधिक्रमौ॥मुख्यःस्यात्प्रथमःकल्पोऽनुकल्पस्तुततोऽधमः ४० संस्कारपूर्वंग्रहणंस्यादुपाकरणंश्रुतेः॥समेतुपादग्रहणमभिवादनमित्युभे ४१ भिक्षुःपरिव्राट्कर्मंदीपाराशर्यपिमस्करी॥तपस्वीतापसःपारिकांक्षीवाचंयमोमुनिः ४२

भिक्षुः भिक्षणशीलः भिक्षयांन्याम् सनास्ता सभिक्षुः॥परिव्राट् सर्वंपरित्यज्यव्रजति व्रजगतौ क्विप्दीर्घश्च पदांतविषयेषत्वंच परिव्राजःषः पदांतेइति॥कर्मंदी कर्मंदेनप्रोक्तंभिक्षुसूत्रंतदधीते कर्मंदकृशाश्वादिनिः॥पाराशरी पाराशर्येणप्रोक्तंसूत्रंतदधीते पाराशर्येतिइनिः॥मस्करी मस्कगतौ मस्करोज्ञानंगतिर्वास्यास्ति यद्वा मस्करोवेणुदंडोयस्यास्ति इतिपंचसंन्यासिनः॥तपस्वी तपोस्यास्ति तपस्वीतापसोचानुकंप्येग्रीष्मेथयोषिति तापसः पूर्ववत् अण्प्रत्ययः॥पारिकांक्षी परिकांक्षितुंशीलमस्य कांक्षिकांक्षेपरिवर्जने यद्वा ब्रह्मज्ञानंकांक्षते श्रीणितपस्विनः॥वाचंयमः वाचंयच्छति यमउपरमे वाचियमोव्रतेइतिखश् वाचंयमपुरंदरौ॥मुनिः मन्यते मनज्ञाने मुनिःपुंसिवसिष्ठादौवंगसेनतरौजिने मौनव्रतिनिः ४२

तपः क्लेशसहः तपस क्लेशः सहते षह्मर्षणे तपः क्लेशस्यसहः अच ॥ दांतः दाम्यतिस्म दमुउपशमने गत्यर्थेतिक्तः दांतस्तु दमितेपिस्यात्तपःक्लेशसहेपिच ॥ वर्णिनः ॥ ब्रह्मचारिणः द्वेनामनी वर्णोस्यास्तीति मत्वर्थे इतितात्पर्यं ॥ ब्रह्मचारिणः ब्रह्मवेदाध्ययनव्रतंचरतितच्छीलोवा व्रतेस्तपीनिवाणिनिः ॥ ऋषयः ऋषंति जानंति ऋषीगतौ ऋषिर्वेदेवसिष्ठादौदीधितौचपुमानयं ॥ सत्यवचसः सत्यंवचोयेषांते द्वेसामान्यर्षिनामनी ॥ स्नातकस्तु स्नातिस्म ष्णाशौचे कसंज्ञायांकम् ॥ आप्लुवः आप्लवते प्लुङ्गतौ आप्लवव्रतीऔव्रती द्वेसमाप्तवेदव्रतस्यअन्याश्रमगतस्य ॥ गुरवेतुवरंदत्वास्नायाद्यानदनुज्ञया वेदव्रतानिवापारंनीत्वाह्युभयमेवच ४३ येनिर्जितेंद्रियग्रामाः इंद्रियाणांग्रामः निर्जितः इंद्रियग्रामोयैस्ते ॥ यतिनः यमुउपरमे भावेक्तःअतइनिः ॥ यतयः यतंते यतीप्रयत्ने एतेशब्दाः त्रयःनिर्जितसर्वेंद्रियस्य ॥ यः व्रतवशात्स्थंडि

तपः क्लेशसहोदांतोवर्णिनोब्रह्मचारिणः ॥ ऋषयःसत्यवचसः स्नातकस्त्वाप्लुवोव्रती ४३ येनिर्जितेंद्रियग्रामायतिनोयतयश्चते ॥ यः स्थंडिलेव्रतवशाच्छेतेस्थंडिलशाय्यसौ ४४ स्थाडिलश्चाथविरजस्तमसस्युर्द्वयातिगाः ॥ पवित्रः प्रयतः पूतः पाखंडाः सर्वलिंगिनः ४५

लेशते असौस्थंडिलशायि द्वेअनाश्रितभूमिशयनव्रतिनः ४४ चपरंस्थांडिलः स्थंडिलादिष्यण् ॥ विरजस्तमसः विगतेरजस्तमसीयेभ्यः ॥ द्वयातिगाः द्वयंअतिगच्छंति द्वेनिरस्तरजस्तमोगुणानां ॥ पवित्रः पवते पुनातिवा पूङ्पवने पवित्रंधर्षणेकुशे ना ऽम्बुपयसि चक्लीवंमध्येस्यादभिधेयवत् ॥ प्रयतः प्रयच्छतिस्म यत्न प्रयतने यतीप्रयत्ने ॥ पूतः पवतेस्म ॥ पूतंत्रिषुपवित्रेचशाटितेबहुलीकृते नामत्रयं ॥ पाखंडाः पाखंडयंति खंडिभेदने पालनाच्चत्रयीधर्मःपाशब्देननिगद्यते तंखंडयंतितेतस्मात्पाखंडास्तेनहेतुना ॥ सर्वलिंगिनः सर्वाणिचतानिलिंगानिच सर्वेषांलिंगानिवासंत्येषाम् ४५

व्रतेब्रह्मचर्ये आषाढः आषाढीपूर्णिमाप्रयोजनमस्य आषाढोव्रतिनांदंडेयासेमलयपर्वते ॥ पालाशः पलाशस्यविकारः पलाशादिभ्योवेत्यञ् ॥ दंडः ॥ रांभस्तुवे णवः रंभशब्दोवेणुवाचकः तस्यविकारः रंभाकदल्यप्सरसोर्नार्याचेणौवानरांतरे इतिविश्वहेमचंद्रौ वैणवइत्यपिएकंद्वेनामनीत्यर्थः अस्त्री स्त्रीभिन्नःशब्दः ॥ क मंडलुः कस्यप्रजापतेः जलस्यवामंडःसारः तंलातिलभाते मंडिभूषायां कस्यमंडंभूषांलातिवा ॥ कुंडी कुणशब्दे कुंडमस्याःअस्त्येमानभेदेदेवजलाशये कुंडीकमंड लौजारापतिवर्त्मेसतेपुमान् द्वेव्रतिनांजलभाजनस्य ॥ व्रतिनांयदासनं साबृसी ब्रुवंतः सीदंत्यस्यां पृषोदरादिः एकंब्रह्मचर्याद्यासनस्य ४६ अजिनं अजनि अ

पालाशोदंडआषाढोव्रतेरांभस्तुवैणवः ॥ अस्त्रीकमंडलुः कुंडीव्रतिनामासनंबृसी ४६ अजिनंचर्मकृत्तिःस्त्रीभैक्षंभिक्षाकदंबकं ॥
स्वाध्यायःस्याज्जपःसुत्याःभिषवःसवनंचसा ४७ सर्वैनसामपध्वंसीजप्यंत्रिष्वघमर्षणम् ॥ दर्शश्चपौर्णमासश्चयागौपक्षांतयोः
पृथक् ४८

ज्यतेवा अजगतो ॥ चर्म चरति चर्यतेवा चरगतौ ॥ कृत्तिः कृत्यते कृतीछेदने कृत्तिश्चर्मत्वचोर्भूर्जेकृत्तिकायांद्वयंस्त्रियाम् इतित्रीणिनामानि ॥ भैक्षं भिक्षाणांसमूहः भिक्षादिभ्योणर् तदेवभिक्षाकदंबकं ॥ स्वाध्यायः सुअतीवआवृत्या अध्ययनं यत् जपःस्यात् द्वेवेदाध्ययनस्य ॥ अभिषवः सवनं सासुत्या क्यप् सवनंत्वध्वरेस्नानेसोमनिर्दलनेपिच त्रीणिसोमलताकंडनस्य ४७ सर्वैनसांसर्वाणिएनांसिमानसादिपापानिध्वंसयितुंशीलंयस्यतदपध्वंसि ॥ जप्यं ज प्यतेतज्जप्यंऋगादितदघमर्षणं अघंमर्षयति मृषुसहने सहनमभिभवः यद्वा मृष्यति पक्षांतयोःअमावास्यापौर्णमास्योः पृथग्भिन्नौयागौ दर्शश्चपरंपौर्णमासश्च प्र

शरीरसाधनापेक्षंशरीरमात्रेणसाध्यंयत् नित्यंकर्मतत् यमः यच्छतिअनेन यमोन्यलिंगोयमजेनाकर्केशमत्तेशनौ शरीरसाधनापेक्षानित्यकर्मणिसंयमे शरीरमा
त्रेणसाध्यंयावज्जीवंकार्यं यत्कर्मअनित्यं नतुयावज्जीवंकर्तव्यं तत्तु आगंतुसाधनं आगंतुभिः कदाचित्कैः कामनयासमयविशेषादिभिः साधनैः साध्यं॥-
नियमस्तु उपवासस्नानजपादि शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधाः नियमाः ४९ यमस्तु अहिंसासत्यमस्तेयमिति दक्षिणेकरेप्रोत्धृतेसति यद्ब्रह्मसूत्रंतदुप
वीतंस्यात्॥प्रोत्धृतेबहिर्निष्कृतेसति ब्रह्मसूत्रं यज्ञसूत्रं यज्ञार्थंसूत्रंउपवीतं उपवीयंतेस्म अजगमिक्षेपणयोः॥ अन्यस्मिन्करेप्रोत्धृतेसति प्राचीनावीत

शरीरसाधनापेक्षंनित्यंयत्कर्मतद्यमः॥ नियमस्तुसयत्कर्मनित्यमागंतुसाधनम् ४९ "क्षेपकः क्षौरंतु भद्राकरणंमुंडनंवपनंत्रिषु॥"
उपवीतंब्रह्मसूत्रंप्रोत्धृतेदक्षिणेकरे॥ प्राचीनावीतमन्यस्मिन्निवीतंकंठलंबितम् ५० अंगुल्यग्रेतीर्थंदैवंस्वल्पांगुल्योर्मूलेकायं॥
मध्येंगुष्ठांगुल्योः पित्र्यंमूलेत्वंगुष्ठस्यब्राह्मम् ५१ स्यात् अन्यस्मिन्करेवामेकरे॥प्राचीनावीतं प्राचीनंदक्षिणंआवीयतेस्म विपरीतधृतयज्ञोपवीतस्ये

कं॥कंठलंबितं कंठेलंबितंसरलभावेनसव्यस्कंधेनिवीतंस्यात् निअधोभागेवीतंगमनमस्य करद्वयेबहिष्कृतेसतिऋजुभावेनस्थापितयज्ञसूत्रस्यनामैकं ५० अंगुल्य
ग्रे अंगुलीनामग्रेदैवंतीर्थंस्यात् दैवंदेवानामिदं अनः देवतीर्थेनदेवताःतर्पयेत् एकं॥स्वल्पांगुल्योः अनामिकाकनिष्ठिकयोः मूलेप्राजेकायंस्यात् कः प्रजापतिर्दे-
वतास्य कायःकदेवतेत्यण्सिंचेत्यस्यभावयोः प्रभुतीर्थेकायंस्मात् एकं प्राजापत्यमित्यर्थः॥अंगुष्ठांगुल्योःमध्ये अंगुष्ठतर्जन्योः मध्यभागे पित्र्यं पितरोदेव
तास्य यद्वापितृणामिदं॥अंगुष्ठस्यमूलेब्राह्मंतीर्थं ब्रह्मदेवतास्य यदाहयाज्ञवल्क्यः कनिष्ठातर्जन्यंगुष्ठमूलान्यग्रंकरस्यच प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् एकैकं ५१

ज्येष्ठेभ्रातरि अकृतदारपरिग्रहेसति कृतदारपरिग्रहः कनिष्ठः परिवेत्तास्यात् परिवेत्ता परिविंदति ज्येष्ठंपरित्यज्यभार्यांलभते विद्लृलाभे एकं ज्येष्ठेविवाहरहिते कृतदारपरिग्रहणस्यकनिष्ठस्य॥ तस्यपरिवेत्तुः ज्यायान् ज्येष्ठः परिवित्तिः स्यात् परिवर्जनंविंदति लभते विवाहोपयमौसमौ ५६ तथापरिणयः उद्वाहः उपयमः पाणिपीडनं इतिपट्विवाहस्य॥ व्यवायः ग्राम्यधर्मः मैथुनं निधुवनं रतं पंचमैथुनस्य॥ इणगतौ॥ ग्राम्यधर्मः ग्रामेभवाः ग्राम्याः ग्राम्याणांजनानांधर्मः॥ मैथुनं मिथुनस्यकर्म॥ निधुवनं नितरांधुवनं हस्तपादादिचालनं॥ रतं रमणं. ५७ धर्मकामार्थैः त्रिवर्गः स्यात् धर्मश्चवेदप्रतिपाद्ययज्ञादिः कामश्चयथाविधिस्त्रीसेवन

परिवेत्ताऽनुजोऽनूढेज्येष्ठेदारपरिग्रहात्॥ परिवित्तिस्तुतज्ज्यायान्विवाहोपयमौसमौ ५६ तथापरिणयोद्वाहोपयामाःपाणिपीडनम्॥ व्यवायोग्राम्यधर्मोमैथुनंनिधुवनंरतम् ५७ त्रिवर्गोधर्मकामार्थैश्चतुर्वर्गःसमोक्षकैः॥ सबलैस्तैश्चतुर्भद्रंजन्याःस्निग्धावरस्यये ५८ इतिब्रह्मवर्गः मूर्धाभिषिक्तोराजन्योबाहुजःक्षत्रियोविराट्॥ म् अर्थश्चधनम् त्रिवर्गः त्रयाणांवर्गः एक॥ समोक्षकैः चतुर्वर्गः उपलक्षितः॥ सबलैः बलेनसहितैश्चतुर्भद्रं चत्वारिभद्राणिश्रेष्ठानियत्र एकं॥ वरस्यजामातुः स्निग्धास्तत्पक्षाः वयस्यादयः जन्याः जनींवधूंवहंति ५८ इतिब्रह्मवर्गविवरणसमाप्तम् मूर्धाभिषिक्तः राज्यदानसमयेमूर्धन्यभिषिच्यते मूर्धाभिषिक्तः॥ राजन्यः राज्ञोपत्यं यद्वा राजति राजृदीप्तौ॥ बाहुजः बाहुभ्यांजातः बाहुजः क्षत्रियेवीरेस्वयंजातनिर्देशःपिचेतिविश्वमेदिन्यौ॥ क्षत्रियः क्षदति क्षदसंवरणे सौत्रः क्षतात्त्रायते क्षत्रस्यापत्यंवा॥ विराट् विशेषेणराजते पंचक्षत्रियस्य॥

राजा राट् रंजयति राजा राजते राट् राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ क्षत्रे शक्रे च पुंसि स्यात् इत्य० ॥ पार्थिवः पृथिव्याः ईश्वरः पार्थिवो नृपतौ भूमिविकारे पार्थिवा तिच ॥ क्ष्माभृत् क्ष्मां बिभर्ति क्ष्माभुक् क्ष्मां भुनक्ति ॥ नृपः नॄन्पाति पा रक्षणे ॥ भूपः भुवं पाति ॥ महीक्षित् महीं क्षिपति क्षि निवासगत्योः मह्यां क्षयति वा क्षि क्षयैश्वर्ययोः सम राज्ञः १ समंतायाः स्वदेशाव्यवहितभूमेरिमे राजानः ॥ प्रणताशेषसामंतः प्रणताः अशेषाः सामंताः स्वदेशानंतरराजानो यस्य स राजा अधीश्वरः स्यात् अधिक ईश्वरः एकं सर्वसंनिहितनृपवशकारिणः ॥ चक्रवर्ती चक्रे भूमंडले राजमंडले वा वर्तितुं शीलमस्य चक्रं गणे चक्रवाके इति विश्वः य

राजा राट् पार्थिवः क्ष्माभृन्नृपभूपमहीक्षितः १ राजा तु प्रणताशेषसामंतः स्यादधीश्वरः ॥ चक्रवर्ती सार्वभौमो नृपोऽन्यो मंडलेश्वरः २
येनेष्टं राजसूयेन मंडलस्येश्वरश्च यः ॥ शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राजकम् ३ राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् ॥ मं
त्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः ४

द्वा चक्रं सैन्यं वर्तयितुं सर्वभूमौ चालयितुं शीलमस्य सः ॥ सार्वभौमः सर्वभूमेरीश्वरः सार्वभौमस्तु दिग्गामे सर्वपृथ्वीपतावपि ति मेदिनी ईसमुद्रपर्यंतभूमीश्वरस्य ॥ अन्यः नृपः मंडलेश्वरः स्यात् मंडलस्य भूम्येकदेशस्येश्वरः स्यान्मंडलं द्वादशराजके च देशे च बिंबे च कदंबके चेति विश्वः एकं २ येन राजसूयाख्ययज्ञविशेषेणेष्टं द्वादशराजमंडलस्येश्वरोऽपि सः सम्राट् सम्यक् राजते सो सम्राट् ॥ च परं यः आज्ञया राज्ञः शास्ति ॥ अथ राजकं राज्ञां समूहः नृपतीनां गणे ॥ राजन्यकं क्षत्रियाणां गणे इत्येकं नाम ३ मंत्री मंत्रो गुप्तभाषणमस्यास्ति मंत्रि गुप्तभाषणे ॥ धीसचिवः धियां सचिवः धीप्रधानः सचिवो वा ॥ अमात्यः अमा सह समीपे वा भवः एतत्त्रयं राज्ञः सचिवस्य ततः धीसचिवादन्ये कर्मसचिवाः कर्मसु सचिवाः इत्येकम् ४

एकस्मिन्ग्रामे अधिकृतः स्यायुकः स्यात्तुंशीलमस्य एकं एकग्रामाधिकृतस्य ॥ भूरिषु बहुलेषु ग्रामेषु अधिकृतः गोपः गोपायति गुपू रक्षणे गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि ग्रामस्याधिकृते पुंसि साविरव्योषधौ स्त्रियाम् इत्य० ॥ एकं बहुग्रामाधिकृतस्य ॥ मौरिकः भूरिणि रत्नवर्णे नियुक्तः मौरिकः ॥ कनकाध्यक्षः कनकस्य अध्यक्षः हेमवर्णाधिकृतस्य ॥ रूप्याध्यक्षस्तु रूप्ये अध्यक्षः ॥ नैष्किकः निष्के हेम्नि नियुक्तः नैष्किको रजताध्यक्ष इति रभसः हेटंककादिशालायां नियुक्तस्य ७ अंतःपुरे तु अधिकृतः जनः अंतर्वेशिकः स्यात् अंतर्वेशे नियुक्तः यद्वा अंतर्वेशोऽयस्यास्ति एकं अंतःपुराधिकृतजनस्य ॥ सौविदल्लाः सुष्ठुविदं विद्वांसमपि ल्लाति वशवर्तिनं कुर्वंति सुविदल्लाः तएव सौविदल्लाः ॥ कंचुकिनः कंचुकः उपचोलः अस्ति येषां ते ॥ स्थापत्याः तिष्ठंत्येषु पुरुषाः स्थाः ध्यञर्थे करूपं स्थानां दारा

स्यायुकोधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु ॥ मौरिकः कनकाध्यक्षो रूप्याध्यक्षस्तु नैष्किकः ७ अंतःपुरे त्वधिकृतः स्यादंतर्वेशिको-
जनः ॥ सौविदल्लाः कंचुकिनः स्थापत्याः सौविदाश्च ते ८ षंढो वर्षवरस्तुल्यौ सेवकार्थ्यनुजीविनः ॥

णां पतयः तएव पालकाः ते सौविदाः सुविदा एव यद्वा सुवित् सुज्ञानमस्ति येषां ते यद्वा सुविदः चतुरस्त्रियः तासामिमे रक्षकाः चत्वारि राज्ञां कंचुकीनो हीरक्षाकृतस्य ८ शंढः शाम्यति शिश्ना भावात् शमुउपशमे शंढः क्लीबस्तु कंचुकी इति रभसः शंढः स्यात्पुंसि गोपतौ आकृष्टांडे ह्यषवरे तृतीयप्रकृतावपि ॥ वर्षवरः वृणोति वरतिवा वृञ्वरणे वर आवरणे वा वर्षस्य रेतः पातस्य वरः येत्वल्पसत्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः द्वे नपुंसकस्य ॥ सेवकार्थ्यनुजीविनः ॥ सेवकः सेवते षेवृ सेवने सेवकस्तु प्रवासेनावाच्यलिंगोनुजीविनि ॥ अर्थी अर्थः सन्निहितोस्यास्ति अर्थी पुमान्याचके स्यात् सेवके च विवादिनि ॥ अनुजीवी अनुजीवितुं शीलमस्य त्रीणि सेवकस्य ॥

विषयानंतरः विषयात्स्वदेशादनंतरो व्यवहितोराजा॥ शत्रुः शातयति शद्लृशातने अतःशत्रोः परंराजांतरेणव्यवहितोराजामित्रंस्यात् मेद्यति ञिमिदास्नेहने मित्रंसु हृदिसकृणे सूर्येपुंसिस्त्रियांगंधद्रव्येदेल्यांतरेपुमान् एकं ९ परतरः उदासीनःस्यात् अतिशयितः परः शत्रुमित्राभ्यांपरः राजा उदासीनः उदास्ते आसउपवेशने एकंशत्रु मित्राभ्यांपरस्यराज्ञः॥ पृष्ठतस्तु पार्ष्णिग्राहः पार्ष्णिंपश्चात्पदंगृण्हाति सैन्यपृष्ठेपुमान्पार्ष्णिः पश्चात्पदजिगीषयोरितिविश्वः राज्ञिशत्रुजयार्थंपुरतोग तेयस्तद्राष्ट्रंजिघृक्षतिसपार्ष्णिग्राहः एकंजिगीषोः पृष्ठभागस्थितस्यराज्ञः॥ रिपुः रपतिदोषं रपव्यक्ततायांवाचि॥ वैरी वीरस्यकर्मभावोवा वैरंमैथुनीतिनिर्दे शादण् वैरमस्यास्तीति॥ सपत्नः सपत्नीवाच्यसपत्नइतिनिर्देशादकारः॥ अरिः इयर्तिविरोधं ऋगतौ॥ द्विषन् द्वेष्टि द्विषअप्रीतौ॥ द्वेषणः द्वेषशीलः क्रुधमं-

विषयानंतरोराजाशत्रुर्मित्रमतःपरम् ९ उदासीनःपरतरः पार्ष्णिग्राहस्तु पृष्ठतः॥ रिपौवैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः
१० द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः॥ अभिघातिपरारातिप्रत्यर्थिपरिपंथिनः ११ ९८

डार्थेभ्येतियुच्॥ दुर्हृत् दुष्टंहृदयमस्य॥ द्विट् द्वेष्टि॥ विपक्षः विरुद्धः पक्षोऽस्य पक्षोमासार्धकेपार्श्वेग्रहेसाध्यविरोधयोः॥ अहितः नहितमस्मात्॥ अमित्रः अम तिगच्छति अमगतौरोगेवा इत्रन्प्रत्ययः॥ दस्युः दस्यति दसुउपक्षये युच्प्रत्ययेबाहुलकादनादेशाभावः॥ शत्रुः अभिघाति अभिहंतुंशीलः इष्योभिघातिरभि भइतिरत्नकोशः॥ परः अरातिः नरातिसुखं रादाने क्तिच्॥ प्रत्यर्थी प्रतिकूलमर्थयितुंशीलः अर्थयाच्ञायाम्॥ पंथी दोषाख्यानंमथयितुंशीलः पथिगतौ॥ परिशब्देचप्रकृतेदोषाख्यानेनिरसने॥ पूजाख्यास्योश्चभूषणे एकोनविंशतिनामानिशत्रोः ११ ९८ ९८ ९८

वयस्यः वयसातुल्यः॥ स्निग्धः स्निह्यति ष्णिहप्रीतौ वर्तमानेक्तः॥ सवयाः समानंवयोऽस्य त्रीणितुल्यवयसः॥ अथमित्रं मेद्यति ञिमिदास्नेहे॥ सखा समानः ख्यायते लोकैः॥ सुहृत् शोभनंहृदयंयस्य इतिमित्रनामानित्रीणि॥ सख्यं सख्युर्भावः कर्मवा सख्यम्॥ साप्तपदीनं सप्तपदैरवाप्यते स्यात् द्वेमित्रतायाः नामनी॥ अनुरोधः रुधिर्आवरणे॥ अनुवर्तनं अनुगम्यवर्तनंचित्ताराधनं द्वे आराध्यादेरिष्टसंपादनस्य१२ यथार्हवर्णः अर्हति अर्हपूजायाम् योयोऽर्हो यथार्हं वर्णोरूपमस्य वर्णः स्यात् द्वेदरूपयोरितिधरणिः॥ प्रणिधिः प्रकर्षेणनिधीयते प्रणिधिर्नारवलेऽवरे॥ अपसर्पः अपसर्पति सृप्लृगतौ॥ चरः चरति चरगतौ चरोऽक्षद्यूतभेदेच गौमेचारेऽवसावने

वयस्यःस्निग्धःसवयाअथमित्रंसखासुहृत्॥ सख्यंसाप्तपदीनंस्यादनुरोधोऽनुवर्तनम् १२ यथार्हवर्णःप्रणिधिरपसर्पश्चरःस्पशः॥
चारश्चगूढपुरुषश्चाप्त प्रत्ययितौसमौ १३ सांवत्सरोज्यौतिषिकोदैवज्ञगणकावपि॥ स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि १४

स्पशः स्पृशति स्पशबाधनस्पर्शनयोः स्पशः स्यात्संपरायेच प्रणिधावपिपुंस्ययं॥ चारः चारःप्रियालवृक्षेस्यात् गतौबंधापसर्पयोरित्युक्तत्वात्॥ गूढपुरुषः गूढश्चासौ पुरुषश्च॥ आप्तः आप्यतेस्म आप्लृव्याप्तौ॥ प्रत्ययितः प्रत्ययोविश्वासः संजातोऽस्य प्रत्ययःशपथेरंध्रेविश्वासाचारहेतुष्वितिविश्वः द्वेनाम्नीविश्वासाधारस्य॥ समौतुल्यौ १३ सांवत्सरः संवत्सरंवेत्ति॥ ज्यौतिषिकः ज्योतिषमधीतेवेदवा॥ दैवज्ञगणकौ दैवंप्राकृतंशुभाशुभंकर्मजानातिगणयति गणसंख्याने॥ मौहूर्तिकः मुहूर्तंअधीते वेदवा॥ मौहूर्तः पूर्ववत्॥ ज्ञानी॥ कार्तान्तिकः कृतान्तंवेत्ति ज्यौतिषिकस्याष्टौनामानि १४ ७ ७

तांत्रिकः तंत्रंसिद्धांतमधीते वदश्च॥ज्ञातसिद्धांतः ज्ञातः सिद्धांतोयेन हेनामनी नत्वार्थज्ञातुः॥ सत्री सत्रमस्यास्ति सत्रमाच्छादनेयज्ञे सदादानेचवैकेनवे इतिविश्वः॥ गृहपतिः गृहस्यपतिः हंसदान्नादिदानकर्तृगृहस्थस्य॥लिपिंकरः लिपिंकरोति टप्रत्ययः॥ लिबिंकरोपि तथैव॥ अक्षरचणः अक्षरैर्वित्तः॥अक्षरचंचुः तथैव उभ-यत्रापितेनवित्तइति चंचुपूचणपा एतानिनामानिलेखके १५ लिखति लिखअक्षरविन्यासो अक्षराणांविन्यासः लिखितंच अक्षरविन्यासस्त्रनयोः रामाहारः॥ लिपिः लिप्यते लिपउपलेपे॥ लिबिः उभेस्त्रियौ चत्वारिलिखिताक्षरस्य॥ संदेशाहरः दूतःस्यात् संदेशंनिरूपणंहरति दूतः दवति दुगमौ यद्वा दूयते दूङ्परितापे हे॥ त

तांत्रिकोज्ञातसिद्धांतःसत्रीगृहपतिःसमौ॥लिपिंकरोऽक्षरचणोऽक्षरचंचुश्चलेखके १५ लिखिताक्षरविन्यासेलिपिर्लिबिरुभेस्त्रियौ॥
स्यात्संदेशहरोदूतोदूत्यंतद्भावकर्मणि १६ अध्वनीनोध्वगोऽध्वन्यःपांथःपथिकइत्यपि॥स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानिच १७
राज्यांगानिप्रकृतयःपौराणांश्रेणयोऽपिच॥ संधिर्नाविग्रहोयान

द्भावकर्मणि तस्यभावः कर्मवादूत्यं १६ अध्वनीनः अध्वानं अलंगच्छति॥ अध्वगः अध्वानंगच्छति डप्रत्ययः॥ अध्वन्यः अध्वानंगच्छति यत्प्रत्ययः॥ पांथः पंथानंगच्छति॥ पथिकः पूर्ववत् पंचपांथस्य॥ स्वामी राजा॥ अमात्यः मंत्री॥ सुहृत् मित्रं॥ कोशोभांडागारः॥ राष्ट्रं देशः॥ दुर्गाणि पर्वताः॥ बलंसैन्यं १७ राज्यांगानि राज्यस्यराजकर्मणोंगानिसाधनानिप्रकृतयः प्रकुर्वंराज्यंकुर्वंति॥ पौराणांश्रेणयः पौराणांनागराणांश्रे-णयः श्रयंतिश्रयंतेवा॥ कामंदकः स्वाम्यमात्यश्चराष्ट्रंचदुर्गकोशोबलंसुहृत् परस्परोपकारीदंसप्तांगंराज्यमुच्यते॥ पौरश्रेणिभिः सहाष्टांगमपिराज्यमितिदर्शितं॥ अमात्याश्चतथापौराःसद्भिःप्रकृतयःस्मृताः इतिगौराणांश्रेणयोपिप्रकृतयःस्युः॥ संधिः संधानं द्रव्यादिनाशत्रूणांप्रीत्युत्पादनं॥ ना पुल्लिंगः॥ विग्रहः परराष्ट्रेदाहलुंठनादिर्विग्रहणं॥ यानं शत्रुंप्रतिविजिगीषोर्गमनं॥

आसनं आसउपवेशने सामर्थ्याभावेप्रतिकालंप्रतीक्ष्य दुर्गादिकंनिर्मायतत्रावस्थानमासनं॥ द्वैधं बलिनास ह संधिः अबलेनसहविग्रहः इतिप्रकारद्वयंद्वैधं॥आश्रयः आ-
श्रयणं श्रिञ्सेवायाम् शत्रुणापीड्यमानस्यबलवद्भूपालाश्रयणंआश्रयः १८ एतेषड्गुणाः एतेसंध्यादयःषड्गुणशब्दवाच्याः प्रभावोत्साहमंत्रजाः तिस्रःशक्तयःस्युः
शक्यनेजेतुमनया॥प्रभावः प्रभवत्यनेन॥तत्रकोशदंडजंतेजः प्रभुशक्तिः॥ उत्साहः उत्सहंतेनेनेति षहमर्षणे बलादिनौन्नत्यंउत्साहशक्तिः॥मंत्रः संध्यादीनांसाम
दानादीनांचयथावत्स्थापनंमंत्रशक्तिः एकैकंनाम॥क्षयः क्षपणं क्षिदाये अष्टवर्गस्य॥अपचयः क्षयः वृद्धिःउपचयः अपचयोपचयाभावः स्थानं इतिनीतिवेदि-

मासनंद्वैधमाश्रयः १८ षड्गुणाःशक्तयस्तिस्रःप्रभावोत्साहमंत्रजाः॥क्षयःस्थानंचवृद्धिश्चत्रिवर्गोनीतिवेदिनां १९ सप्रतापःप्रभावश्चय
त्तेजःकोशदंडजम्॥सामदानेभेददंडावित्युपायचतुष्टयं २०

नांत्रिवर्गःस्यात्॥अष्टवर्गस्तु कृषिर्वणिक्पथोदुर्गसेतुःकुंजरबंधनं॥खन्याकरबलादानंशून्या
नांचनिवेशनं॥कोशदंडजं यत्तेजःसप्रतापः प्रभावश्च॥कोशः धनं॥दंडः दमः॥सैन्यंच॥प्रतापः प्रतापयत्यनेन तपसंतापे॥प्रभावः भवत्यनेनभावः श्रीणीभुवोनुपस
र्गेइतिघञ् प्रकृष्टःभावः अधिक्षेपावमानादेःप्रयुक्तस्यपरेणायत् प्राणात्ययेऽप्यसहनंतत्तेजःसमुदाहृतम्॥भेदः शत्रूणांभेदनेनआत्मसात्करणं भिदिर्विदारणे॥दंडः दं
डनं दमुशमनायां साम सान्त्वप्रयोगे यद्वा स्यतिरोषमनेनवा परस्परोपकाराणांदर्शनंगुणकीर्तनं संबंधस्यसमाख्यानमायत्याःसंप्रकाशनं वाचापेशलयासाधुतवाह
मितिचार्पणं इतिसामविधानज्ञैःसामपंचविधंस्मृतमिति॥दानं धनादेःसमर्पणं॥एतच्चतुष्कं उपायचतुष्टयं॥अन्येसप्तोपायाःउक्ताः सामदानंचभेदश्चदंडश्चेतिच
तुष्टयं मायोपेक्षेंद्रजालंचेति २०

साहसं सहसिबलेभवं॥ दमः दमनं दमुशमनायाम् दमःस्यात्कर्दमेदंडेद्मनेदमथेपिचेतिहेमचंद्रः॥ दंडः दंडसैन्येदमेयमे मानव्यूहग्रहेभेदेध्वजेकोनुखेपथि प्रकांडेलगु डेकोणेन्चतुर्थोपायवर्गयोरितिहेमः श्रीणिदंडस्यनामानि॥साम सांत्वं अथो समौ द्वेसरव्यस्य॥भेदः भेदोधर्मविशेषेस्यात् उपजापोविद्रूपणे उपांशुजपनमुप- जापः जपव्यक्तायांवाचि उपधीयतेशङ्क्विज्ञानमत्र॥धर्माद्यैर्यन्निरीक्षणंसाउपधा धर्मार्थकामैर्भयेनचपरीक्षणं॥अमात्यादीनांचित्तान्वेषणं उपधास्यात्॥तद्य था॥भावज्ञानायराज्ञाप्रेरितेनाप्तेनदुष्टोयंराजातदेनमुत्सृज्यान्यमभिषेचयामोवा अन्यंसाधुंनृपंव्रजामइत्युक्तोऽमात्यादिभिर्यदिनज्ञापयंनमानितंतर्हिसत्यधा र्मिकोयमितिनिश्चयः धर्मपरीक्षणम् एकनाम २१ अषडक्षीणः पंचशब्दाःनिःशलाकांतास्त्रिषुवर्तंते अविद्यमानानिषडक्षीण्यत्र एकंद्वाभ्यामेवज्ञातस्यमंत्रस्य॥

साहसंतुदमोदंडःसामसांत्वमथोसमौ॥भेदोपजापावुपधाधर्माद्यैर्यत्परीक्षणम् २१ पंचत्रिष्वषडक्षी णोयस्तृतीयाद्यगोचरः॥विविक्तविजनच्छन्ननिःशलाकास्तथारहः २२ रहश्चोपांशुचालिंगेरहस्यंतद्भवेत्रिषु

यस्तृतीयाद्यगोचरः तृतीयादीनांनज्ञायते॥विविक्तः विविक्तंनिजनायत्र विचिर् पृथग्भावे विविक्तंत्रिषुसंपृक्तेरहःपूतविवेकिषु॥विजनः विगतः जनोऽस्मात्॥ छन्नः छाद्यतेस्मात्जनः छद्अपवारणे छन्नंतुरहसिक्लीबंछादितेवाच्यलिंगके॥निःशलाकः निर्गताशलाकायस्मात् शलाकायाःनिर्गतोवा तथाशब्दःसमुच्चये रहः रह्यते रहत्यागे रहस्त्वेरहोगुह्ये॥रभसोऽपि रहोनिधुवनेपिस्याद्रहोगुह्येनपुंसकं इतिपंचाभिधानानि २२ रहः चपरंउपांशु द्वेअलिंगेअव्ययेस्यातां॥उपां शु उपगताः अंशवः किरणाःअत्र उपांशुर्जपदेशःस्यादुपांशुविजनेव्ययम् तद्भवेरहोभवेरहस्यंत्रिषु रहस्यास्त्रीनदीभेदेगोपनीयेऽभिधेयवत् एकम् ॥

विश्रंभविश्वासौसमौ विश्रंभः विश्रंभणं ॥ विश्वासः विश्वसनं विश्रंभः केलिकलहेविश्वासेप्रणयेःपिचेतिमेदिनी श्वस् प्राणने ॥ यथोचितात् यथाप्राप्तात् ॥ भ्रेषः भ्रेषृ चलने भ्रंशः अधःपतनं २३ अभ्रेषः भ्रेषादन्यः ॥ न्यायः नियमेनईयते परिन्योरितिघञ् ॥ कल्पः कल्पःशास्त्रेविधौन्यायेसंवर्तेब्रह्मणोदिने ॥ देशरूपं दिश्यते दिशअतिसर्जने देशोरूपमस्य प्रशस्तेदेशनंवा प्रशंसायांरूपम् ॥ समंजसं सम्यगंजोऽत्र यद्वा संगतमंजसातत्वमत्र पंचनीतेः ॥ युक्तं युज्यते युजिर् योगे युक्तंयुक्तेपृथग्भूते क्लीबंहस्तचतुष्टये ॥ औपयिकं उपयंत्यनेन उपपूर्वादिणोघञ् उपायाभ्रस्वत्वंचेतिठक् ॥ लभ्यं लभ्यते लभ्यंयुक्तेचलब्धव्ये ॥ भजमानं भज

समौविश्रंभविश्वासौ भ्रेषोभ्रंशोयथोचितात २३ अभ्रेषन्यायकल्पास्तुदेशरूपंसमंजसं ॥ युक्तमौपयिकंलभ्यंभजमानाभिनीतव
त् २४ न्याय्यंचत्रिषुषट्संप्रधारणातुसमर्थनम् ॥ अववादस्तुनिर्देशोनिदेशःशासनंचसः २५ शिष्टिश्चाज्ञाचसंस्थातुमर्यादा
धारणास्थितिः

ते फलमनुबध्नाति भजसेवायाम् ताच्छील्येचानश् ॥ अभिनीतं अभिनीयतेस्म णीञ्प्रापणे क्तप्रत्ययः ॥ अभिनीतंसंस्कृतंचन्याय्येचामर्षणेऽभिष्विनिरुद्धः अभिनीतस्त्रिषुन्यायेसंस्कृतामर्षिणोरपि २४ न्याय्यं न्यायादनपेतं धर्मपथ्यर्थेतियत् एतेयुक्तादयःषट्त्रिषु न्यायादनपेतस्यद्रव्यस्य ॥ संप्रधारणा न्यासश्रथेनियुच् ॥ समर्थनं संपूर्वः अर्थउपयाचायांइतिधातुः हेयुक्तायुक्तपरीक्षायाः ॥ अववादः कायमवलंब्यवदंत्यत्रघञ् ॥ निर्देशः निदेशः उभयत्रघञ् ॥ शासनं ल्युट् २५ शिष्टिः क्तिन् ॥ आज्ञा आतश्चोपसर्गेइत्यङ् षट्कर्माज्ञापनस्य ॥ संस्थातु संतिष्ठतेऽनया प्राग्वदङ् सम्यगनुष्ठानम् ॥ मर्यादा मर्येति सीमार्थेव्ययंतत्रादीयते अङ्स्त्रियाम् ॥ धारणा धारयतिधर्मं ल्युः ॥ स्थितिः चत्वारिन्यायपथस्थितेः ॥

आगः अगनि अगगतौ आगोपराधेपायेस्यात् सांतं॥ अपराधः अपराधनं राधसंसिद्धौ॥ मंतुः मन्यते मनज्ञाने तुःप्रत्ययः मंतुः पुंस्यपराधेपिमनुष्येपिप्रजापतौ त्रीणिअपराधस्य॥उद्दानबंधनेतुसमे बंधबंधने द्वेबंधनस्य २६ द्विगुणोदंडोद्विपाद्यःस्यात् द्वौपादौपरिमाणमस्य॥ भागधेयः भागएवनामरूपेतिधेयः॥करः कीर्यते कृविक्षेपे ऋदोरप् करोवर्षोपलेपाणौरश्मौप्रत्ययशुंडयोः करोबंधेनिश्चयेचबलौरत्नेयनावपीनिविश्वः॥ बलिः बल्यते बलबंधेदाने इन् बलिर्दैत्यप्रभेदेचकरचामरदंडयोः उपहारेपुमानस्त्रीजरयाश्लथचर्मणि गृहदारुप्रभेदेचजठरावयवेपिचेत्यकः॰ त्रीणिकर्षकादिभ्योराजग्राह्यभागस्य पट्टीवसूलइतिभाकनभाषया॥ घट्टादिदेयं घट्टादौनदीतीरादौ यद्दातुंयोग्यंतत् शुल्कः अस्त्रि शुल्क्यते शुल्कअतिसर्जने शुल्कंघट्टादिदेयंस्यादूरादर्थग्रहेस्त्रि

आगोपराधोमंतुश्चसमेतूद्दानबंधने २६ द्विपाद्योद्विगुणोदंडोभागधेयःकरोबलिः॥ घट्टादिदेयंशुल्कोःस्त्रीप्राभृतंतुप्रदेशनं
२७ उपायनमुपग्राह्यमुपहारस्तथोपदा॥ यौतकादितुयद्देयंसुदायोहरणंचतत् २८

याम् एकमेव॥प्राभृतंतु प्राभ्रियतेस्म भृञ्भरणे॥ प्रदेशनं प्रदिश्यते दिशअतिसर्जने द्वेदेवताभ्योमित्रादिभ्यश्चदीयमानस्य २७ उपायनं उपेयते उपाय्यतेवा इण्गतौ अय्गतौवा॥उपग्राह्यम् उपगृह्यते ग्रह उपादाने॥ उपहारः उपह्रियते तथाउपदा उपदीयते डुदाञ्दाने षट्नृपगुरुदर्शनेदीयमानस्यवस्तुनः उपदास्त्रियां उपायनमुपग्राह्यंप्राभृतंचोपदास्त्रियामित्यमरमाला॥ यौतकादि युतकंयोनिसंबंधः तत्रभवं युतयोर्वरवध्वोरिदं तस्येदमित्यण् युतकंयुग्मकेयुक्तेसंशयेपिचेतिरभसः युतकंसंशयेयुगे नारीवस्त्रांचलेयुक्तेचलनार्थेच-यौतकं आदिनाव्रतभिक्षादिग्रहणम्॥ तद्देयं सुदायः सुदीयते तदेवहरणं ह्रीयते सुदायः पुंसि द्वे कन्यादानकालेव्रतभिक्षादौचदीयमानद्रव्यस्यनामनी २८

तत्कालः स चासौकालश्च तदात्वंस्यात् तदेत्यस्यभावः तदात्वं द्वेवर्तमानकालस्य॥ उत्तरः कालः आयतिः आयास्यतीति आयातिस्त्रस्त्रियांदैर्घ्येप्रभावागामिका
लयोः एकं आयतिः स्त्री॥ यत्सद्यःफलंसांदृष्टिकं संदृष्टेप्रत्यक्षेभवं अध्यात्मादित्वात्ठञ् एकंव्यापारानंतरंजायमानस्यफलस्य॥ उत्तरं फलंउदर्कः उदर्च्यते
अर्कस्तवने उदर्च्यतेवा अर्चपूजायां उत्कृष्यतेवा कृत्रृत्तौ उदर्कएष्यत्कालेतत्फलेमदनकंटके एकंभाविनःकर्मफलस्य २९ वन्हितोयादि वन्हिश्चतोयंचते
आदिर्यस्यतत् अदृष्टंस्यात् आदिशब्देन॥ हुताशनोजलंव्याधिर्दुर्भिक्षंमकरस्तथा अतिदृष्टिरनादृष्टिर्मूषकाःशलभादयोगृह्यंते एकं अग्न्यादिकृतस्यभय

तत्कालस्तुतदात्वंस्यादुत्तरः कालआयतिः॥ सांदृष्टिकंफलंसद्यउदर्कः फलमुत्तरम् २९ अदृष्टंवन्हितोयादिदृष्टंस्वपरचक्रजं॥ महीभु
जामहिभयंस्वपक्षप्रभवंभयं ३० प्रक्रियात्वधिकारःस्याच्चामरंतुप्रकीर्णकम्॥ नृपासनंयत्तद्भद्रासनंसिंहासनंतुतत् ३१

स्य॥ स्वपरचक्रजंभयंदृष्टंस्यात् स्वपरचक्रजं स्वश्चपरश्चस्वपरौ तयोश्चक्रेसैन्येताभ्यांजातं महीभुजांस्वपक्षप्रभवं स्वसहायजन्यंभयंअहिभयंस्यात् गूढ
त्वात् पक्षएवअहिः एकंस्वसहायाज्जातभयस्य॥ निजोयमैत्रश्चसमाश्रितश्चसंबंधतः कार्यसमुद्भवश्च भृत्यागृहीतोविविधोपचारैः पक्षंबुधाःसप्तविधंवदं
ति ३० प्रक्रियातु डुकृञ्‌ःशचेतिक्यप्॥ अधिकारः घञ् द्वे मर्यादास्थापनस्य॥ चामरंप्रकीर्णकं चमनि चम्यते अनेनवा चमुअदने अरप्रत्ययः चमरंचामरे
स्त्रीतुमंजरीमृगभेदयोः इत्यनेक० चामराचामरेबालव्यजने॥ प्रकीर्णकं प्रकीर्यतेनेन कृविक्षेपे कः संज्ञायांकन् प्रकीर्णकंचामरेस्याद्विस्तरेनातुसंगमे द्वे चवरी
इतिख्यातस्य॥ नृपासनं॥ भद्रासनं द्वेमण्यादिकृतराजासनस्य तत्रहेमविकारोनृपासनं सिंहाकारमासनं ३१ ७५

हैमंछत्रंतु छादयत्यनेन छदअपवारणे ण्यंतः इस्नान् त्रन् इतिन्हस्वः॥आतपत्रं आतपात्त्रायते आनोनुपसर्गेकः हैं नपत्रंनृपलक्ष्म एकंराजछत्रस्य॥भ द्रकुंभः भद्रस्यभद्रोवाकुंभः॥पूर्णकुंभः पूर्णः कुंभः द्वेपूर्णघटस्य॥भृंगारः बिभर्तिजलं शृंगारभृंगारौचेतिसाधू॥कनकालुका कनकस्याॡः ततः कानेन्ह स्वः द्वेसुवर्णकृतजलपात्रस्यझारीतिख्यातस्य ३२ निवेशः शिबिरं निविशंतेऽत्र विशप्रवेशने निवेशःसैन्यविन्यासेविवाहेचइतिहैमः॥शिबिरं शावंक्षम शयगतौ॥पुं देनपुंसके द्वेसैन्यनिवासस्थानस्यसैन्यावातऽइतिख्यातस्य॥आगंतुकसैन्यवसतेः सज्जनंतु उपरक्षणं सज्जतेऽनेन सत्रशोभनेजन्यलेवाऽनेन षस्जगतौ जनीप्रादु र्भावे द्वेसैन्यरक्षणायनियुक्तप्रहरिकादिन्यासस्य प्राकृतभाषया पाहारागस्तइतिख्या०॥हस्त्यश्वरथपादातंचतुष्टयंसेनांगंस्यात् पदातीनांसमूहः हस्तिनश्च अ

हैमंछत्रंत्वातपत्रंराज्ञस्तुनृपलक्ष्मतत्॥भद्रकुंभः पूर्णकुंभो भृंगारःकनकालुका ३२ निवेशः शिबिरंषंढेसज्जनंतूपरक्षणम्॥ह- स्त्यश्वरथपादातंसेनांगंस्याच्चतुष्टयं ३३ दंतीदंतावलोहस्तीद्विरदोऽनेकपोद्विपः मतंगजोगजोनागः

श्वाश्वरथाश्वपादातंच सेनांगत्वादेकवद्भा वः सेनायाःअंगंचतुष्टयं चत्वारःअवयवाः नाविकाटविकादीनांपदातावंतर्भावः नौकानांरथेष्वंतर्भावः महिषादीनांगजेष्वंतर्भावः इत्येकंनाम ३३ दंती अतिशा यितौदंतावस्यइतिः॥दंतावलः दंतशिखात्संज्ञायामितिवलच् वलइतिदीर्घः॥हस्ती हस्तःशुंडास्यास्ति हस्ताज्जातावितिइनिः॥एवंकरी॥द्विरदः द्वौरदावस्य॥अ नेकपः अनेकेनकरेणमुखेनचपिबति॥द्विपः द्वाभ्यांपिबति॥मतंगजः मतंगात्ह्रषेःजातः॥गजः गजति गजमदे॥नागः नअगः नगेभवोवा नागोमतंगजेसर्पेपुन्ना गेनागकेशरे क्रूराचारेनागदंडेमुस्तकेवारिदेपिंच देहांतिलविशेषेचश्रेष्ठेस्यादुत्तरेस्थितः नागरंगेसीसपत्रेस्त्रीबंधेकरणांतरइतिहैमः॥ ६९

कुंजरः अनिशायिनः कुंजः हनुः अस्य अस्तिस्वमुखकुंजेस्योरः कुंजरोनैकपेकोशेकुंजराधरकीद्रुमे पाटलायांचेतिहेमचंद्रः॥ वारणः वारयतिशत्रुंबलं वारणंप्रतिषेधे स्याद्वारुणस्तमनंगजइतिविश्वः॥ करी करोस्यास्ति ३४ इभः एति ईयतेवा इणःकिदिनिभः॥ स्तंबोगुल्मेतृणादीनामकांडेद्रुमगुच्छयोः स्तंबेरमः स्तंबेरमते॥ पद्मी पद्मंबिंदुजालकमस्त्यस्य इतिपंचदशहस्तिनः॥ यूथनाथस्तु यूथस्यहस्तिवृंदस्यनाथः॥ यूथपः यूथंपातीति द्वेयूथमुख्यहस्तिनः॥ मदोत्कटः मदेनदानांबुनाउत्कटोमत्तः॥ मदकलः मदेनकलते कलशब्दसंख्यानयोः मदेसतिकलोध्वनिर्यस्येतिवा द्वेअंतर्मदहस्तिनः॥ कलभः कलयति कलगतिसंख्यानयोः कलतेवा कलशब्द

कुंजरोवारणःकरी ३४ इभः स्तंबेरमः पद्मीयूथनाथस्तुयूथपः॥ मदोत्कटोमदकलः कलभः क
रिशावकः ३५ प्रभिन्नोगर्जितोमत्तः समावुद्धांतनिर्मदौ॥ हास्तिकंगजतावृंदेकरिणीधेनुकावशा ३६

संख्यानयोः कलंभाषतेवा॥ करिशावकः करिणःशावकः द्वेकरिपोतस्य प्राकृतभाषयाछावा ३५ प्रभिन्नः प्रकर्षेणभिद्यतेस्म॥ गर्जितः गर्जयति गर्जशब्दे गर्जः संजातोस्यवा गर्जितंवारिवाहादिध्वनौनामत्तकुंजरइतिविश्वमेदिन्यौ॥ मत्तः माद्यतिस्म मदीहर्षे त्रीणिजातमदस्यनामानि उद्धांतनिर्मदौसमौ उद्धतंवांतंमदवमनमस्मात् उद्धांतउद्गीर्णेमदनाद्विपइतिहेमः॥ निर्मदः मदान्निर्गतोनिर्गतोमदोस्माद्वा द्वेगतमदस्य॥ गजतावृंदेहास्तिकं हस्तिनांसमूहः द्वे॥ करिणी करोऽस्तियस्याः इनिः॥ धेनुका धेनुरिव इवेप्रतिकृतौ स्याद्धेनुकाकरिण्यांचधेनावपि॥ वशा उश्यते वशकांतौ वशानार्यांवंध्यगव्यांहस्तिन्यांदुहितर्यपि त्रीणिकरिण्याः ३६

गंडः गंडति गौडवदनैकदेशे गंडःस्यात्पुंसिखड्गिनि ग्रहयोगप्रभेदेचवीर्थ्यंगेपिपटेपिच चिन्हवीरकपोलेषुहयभूषणबुद्बुदइत्युक्तत्वात्॥ कटः कटति कटेव र्षावरणयोः कटः श्रोणौहयोः पुंसिकलिंजेनिशयेशवे समयेगजगंडेपिपिप्पलीतुकटीमतेत्युक्तं०॥ द्वेगजगंडयोः॥ मदः माद्यत्यनेन मदोहर्षे मदयतिवा मदोरे तसिकस्तूर्यांगर्वेहर्षेभदानयोः॥ दानंधत्यनेन दो अवखंडने दानंगजमदेयोगेपालनच्छेदशुद्धिषु द्वेमदोदकस्य॥ वमथुः वम्यते दुवमुद्गिरणे वमथुर्वमनेका समातंगकरशीकरइतिहेमः॥ करशीकरः करस्यशीकरः द्वेशुंडानिर्गतजलस्य॥ शिरसः पिंडोकुंभोस्यातां कुंभुवंउंभति उंभपूरणे शकंध्वादिः उकारस्योन्हें- स्वउकारः कुंभोराश्यंतरेहस्तिमूर्धांशोराक्षसांतरे कार्मुकेवारनार्याञ्चघटेञ्जौबंतुगुग्गुलावितिं०॥ पिंडः पिंड्यते पिडिसंघाते पिंडोबालेबलेसांद्रेदेहागारेकदे

गंडः कटोमदोदानंवमथुः करशीकरः॥ कुंभौतुपिंडौशिरसस्तयोर्मध्येविदुः पुमान् ३७ अवग्रहोललाटंस्यादीषिकात्वक्षिकूटकं॥ अपांगदेशोनिर्याणंकर्णमूलंतुचूलिका ३८ अधः कुंभस्यवाहित्थं

शयोः देहमात्रेनिवापेचगोलसिल्हकयोरपि ओंड्रपुष्पेचपुंसिस्यात्क्लीबमा जीवनायसोः पिंडीतुपिंडतगरेलाबुखर्जूरभेदयोः तयोः कुंभयोर्मध्ययत्स्थानंसोविदुः वेत्तीति विदज्ञाने बाहुलकात्कुः विदुःशब्दः पुंल्लिंगे एकनाम ३७ अवग्रहः अवगृह्यतेंकुशेन ग्रहउपादाने निग्निगमश्चेतिअप् अवग्रहोवृष्टिरोधेप्रतिबंधेगजालिके रुद्रोपि गजालिकेवृष्टिरोधेप्रतिबंधेप्यवग्रहइति॥ ललाटंस्यात्॥ ईषिकातु ई ष्यते इषउंछे ईषगतिहिंसादानेषुवा॥ अक्षिकूटकंचक्षुर्गोलकं एकं॥ हस्तिनः अपांगदेशः अपांगस्यदेशः॥ निर्याणं निर्यात्यनेन॥ निर्याणंवारणापांगदेशेमोक्षेध्वनिर्ग मे एकं॥ कर्णमूलंतु कर्णस्यमूलंचूलिका चूल्यतेऽनया चूलसमुच्छ्राये चूलिकानाटकस्यांगेकर्णमूलेतुहस्तिनां एकं ३८ कुंभस्यअधः वाहित्थं अवश्यंवहति॥ अस्यायत अ धः प्रतिमानम्॥

अस्यधत् अधः प्रतिमानं अस्थवाहिन्थस्य अधोभागेदंतयोर्मध्यं प्रतिमानं प्रतिमीयतेनेन मीञ् हिंसायाम् प्रतिमानंप्रतिच्छायागजदंतांतरालयोरितिरुद्रः एकं॥ गजस्य स्कंधदेशः आसनं आस्यतेयस्मिन् आसनंद्विरदस्कंधेपीठेयात्रानिवेशनइतिविश्वमेदिन्यौ॥ स्कंधएवदेशः पद्मकं पद्ममिवपद्मकं इवार्थेकन् पद्मकंस्यात्पद्मकाष्ठबिंदु जालकयोरपि॥ बिंदुजालकं बिंदूनांजालकं द्वेगजस्यमुखादिस्थबिंदुसमूहस्य ३९ गजस्यपार्श्वभागः पक्षभागःस्यात् पार्श्वस्यभागः यद्वा पार्श्वमेवभागः॥ पक्ष यत्यनेन द्वेगजपार्श्वस्य॥ अग्रतः यः भागः सदंतभागःस्यात् दंतस्यभागः दंतसंबंधीभागोवा एकंदंतिनः अग्रभागस्य॥ पूर्वश्चपश्चाच्चपूर्वपश्चाच्चतेजंघेच पूर्वप श्चाज्जंघेआदीयस्यसः पूर्वपश्चाज्जंघादिश्चासौदेशश्च पूर्वजंघाभागोगात्रं॥ पश्चाज्जंघाभागोवरं इतिक्रमेण॥ गात्रं गातेनेन गाङ् गतौ यद्वा एत्यनेन इण्गग

प्रतिमानमधोऽस्यधत्॥ आसनंस्कंधदेशःस्यात्पद्मकंबिंदुजालकं ३९ पार्श्वभागःपक्षभागोदंतभागस्तुयोऽग्रतः॥ द्वौपूर्वपश्चाज्जंघादिदेशौगात्रा वरेक्रमात् ४० तोत्रंवेणुकमालानंबंधस्तंभेऽथशृंखले॥ अंदुकोनिगडोस्त्रीस्यादंकुशोस्त्रीसृणिः स्त्रियाम् ४१

तौ॥ अवरं नवृणोति व्रियतेवा वृञ्वर णे गात्रावरेपूर्वपश्चाद्भागयोः परिभाषिते इतिभागुरिः गात्रंगजाग्रजंघादिभागेप्यंगेकलेवरे अवरंगजांत्यजंघादिदेशेचरमेत्रिषु द्वौपूर्वपश्चाज्जंघादिदेशौगात्रावरेनने- तिरभसः॥ अपरंत्वन्यार्थेस्यात्पश्चाद्भागेपदंतिनाम् इति विश्वः क्रमेणैकैकं ४० तोत्रं तुद्यतेऽनेन तुद्व्यथने तोत्रंतुप्राजनेवेणुकेपिच॥ वेणुकं वेणुनानिर्वृत्तं निर्वृत्तेक्षद्यू तादिभ्यइतिठक् द्वेतोदनदंडस्य॥ बंधस्तंभे आलानं आलीयतेऽत्र लीङ्श्लेषणे इत्येकं॥ अथशृंखले शृंगंप्राधान्यंखलति खलसंचलने संचयेच यद्वा शृंगात्प्रा धान्यात्खलत्यनेन शृंखलापुंस्कटीकांच्यांलोहरज्जौचबंधने॥ अंदुकः अद्यतेनेन अदिबंधने अंदुःस्त्रियांस्यान्निगडेप्रभेदेभूषणस्यच॥ निगडः निगतोगडःसेचनमस्मा

त् निगलतिवा गलअदने इतित्रीणिनामानि॥ अंकुशः अंक्यतेनेन अकिलक्षणे॥ स्त्रीभिन्नः॥ सृणिः सरति अंतर्गच्छति अनयावा संगतो शृणाति शृहिंसायां सृ णिरंकुशवाचीचकाशश्वतृणवाचकइतिस्त्रीलिंगे ४१ दूष्या दूष्यतेनेनया दूष्यंत्रिषुदूषणीयेक्लीबेवस्त्रेचतद्गृहे चूष्याइतिवापाठः चूष्यते पीयते चुषपाने॥ कक्ष्या कक्षेभवा कक्ष्यागृहतिकायांस्यात्कांच्याम मध्यबंधने हर्म्यादीनांप्रकोष्ठेचकायहेतोप्रयोजने॥ वरत्रा व्रियतेनया वृञ्वरणे यद्वा वरंत्रायते त्रैङ्पालने त्री णिगजस्यमध्यबंधनस्य॥ कल्पना॥ सज्जना सस्जे कल्पतेनया॥ सज्जनेनया षज्जगतौ करिणःसज्जनायांस्त्रीक्लीबंक्लृप्तौचकल्पने सज्जनंतुरयेक्लीबसु परक्षणघट्टयोः वाच्यलिंगंकुलीनेस्यात्कल्पनायांस्त्रयोषिति द्वेनायकारोहणार्थंगजसज्जीकरणस्य॥ प्रवेणी प्रकर्षेणवीयतेऽस्यां वीगत्यादिषु प्रवेणिः स्त्री

दूष्याकक्ष्यावरत्रास्यात्कल्पनासज्जनासमे॥ प्रवेण्यास्तरणंवर्णःपरिस्तोमःकुथोद्वयोः ४२ वीतंत्वसारंहस्त्यश्वंवारीतुगजबंधनी॥

कुथावेण्योः॥ आस्तरणं आस्तीर्यतेनेन स्तृञ्आच्छादने॥ वर्णः व्रियतेनेन वृञ्वरणे वर्णःस्वर्णव्रतेस्तुतौ रूपेद्विजादौशुक्लादौकुथायामक्षरेगुणे भेदगीतक्रमे- चित्रेयशस्तालविशेषयोः अंगरागेचवर्णंतुकुंकुमेइतिहेमः॥ परिस्तोमः परिस्तूयते ष्टुञ्स्तुतौ॥ कुथः कुथ्नाति कुंथदीप्तो यद्वा कुंथत्यशोभां कुथिहिंसायां य द्वा कुथ्यति कुथपूतिभावे कुथःस्त्रीपुंसयोर्वर्णकंबलेपुंसिबर्हिषि क्लीबेपि स्त्रीप्रवेणीकुथंत्रिषु पंचगजोपर्यास्तरणचित्रकंबलस्य ४२ असारं हस्त्यश्वं वीतं स्यात् नसारोबलंयस्य हस्तिनश्चअश्वाश्चहस्त्यश्वं॥ वीतंवेति अजतिस्मावा युद्धादिकर्मयः वीगत्यादौ अजगतौवा एकंनाम॥ वारीतु वार्यतेनया वारीस्याद्गजब धिन्यांकलश्यामपियोषिति वारिर्वागजबंधिन्यांस्त्रीक्लीबंतुनिबालके॥ गजबंधनी बध्यतेऽस्यां गजस्यबंधनी बधबंधने द्वे गजबंधनशालायाः॥ ५

घोटकः घोटते घुटपरिवर्तने कर्तरिण्वुल् घोटसैंधवगंधर्वाहयवाजितुरंगमाइनिरभसः॥वीतिः वीगत्यादिषुक्तिच् पीतीतिपाठेआह् पिबति पापानं पीतिर्वा इतिपाठः पीति
नीस्थोस्त्रियांपानेइत्युक्त०॥ तुरगः तुरति तुरत्त्वरणे तुरेणगच्छति॥तुरंगः तुरगीचाश्वगंधायांतुरगश्चित्तवाजिनोः॥तुरंगमः तुरंशीघ्रंगच्छति ४३ वाजी अवश्यंवजति
वजगतौ आवश्यकेणिनिः यद्वा वाजाः [illegible] अस्त्यस्य अतइनिः वाजीबाणाश्वपक्षिषित्युक्त०॥ वाहः उह्यतेनेन वहप्रापणे वाह्यतेवा वाहतेवा वाहृप्रयत्ने वाहोभु
जेषुमानेचाने भेदाश्चवृषवायुषु॥ [illegible] अर्वा [illegible] अप्योपधोपीतिवनिप् यद्वा अर्वति अर्वगतौ बाहुलकात्कनिन्॥गंधर्वः गंधंअर्वति अर्वगतौ कर्मण्यण् शकं
ध्वादिः [illegible] तुरंगाः [illegible] के॥हयः हयति हयगतौ अच् हिनोतिवा हिगतौ सैंधवः सिंधुषुभवः सैंधवस्तु सिंधुदे

घोटकेवीतितुरगतुरंगाश्वतुरंगमाः ४३ वाजिवाहार्वगंधर्वहयसैंधवसप्तयः॥आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः ४४ वनायुजाः पार
सीकाः कांबोजाबाल्हिकाहयाः॥

शोद्भवेहयइत्युक्त०॥सप्तिः सपतिसेनायांसमवैति षपसमवाये क्तिच्॥येकुली
नास्तेअजानेयाः अजानं [illegible] आयत्तावा अश्वंकुलीनमजानेयंशाखंकिशोरंध्रुवतइतिरत्नमाला शक्तिभिर्भिन्नहृद
यास्खलंतश्चपदेपदे आजानंतियतः संज्ञामाजानेया [illegible] स्मृताइतिअश्वशास्त्रं॥कुलीनाः कुलस्यापत्यानिपुमांसः॥येसाधुवाहिनः तेविनीताः विनीयंतेस्म सुशिक्षि-
ताः विनीतः सवहाश्वेस्यादुपाध्यायेपुमानयम् जितेंद्रियेनतेचाप्यनिभृतेविनयान्विते॥साधुवाहिनः साधुवहनशीलाः वहप्रापणे इतितुरंगनामानि ४४ वनायुजाः पार
शिकाः वनायुषुदेशेषुजाताः॥पारशिकदेशेभवाः॥कांबोजाः कंबोजेषुभवाः॥बाल्हिकाः बल्हिकदेशभवाः बाल्हीकंबाल्हिकंधीरेहिंगुनोनाश्वमेधयोरितित्रिकांडशेषा
त् एतेहयविशेषाः प्रत्येकंभिन्नाः

अश्वमेधीयः अश्वः ययुःस्यात् अश्वमेधार्थहितः छ प्रत्ययः॥ ययुः याति ययुःपुमानश्वमेधतुरंगेतुरंगमे इत्युक्तं॥जवनस्तुजवाधिकः जवेनवेगेनअधिकः जवनंतुस्यदेवेगिहयेनावेगिनित्रिषु हे ४५ पृष्ठ्यः प्रशस्तमानिराधितंपृष्ठमस्य गुण्यवत्॥स्थोरी स्थूलस्येदं रलयोरेकत्वं स्थोरंबलमस्यास्ति हेमारवाहिनोऽश्वस्य॥सितः शकुः अश्वः कर्कः करोतिक्रियतेवा कर्कः कर्कंबलेबन्होशकाश्वेदर्पणेघटे एकंशक्लाश्वस्य॥रथस्ययः वोढा रथ्यः रथ्यारथौघविशिरवावर्तनीषुचयोषिति रथंवहति रथवोढरिपुल्लिंगः एकंरथवाहकाश्वस्य॥अस्यबालः किशोरः कशनि कशशब्दे किंचिच्छर्वति शवगतौवा॥वामी वामयति डुवमुद्गिरणे वाम्यतेवा

ययुरश्वोऽश्वमेधीयोजवनस्तुजवाधिकः ४५ पृष्ठ्यःस्थोरीसितःकर्कोरथ्योवोढारथस्ययः॥ बालःकिशोरोवाम्यश्वावडवावाडवंगणे॥४६॥त्रिष्वाश्वीनंयदश्वेनदिनेनैकेनगम्यते॥कश्यंतुमध्यमश्वानांहेषाह्रेषाचनिस्वनः ४७

वमति उद्गिरतिवा वामीशृगालीवडवारासभीकरभीषुच॥ अश्वा बलंसामर्थ्यमतिशयितमस्याः डलयोरेकत्वं बवयोरेकत्वंच बलंवातिवा बलेनव्रजतिवा वडवाद्विजयोषिति अश्वायांकुंभदास्यांचनारीजात्यंतरेऽपिच त्रीणिअश्वायाः॥गणेसमूहेवाडवं वडवानांसमूहः खंडिकादिभ्यश्चेतिअञ् वाडवंकरणेस्त्रीणांघोटकौघेनपुंसकम् पातालेनास्त्रियांपुंसिब्राह्मणेवडवानलइत्युक्तत्वात् एकं ४६ अश्वेनएकेनदिनेनगम्यतेतदाश्वीनं नत्रिषु अश्वस्यैकाहगमइतिखञ्॥अश्वानांमध्यंकश्यं अश्वादेस्ताडनीकशांतांअर्हति कश्यंत्रिषुकशार्हेस्यात्क्लीबंमद्याश्वमध्ययोः एकं॥अश्वानांनिःस्वनःशब्दः हेषा॥ हेषा हेषृह्रेषृशब्दे गुरोश्चहलइत्यः ४७

गलोद्देशः निगालः निगलंत्यनेन गलअदने निगरत्यनेन गॄनिगरणे उन्न्योर्ग्रः इतिघञ् अचिविभाषेतिलोवा॥गलस्योद्देशः घंटाबंधसमीपस्थोनिगालः कीर्तितोबुधैः तस्मिन्नेवमणिर्नामरोमजः शङ्कुरुन्मतइत्यश्वशास्त्रं॥ वृंदेतु अश्वीयं॥ आश्ववत् अश्वानांसमूहः केशाश्वेतिसूत्रेणउभयंसाधु द्वेअश्ववृंदस्य॥ आस्कंदितं स्कंदिर्गतिशोषणयोः ग्रयंताद्भावेक्तः आस्कंदःसंजातोऽस्यवा जवार्तोश्वोनशृणोतिनपश्यति एनादृशीगतिः आस्कंदनं भरधाव भरचाल भरपल्ला प्राकृते॥ धौरितकं धोर्कगतिचातुर्ये वृद्धिमत्पाठेप्रज्ञाद्यण् अथधौरितकंधैर्यधारणंधारितंचतदितिवाचस्पतिः॥ रेचितं रिचिर्विरेचने॥ वल्गितं वल्गगतौ॥ प्लुतं प्लवनं प्लुङ् गतौ प्लुतमश्वगतौ ४८ अमूः अश्वानांपंचगतयः॥ धाराः धार्यंते श्वात्रानयावा धृधारणे॥ घोणातु घोणते घुणभ्रमणे॥ प्रोथं प्रोथति प्रोथृपर्याप्तौ प्रोथशब्दः

**निगालस्तुगलोद्देशोवृंदेत्वश्वीयमाश्ववत्॥ आस्कंदितंधौरितकंरेचितंवल्गितंप्लुतं ४८ गतयोऽमूः पंचधाराघोणातुप्रोथमस्त्रियां**
**कविकातुखलीनोऽस्त्रीशफंक्लीबेखुरःपुमान् ४९ पुच्छोऽस्त्रीलूमलांगूलेवालहस्तश्चवालधिः**

पुंनपुंसकः प्रोथोऽस्त्रीहयघोणायांनाकस्याम-ध्वरेत्रिषु अवस्कंदितंप्राकृतभाषयाचवडचाल धौरितकं सरळचाल रेचितं दुडकीचाल वल्गितं बाजीचाल प्लुतंचौकचाल॥ कविका कवते कुङ्शब्दे॥ खलीनः खेसुखेलीनः द्वेकडियालि (लगाम) इतिख्यातस्य॥ शफंक्लीबे शंफणति फणगतौ शफंमूलेतरूणांस्यात्गवादीनांखुरेपिचेत्यः॥ खुरःपुमान् खुरति खुरछेदने खुरः कोकदलेशफे भूमिं खुरति विदारयति खुरः ४९ पुच्छः पुच्छति पुछप्रमादे पचाद्यच् पुच्छः पश्चात्प्रदेशःस्याल्लांगूलेपुच्छमिष्यते स्त्रीभिन्नः लूमं लूयते लूञ्छेदे॥ लांगूले लंगति लगिगतौ लांगूलंपुच्छशेफयोरितिहैमः त्रीणिनामानि॥ पुच्छमस्त्रीनपुंसकं॥ वालहस्तः वालः हस्तइव दंशादिनिवारकत्वात् वालानांहस्तो वासमूहः वालोनाकुंतलेऽश्वस्यगजस्यापिचवालधौ॥ वालधिः वालाःधीयंतेऽत्र द्वेकेशवल्लांगूलमात्रस्य॥

उपावृत्तः लुठितः उपावर्ततेस्म वृतुवर्तने लुठतिस्म लुठप्रतिघाते द्वेनामनीश्रमशांत्यर्थंमुहुः पुनः पुनः भूमौपरावृत्तेलुंठितेऽश्वेवृत्तेते ५० याने यात्यनेन याप्रापणे ॥ चक्रिणि चक्रमस्यास्ति ॥ युद्धार्थे युद्धार्थेदं ॥ शतांगः शतमंगानियस्य ॥ स्यंदनः स्यंदते स्यंदूप्रस्रवणे चलनशब्दार्थादितिधुञ् स्यंदनंतुरूनेमीरितिनिशेनारथेस्त्रियाम् ॥ रथः रमतेत्र अनेनवा रथः पुमानवयवेस्यंदनेपेतसेपिच इतिरथनामत्रयम् ॥ यत्चक्रसंयुतंयानं समरायसंग्रामायनभवति असौपुष्यरथः पुष्यइवरथः पकारमध्यः पमध्योवापुष्यवत्सौकुमाराकारत्वात् पुष्ये या त्रोत्सवादौ एवंनाम ॥ संग्रामंविनायात्रोत्सवादौसरवभ्रमणार्थरथस्य ५१ कर्णीरथः कर्णसामीप्यात्कर्णशब्देनस्कंधोलक्ष्यते ॥ कर्णः स्कंधः सोस्त्यस्यवाहकत्वेन कर्णीन्वासौरथश्च प्रवहणं प्रोत्यतेऽनेन वहप्रापणे ॥ डयनं डीयतेनेन डीङ् विहायसा

त्रिषूपावृत्तलुठितौपरावृत्तेमुहुर्भ्रके ५० यानेचक्रिणियुद्धार्थेशतांगः स्यंदनोरथः असौपुष्यरथश्चक्रयानंनसमरायतत् ५१ कर्णीरथः प्रवहणंडयनंचसमंत्रयं ॥ क्लीबेनः शकटोस्त्रीस्यात्गंत्रीकंबलवाह्यकम् ५२ शिबिकायाप्ययानंस्याद्दोलाप्रेंखादिकास्त्रियाम् ॥

गतौ हयनमितिपाठे हयगतौ एतत्त्रयंसमं त्रीणिपुरुषस्कंधवाह्यस्ययानविशेषस्य ॥ अनः क्लीबे अनः सांतं अनिति अनप्राणने असन्प्रत्ययः ॥ शकटः अस्त्री शक्नोतिभारंवोढुंजीवयितुंवा ॥ तदुक्तं शकटः शाकिनीगावोयानमास्कंदनंस्थलं अनूपः सर्वतोराजा दुर्भिक्षेनवृत्तयः द्वेगाडाइतिख्यातस्य ॥ कंबलिवाह्यकंगंत्री कंबलिभिः वृषैः उह्यते गंत्री गम्यतेऽनया द्वेशाकटिकायाः गाडीइतिख्या० ॥ ५२ ॥ शिबिका शिवैव यद्वा शिवंकरोति तत्करोतिण्यंतात्ण्वुल् ॥ याप्ययाने याप्यैरधमैर्वाह्ययानं द्वेपालखीतिख्यातायाः ॥ दोला दोलयति दोल्यतेवा डुलउत्क्षेपे ॥ प्रेंखा प्रेंख्यते इखिगतौ दोलाप्रेंखः पुमान्प्रेंखानिश्रेणिरधिरोहिणीतिरत्नकोशः आदिशब्देनशयनरवट्वा द्वेहिंदोलेइतिख्यातस्य डोलीइतिख्यातस्यवा ॥

द्वीपिचर्मावृतेरथे द्वैपेनवैयाघ्रेणचर्मणापरिवृतोरथः द्वैपः॥वैयाघ्रः उभौसमौ द्वेव्याघ्रचर्मवेष्टितरथस्य ५३ पांडुकंबलसंवीतः पांडुकंबलेनपरिवृतोरथः स्यात्पांडुकं बलश्वेनप्रावारग्रावभेदयोः एकं॥कंबलेनवस्त्रेणचआवृतोरथः आदिना क्षौमः दौकूलः चार्मः वास्त्रः कांबलः एवमादिनः स्फ. ५४ द्वैपवैयाघ्राद्यस्त्रिषुवर्तते॥ द्वैपीरथ्या द्वैपोरथः द्वैपंरथवृंदं रथव्रजेरथनमूहेरथ्या रथकट्या रथानांसमूहः रथ्यातुरथसंघातेप्रतोल्यांरथिचक्रगेइतिहैमः त्रीणि॥धूःस्त्री धुर्वति धुर्वी हिंसायां॥यानमुखंस्यात् यानस्यमुखंपुरोभागः द्वेधोरबंधनस्थानस्य॥रथांगं रथस्यअंगं॥अपस्करः अपकीर्यते स्वस्थानेक्षिप्यते कृविक्षेपे द्वेचक्रस्य ५५

उभौतुद्वैपवैयाघ्रौद्वीपिचर्मावृतेरथे ५३ पांडुकंबलसंवीतःस्यंदनःपांडुकंबली॥रथेकांबलवस्त्राद्याःकंबलादिभिरावृते ५४
त्रिषुद्वैपादयोरथ्यारथकट्यारथव्रजे॥धूःस्त्रीक्लीबेयानमुखंस्याद्रथांगमपस्करः ५५ चक्रंरथांगंतस्यांतेनेमिःस्त्रीस्यात्प्रधिःपु
मान्॥पिंडिकानाभिरक्षाग्रकीलकेतुद्वयोरणिः ५६

चक्रं रथांगं क्रियतेऽनेनेति चक्रः कोकेपुमान्क्लीबंव्रजेसैन्यरथांगयोः राष्ट्रेदंभांतरेकुंभकारोप करणास्त्रयोः जलावर्तेपि॥रथस्यअंगं रथांगंनद्वयोश्चक्रेनाचक्रांगविहंगमे द्वेनामनी॥तस्यांते तस्यचक्रस्यअंते भूस्पर्शिभागे नेमिः नयतिरथं नेमिर्नातिनि शोकूपत्रिकचक्रांतयोःस्त्रियां स्त्रीलिंगे प्रधिः पुमान् प्रधीयंतेऽनेन॥पिंडिका पिंडयंतेयस्यां पिडिसंघाते॥नाभिः नह्यंतेअराःयत्र णहबंधने यद्वानभ्यतेअक्षेण णभहिंसायां नाभिर्मुख्यनृपेचक्रेमध्यक्षत्रिययोःपुमान् द्वयोःप्राणिप्रतीकेस्यात्स्त्रियांकस्तूरिकामदे द्वे रथचक्रमध्येमंडलाकारायाः॥अक्षाग्रकीलकेतु अक्षस्य नाभिक्षेप्यस्य अग्रेअंतेकीलके॥अणिः अणति अण्शब्दे अणिरादिवदक्षाग्रकीलेस्यादश्रिसीमयोः द्वेनामनी ५६ ७ ७

रथगुप्तिः रथस्यगुप्तिः आवरणं ॥ वरूथः व्रियतेरथोऽनेन वृञ्वरणे ऊथन् वरूथंनर्यवेश्मनोः द्दूशरूत्रादिरक्षणार्थंरथस्यसन्नाहवदावरणस्य ॥ कूबरस्तु कुवते कुङ्‌शब्दे
कूबरस्त्रिषुचारोनाकु ञ्जकैस्त्रीयुगंधरं ॥ युगंधरः युगंवोढुर्बंधनकाष्ठंधारयति इ‍ युगकाष्ठबंधनस्थानस्य ॥ अधःस्थंदारुकाष्ठं ॥ अनुकर्षः अनुकृष्यते कृषविलेखने
अनुकर्षोरथाधस्थदारुण्यप्यपव.र्षणे एकं ॥ रथस्यअधःस्थलभागदारुणः ॥ युगात् रथाद्यंगयुगादित्यर्थः ॥ अन्यत् युगं प्रासंगः प्रसज्जते षंजसंगे घञ् उपसर्गस्येति
दीर्घः ५७ सर्वंहस्त्यश्वरथादिवाहनं यानादिशब्दवाच्यंस्यात् वाहयति यद्वा वहंत्यनेन ॥ यानं यांत्यनेन यानंस्याद्वाहनेगताविल्यु० ॥ युग्यं युज्यतेऽनेन युजिर्योगे यु
ग्यंचपत्रेइतिनिपातनः ॥ पत्रं पतंत्यनेन पत्लृगतौ पत्रंतुवाहनेपर्णेस्यात्पक्षेशरपक्षिणोः ॥ धोरणं धोरंत्यनेन धोरयतिवा धोर्ऋगतिचातुर्ये पत्रवाहनमात्रस्य ॥ परंपरावाह

रथगुप्तिर्वरूथोनाकूबरस्तुयुगंधरः ॥ अनुकर्षोदार्वधस्थंप्रासंगोनायुगाद्युगः ५७ सर्वंस्याद्वाहनंयानंयुग्यंपत्रंचधोरणम् ॥ परंपरा
वाहनंयत्तद्वैनीतकमस्त्रियाम् ५८ अधोरणाहस्तिपकाहस्त्यारोहानिषादिनः ॥ नियंताप्राजितायंतासूतःक्षत्ताचसारथिः ५९

नंयन्नत् वैनीत
कं पुन्नपुंसकयोः विनीतकानामिदं यद्वा विनीयतेऽस्य कः संज्ञायांकन् प्रज्ञाद्यण् ॥ परंपरयायद्वाह्यंवहति शकटरथादिरूढंतस्यैकं ५८ अधोरणाः अधोरयंति नंद्यादित्वात्ल्युः
हस्तिपकाः हस्तिनंपांति पारक्षणे आतोनुपेनिकेकन् स्वार्थे ॥ हस्त्यारोहाः हस्तिनमारोहंति ॥ निषादिनः निषदंत्यवश्यं यद्वा निषादयंत्यप्रवेशयंति गृह्यादित्वाण्णिनिः चत्वारि
महातइतिख्यातस्य ॥ नियंता नियच्छति यमुउपरमे तृच् ॥ प्राजिता प्राजति अजक्षेपणे त्यादौ वलादावार्धधातुकेवाइतिवीभावेन ॥ यंता यच्छति ॥ सूतः सुवति गमयति स्माश्वान् षू
प्रेरणे गत्यर्थत्वात्क्तः सूतस्तुसारथौतक्ष्णिक्षत्रियाद्ब्राह्मणीसुते ॥ क्षत्ता क्षदति क्षदसंवरणे सौत्रः तृन्तृचौ ॥ सारथिः सारत्यश्वान् सृगतौ अंतर्भावितण्यर्थः सरथस्यापि
त्यंवा अतइञ् सूतःक्षत्तानियंताचमंतासव्येष्टएवच इत्यमरमाला ५९

सव्येष्टदक्षिणस्थौ सव्येवामेतिष्ठतिसव्येष्टः॥दक्षिणस्थः दक्षिणेतिष्ठतिदक्षिणस्थः सव्येष्टश्चदक्षिणस्थश्च रथकुटुंबिनःअथैसंज्ञा रथंकुटुंबयितुंशीलमस्य यद्वा रथएवकुटुंबंयस्य॥रथिनः रथोस्त्येषां॥स्यंदनारोहाः स्यंदनमारोहंति द्वेरथारूढस्ययोद्धुः॥अश्वारोहास्तु अश्वमारोहंति॥सादिनः सीदंत्यश्वं षद्लृविशरणादौ सादीतुरंगमानंगरथा-रोहेषुदृश्यते द्वेअश्वस्वारइतिख्यातस्य॥ ६० भटाः भटंति भटभृतौ परिभाषणेवा भटःस्यात्पुंसिवीरेचविशेषेपामरस्यचस्तु०॥योधाः युध्यंते युधसंप्रहारे त्रीणिवीरस्य ॥सेनारक्षाः सेनांरक्षंति सैनिकःसैन्यरक्षेचस्यात्सेनासमवेतके द्वेप्रहारकादेः॥सेनायांयेसमवेताः तेसैनिकाः चपरं सैन्याः सैन्यंसैनिकसेनयोरितिहेमः द्वेसेनायांमीलितस्य ६१ येसहस्रेणबलिनः तेसाहस्राः मत्वर्थेण॥सहस्रिणश्चस्यः इनिर्मत्वर्थे सहस्रंबलानिसंतियेषांते॥सहस्रसंख्याकेनगजाश्वादिनाबलवतः॥परिधिस्थः परिधौसेनांते

सव्येष्टदक्षिणस्थौचसंज्ञारथकुटुंबिनः॥रथिनःस्यंदनारोहाअश्वारोहास्तुसादिनः ६० भटायोधाश्चयोद्धारःसेनारक्षास्तुसैनिकाः॥सेनायांसमवेता येसैन्यास्तेसैनिकाश्चते ६१ बलिनोयेसहस्रेणसाहस्रास्तेसहस्रिणः॥परिधिस्थःपरिचरःसेनानीर्वाहिनीपतिः ६२ कंचुकोवारबाणोस्त्रीयत्तुमध्येसकंचुकाः॥

तिष्ठति॥परिचरः परितश्चरति द्वेसेनायांराज्ञोदंडकारिणः॥सेनानीः सेनांनयति णीञ्प्रापणे सत्सूद्विषेतिक्विप् सेनानीस्यात्पुमान्कार्तिकेयेसेनापतावपुमान्॥वाहिनीपतिः वाहिन्याः पतिः द्वेसेनापतेः ६२ कंचुकः कंच्यते कचदीप्तिबंधनयोः बाहुलकादुकः कंचुकोवारबाणेस्यान्निर्मोकेकवचेपिच वर्धापकगृहीतांगरक्षितवस्त्रेचचोलके कंचुकस्त्वोषधिभेदेच॥वारबाणः बाणंवारयति पर्यंतादण् हृणोतिवा हृञ्संवरणे अण्यंतादण् राजदंतादित्वात्परनिपातः यद्वावारमाच्छादकंबाणमस्य पूर्वपदादितिणत्वं द्वेचोलाइतिसन्नाहस्य॥सकंचुकाः पुरुषाःमध्येकटौकंचुकोपरियत्तुबध्नंतितत्सारसनं सारंसनोतिषणुदाने यद्वा सारंबलमस्यतेदीप्यतेऽनेन असगतिदीप्त्यादानेषु करणेल्युट् शकंध्वादिः सारसनंमेखलायामुरस्त्रेचनतुस्त्रियामिति॥अधिकांगः द्वेकंचुकदाढ्यार्थमध्यकायेनिबद्धस्य अधिकांगंसारसनमिति॥

शीर्षकं शीर्षकंसत्वमस्यात्‌छशीर्षण्यं शिरसेहितंशीर्षण्यं शरीरावयवात्यन्येचनद्विनेइतिसूत्राभ्यांसाधुः शीर्षण्यं शीर्षण्योविशदेकचेइतिहैमः॥शिरस्त्रे शिरःत्रायते त्रैङ्‌पालने आतोनुपसर्गेकः त्रीणिरोपइतिख्यातस्य॥तनुत्रं तनुंत्रायते भाग्वत॥वर्म वृणोतिदेहं वृञ्वरणे मनिन्‌॥दंशनं दंशयतेनेन दशिदंशनस्पर्शनयोः करणेल्युट्‌ दंशनंवर्मदंशयोः उरच्छदः उरःछाद्यतेनेन छदअपवारणे पुंसिसंज्ञायामिघेछादेर्घेतिन्हस्वः॥कंकटकः कंकते अकिलौल्ये अटन्‌ यद्वा कंसरवंकटति कटेवर्षादौ अ च्‌ मूलविभुजात्कोवा॥जगरः जागर्ति पृषोदरादिः जगरःकल्कोयोगः सन्नाहस्यउरच्छदइति॥कवचः कंवातंवंचति वंचुगतौ कवचोगर्दभांडेचसन्नाहेपर्पटेपिच स

बभ्रंतनित्सारसनमधिकांगोथशीर्षकं ६३ शीर्षण्यंचशिरस्त्रेथतनुत्रंवर्मदंशनं॥उरच्छदःकंकटकोजगरःकवचोस्त्रियां ६४ आमुक्तःप्रतिमुक्तश्चापि नद्धश्चापिनद्धवत्‌॥सन्नद्धोवर्मितःसज्जोदंशितोव्यूढकंकटः ६५ त्रिष्वामुक्तादयोवर्मभृतांकावचिकंकणे॥पदातिपत्तिपदगपादातिकपदाजयः ६६

मसन्नाहस्य ६४आमुक्तः आमुच्यतेस्म मुच्लृमोक्षणे॥प्रतिमुक्तः प्रतिमुच्यते नद्धः नह्यतेस्म णहबंधने॥अपिनद्धः चत्वारिधृतकवचादेः॥सन्नद्धः सन्नह्यति सन्नह्यते स्म सन्नद्धोवर्मितेव्यूढे॥वर्मितः सत्यापेपतिणिच्‌ वर्मणानह्यतेस्म वर्मसंजातमस्यवा॥सज्जः सज्जति षस्जगतौ अथसज्जःस्यात्सन्नद्धेसंभृतेत्रिषु॥दंशितः दंशः सं जातोस्य यद्वा दंशयतेस्म दशिदंशनादौ व्यूढकंकटःव्यूढः धृतः कंकटोयेन पंचधृतसन्नाहस्य ६५आमुक्तादयः त्रिषु वर्मभृतां वर्माणिबिभ्रतितेते॥गणेकावचिकं कव चिनांसमूहः॥आमुक्ता आमुक्तः आमुक्तं पूर्वोक्तत्रिलिंगत्वप्रदर्शनमिदंत्रिषु एतदग्रेअपेक्षितं एकंधृतसन्नाहानांगणस्य॥पदातिः पादाभ्यामतति पादशब्दस्यपदादेशः॥पत्तिः प द्यते पदगतौबाहुलकात्तिच्‌॥पदगः॥पादातिकः॥पदाजिः इकारांताः पद्यते पदगतौ पादाभ्यांगच्छति॥पादातिकः पदातिरेव पादातिकइतिपाठः पादाभ्यांअवति अवरक्षणादौ

पद्गः पद्भ्यां गच्छति ॥ पदिकः पादाभ्यां चरति पर्पादित्वात्ष्ठन् इकेचरतौ इति पद्भावः पदानि पत्तिपादात पादाविक पदाजयद् इत्यमरमाला ॥ पत्तिसंहतिः पादातं पत्तीनां पदातीनां संहतिः समुदायः भिक्षादित्वादण् द्वे नामनी ॥ शस्त्राजीवः शस्त्रं आजीवो जीवप्राणधारणं कर्मण्यण् ॥ कांडपृष्ठः कांडानि शस्त्राणि पृष्ठे यस्य कांडस्पृष्ठ इति वा स्पृष्टं गृहीतं कांडं शस्त्रं येन वाहिताग्न्यादित्वात् निपरनिपातः ॥ आयुधीयः आयुधेन जीवति ॥ आयुधिकः आयुधाच्छश्चेति उभयत्र प्रत्ययौ चत्वारि शस्त्रजीविनः ६७ कृतहस्तः कृतः अभ्यस्तः हस्तो यस्य ॥ सुप्रयोगविशिखः शोभनः प्रयोगोऽस्य तस्मिन् विशिखोऽस्य ॥ कृतपुंखः कृतः अभ्यस्तः पुंखयुक्तः शरो येन त्रीणि कृतशराभ्यासस्य ॥ लक्ष्यात् वेधात् च्युतः च्युतसायकः च्युतः भ्रष्टः सायकोऽस्य असौ अपराद्धपृषत्कः अपराद्धः व्यर्थः पृषत्को बाणोऽस्य एकं लक्ष्याप्राप्तशरस्य ६८ धन्वी धन्वअस्यास्ति व्रीह्यादित्वाण्णिनिः धन्वानुमरु

पद्गश्च पदिकश्चाथ पादातं पत्तिसंहतिः ॥ शस्त्राजीवे कांडपृष्ठायुधीयायुधिकाः समाः ६७ कृतहस्तः सुप्रयोगविशिखः कृतपुंखवत् ॥ अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ६८ धन्वी धनुष्मान्धानुष्को निषंग्यस्त्री धनुर्धरः ॥ स्यात्कांडवांस्तु कांडीरः शाक्तीकः शक्तिहेतिकः ६९ याष्टीकपारश्वधिकौ यष्टिपर्श्वधहेतिकौ ॥

देशे नाक्षुद्रं चापे स्थलेपि चेत्स्वरूत्वात् ॥ धनुष्मान् धनुरस्यास्तीति मतुप् नसोमत्वर्थे इति भत्वं ॥ धानुष्कः धनुः प्रहरणमस्य ठक् प्रत्ययैकादेशः ॥ निषंगी निषंगोऽस्यास्ति ॥ अस्त्री अस्त्रमस्यास्ति ॥ धनुर्धरः धरति धनुषः धरः ॥ कांडवान् कांडः बाणोऽस्यास्ति कांडस्तंबेतरस्कंधे बाणे वसरनीरयोः कुत्सितेऽथ सभित्काडोऽस्त्री दरहसि नास्त्रियाम् ॥ कांडीरः कांडादीरन् मत्वर्थे द्वे बाणधारकस्य ॥ शाक्तीकः शक्तिः प्रहरणमस्य ॥ शक्तिहेतिकः शक्तिर्हेतिर्यस्य ६९ यष्टिपर्श्वधहेतिकौ यष्टिश्च परश्वधश्च यष्टिपर्श्वधौ हेती ययोः याष्टीकपारश्वधिकौ क्रमात् यष्टिः प्रहरणमस्य याष्टीकः परश्वधः प्रहरणमस्य पारश्वधिकः ए

कैकं ॥

नैस्त्रिंशिकः निस्त्रिंशः प्रहरणमस्य ॥ असिहेतिः असिर्हेतिर्यस्य स्यात् ॥ प्रासिककौन्तिकौ समौ प्रासः कुन्तश्च प्रहरणमस्य प्राग्वद्ठक् ७० चर्मी चर्मास्यास्तीति व्रीह्या-दित्वाण्णिनिः ॥ फलकपाणिः फलकं पाणावस्य द्वे फलकधारकस्य ॥ पताकी पताकाऽस्यास्ति प्राग्वत्णिनिः ॥ वैजयन्तिकः वैजयन्त्यस्यास्ति ठन् मत्वर्थे यद्वा वैजयन्त्या चरति चरतीति ठक् द्वे ध्वजधारकस्य प्राकृतभाषया निशाणकरी जरिपटका ॥ अनुप्लवः अनु पश्चात्प्लवते प्लुङ् गतौ ॥ सहायः सह अयते अयगतौ अच् ॥ अनुचरः अनु चरति टप्रत्ययः ॥ अभिचरः अभितश्चरति अच् चत्वारि अनुचरस्य समाः ७१ पुरोगः पुरो गच्छति अन्येष्वपीति डः ॥ अग्रेसरः अग्रसरोऽपि अग्रे सरति पुरोऽग्रतोऽग्रेषु सर्तेरिति टच् ॥ प्रष्ठः प्रतिष्ठते गच्छति प्रष्ठोऽग्रगामिनि इति षत्वं पृषोदरादित्वात् ॥ अग्रतः सरः अग्रतः सरति टच् ॥ पुरः सरः पुरः सरति पुरो गच्छति पुरोगमः पचाद्य-

नैस्त्रिंशिकोऽसिहेतिः स्यात्समौ प्रासिककौन्तिकौ ७० चर्मी फलकपाणिः स्यात्पताकी वैजयन्तिकः ॥ अनुप्लवः सहायश्चानुचरोऽभिचरः समाः ७१ पुरोगाग्रेसरः प्रष्ठाग्रतःसरपुरःसराः ॥ पुरोगमः पुरोगामी मन्दगामी तु मन्थरः ७२ जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ ॥

च् ॥ पुरोगामी सुप्यजातौ णिनिस्ताच्छील्ये षडग्रेसराणां गमनामानि ॥ मन्दगामी मन्दं गच्छतिति ताच्छील्ये णिनिः ॥ तु ॥ मन्थरः मथ विलोडने मथ्नाति हिंसासंक्लेशनयोः मन्थरानिवा क्रम त्ययः मन्थरः कोशफलयोर्वाच्यसंथनयोः पुमान् कुसुम्भां च द्वयोर्मन्दे पृष्ठे वक्रे मिथे यद्वत् द्वे शनैर्गमनशीलस्य ७२ जङ्घालः सिध्मादित्वात् लच् अतिशयिता जङ्-घाऽस्य प्रज्ञालप्रज्ञिलौ तुल्यौ जङ्घालेऽजङ्घितादयः इति वाचस्पतिः ॥ अतिजवः अतिशयितो जवो वेगो यस्य द्वे अतिवेगवतः तुल्यौ ॥ जङ्घाकरिकः जङ्घैव करो राजदेयो भागः ॥ आकरः श्रेष्ठोवा यद्वा जङ्घैव करी हस्ती यस्य ॥ जाङ्घिकः जङ्घाभ्यां जीवति वेतनादिभ्यो जीवति इति ठक् द्वे जङ्घाजीविनः नामनी ॥

तरस्वी तरः वेगः यस्यास्ति तरस्वीशूरवेगिनोः॥त्वरितः त्वरते त्रित्वरासंभ्रमे त्वरासंजातास्येतिवा॥ वेगी अतिशायितोवेगोऽस्य॥प्रजवी प्रजोऽस्ति प्रजवति॥जवनः॥जवः जवनंतुस्यदेवेगिहयेनावेगिनित्रिषु पुंल्लिंगस्तुभवेद्वेगोबोंडु पुष्पेजवेमतेऽ८० षट्त्वरितमात्रस्य ७३ यः जेतुंशक्यते सः जय्यः जेतुंशक्यः एकं॥जेतव्यमात्रकेजेयः नतुज य्यः॥ जैत्रस्तु जेता जयनशीलः तृन्नंतात्प्रज्ञाद्यण् एकंजेतुंयोग्यस्य॥ द्वेजयवतः ७४ यः विद्विषतः रिपून् अलं अत्यंतसामर्थ्येनयोद्धुंसंमुखंगच्छति सः अभ्यमित्र्यः अमित्रस्याभिमुखं लक्षणेनाभिमतीतिअव्ययीभावे अभ्यमित्राच्छचेतियत् खच्छेषुत्रयाणांसाधुत्वं॥अभ्यमित्रीयः॥अभ्यमित्रिणः त्रीणिसामर्थ्येनरिपूणांसंमुखंग

तरस्वीत्वरितोवेगीप्रजवीजविनोजवः ७३ जय्योयःशक्यतेजेतुंजेयोजेतव्यमात्रके॥ जैत्रस्तुजेतायोगच्छत्यलंविद्विषतःप्रति ७४
सोऽभ्यमित्र्योभ्यमित्रीयोप्यभ्यमित्रीणइत्यपि॥ ऊर्जस्वलस्यादूर्जस्वीयऊर्जातिशयान्वितः ७५ स्यादुरस्वानुरसिलोरथिनोरथिकोरथी
॥ कामंगाम्यनुकामीनोह्यत्यंतीनस्तथाभृशम् ७६ शूरोवीरश्चविक्रांतोजेताजिष्णुश्चजित्वरः॥

च्छतः॥ऊर्जातिशयान्वितः यः सः ऊर्जस्वलः॥ऊर्ज स्यपराक्रमस्यअतिशयः तेनअन्वितः॥ऊर्जस्वलः अतिशयितः ऊर्जोयस्यास्ति ऊर्जशब्दोदंतःसांतश्च॥ऊर्जस्वी इतिद्वे नामनी ७५उरस्वान् प्रशस्तंअतिशयितंउरोयस्य॥उ रसिलः पिच्छादिभ्यइलच् द्वेविपुलोरसः॥रथिनः रथस्यईनः शकंध्वादित्वात्पररूपं॥रथिकः रथी अतइनिठनौ रथोस्यास्तीति रथिनअदंतः त्रीणिरथस्वामिनः॥यःका मंगामीसः अनुकामीनः कामंयथेष्टंगमनशीलः तथा भृशंअत्यंतंगामी सः अत्यंतीनः अवारपारात्यंतानुकामंगामीतिउभयोःसाधुत्वं एकंअतिगमनशीलस्य ७६शूरः शूरयति शूरवीरविक्रांतौ अच् शूरःस्याद्यादवेभटे॥वीरः वीरयति प्राग्वत् वीरोरसविशेषेपुंस्युत्तरेसुभटेत्रिषु स्त्रीसुरासीरकाकोलीतामलक्येस्रवालुके पतिपुत्रवतीरंभा विदारीदुग्धिकास्त्रवेत्यपि॥विक्रांतः विक्रामतिस्म क्रमुपादविक्षेपे त्रीणिशूरस्य॥जेता जयनशीलः॥जिष्णुः जिष्णुर्नावासवेर्जुने॥जित्वरः ग्वस्नुगामस्थः त्रीणिजयशीलस्य॥

रणेसंग्रामे साधुः समर्थः सः सांयुगीनः संयुगेसाधुः सांयुगीनः शस्त्राजीवादयः सांयुगीनानाः त्रिषु ७७ ध्वजिनी ध्वजाः संत्यस्यां ॥ वाहिनी वाहाः संत्यस्यां ॥ सेना ।सी-
नोति षिञ्बंधने सहइनेनवा ॥ पृतना प्रियते पृङ्व्यायामे पृतनातुस्त्रियांसेनामात्रसेनाविशेषयोरित्युक्तत्वात् ॥ अनीकिनी अनीकंरणोऽस्तिप्रयोजनत्वेनयस्याः अनीकिनी
स्त्रियांसेनामात्रसेनाविशेषयोरित्यु॰ ॥ चमूः चमतिशत्रून् चमूःसेनाविशेषेन्चसेनामात्रेन्वयोषिनि ॥ वरूथिनी वरूथाः संत्यस्यां ॥ बलं बलति बलप्राणने यद्वा बलते ब
लसंवरणे संचलनेच ॥ सैन्यं सेनैवसैन्यं चतुर्वर्णादित्वात्स्वार्थेष्यञ् ॥ चक्रं चक्रियते घञर्थेकः ॥ अनीकं अनित्यनेन अनप्राणने पुंनपुंसके अनीकोस्त्रीरणेसैन्ये ए
कादशसेनानामानि ७८ व्यूहस्तु व्यूह्यते ऊहवितर्के व्यूहः स्याद्बलविन्यासेनिर्माणेवृंदतर्कयोरित्यु॰ ॥ बलविन्यासः सेनायाः विभज्य स्थापनं द्वे व्यूहस्य ॥ युधिदंडाद

सांयुगीनोरणेसाधुःशस्त्राजीवादयस्त्रिषु ७७ ध्वजिनीवाहिनीसेनापृतनानीकिनीचमूः ॥ वरूथिनीबलंसैन्यं
चक्रंचानीकमस्त्रियां ॥ ७८ ॥ व्यूहस्तुबलविन्यासोभेदादंडादयोयुधि ॥ प्रत्यासारोव्यूहपार्ष्णिःसैन्यपृष्ठेप्रतिग्रहः ७९

योभेदाविशेषाः व्यूहस्येविशेषः यदाह कामंदकः तिर्यग्वृत्तिस्तुदंडःस्याद्भोगोन्यावृत्तिरेवच मंडलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतइति ॥ दंडवदवस्थानंदंडः अन्योन्यागना
वृत्तिर्भोगः सर्पशरीरवद् यस्थानंमंडलः गजादीनांविजातीयैरमिश्रितानांस्थानमसंहतः शकटमकरपताकासर्वतोभद्रदुर्जयादयोपि इतिभेदाःप्रत्येकंसंति ॥ प्रत्यासारः
प्रतीपमासारयतिभग्नान् सृगतो पर्यंतादच् ॥ व्यूहपार्ष्णिः व्यूहस्यपार्ष्णिः पृष्ठभागः पार्ष्णिस्याद्दुन्मदस्त्रियां स्त्रियांद्वयोःसैन्यपृष्ठपादग्रंथ्यधरेपिन्चेतिविश्वमेदिन्यौ द्वे व्यूहप
श्चाद्भागस्य ॥ सैन्यपृष्ठे सैन्यस्यपृष्ठेधनुःशतद्वयांतरेस्थितंसैन्यं ॥ प्रतिग्रहः प्रतिगृह्यतेऽनेन प्रतिग्रहः स्वीकरणेसैन्यपृष्ठपतद्ग्रहे योग्यंस्यात्विधिवद्देयेनद्ग्रहेचग्रहांतरइत्यु॰ एकं
सैन्यस्यपश्चाद्भिन्नसंधानस्यानीकस्य ७९

एकेभा एकः इभोयस्यां ॥ एकरथा एकः रथोयस्यां ॥ त्र्यश्वा त्रयोः श्वाः यस्यां ॥ पंचपदातिका पंचपदातयोऽस्यां पद्यते पत्यतेवा पद्गतौ पत्लृगतौ पत्तिर्नापदके स्त्रियां गतावेकरथेभैकत्र्यश्वपंचपदातिके तदुक्तं भारतेन एकोरथोगजश्चैकोनराः पंचपदातयः त्रयश्चतुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते एकं ॥ पत्त्यंगैः पत्तेरवयवैर्गजादिभिस्त्रिगुणैर्यथोत्तरं क्रमात्सेनामुखादयः स्युः ८० सेनामुखं तिस्त्रः पत्तयः सेनामुखं ॥ त्रिभिः सेनामुखैः गुल्मः ॥ त्रयोगुल्माः गणः ॥ त्रयोगणाः वाहिनी ॥ तिस्त्रः वाहिन्यः पृतना ॥ तिस्त्रः पृतनाश्चमूः ॥ तिस्त्रश्चम्वोनीकिनी ॥ दशानीकिन्यः अक्षौहिणी ॥ गुल्मः गुडति गुड्यतेवा गुडरक्षायां डलयोरेकत्वं गुल्मः सेनाघट्टभिदोः सैन्यरक्षणासंभिदोः

एकेभैकरथात्र्यश्वापत्तिः पंचपदातिका ॥ पत्त्यंगैस्त्रिगुणैः सर्वैः क्रमादाख्यायथोत्तरं ८० सेनामुखंगुल्मगणौवाहिनीपृतनाचमूः ॥
अनीकिनीदशानीकिन्यक्षौहिण्यथसंपदि ८१ संपत्तिः श्रीश्चलक्ष्मीश्चविपत्त्यांविपदापदौ ॥

स्तंबेस्त्रियामामलक्यैलवलीवस्त्रवेश्मसु ॥ गणः गणयते गणयतिवा गणसंख्याने गणः प्रमथसंख्यौघेचंडीसैन्यप्रभेदयोरित्यः ॥ अक्षौहिणी अक्षाणामिंद्रियाणांऊहः सविकल्पंज्ञानमक्षोहः सोस्तियस्याः अक्षौहिण्यामित्यधिकैः सप्तत्याह्यष्टभिः शतैः संख्यायुक्तासहस्त्राणिगजानामेकविंशतिः एवमेवरथानांतुसंख्यानंकीर्तितंबुधैः पंचषष्टिसहस्त्राणिषट्शतानिदशैवतु संख्यातास्तुरगास्तज्ज्ञैर्विनारथतुरंगमैः नृणांशतसहस्त्रंतुसहस्त्राणिनवैवतु शतानित्रीणिचान्यानिपंचाशाच्चपदातयइति ॥ अथसंपदि संपत् अनया पद्गतौ ८१ संपत्तिः क्तिप् क्तिनोः समावेशः संपत्तिसाकल्यांतइतिनिर्देशात्त्वासरूपन्यायमूलकः ॥ श्रीः श्रीयतेसर्वैः श्रिसेवायां श्रीर्वेषरचनाशोभाभारतीसरलद्रुमे लक्ष्म्यांत्रिवर्गसंपत्तौवेशोपकरणेमताइतिविश्वभेदिन्यौ

लक्ष्मीः लक्ष्यते लक्षदर्शने चत्वारिधनोत्कर्षस्य ॥ विपत्त्यां विपत् आपत् स्त्रः ॥ आयुधंतु आयुध्यंतेऽनेन युधसंप्रहारे ॥ प्रहरणं प्रह्रियतेऽनेन ॥ शस्त्रं शस्यतेऽनेन शसु हिंसायां ॥ अस्त्रं अस्यते असक्षेपणे असनिवा असदीप्तौ चत्वारिप्रहरणमात्रस्य ८२ धनुः धनति धनशब्दे उस्प्रत्ययः धनुःप्रियालेनानरूप्याराशिभेदेशरासने ॥ चापः चापस्यवंशाभेदस्यविकारः अवयवेचप्राण्योषधिइत्यण् धनुश्चापौतुअस्त्रियौ क्लीबेपुंसिच ॥ धन्व धन्वति धविगतौ धन्वातुमरुदेशेनाक्लीबेचापेरुस्थलेपिचेत्यकृत्वात् ॥ शरासनं शराः आस्यंतेअनेन असक्षेपणे ॥ कोदंडं कोदति कुद्अनृतभाषणे कोदंडः कार्मुकेदेशभेदभ्रूतलयोरपि इतिहेमचंद्रः ॥ कार्मुकं कर्मणेप्रभवति ॥ इष्वासः इषवोबाणाः अस्यंतेअनेन इष्वासोधन्वधन्विनोरितिहैमः धनुषः सप्तनामानि ॥ धन्वशब्दः नांतः धन्वमपिअदंतं धनुरुसंतः ॥ अथकर्णस्यशरासनंकालपृष्ठं कालोयम

आयुधंतुप्रहरणंशस्त्रमस्त्रमथास्त्रियौ ८२ धनुश्चापौधन्वशरासनकोदंडकार्मुकं ॥ इष्वासोप्यथकर्णस्यकालपृष्ठंशरासनं ८३ कपिध्वजस्यगांडीवगांडिवौपुंनपुंसकौ ॥ कोटिरस्याटनीगोधेतलेज्याघातवारणे ८४

इवपृष्ठंयस्य कालवर्णवापृष्ठंयस्य कालपृष्ठंकर्णचापे पुंसिकंक विहंगमइतिहैमः एकंकर्णधनुषः ८३ कपिध्वजस्य कपिर्हनूमान्ध्वजोध्वजेवायस्य ॥ गांडीवगांडिवौ गांडिग्रंथिरस्यास्ति पुंनपुंसकौ जिष्णोर्धनुषिकोदंडेगांडीवंगांडिवंनथेतिशाश्वतः कोदंडेधनुमात्रेऽपि द्वेअर्जुनधनुषः ॥ कोटिः कोटी कोट्यतेऽनयावा कुटकौटिल्ये कोटिःस्त्रीधनुषोग्रेसौसंख्याभेदप्रकर्षयोः ॥ अटनी अटनिः अटतिगुणोऽत्र अटगतौ द्वेधनुषोंत्यभागस्य ॥ ज्याघातवारणे गोधे गुध्येतेबाहूयाभ्यां गुधपरिवेष्टने गोधातलनिहाकयोः ॥ तलति तलप्रतिष्ठायां तलश्चपदेमालद्रौ तलंज्याघातवारणे मंधौस्वभावाधरयोस्तंत्रीघातेचसत्वतः तलंस्वरूपेनूर्ध्वस्त्रीक्लीबंज्याघातवारणे ज्यायाः गुणस्याघातस्यवारणेद्वे ८४ ७

लस्तकः लस्यतेऽस्मिन् लसश्लेषणक्रीडनयोः क्तः आगमानित्यत्वादिड्भावे स्वार्थे कन् ॥ धनुर्मध्यं स्थान धनुषः मध्यं द्वे ॥ मौर्वी मूर्वायाः विकारः अवयवे च प्राण्योषधिवृक्षेभ्य इति सूत्रेण अण् ॥ ज्या जिनाति ज्यावयोहानौ डः टाप् ॥ शिंजिनी शिंक्ते शिजि अव्यक्ते शब्दे आवश्यके णिनिः ॥ गुणः गुण्यते गुण आमंत्रणे घञ् गुणो ज्यासूत्र तंतुषु मूर्वातृणविशेषः चत्वारि ॥ प्रत्यालीढं लिह आस्वादने ॥ आलीढं उभयत्र क्तः इत्यादिस्थानपंचकं आदिना समपदं वैशाखं प्रत्यालीढस्तु चरणन्यास भेदे शितेत्रिषु वामजंघाप्रसरणपूर्वकदक्षिणजंघासंकोचे प्रत्यालीढं ॥ दक्षिणजंघाप्रसरणपूर्वकवामजंघासंकोचे आलीढं ॥ पादयोः समत्वेन स्थितिः समपदं ॥ वितस्त्यंतरेण स्थितपादद्वयो वैशाखः मज्जाद्याणिउक्तं रूपं ॥ मंडलाकारेण पादद्वयधारणं मंडलं पंच धन्विनां स्थानभेदाः ८५ लक्षं लक्ष्यते लक्ष आलोचने लक्षं व्याज शर

लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिंजिनी गुणः ॥ स्यात्प्रत्यालीढमालीढमित्यादि स्थानपंचकम् ८५
लक्षं लक्ष्यं शरव्यं च शराभ्यास उपासनम् ॥ पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ८६

व्ययोः ॥ लक्ष्यं ण्यंतात् चोयत् ॥ शरव्यं शरवे हिंसायै हितं यद्वा शरान्व्ययति व्येञ् संवरणे कप्रत्ययः त्रीणि वेधस्य ॥ शराभ्यासः शरस्य शरमोक्षस्य अभ्यासः ॥ उपासनं उप पूर्व अस क्षेपणे आस उपवेशने उपासनमासने शुश्रूषायां शराभ्यासे पीति हैमः द्वे शरप्रक्षेपाभ्यासस्य ॥ पृषत्कः पर्षति पृषु सेचने वर्तमाने इति निपातनात्कन् ॥ बाणः वणनं वण शब्दे बाणः शब्दोऽस्त्यस्य बाणः स्याद्बाणस्तु नैर्दैत्यभेदे केवलकांडयोरिः ॥ बाणा तु बाणमूल्ये स्त्री नीलझिंट्यां पुनर्द्वयोः ॥ विशिखः विशिष्टा शिखा अग्रमस्य विशिखा खनित्रिकायां रथ्यायां विशिखः शर इति हैमः ॥ अजिह्मगः अजिह्ममृजु गच्छति ॥ खगः खे गच्छति खगोऽर्कग्रहपक्षिषु ॥ आशुगः आशु गच्छति आशुगो वै शरे वायाविति हेमचंद्रः ८६

कलंबः कल्यते कलक्षेपे अंबच् कलंबीशारवदेभेपिस्यात्दंडशरयोः पुमान्॥ मार्गणः मार्गयति मार्गअन्वेषणे मार्ग्यतेवा मार्गणंयाचनेन्वेषेमार्गणस्तुशरेर्थिनी॥ शरः शृणाति अनेन शृहिंसायां सरइत्यपिपाठः सरति सृगतौ॥ पत्री पत्राणिपक्षाः संत्यस्य चित्रपुंखकः सरः शरइतित्रिकांडशेषः शरस्तुतेजनेबाणेदध्यग्रेनाशरंजलइति विश्वमेदिन्यौ पत्रीकांडेरवगेद्रुमे॥ रोपः रोप्यतेऽनेन रुपविमोहने यद्वा रुप्यतेनेन रोपोरोपणबाणयोरितिविश्वः॥ इषुः ईर्ष्यतेनेन ईषगतिहिंसादर्शने इतिद्वादशबाणनामानि इषुशब्दः स्त्रीपुंसयोः॥ पृक्ष्वेडनास्तु प्रकर्षेणक्ष्वेदंते॥ नाराचाः नरानाचामंति यद्वा नराणांसमूहः नारं नारमाचरंति द्वेलोहमयबाणस्य॥ पक्षः पक्षति प

कलंबमार्गणशराः पत्रीरोपइषुर्द्वयोः॥ प्रक्ष्वेडनास्तुनाराचाः पक्षोवाजस्त्रिषूत्तरे ८७ निरस्तःप्रहितेबाणेविषाक्तेदिग्धलिप्तकौ॥ तूणोपासंगतूणीरनिषंगाइषुधिर्द्वयोः ८८ तूण्यांखड्गेतुनिस्त्रिंश

क्ष्यतेनेनवा पक्षपरिग्रहे॥ वाजः वजत्यनेन वजगतौ वाजयतिवा द्वे शरपक्षस्य॥ उत्तरेत्रिषु उत्तरेके वक्ष्यमाणालिप्तकांताः ८७ प्रहितेनिक्षिप्तेबाणेनिरस्तइत्येकं निरस्तः निरस्यतेस्म निरस्यतेः क्तः विषाक्तेविषयुक्तेबाणेदिग्धलिप्तकौ दिह्यतेस्म दिहउपचयेक्तः लिप्यतेस्म लिपउपदेहे क्तप्रत्ययः द्वेविषसंबद्धबाणस्य॥ तूणः तूणयति तूणसंकोचे पचाद्यच्॥ तूणाचस्त्रियांवा तूणेषुधिउपासंगइतिरत्नकोशः॥ उपासंगः उपसज्यंतेत्रसराः षंजसंगे॥ तूणीरः तूणीतूणत्वंईर्ते ईरगतौ यद्वा तूणीशरैः संकोचंराति रादाने आदनेच॥ इषुधिः इषवोधीयंतेऽत्रकिप्रत्ययः इषुधिःशब्दः स्त्रीपुंसयोः तूण्यांषट्शराधारस्य ८८ खड्गेतु खंडयतिपरं खंड्यतेऽनेनवा खडिभेदने गन्किच खड्गोगंडकशृंगासिबुद्धभेदेषुगंडकइत्यस्तु॰॥ निस्त्रिंशः निर्गतस्त्रिंश तोंगुलिभ्यः॥

चंद्रहासः चंद्रइवहासःप्रभाःस्य चंद्रंहसतिवा हसेहसने चंद्रहासोनिमान्तके दशग्रीवकृपाणेचकनायासिचगुग्गुलंपिन्यु०॥ असिः अस्यते असुक्षेपणे असतिवा असिःखङ्गेन
दीधिदीप्तिहैमः॥ रिष्टिः रेषति रिषहिंसायां रिशतिवा रिशहिंसायां रिष्टिःखड्गेनाशःशोस्त्री रिषति ऋषीगतौ करवाल मंडलाग्रकौक्षेयकासिरिष्टयः रिष्टिःखड्गःकरवालःकौ
क्षेयकोऽचनंदकइतिरभसः॥ कौक्षेयकः कुक्षौभवः ढकञ्॥ मंडलाग्रः मंडलमग्रमस्य॥ करपालः करंपालयति पालरक्षणे॥ कृपाणः॥ करवालइतिपाठांतरं करंवलति वल
प्राणने करवालोयस्य कृपाणवत् कृपांनुदति नुदप्रेरणे अन्येष्वपीतिडः नवखड्गस्यनामानि ८९ खड्गादिमुष्टौत्सरुः त्सरति त्सरछद्मगतौ आदिनाकठारखंजरइत्यादि
॥ छुरिकादिग्रहः तन्निबंधनं॥ मेखला तस्यखड्गस्यमुष्टेः चर्म वध्रिकयानिबंधनंमेखला मांलक्ष्मीमीखतिवा ईखगतौ यद्वा माईमानिषेधे ईलक्ष्मींखलति खलसंचलने

चंद्रहासासिरिष्टयः॥ कौक्षेयकोमंडलाग्रः करवालःकृपाणवत् ८९ त्सरुःखड्गादिमुष्टौस्यान्मेखलातन्निबंधनं॥ फलकोस्त्रीफलंचर्मसंग्राहोमु
ष्टिरस्ययः ९० द्रुघणोमुद्गरघनौस्यादीलीकरवालिका॥ संचयंच मेखलाखड्गबंधेस्यात्कांचीशैलनितंबयोः इतिखड्गादेश्चर्मादिनिर्मितकटिबंधनस्य॥ युद्धेहस्ताग्र
तनवारणायमणिबंधेप्रध्रियमाणस्य॥ फलकः अस्त्री फलति ञिफलानिशरणे फलनिष्पत्तौवा फलंहेतुकृतेजातिफलेफलकसस्ययोः त्रिफलायांचकंकोलेशस्त्राग्रमुष्टि
लाभयोरित्य०॥ चर्म चरति चर्यतेवानेन चर्महलौचफलकेइतिविश्वः त्रीणि ढालइतिख्या०॥ अस्यफलकस्ययःमुष्टिःससंग्रहः संगृह्यते ग्रहउपादाने सप्तिमुष्टेर्ज्ञनकर्मणि
घञ् एकं ९० द्रुघणः द्रुर्हन्यतेनेन॥ मुद्गरघनौ द्रुघणोमुद्गरेपिस्याद्द्रुहिणेचपरस्वधइतिविश्वः मुद्गरः मुदःगरः गॄनिगरणे पचाद्यच् हन्यतेनेन घनःसांद्रेदृढेदार्ढ्येविस्ता
रेमुद्गरेंबुदे संघेमुस्तेघनंमध्यनृत्यवाद्यप्रभेदयोरितिहेमः त्रीणिमुद्गरस्य॥ ईली ईर्ते ईर्यतेवा ईड्यतेवा ईडस्तुतौ डलयोरेकत्वं ह्रस्वादिपाठेतुइलगतौक्षेपेच॥ करपालिका
करंपालयतिपालरक्षणे करवालिकेतिपाठे करंवलते वलहिंसादानयोः करेणचाल्यतेवा पर्यंतादच् इः कन् हेतरवारइतिख्यातस्य गुप्तीतिवा॥

भिंदिपालः भिंदति बिदिअवयवे भिदीतिपाठांतरं भिदिर्हृदशनालंतुदशकुंतोभिधीयत इतिभरतः भिंदिंपालयति॥ सृगः सरति सृगतौ बाहुलकात्गक् द्वेगोफणइति-
ख्यातस्य एतौतुल्यौ॥ परिघः परितोहन्यतेनेन परिघोस्त्रेयोगभेदे परिघातेर्गलेपिचेतिहैमः॥ परिघातनः परितोघातयत्यनेन द्वेलोहबद्धयष्टेः ९१ कुठारः द्वयोःस्त्री
पुंसयोः कुठेगतिप्रतिघातके आरोनातिरस्य कुठंवृक्षसमूहंछतिवा ऋगतौ॥ स्वधितिः स्वंधियति धिधारणे॥ परशुः परं शृणाति शृहिंसायां॥ परस्वध इतिपाठेतु परःस्वं
दधाति कुठारस्त्रीचस्वधितिः परशुश्चपरस्वधः कटाटंकःपर्शरथछुरिकाकोशशायिका इतिरभसः चत्वारिकुठारनामानि॥ शस्त्री शस्यतेऽनया शसुहिंसाया स्यात्
शस्त्रमायुधेलोहेशस्त्रीछुरिकयासमाइतिहैमः॥ असिपुत्री असेःपुत्री॥ छुरिका छुरति छुरच्छेदने॥ असिधेनुका असेर्धेनुरेव चत्वारिछुरिकायाः ९२ शल्यं शलति श

भिंदिपालः सृगस्तुल्यौपरिघः परिघातनः ९१ द्वयोः कुठारः स्वधितिः परशुश्चपरस्वधः॥ स्याच्छस्त्रीचासिपुत्रीचछुरिकाचासिधेनु
का ९२ वापुंसिशल्यंशंकुर्नाशर्वलातोमरोस्त्रियां॥ प्रासस्तुकुंतः कोणस्तु

लगतौ शल्यंतुनस्त्रियांशंकौक्लीबंक्ष्वेडेपुंतोमरे वापुंसि॥ शंकुः पुल्लिंगए
व. शंकतेऽस्मात् शकिशंकायां शंकुःपत्रशिराजालेसंख्याकीलकशंभुषु पादान्त्यभेदयोर्मे दुइतिहेमः संख्याकीलकयोःशंकुः शंकुःप्रहरणांतरइतिशाश्वतः द्वेशल्यइति
ख्यातस्य॥ शर्वला शर्वति शर्वगतौ सर्वलाइत्यपि सर्वलातिविगृण्हाति॥ तोमरः अस्त्रियां म्रियतेनेनमरः तौः तुइतिसौत्रोधातुः विच् गंताचासौतोमरः तौःगंताम्रियतेनेन
द्वे गडासाइतिख्यातस्य॥ प्रासस्तु प्रास्यते॥ कुंतः कुंशरीरंउनत्ति उंदीक्लेदने कुंतःप्रासेचंडभावेस्यात्क्षुद्रजातौगवेधुके कुंतीपांडुप्रियायांचशल्लक्यांगुग्गुलेद्रुमइतिविश्वप्र
दिन्यौ द्वेभालाइतिख्यातस्य॥ कोणस्तु कुणशब्दे कोणोवाद्यप्रभेदेस्याद्वीणादीनांचवादने एकदेशेगृहादीनामस्त्रौचलगुडेपिच॥

पालिः पाली ॥ अश्रिः अश्री ॥ कोटिः कोटी ॥ पालयतीति पालरक्षणे पाणिः कर्णलताग्रेसोपंक्तावंकप्रभेदयोः छन्दादिदेवेस्त्रीपाली यूकासश्मश्रुयोषितोः ॥ अश्रिः अश्नाति अश्नुतेवा अशभोजने अशूव्याप्तौ अंस्रः कोणेशिरसिजेइतिविश्वादस्रोपि अश्रिः कोणैकदेशयोरितिधरणिः ॥ कोटिः कोटयति कौट्यतेवा कुटकौटिल्ये कुट्यतेवा कोटिः स्त्रीधनुषोग्रेस्त्रीसंख्याभेदप्रकर्षयोरितिविश्वः चत्वारिअस्रादीनामग्रधारायाः ९३ सर्वाभिसारः सर्वेषामभिसरणंयस्मिन् ॥ सर्वौघः सर्वस्यओघः ॥ सर्वसन्नहनार्थकः सर्वसन्नहनमर्थोयस्य सर्वौघोगुरुवेगेचसर्वसन्नहनेपुमान् त्रीणिसर्वसन्नहनस्य ॥ लोहोस्त्रीशस्त्रकेलोहे अस्त्रभृतांराज्ञांमहानवम्यांदशम्यां

स्त्रियःपाल्यश्रिकोटयः ९३ सर्वाभिसारः सर्वौघः सर्वसन्नहनार्थकः ॥ लोहाभिसारोऽस्त्रभृतांराज्ञांनीराजनाविधिः ९४ यत्सेनयाभिगमनमरौतदभिषेणनं ॥ यात्राव्रज्याभिनिर्याणप्रस्थानंगमनंगमः ९५ स्यादासारः प्रसरणंप्रचक्रंचलितार्थकम् अहितान्प्रत्यभीतस्यरणेयानमभिक्रमः ९६

वानीराजनासमयेप्रस्थानात्प्राक्शस्त्रवाहनादिपूजनविधिः सलोहाभिसारः लोहस्यशस्त्रस्य अभिसारः अभितोहरणं ९४ अरौशत्रुसमीपेचतत्सेनयाअभिगमनं अभियानं याप्रापणे त्रन् यात्रानुत्थापनेपिस्याद्गमनोत्सवयोःस्त्रियामितिविश्वः गमोनाक्षविवर्तेस्यादपर्यालोचितेध्वनि ॥ यात्रा ॥ व्रज्या व्रजगतौ व्रजयजोर्भावेक्यप् ॥ अभिनिर्याणं ॥ गमनं ॥ गमः अप्प्रत्ययः नामषट्कंप्रयाणस्य ९५ आसारः प्रसरणंस्यात् आसारः स्यात्प्रसरणेवेगवद्वर्षेसुहृद्बलइतिविश्वः प्रसरणीतिपाठे सर्वतोव्याप्य सैन्यप्रसरणस्यद्वेनामनी ॥ प्रचक्रं प्रस्थितंचक्रं प्रचक्रंचलितंत्रिष्वित्यमरमाला द्वेप्रस्थितसैन्यस्य ॥ रणेसंग्रामेअहितान्शत्रून्प्रतिअभीतस्यशूरस्ययद्यानंगमनंसअभिक्रमः क्रमुपादविक्षेपे एकं ९६ ५ ५ ५

वैतालिकाः विविधेनतालेनचरंति॥बोधकराः बोधंकुर्वंति हे प्रानर्जागरणकारिणः॥चाक्रिकाः चक्रेणसमूहेनचरंति॥घांटिकार्थकाः घंटयाचरंति ॥ घंटिकादयस्य प्राकृतभाषयाघड्याळजीतिख्यातस्य॥मागधास्तु मगध्यंति याचंते मगधाः मधुकाइतिपाठे मधु मधुकरंकायंति हे वंशपरंपराशंसकानां॥बंदिनः बंदंते वंदिअभिवादनस्तुत्योः॥स्तुतिपाठकाः स्तवैःपाठकाः बंदिनस्त्वमलप्रज्ञाप्रस्तावसदृशोक्तयः हे भाटइतिख्यातस्य॥९७॥समधान् शपथानहृतः अनिवर्तिनः तेसंशप्तकाः संशप्तंशपथंकुर्वंतीति तत्करोतीतिणिच् ण्वुल् यद्वा सम्यक्शप्तंशपथंसत्यंयेषांते शेषाद्विभाषेतिकप् इत्येकंनाम॥रेणुः रिणाति रीयतेवा रीगतिश्लेषणयोः णुप्रत्ययः रेणुः स्त्रीपुंसयोर्धूलौपुल्लिंगःपर्परेषुनरिति विश्वमेदिन्यौ स्त्रियां धूलिः धुवति धूयतेवा धुविधूनने बाहुलकात्क्लिः॥पांसुः पसंति पसिनाशने अ

वैतालिकाबोधकराश्चाक्रिकाघांटिकार्थकाः॥स्युर्मागधास्तुमगधाबंदिनस्तुतिपाठकाः ९७ संशप्तकास्तुसमयात्संग्रामादनिवर्तिनः॥रेणुर्द्वयोःस्त्रियांधूलिःपांसुर्नानद्वयोरजः ९८ चूर्णेक्षोदःसमुत्पिंजःपिंजलौभृशमाकुले

र्जिदशिकमीतिसाधुः पांसुः पुल्लिंगे॥रजः रजति रंजरागे भूरंजिभ्यांकिदित्यसुन् रजः द्वयोःन क्लीबे चत्वारिधूल्याःनामानि ९८ चूर्णः चूर्णयते चूर्णप्रेरणे णिजंतादेरच् चूर्णः पुल्लिंगः चूर्णोधूलौक्षारभेदे चूर्णानिवासयुक्तेषुइतिमेदिनी चूर्णानिवासयोगाः स्युश्चूर्णोधूलिःसशर्करइतिशाश्वतः॥क्षोदः क्षुद्यते क्षुदिरसंपेषणे क्षोदःपेषणचूर्णयोरितिहेमः द्वे पिष्टस्यरजसः पटेवरजसइत्येके॥भृशंअत्यंतं आकुले व्याप्तेमैन्यादौसमुत्पिंज पिंजलौवर्तेते समुत्पिंजते पिजिहिंसायाम् पचाद्यच्॥ पिंजते पिंजलः पिंजंलातिवा॥ ५ ५ ५ ५ ५

पताका पतति प त्यतेनयावा पंल्हगनौ बलाकादयश्चेत्याकः पताकावैजयंत्यांस्यात्सौभाग्य नाटकांकयोरितिविश्वमेदिन्यौ ॥ वैजयंती विजयते जिअभिभवे वैजयंतोम हेंद्रस्यध्वजप्रासादयोःपुमान् वैजयंतीपताकायांजयंतीपादपेस्त्रियाम् ॥ केतनं केत्यनेज्ञायतेनेन कितसंशयादौ केतनमित्यत्रकरणेल्युट् केतनंतुनिमंत्रणे गृहेके-तौचकृत्येचइतिहेमचंद्रौ ॥ ध्वजं ध्वजः ध्वजति ध्वजगतौ शिश्नचिन्हेपताकायांखट्वांगेशौंडिकेपिचेतिहेमचंद्रः चत्वारिपताकायाः ९९ या युद्धभूमिः अतिभय प्रदा सा वीराशंसनं वीराःआशंस्यंतेःत्र आङ्शंसुइच्छायाम् अधिकरणे ॥ अहंपूर्वमहंपूर्वं अहमग्रेभवामीतिआग्रहपुरःसरंपूर्वंयुद्धेधावनं अहंपूर्विकास्यात् स्रूपस्रूपेतिसमासेस्वार्थेकन् स्त्रियां एकं १०० दर्पात्गर्वात् आत्मनिआत्मविषयेयासंभावना सामर्थ्याविष्करणं सा आहोपुरुषिका अहोपुरुषस्यभावः मनोज्ञा

पताकावैजयंतीस्यात्केतनंध्वजमस्त्रियाम् ९९ सावीराशंसनंयुद्धभूमिर्यातिभयप्रदा ॥ अहंपूर्वमहंपूर्वमित्यहंपूर्विकास्त्रियाम् १००
आहोपुरुषिकादर्पाद्यास्यात्संभावनात्म नि ॥ अहमहमिकातुसास्यात्परस्परंयोभवत्यहंकारः १०१ द्रविणंतरःसहोबलशौर्याणिस्थाम
शुष्मंच ॥ दित्वात् वुञ् एकं ॥ यः परस्परं अहंशक्तः अहंशक्तः इत्यहंकारः साअहमहमिका मीह्यादिः अहमहंशब्दोत्स्यत्र वीप्सायांद्वित्वं एकं १०१ द्रविणं द्रवत्यनेन द्रुगतौ पराक्रमेबलेपिस्याद्द्रविणंकांचनेधनइतिहेमचंद्रः ॥ तरः तरत्यनेन तृप्लुवनादौ तरोजलेबलेइतिहेमः ॥ सहः सह्यतेनेन सहअभिभवे दंडोत्पलासुद्गपर्णी कुमारीनरवभेषजे ॥ बलंबलत्यनेन बलप्राणने सहोबलेज्योतिषिचसहाहेमंतमार्गयोःइतिहेमः बलंगंधरसेरूपेस्थामनिस्थौल्यसैन्ययोः पुमान्हलायुधेदैत्यप्रभेदेवायसेपिचे त्यक ॥ शौर्यं शूरस्यभावः कर्मवा ॥ स्थाम तिष्ठंत्यनेन सर्वधातुभ्योमनिन् ॥ शुष्मं शुष्यत्यनेन शुषशोषणे मन् नस्येत्संज्ञायांलोपेअदंतं शुष्ममोजसिसूर्येनाइतिहेमः ॥

शक्तिः शक्यतेऽनया शक्तिः शक्तिरायुधभेदेस्यादुत्साहादौ बले स्त्रियामिति हेमचंद्रः॥ पराक्रमः पराक्रम्यतेऽनेन क्रमु पादविक्षेपे पराक्रमो विक्रमेस्यात्सामर्थ्योद्योगयोरपी तिविश्वः॥ प्राणः प्राणित्यनेन अण प्राणने प्राणोहृन्मारुतो बाले काव्यजीवेनिले बले पुल्लिंगः भूम्निवाच्यलिंगः पुंभूम्निचासुषु इत्यक्त॰ दशसामर्थ्यस्य॥ विक्रमः विक्रमणं भावे घञ् विक्रमस्तु पुमान्क्रांतिमात्रे स्याच्छक्तिसंपदीत्युक्तत्वात्॥ अतिशक्तिता अतिशयिताशक्तिर्यस्य तस्य भावः १०२ रणेहन्त्वेसनि वाभाविनि सनि यत्पानं तत् वीरपानं वीराणां पानं वीरपाणमितिपाठः वा भावकरणयोरितिणत्वं एकं॥ युद्धं युधसंप्रहारे भावेक्तः॥ आयोधनं॥ जन्यं जायते जन्यतेवा भव्यगेयेतिसाधुः जन्यं हट्टे परीवादे संग्रामे च नपुंसकं जन्यामातृवयस्यायांजन्यः स्याज्जनके पुमान् त्रिषूत्पाद्यजमित्रोश्वनवोढाज्ञातिभृत्ययोः वरःस्निग्धेइतिविश्वमेदिन्यौ॥ प्रधनं

शक्तिःपराक्रमःप्राणोविक्रमस्त्वतिशक्तिता १०२ वीरपानंतुयत्पानंवृत्तेभाविनिवारणे॥ युद्धमायोधनंजन्यंप्र
धनंप्रविदारणम् १०३ मृधमास्कंदनंसंख्यंसमीकंसांपरायिकम्॥ अस्त्रियांसमरानीकरणाःकलहविग्रहौ १०४

डुधाञ् क्युः आनोलोपेअनादेशाकारश्रवणं प्रधनंयुधिदारुणेइतिहेमः॥ प्रविदारणं दृविदारणे प्रविदारणमाख्यानं संपरायेवदारणइतिविश्वः॥ १०३॥ मृधं मृधुहिंसायाम् प्रअर्थेकः॥ आस्कंदनं स्कंदिर् गतिशोषणयोः आस्कंदनंतिरस्कारेरणेसंशोषणेपिचेतिहैमः॥ संख्यं चक्षिङः ख्यातेर्वाभावेकः संख्यैकादौविचारेचेतिहैमः॥ समीकं षमवैक्लव्ये॥ सांपरायिकम् अयगतौ इणगतौवा॥ समरः ऋगतौ ऋच्छंत्यत्र पुंसिसंज्ञायामितिघः॥ अनीकः अनगतौ प्राणनेवा अनीकोस्त्रीरणेसैन्ये इतिविश्वः॥ रणः णीञ्प्राणने रणः कोणेक्वणेपुंसिसमरेपुंनपुंसकमित्युक्तत्वात्॥ कलहः॥ विग्रहः विग्रहोयुधिविस्तारेप्रविभागशरीरयोरितिहैमः १०४ ७

संप्रहारः हृञ्हरणे अधिकरणेघञ् संप्रहारोगतौरणइतिहैमः ॥ अभिसंपातः अभिसंपतनं पत्लृगतौ माग्वत् ॥ कलिः कलनं कलशब्दादौ कलिर्विभीतकेशूरेविवादे त्ययुगेयुधीतिहैमः ॥ संस्फोटः संस्फोटनं स्फुटिर्विशरणे ॥ संयुगः संयोजनं युजिर्योगे ॥ अभ्यामर्दः अभ्यामर्दनं मृदुक्षोदे अभिमर्दस्तुपुंसिस्यादवमर्दसंपरायेचेति मेदिनी ॥ समाघातः समाहननं ॥ संग्रामः संग्रामयुद्धे ॥ अभ्यागमः अभ्यागमः समरेंतिकेघातेराधेभ्युपगमे इतिहैमः ॥ आहवः आङ्ह्वेञ्युद्धेइत्यप् संप्रसारणंच आहवः संगरेयज्ञइतिहैमः १०५ समुदायः अयगतौ घञ् ॥ संयत् यतीप्रयत्ने यमउपरमेवा उभाभ्यामपि क्विपिसाधु ॥ समितिः समितिर्युधिसंगमे ॥ आजिः अजगतौ आजिःस्त्रीसमभूमौचसंग्रामइतिविश्वः ॥ समित् संपदादिः ॥ युत् युधसंप्रहारे एकत्रिंशत्प्रहरणक्रियायाः ॥ पुंनपुंसके नियुद्धं बाहुयुद्धेवर्तते ॥ अथ रणसंकु

संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ॥ अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः १०५ समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ॥ नियुद्धं
बाहुयुद्धेऽथ तुमुलं रणसंकुले १०६ क्ष्वेडा तु सिंहनादः स्यात्करिणां घटना घटा ॥ क्रंदनं योधसंरावो बृंहितं करिगर्जितं १०७

लेपरस्परसंबाधे तुमुलं ॥ नि
गृह्यनितरांवायुद्धं नियुद्धं ॥ बाहुभिर्युद्धं ३ तुमुलो व्याकुलेरणे ३ रणव्याकुलतायाः १०६ क्ष्वेडा तु ञिक्ष्विदाअव्यक्तेशब्देघञ् सिंहनादः स्यात् क्ष्वेडावंशशलाकायांसिंहनादे चयोषिति लोहितार्कपर्णफलेघोषपुष्पेनपुंसकं दुरासदेचकुटिलेवाच्यलिंगःप्रकीर्तितः ॥ सिंहनादः सिंहवन्नदनं णदअव्यक्तेशब्दे भावेघञ् २ ॥ करिणांघटना घटा घटसंघाते घटः समाधिभेदेचशिरः कूटकुटेषुच घटाघटनगोष्ठीषुघटनासुचयोषितीत्युक्तत्वात् १ हस्तिसंघस्य ॥ योधसंरावः योधानांसंरावः आक्रोशपूर्वकः शब्दः क्रंदनं स्यात् क्रदिआह्वाने क्रंदनंरोदनेपिस्यादाह्वानेपीतिविश्वः २ अन्योन्यस्पर्धयायोधानामाह्वानस्य करिणांगर्जितं बृंहितं एकं हस्तिशब्दस्य १०७ ५

धनुषः स्वानः शब्दो विस्फारः विस्फारणं स्फुरस्फुरणे धनिरेव आत्वं घञ् ॥ पटहाडंबरौ समौ पटहः पटं हंति अन्येष्वपीति डः पटहाना समारंभो आनके पुंनपुंसकमिति विश्वः ॥ आडंबरः आडंबराति कप्रत्ययः द्वे युद्धोपटहस्य ॥ प्रसभंतु प्रगता सभा विचारो अस्मात् सभायाः प्रगतो वा क्लीबे तु प्रसभं हठ इति बोपालितः ॥ बलात्कारः ॥ हठः ह [illegible] शलयोः हठः स्यात्प्रसभे पुंस्या हठो बाधा विहेठयोः इति विश्वः त्रीणि बलात्कारनामानि ॥ अथ स्खलितं स्खलसंचलने स्खलितं चलिते भ्रेषे इति हैमः ॥ छलं छो छेदने कलनि आतो लोपः द्वे युद्धे मर्यादाया स्खलनस्य ॥ १०८ ॥ अजन्यं अनेसाधु जन्यं नजन्यं क्लीबे नजन्यते वा जनेर्यक् ॥ उत्पातः उत्पतनं पल्लृगतौ उत्पनति वा ॥ उपसर्गः उपसृज्यते उपसर्गः पुमान् रोगभेदोपद्रवयोरपीति विश्वः त्रीणि शुभाशुभसूचक महाभूतविकारस्य त्रयं समं ॥ मूर्छा तु मूर्च्छनं गुरोश्च हलः ॥ कश्मलं कशागनौ क

विस्फारो धनुषः स्वानः पटहाडंबरौ समौ ॥ प्रसभं तु बलात्कारो हठोथ स्खलितं छलम् १०८ अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयम् ॥ मूर्छा तु कश्मलं मोहोप्यवमर्दस्तु पीडनम् १०९ अभ्यवस्कंदनं त्वभ्यासादनं विजयो जयः ॥ वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ११०

शेरले मुद् प्रत्ययस्य ॥ मोहः मोहनं मुहवैचित्ये अथ मोहोन्यत्रिगः स्यादविद्यायां च मूर्छने त्रीणि ॥ अवमर्दस्तु अवमर्दनं मृदक्षोदे ॥ पीडनं पीडअवगाहने द्वे धान्यादिसंपन्नस्य देशस्य यत्परचक्रेण पीडनं तस्मिन् १०९ अभ्यवस्कंदनं स्कंदिर् गतिशोषणयोः ल्युट् ॥ अभ्यासादनं षद्लृ विशरणादौ अभिआङ् पूर्वात् ल्युट् द्वे प्रहारादिना निःशक्तिकरणस्य ॥ विजयः उभयत्रएरच् जिजये विजयः स्याज्जये पार्थे स्त्रियां तिथ्यां नरेस्मृता उमासख्यामिति विश्वः जयाजयंती तिथिभित्पथ्योमातसखीषु च अग्निमंथे नाजयंते विजये च युधिष्ठिर इत्यु॰ ॥ जयः द्वे शत्रुपराभवकरणेन प्राप्तस्योत्कर्षस्य ॥ वैरशुद्धिः प्रतीकारः वैरस्य शुद्धिः सा च वैरनिर्यातनं वैरस्य निर्यातनं यत निकारादौ त्रीणि वैरशोधनस्य ११०

प्रद्रावः प्रद्रवणं द्रुगतौ प्रेद्रुस्तुइतिघञ्॥ उद्रावः उद्रवणं उदिश्रयतिइत्यादिनाघञ् ॥ संद्रावः संद्रवणं समित्युद्रुइतिघञ्॥ संदावः संदवनं प्राग्वत्॥ विद्रवः विद्रुः ॥ अ-
दोरप्॥ द्रवः द्रवःप्रद्रावनर्मणोरित्यल्॥ अपक्रमः अपक्रमणं भावेघञ्॥ अपयानं अपयानेल्युट् अथैपलायनस्य॥ रणेभंगः भंजोआमर्दनेघञ् सपराजयः भंगोज-
यविपर्यये भेदरोगतरंगेषु भंगास्स्यांतरेस्त्रियामित्य॰ जिअभिभावे एरच् ह्रे १११ पराजितपराभूतौ पराजितः पराजीयतेस्म परैराजीयतेस्मवा जिजयेक्तः॥ पराभू-
तः पराभूयतेस्म भावक्तप्रत्ययः द्वैमापाभिभवस्य ॥ त्रिष्विनिपूर्वाभ्यामपिसंबध्यते ॥ नष्टतिरोहितौ नष्टः नस्यतिस्म ॥ तिरोहितः तिरोधीयतेस्म दधातेर्हि. तप्रत्ययः॥ अन्त

प्रद्रावोद्रावसंद्रावसंदावाविद्रवोद्रवः॥ अपक्रमोपयानंचरणेभंगःपराजयः १११ पराजितपराभूतौत्रिषुनष्टतिरोहितौ ॥ प्रमापणंनिबर्ह-
णंनिकारणंविशारणं ११२ प्रवासनंपरासनंनिषूदनंनिहिंसनम्॥ निर्वासनंसंज्ञपनंनिर्ग्रंथनमपासनम् ११३ निस्तर्हणंनिहननंक्षणनंपरि-
वर्जनम्॥ निर्वापणंविशसनंमारणंप्रतिघातनम् ११४ उद्वासनप्रमथनक्रथनोज्जासनानिच॥

प्रमापणं मीञ्हिंसायाम् णयंताल्ल्युट्॥ निबर्हणम्
बर्हहिंसायाम्॥ निकारणं कृञ्हिंसायाम्॥ विशारणं शृहिंसायाम् ११२ प्रवासनं वसच्छेदने॥ परासनं असुक्षेपणे॥ निषूदनं षूदक्षरणे॥ निहिंसनं हिंसिहिंसायां॥ नि-
र्वासनं वसतिण्यंतः॥ संज्ञपनं मारणतोषणनिशामनेषुज्ञाज्ञपमिच्चेतिवा॥ निर्ग्रंथनं ग्रथिकौटिल्ये॥ अपासनं ११३ निस्तर्हणं तृहहिंसायां॥ निहननं हनहिंसायां॥ क्ष-
णनं क्षणुहिंसायां॥ परिवर्जनं वृजीवर्जने॥ निर्वापणं डुवप् बीजसंताने॥ विशसनं शसहिंसायां॥ मारणं मृहिंसायां॥ प्रतिघातनं हनहिंसायां ण्यंताल्ल्युट् ११४ उ-
द्वासनं॥ प्रमथनं मथहिंसायां॥ क्रथनं क्रथहिंसायां॥ उज्जासनम् जसहिंसायां प्रमापणमित्यारभ्यउज्जासनांतपर्यंतंभावल्युडंताः॥

आलंभः आलंभनं ॥ पिंजः पिंजनं पिजिहिंसायां ॥ विशारः विशरणं शृहिंसायां ॥ घातः हननं हनहिंसायां ॥ उन्माथः उन्माथनं मथिहिंसायां ॥ वधः एते भावघञंताः इ
ति त्रिंशद्वधनामानि ११५ पंचता पंचानां भावः तल् पंचता पंचत्वमपि मरणेपि चयोषिति ॥ कालधर्मः कालस्य धर्मः ॥ दिष्टांतः दिष्टस्य दैवस्यांतः ॥ प्रलयः प्रलयनं लीङ् श्ले
षणे एरच् ॥ अत्ययः अत्ययनं इण् गतौ प्रत्ययः आगतः अत्ययोतिक्रमे दंडे विनाशे दोषकृच्छ्रयोरिति विश्वः ॥ अंतः नाशः अनिबंधने अंतः स्वरूपे निकटे प्रांते निश्चय
नाशयोः अवयवेपीति हैमः ॥ नश अदर्शने नाशः पलायने मृत्यौ परिध्वस्तावदर्शने इति हेमचंद्रः ॥ मृत्युः मरणं मृङ् प्राणत्यागे त्युक् प्रत्ययः ॥ निधनः निधनं स्यात्कुले नाशे इ
त्य० इति दश मरणस्य ॥ तत्र मृत्युः स्त्रीपुंलिंगयोः निधनं स्त्रीभिन्नं ११६ परासुः परागताः असवो यस्मात् ॥ प्राप्तपंचत्वः प्राप्तं पंचत्वं येन ॥ परेतः परं लोकं इतः परादूरे

आलंभपिंजविशरघातोन्माथवधा अपि ११५ स्यात्पंचता कालधर्मो दिष्टांतः प्रलयोऽत्ययः ॥ अंतो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियां
११६ परासुप्राप्तपंचत्वपरेतप्रेतसंस्थिताः ॥ मृतप्रमीतौ त्रिष्वेते चिता चित्या चितिः स्त्रियां ११७ कबंधोऽस्त्री क्रियायुक्तमपमूर्धकलेवरं

इतः गतो वा परेतादयो भीक्त प्रत्ययांताः परेतो वाच्यलिंगः स्यान्मृते भूतांतरे पुमान् ॥ प्रेतः प्रकर्षेण इतः प्रेतो भूतांतरे पुंसि मृते स्याद्वाच्यलिंगक इत्यु० ॥ संस्थितः संतिष्ठतिस्म
मृतप्रमीतौ ॥ मृतः म्रियतेस्म मृङ् प्राणत्यागे मृतं मृत्यौ याचिते च इति हैमः ॥ प्रमीतः प्रमीयतेस्म मीङ् हिंसायां प्रमीतं वाच्यलिंगं स्यात्प्रोक्षिते पि मृतेपि चेति विश्वः सप्ते
ते मृतशब्दाः त्रिषु ॥ चिता चीयतेस्म चितं छन्नं त्रिषु चिता चित्या यां संहतौ स्त्रियाम् चित्यं मृतकचैत्ये स्याच्चित्या मृतचितौ स्त्रियामित्य० एतत्त्रयं प्रेतदाहस्थलस्य ११७
कबंधः केन वायुना बध्यते कर्मणि घञ् अस्त्री ॥ अपमूर्ध अपगतः मूर्धा यस्मात् ॥ क्रियायुक्तं नर्तनक्रियायुक्तं यत्कलेवरं स कबंधः कं बध्यते छिद्यते स्मात् कबंधं सलिले तुंडे
क्रतौ राहौ अपयोः सिद्ध० गतं ॥

पितृवनं श्मशानंस्यात् श्मशानं शवाः शेरतेऽत्र पृषोदरादिः॥ पितृवनं पितृणांवनं वनसंबंधको वनंनपुंसकंनीरेनिवासालयकानने इत्यक्तत्वात् द्वे श्मशानस्य॥ कुणपः क्वणेः संप्रसारणंचेतिकपन्॥ शवः शवति शवगतौ शवः पुं सि ११८ प्रग्रहः प्रगृह्यते ग्रहउपादाने प्रग्रहस्तुतुलासूत्रेवर्षानियमनेभुजे हयादिरश्मौरश्मौचसुवर्णेह रिपादपइत्यक्तत्वात्॥ उपग्रहः उपगृह्यते ग्रहेरप् उपग्रहः पुमान्बंद्यामुपयोगेनुकूलने बंद्यांवर्तते॥ बंद्यते वंदतेवा वदिअभिवादनादौ॥ चोरादीनांप्रतिबंधनस्था नस्यत्रीणिनामानि॥ बंधनालयेकारास्यात् कार्यतेऽत्र कृविक्षेपे कारावधेनिश्चयेचबलेयल्लरतावपि कारंतुषारशैलेचस्त्रियांदूत्यांप्रसेचके बंधनंबंधनागारेहेमकारिक योरपि द्वे॥ असवः प्राणाः पुंसिभूम्निबहुवचनांताः द्वे असवः अस्यंते अस्यंतिवा असक्षेपणे॥ प्राणाः प्राणंत्येभिः अनप्राणने प्राणोह्नवारुतेबालेकाव्यजीवेनि

श्मशानंस्यात्पितृवनंकुणपः शवमस्त्रियां ११८ प्रग्रहोपग्रहौबंद्यांकारास्याद्बंधनालये॥ पुंसिभूम्न्यसवःप्राणाश्चैवंजीवोसुधारणं ११९
आयुर्जीवितकालोनाजीवातुर्जीवनौषधम् २० इतिक्षत्रियवर्गः ऊरव्याऊरुजाअर्यावैश्याभूमिस्पृशोविशः॥ लेबले पुल्लिंगः पूरितेवा

च्यलिंगः पुंभूम्निचासुषु एवंपुंसिभूम्नि द्वे पंचवायूनां॥ एवंजीवः जीवप्राणधारणे जीवः प्राणिनिवृत्तौचदशभेदेबृहस्पतौ जीवाजीवंतिकामौर्व्यावचासिंजीतभूमिषु॥ असु धारणं असूनांधारणं द्वे जीवनस्य ११९ आयुः एति इणगतौ॥ जीवितकालः जीवितस्यकालः द्वे जीवावच्छिन्नकालस्य॥ जीवातुः जीवत्यनेन॥ जीवनौषधं जीवनस्य औ षधं द्वे मृतसंजीवनौषधस्य २०. ॥ इतिक्षत्रियवर्गविवरणंसमाप्तम् ऊरव्याः ब्रह्मणऊरोर्जाताः शरीरावयवाद्यत् ओर्गुणः अवादेशः॥ ऊरुजाः जनीप्रादुर्भावे पंचम्यामजातौड्इतिडः॥ अर्याः ऋगतौ अर्यः स्वामिवैश्ययोः॥ वैश्याः विशंति विशप्रवेशने क्विप् स्वार्थेष्यञ्॥ भूमिस्पृशः भूमिंस्पृशंति॥ स्पृशसंस्पर्शने स्पृशोनुदकइतिक्विन् भूमिस्पृक्पुंसिमानवे॥ विशः इतिषट्वैश्यनामानि॥

याञ्चयायदाप्तंप्राप्तंतद्याचितकं अपमित्ययाचिताभ्यांकक्नौइत्यप्रत्ययंसाधु ॥ विनिमयात्परिवर्तनात् यदाप्तं तदापमित्यकं परिवर्तोविनिमयइतिमेदिनी नियमःपरिवर्तःस्यादितिमनुः ४ उत्तमर्णः उत्तममृणमस्य ॥ प्रयोक्ता ॥ अधममृणमस्य ग्राहकः एवंक्रमात् ऋणव्यवहारे धनस्वामिधनग्राहकयोः क्रमेणैकैकं ॥ कुसीदिकः कुसीदार्थंप्रयच्छति कुसीदेतिष्ठन् ॥ वार्धुषिक ॥ वृद्ध्याजीवः वृद्धेर्वृधुषिभावोवक्तव्यः ठक्च वृद्धिराजीवोजीविकास्य ॥ वार्धुषिः पृषोदरादित्वात्कलोपेसाधुः चत्वारिनामानिऋणंदत्त्वा नष्टद्रव्योपजीविनः पुरुषस्य वृद्धिमुद्दिश्यप्रयच्छतिवार्धुषिकः ५ क्षेत्राजीवः क्षेत्रमाजीवोऽस्य ॥ कर्षकः कर्षति कृषविलेखने ॥ कृषकः कर्षति ॥ कृषीवलः कृषिरस्यास्तिरजःकृष्यासुतिपरिषदोवलच् वलेइतिदीर्घः चत्वारिकृषीवलस्य ॥ व्रीहिशाल्युद्भवोचितं व्रीहयश्चशालयश्चतेषामुद्भवस्तस्मिन् उचितंयोग्यं यत्क्षेत्रंव्रैहेयंशालेयं ६ यवादीनांभवनं उत्पत्तियोग्यं यत्क्षेत्रंतत्यव्यादि ॥ यव्यं यवानांभवनंयव्यं ॥ यवक्यं यवकाः अल्पयवाः तेषांभवनंयवक्यं ॥ यवकः शूकशून्योयवः ॥ षष्टिक्यं षष्टिरात्रेणपच्यंते षष्टिकाः तेषांभवनंक्षेत्रंषष्टिक्यं एकैकं ॥ तैल्यं तिलानांक्षेत्रंतैल्यं तैलीनवत् माषोमाणुभंगानांद्विरूपतास्यात् ॥ माषाणांभवनंक्षेत्रंमाष्यं माषीणं ॥ उमाः अतस्यः तासांक्षेत्रं उम्यं औमीनं अणुर्धान्यभेदः तत्क्षेत्रंअणव्यं आणवीनं ॥ भंगामातुलानी तत्क्षेत्रंभंग्यं भांगीनं इतिद्वेद्वेरूपेभवतः ७ शेषधान्योद्भवक्षमं शेषाणांव्रीह्यादिभ्यउक्तेभ्यः अन्येषांमुद्गादीनांधान्यानांउद्भवोचितंक्षेत्रंमौद्गीनं मुद्गानामुद्भवोचितंक्षेत्रंमौद्गीनं कौद्रवीणं ॥

याञ्चयाप्तंयाचितकंनिमयादापमित्यकम् ४ उत्तमर्णाधमर्णौद्वौप्रयोक्तृग्राहकौक्रमात् ॥ कुसीदिकोवार्धुषिकोवृद्ध्याजीवश्चवार्धुषिः ५ क्षेत्राजीवःकर्षकश्चकृषिकश्चकृषीवलः ॥ क्षेत्रंव्रैहेयशालेयंव्रीहिशाल्युद्भवोचितम् ६ यव्यंयवक्यंषष्टिक्यंयवादिभवनंहियत् ॥ तिल्यंतैलीनवन्माषोमाणुभंगाद्विरूपता ७ मौद्गीनकौद्रवीणादिशेषधान्योद्भवक्षमं ॥

आदिशब्देनचाणकीनं गौधूमीनं कालायिनं कौलत्थीनं मैयंगवीनं इत्यादि धान्यानांभवनेक्षेत्रे खञ्प्रत्ययः एकैकं॥ बीजाकृतंतु बीजेनसहकृतं कृष्ठोद्वितीयत्वती य शंबबीजात्कृषौइतिडाच्॥ कृष्टं उप्तकृष्टं उप्तंचतत्कृष्टंचइत्येकं॥ सीत्यं सीतयासंमितं हललेखयातौ वयोधर्मेत्यादिनायत्॥ कृष्टं कृष्यतेस्म॥ हल्यं हलेनकृष्टं मत जनहलात्करणजल्पकर्षेषुइतियत् श्रेणिसामान्यकृष्टभूभागस्य॥ ८॥ त्रिवारंहलेनकृष्टंयस्क्षेत्रं तत्त्रिगुणाकृतं संख्यायाश्चगुणांतायाः कृञोयोगेकृषौडाच्॥ तृती याकृतं॥ त्रिहल्यं मतजनेतियत् अत्यत्रतौवयोधर्मेतियत्॥ त्रिसीत्यं तस्मिंस्त्रिवारकर्षणे चत्वारिवारत्रयकृष्टस्य॥ द्वितीयाकृतेतु द्विवारंकृष्टेतु तत्सर्वंपूर्वं द्विहल्यं द्विसी त्यं॥ शंबाकृतं शंबशब्दोद्वितीयकर्षणेवर्तते इतिरामाश्रमःसिद्धांतकौमुद्यांतु शंबशब्दःप्रतिलोमेअनुलोमंकृष्टंसत्पुनःप्रतिलोमंकर्षतीत्यर्थः शंबकृतंशंबाकृतं पंचद्विवारकृ

बीजाकृतंतूप्तकृष्टेसीत्यंकृष्टंचहल्यवत्। ८ त्रिगुणाकृतंतृतीयाकृतंत्रिहल्यंत्रिसीत्यमपितस्मिन्॥ द्विगुणाकृतेतुसर्वंपूर्वंशंबाकृतमपीह ९ द्रो णाढकादिवापादौद्रौणिकाढकिकादयः॥ खारीवापस्तुखारीकउत्तमर्णादयस्त्रिषु १० पुंनपुंसकयोर्वप्रः

ष्टस्य ९ द्रौणिकः आढ किकः आदिशब्देन प्रास्थिकः कौडविकं द्रोणाढकादिपरिमितधान्यस्यवापादौद्रौणिकादयःस्युः उप्यतेःस्मिन्निति वापः॥ क्षेत्रं वापादावित्यादिनापचतीत्याद्यर्थग्रहः द्रोणंआढकंच पचति संभवति अवहरतिवा द्रोणादिपरिमितव्रीह्यादिवाप्ययोग्यक्षेत्रस्यैकं॥ खारीवापस्तु खार्याः वापः॥ खारीकः खारीपरिमितंयत्रोप्यते सखारीकः खार्याईकन् इत्यत्रकेवलायाश्चेतिवक्तव्यं इतिईकन् एकं उत्तमर्णादयःस्तारीकांताः त्रिलिंग्याः १० वप्रः उप्यतेत्र वपबीजसंताने रन्प्रत्ययः वप्रस्त्वानेपुमानस्त्रीरे णोस्त्रत्रेचयेतटे इतिविश्वः वप्रःप्राकाररोधसोः क्षेत्रेतातेचयेरेणाविति हेमः॥

केदारः केजलेशिरसिवादामेऽस्य हलदंनादिनिङेऽस्त्युक् केनजलेनदीर्यतेवा दृविदारणे कर्मणिघञ् केदारोद्रौशिवेक्षेत्रे भूमिभेदालवालयोरितिविश्वः॥ क्षेत्रं क्षीयतेधा न्येरत्र क्षिनिवासगत्योः केदारोसिद्धभूपत्योरितिहेमः त्रीणिक्षेत्रस्य॥ अस्यक्षेत्रस्यगणंसमूहः कैदारकं कैदार्यं क्षैत्रं कैदारिकं केदाराणांसमूहः वुञ् यञ् ठञ् प्र त्ययाज्ञेयाः क्षेत्राणांसमूहः अण् इतिचत्वारिनामानि ११ लोष्टानि लोष्टसंघाते पचाद्यच्॥ लेष्टवः लिश्यंते लिशंतिवा लिशगतौ दुः लेंडस्य॥ कोटिशः कोटिनाग्रे णश्यति शोतनूकरणे सपीतिकः कोटिरस्यास्तीतिवा लोमादित्वात्शः द्वेलोष्टभंजनमुद्गरस्य॥ भाजनं भ्रवीयतेऽनेन अजगतिक्षेपणयोः ल्युट्वायौ॥ तोदनं तु

केदारःक्षेत्रमस्यतु॥ कैदारकंस्यात्कैदार्यंक्षैत्रंकैदारिकंगणे ११ लोष्टानिलेष्टवःपुंसिकोटिशोलोष्ट
भेदनः॥ भाजनंतोदनंतोत्रंखनित्रमवदारणे १२ दात्रंलवित्रमाबंधोयोत्रंयोक्त्रमथोफलम्॥

द्यतेनेन तुदव्यथने करणेल्युट्॥ तोत्रं उन्कधातोः ष्ट्रन् त्रीणिवृषभादिताडनदंडस्य चाबूकइ०॥ खनित्रं खन्यते खनुअवदारणे इत्रप्रत्ययः॥ अवदारणं अव दीर्यतेऽनेन द्वेकुद्दालादेः कुदळइतिख्या०॥ १२॥ दात्रं दात्यनेन दाप्लवने॥ लवित्रं लूयते अनेन छिद्यतेअनेन भाषया इळाकोयताइ०॥ आबंधः आबध्यते नेन बंधबंधने हलस्थेतियञ्॥ योत्रं यूयते यूमिश्रणे॥ योक्त्रं युज्यतेऽनेन युजिर्योगे त्रीणिवृषादेर्गलेयुगबंधनस्योपयोगिन्यांरज्जौ भाकृतभाषया जुपणीतिख्या तस्य॥ अथो फलं फलति त्रिफलाविशरणे फलंहेतुकृतेजातिफलेफलकसस्ययोः त्रिफलायांचकंकोलेशस्त्राग्रेस्पृश्लाभयोरितिहेमः॥ ६७

निरीशं ईशायाः निर्गतं निरादयइतिसमासः स्वामीतु निष्क्रांताईषाअस्मादितिनिरीषमितिमूर्धन्यांतंपपाद ॥ कूटकं कुटति कुटकौटिल्ये॥ फालः फालयति त्रिफला विशरणे फालउत्फुतौ क्लीबंसीरोपकरणेपुंसिशंकरसीरिणोः॥ कृषिकः कृषति कृषविलेखने कृषिवश्योः कीकन् कृषिकाकृषिकोफालकृषकाविनिरुद्रात्॥ स्त्रियामपि॥ कृषकःपुंसिफालेस्यात्कर्षकेत्वभिधेयवत् इतिविश्वः॥ लांगलं लंगति लगिगतौ लांगलीतोयपिप्पल्यांक्लीबंतुकुसुमांतरम् गोदारणेतृणेराजगृहदारुविशेषयोरित्यक्तः॥ हलं हलति हलविलेखने पचाद्यच् हालइत्यपि ज्वलतिकसंतभ्योणः॥ हालः फालवहः सीतेतिविक्रमादित्यः हालोहलेपुमान्हालामदिरायांच योषितीतिमेदिनी १२ गोदारणं गांभूमिंदारयति गौर्भूमिर्दीर्यतेऽनेनवा करणेल्युट्॥ सीरः सिनोति सीयतेवा षिञ्बंधने ऋन्दीर्घश्च हलतिग्मकरौसीराविनिरभसः

निरीशंकूटकंफालः कृषकोलांगलंहलम् १३ गोदारणंचसीरोऽथशम्यास्त्रीयुगकीलकः॥ ईषालांगलदंडःस्यात्सीतालांगलपद्धतिः १४

सीरः स्यादंशुमालिनी लांगलेपीतिहैमः इतिचत्वारिहलनामानि॥ शम्या स्त्री शम्यतेनया शमउपशमे अघ्न्यादिः॥ युगकीलकः युगस्यकीलकः हूंखीलइतिख्याते ॥ ईषा ईशापि ईषेईशऐश्वर्ये प्रभुशंकरयोरीशः स्त्रियांलांगलदंडकइतिरुद्ररभसौ ईशःस्वामिनिरुद्रेचस्यादीशाहलदंडके इतिविश्वः ईषते ईषगत्यादौ ईषापेशीमंजु षेति॥ लांगलदंडः लांगलस्यदंडः द्वेहलयुगयोर्मध्यकाष्ठस्य॥ सीतालांगलपद्धतिः सीता सीयते षिञ्बंधने सीतालांगलरेखास्याद्व्योमगंगाचजानकीतिरभसः सीताजनकजागंगाभेदयोर्हलपद्धताविनिहैमः शीतापि शीतानभःसरितिलांगलपद्धतौच शीतादशाननरिपोःसहधर्मिणीच शीतंस्मृतंहिमगुणेचनदन्विनेचशीतोलसेचबहुवारतरौचदृष्टः इतिधरणिः तालव्यादिः लांगलपद्धतेद्वेनामनी १४

यत्सश्कबंधनेदारुकाष्ठंन्यस्तंरोपितं सः मेधिः पुंसि मेध्यंतेपशवोऽत्र मेधृसंगमे इन्प्रत्ययः खलेदारुइत्येकंपदं इतिहेमेदइतिख्यातस्य खलेदार्विनिहलदंताइतिसप्तम्याम लुक्॥अथवाखलेधान्यमर्दनस्थले यद्दारुइतिपृथक्पदं आशुः अश्नुते अशव्याप्तौ कृपावाजीतिउण् आशुस्त्वव्रीहिशीघ्रयोरितिहेमचंद्रः॥व्रीहिः वर्हत्वंपचयंगच्छ ति वृहिवृद्धौ इगुपधात्किदितिइन् व्रीयतेवा व्रीङ्वरणे पाटलोवर्णोऽस्यास्ति पाटलातीतिवाकप्रत्ययः तृणबीजंतुशामाकोव्रीहिराशुश्चपाटलइति क्लीबमाश्व य द्वा आशुव्रीहिइत्येकंपदं आशुनामाव्रीहिः पाटलइत्युच्यते नामद्वयमितिसुभूतिः आशुव्रीहौपाटलोनाश्वेतरक्तेन्यलिंगवानितिरुद्रः व्रीणिषष्टिकादेः सितशू कयवौसमौ सितंशूकंयस्येति यवः यौति यूयतेवा यवोधान्येपृथक्कृताविनिहेमः द्वेयवस्य १५ तोक्मस्तुतकति तक्यतेवा तकहसने सहनेच बाहुलकात्मः॥

पुंसिमेधिःखलेदारुन्यस्तंयत्पशुबंधने॥आशुर्व्रीहिःपाटलःस्याच्छितशूकयवौसमौ १५ तोक्मस्तुतत्रहरितेकलायस्तुसतीनकः॥
हरेणुखंडिकौचास्मिन्कोरदूषस्तुकोद्रवः १६ मंगल्यकोमसूरोथ

अकारस्यओकारः तत्रहरितेयवेतोक्मइत्येकं॥कलायस्तु कंवायुंलाति तमूयने अयगतौ॥सतीनकः सतिजीवेइनःप्रभुः संज्ञायांइतिसमासः हलदंतादित्यलुक् सतानं वायुंकरोति अन्येष्वपोपीतिडः॥हरेणुः हरति हृञ्हरणे एणुप्रत्ययः॥खं डिकः खंडोस्यास्ति मत्वर्थेठन् कलायस्त्रिकुटःप्रोक्तः सतीनोवर्तुलोमतः हरेणुरकटोज्ञेयइतिव्याडिः हरेणुस्त्रीरेणुकायांस्त्री तुपुंसिसतीनकइतिपुंसि चत्वा रिवाटाणा॥कोरदोषस्तु कोरंरुधिरंदूषयति दुषवैकृत्ये॥कोद्रवः कौति कुशब्दे कवतेवा कुङ्शब्दे उभाभ्यांविच् कोश्चासौद्रवश्च इतिहेमनामनी १६ मंगल्यकः मंगलेसाधुः यत्प्रत्ययांतात्स्वार्थेकन्॥मसूरः मसुरा मसूरा मस्यति मस्यतेवा मसीपरिणामे मसेश्चेत्युरन् ऊरनिदीर्घमध्योऽपि वेश्यायांव्रीहिभेदेचमसूरामसु रास्त्रियाम् मसूरमसुरौपुंसिद्वावेतावपिचैतयोरितिरभसः मसूरामसुरावानावेश्याव्रीहिप्रभेदयोरितिमेदिनी द्वेमसूरस्य॥

मकुष्टकः मकिमंडने बाहुलकात्उः तुमभावश्च मकुष्ठासौस्थकश्च स्थाधातोष्ठुन्॥ मयुष्टकः मयते मयगतौ ष्टकमतिघाते हे व्रीहिभेदविशेषस्ययवनमुद्गे नामनी॥वनस्यमुद्गः मठ इति॥सर्षपेतु सरतिस्नेहोस्मात् सृगतौ सर्षपःस्यात्सरोषपः॥तंतुभकः स्वार्थेकः तंतुभइति तंतुनाभाति भादीप्तौ॥कदंबकः कंदतिकं द्यतिवा कदिहिंसायां कदिआल्हादेरोदनेच अंबच् अनित्यत्वान्नुमन स्वार्थेकः त्रीणिमोहन्याइतिख्या० १७ एषःसर्षपःधवलश्चेन्तुष्णश्चेत् सिद्धार्थः सिद्धः अर्थोऽस्मात् अभिचारादिप्रयोगे सरीषपःसिनेनास्मिन्रक्षोघ्नो मूलनाशनइतिरभसः सिद्धार्थस्तु पुमान्शाक्यसिंहेचसितसर्षपे इतिविश्वः एकंश्वेतमोहन्या॥गोधूमः गुध्यति गुध्यतेवा गुधपरिवेष्टने गुधेरूमः गोधूमोनागरंगेस्यादोषधिव्रीहिभेदयोरित्यु०॥सुमनः सुष्टुमन्यते मनज्ञाने पचाद्यच् गोधूमस्सुमनोसमौइति-

मकुष्टकमयुष्टकौ वनमुद्गेसर्षपेतुद्वौतंतुभकदंबकौ १७ सिद्धार्थस्त्वेषधवलोगोधूमःसुमनःसमौ॥ स्याद्यावकस्तुकुल्माषश्चणको हरिमंथकः १८ द्वौतिलेतिलपेजश्चतिलपिंजश्चनिष्फले॥क्षवःक्षुताभिजननोराजिकाकृष्णिकासुरी १९

मसः द्वेगहूं॥यावकस्तुकुल्माषस्यात् यावकः यौति यूमिश्रणे वुन्प्रत्ययांतात्प्रज्ञाद्यण्॥कुल्माषः कुलंमस्यति मसीपरिणामे पृषोदरादिः कुत्सितोमाषः कुल्माषोयावकःपुंसीतिरभसः द्वेकुलित्थइति॥चणकः चण्यते चणदाने॥हरिमंथकः हरिभिरश्वैर्मथ्यते मंथविलोडने कर्मणिघञ् स्वार्थेकः द्वेहरभराइतिख्यातस्य १८ तिलपेजः चपरं तिलपिंजः एतौद्वौनिष्फले तिले माल्हनभाषयावांझतिळ.जर्जिलइत्यप्यस्यनाम जर्जिलःकथ्यतेसद्भिररण्यप्रभवस्तिलइत्युक्तेः॥क्षवः क्षौति टुक्षुशब्दे पचाद्यच्॥क्षुधाभिजननः क्षुधां अभिजनयति॥राजिका राजति राजयतिवा ण्वुल्अकादेशः॥कृष्णिका कृष्णेवकृष्णिका॥आसुरी असुरस्येयं अस्यतिवा पंचराईइतिख्यातायाःनामानि १९

कंगुप्रियंगू इतिद्वे स्त्रीलिंगे॥ कंगुः कं सुखं गच्छति गम्लृगतौ॥ मितं दित्वात् डुः॥ प्रियंगुः प्रियं गच्छति द्वे कांगराळे॥ अतसी अतति अतसातत्यगमने॥ उमा उं शिवं माति मिमीते वा माङ्माने आतइतिकः उयते वा उमा तसी हैमवती हरिद्रा कीर्तिकांतिषु॥ क्षुमा क्षौति क्षूयते वा क्षुशब्दे बाहुलकान्मक् एवं अतसी द्वे जवसइति ख्याः॥ मातुलानी मायाः तुला मातुलं आनयति अनप्राणने गतौ वा कर्मण्यण् मातुलस्य धत्तूरस्य स्त्री वा॥ भंगा भज्यते नया भंजेअवमर्दने तरंग भेदयोर्भंगो भंगा श स्य प्रणात्व्ये इतिरुद्रः द्वे भांगइति॥ व्रीहिभेदस्तु अणुः अणति अणशब्दे अणुर्व्रीह्यल्पयोरितिहेमचंद्रः एकं चीनाइतिख्यातस्य २० सस्यशूकं किंशारुः सस्यस्य शूकं सू- क्ष्मं सूचितुल्यमग्रं॥ किंशारुः किंचित्कुत्सितं वा शृणाति शॄहिंसायां किंजरयोः श्रिणइत्युण् किंशारुः स्याद्धान्यशूके शरेपि चेतिहैमः इत्येकं पुंसि॥ सस्यमंजरी कणिशं

स्त्रियौ कंगुप्रियंगू द्वे अतसी स्यादुमा क्षुमा॥ मातुलानी तु भंगायां व्रीहिभेदस्त्वणुः पुमान् २० किंशारुः सस्यशूकं स्यात्कणिशं सस्यमंजरी॥ धा न्यं व्रीहिः स्तंबकरिः स्तंबो गुच्छस्तृणादिनः २१ नाडी नालं च कांडोस्य पलालोस्त्री स निष्फलः॥

स्यात् सस्यस्य मंजरी कणिशं कणायः कणाः संत्यस्य क णिशो धान्यशीर्षकइति रत्नकोशः इत्येकं॥ धान्यं धाने पोषणे साधु॥ व्रीहिः व्रीणाति व्रीवरणे व्रीहिः सामान्यधान्ये स्यादाशुधान्ये च पुंस्ययं इतिविश्वः॥ स्तंबकरिः स्तं बं करोति त्रीणि सामान्यधान्यस्य॥ तृणादिनः तृणादिकस्य गुच्छः गुडुशब्दे संपदादित्वात् क्विप् तुक् गुतं छयति गुच्छति छोछेदने स्तंबः स्यात् इति द्वे नामनी २१ अस्य गुच्छस्य यः कांडः स नाडी च परं नालं नाडी नलत्यनेन नालयति वा नलगंधे डलयोरेकत्वं नाडी कुहकचर्यायां घटिकांगेऽ दूर्वयोः नाले व्रणांतरे स्नायावितिहैमः ना लं कांडे मृणाले च नाडी शाककदंबके इति च॥ कांडः कणति कणशब्दे कण्यते वा कांडो नाले धमे वर्गेतु स्कंधे वसरे रसे रहः श्लाघायां तु पुस्तंबे इति हैमः॥ इति द्वे॥ सः कांडनि

पलः पलालः पलति पल्यतेवा पलगतौ पलमलतिवा अलभूषणादौ एकं माकृतभाषया सरम कडबा बाडुक इति अस्त्री पुंनपुंसकं॥ कडंगरः गृणाति गिरयतिवा कडस्यगरः कडंगरेतिनिर्देशान्मुम् यद्वा कडमदेक्विप् कड्चतत्अंगंच कडंरकइत्यपि॥ बुसं बुसति बुसउत्सर्गे इगुपधेतिकः क्लीबे द्वे भूसइति॥ धान्यत्वचि धान्यस्यत्वक् तुषः पुमान् तुष्यति तुषतुष्टौ तुषस्तु धान्यत्वचि विभीतकइतिहेमचंद्रः द्वे कोंडाइति २२ श्लक्ष्णातीक्ष्णाग्रे श्लक्ष्णंकृशंतीक्ष्णं निशितं एताद्दशंयदग्रंयवादेस्तत्र शूकः पुंनपुंसकं श्यति शीतनूकरणे उलूकादयश्चेतिसाधुः शूकोनुक्रोशशंगयोरितिविश्वः इत्येकं॥ शमी शाम्यति शमुउपशमे अच् गौरादित्वात्ङीष् शमीसक्कु-

कडंगरोबुसंक्लीबेधान्यत्वचितुषःपुमान् २२ शूकोस्त्रीश्लक्ष्णतीक्ष्णाग्रेशमीशिंबात्रिषूत्तरे॥ ऋद्धमावसितंधान्यंपूतंतुबहु-
लीकृतम् २३ माषादयःशमीधान्येशूकधान्येयवादयः॥ शालयः कलमाद्याश्चषष्टिकाद्याश्चपुंस्यमी २४ पलायांचशिबिकायांचगुग्गुलद्रुः॥

शिंबा समति षमवैकल्ये शिनोति शिञ्निशाने द्वे शेंगइति॥ उत्तरे ऋद्धादयः त्रिषु बहुलीकृतांताः ऋद्धं ऋध्यतेस्म ऋधुवृद्धौ क्तप्रत्ययः ऋद्धंसंसिद्धमधिकंवा ऋद्धंसंपन्नधान्येचसुसमृद्धेतुवाच्यवदितिविश्वः॥ आवसितं अवसीयते॥ धान्यं द्वे अपनीततृणस्यराशीकृतधान्यस्य॥ पूतंतु पूयतेस्म पूञ्पवने पूतंत्रिषुपवित्रेचशदितेबहुलीकृते इतिविश्वः॥ बहुलीकृतं अबहुलंबहुलंकृतं अवसीनमृद्धेज्ञानेइतिविश्वः द्वे अपनीतबुसस्यधान्यस्य शूर्पादिनाशोधितस्येत्येकं २३ शमीधान्ये शमीप्रभवंधान्यंतस्मिन्माषादयः यदुक्तं मुद्गोमाषोराजमाषः कुलित्थश्चणकस्तिलः कलायस्तूबरइतिशमीधान्यगणःस्मृतइतिरत्नकोशः॥ शूकधान्ये शूकसहितंधान्यंशूकधान्यं अत्रयवादयः आदिनागोधूमादिः एकं॥ बृहन्नालाः बहुलोदकोत्पन्नाः शालयः व्रीहिविशेषाः तेएवकलमाः अल्पनालाः किंचिज्जलोत्पन्नाः तेषष्टिकाः षष्टिरात्रेणपच्यंते अमीमाषयवशालीकलमषष्टिकाद्याःपुंसि २४

नीवाराः तृणधान्यानिस्युः॥ नीवाराः मुन्यन्नभेदाः निव्रीयंते वृञ्वरणे नौवृधान्येइतिघञ् उपसर्गस्येतिदीर्घः॥ तृणधान्यानि तृणानीवधान्यानि अकृष्टोत्पन्नत्वात् ब हुवचनेनशामाकादिग्रहः स्यान्नीवारोवणिजकेवास्तव्येपिचहृश्यनइतिविश्वः हे॥ गवेधुः गवाजलेनतत्रवाएधते एधवृद्धौ॥ गवेधुका गवेगवार्थंदीयते रस्यते देङ् रक्षणे हेमुनिभक्ष्यविशेषस्य कसाइतिख्यातस्य॥ अयोग्रं अयः अग्रेस्य॥ मुसलः मुस्यति अनेनमुसखंडने वृषादित्वात्कलच् पुंनपुंसकेस्यात्॥ मुसलंस्याद योग्रेचपुंनपुंसकयोः स्त्रियाम् तलमूल्याम्॥ खुपर्णीगृहगोधिकयोरपीतिविश्वमेदिन्यौ हेमुसलस्य॥ उलूखलं॥ उलूखलं उभयोः पृषोदरादित्वात्साधुर्वं दुलूखलं

तृणधान्यानिनीवाराःस्त्रीगवेधुर्गवेधुका॥ अयोग्रंमुसलोस्त्रीस्यादुलूखलमुलूखलम् २५ प्रस्फोटनंशूर्पमस्त्रीचालनीतितउःपुमान्॥

गुग्गुलेस्यादुलूखलेपिनद्वयोः हेउखलके२५प्रस्फोटनं प्रस्फोट्यतेऽनेन स्फुटविकसने करणेल्युट्॥ शूर्पं शूर्पयति पचाद्यच् शूर्प्यतेऽनेन पुंसिसंज्ञायामितिघः शूर्पमाने॥ सूर्पंचेतिपाठः पुंनपुंसकं सूपइतिख्यातस्य हे॥ चालनी चाल्यतेनया चलगतौ णिजंतात्करणेल्युट्॥ तितउः तनोति तन्यतेवाऽनेन तनुविस्तारे तनोतेर्डउस न्वेतिसाधुः स्त्रद्रच्छिद्रशतोपेतंचालनंतितउःस्मृतइतिकात्यः चालनंतितउप्रोक्तमितिक्लीबकांडेरत्नकोशः नस्त्रीतितउचालनीइतिन्निकांडशेषः॥ ७

स्थूतप्रसेवौ स्योनइत्यपिपाठः स्यूलः सीव्यतेस्म षिवूतंतुसंताने क्तप्रत्ययंऊठ् स्योनंइतिपाठेऔणादिकोनप्रत्ययः स्योनः स्यूतप्रसेवकाविति रभसः प्रसेवस्तुवीणांगस्यूतयोर्द्वू
ताविति हेमचंद्रः द्वेधान्यादिभरणार्थंतन्तुनिर्मितस्य पिशवी गोणी थैली इति॥कंडोलपिटौ कंड्यते कडिमदे पिंडइति पिंड्यते पिडिसंघाते पिंडोबालेबलेसांद्रे देहांग
रैकदेशयोः देहमात्रेनिवापेचगोलसिल्हकयोरपि ओंड्रपुष्पेचपुंसिस्यात्स्त्री॥बमाजीवनायसोः पिंडीतुपिंडतगरेः लांबुखर्जूरभेदयोरितिमेदिनी द्वेवंशादिनिर्मितभांडस्य
पेटी करंडइति॥कटः कटति कटेवर्षादौ कटः श्रोण्यांद्वयोः पुंसिकिलिंजेतिशयेशवे समयेगजगंडेपि विप्रल्हीतुकटीमता॥किलिंजकः किल्यतेऽनेन किलश्वैत्यक्रीडन-
योः इगुपधात्किदिति इन् किलेजति पंचम्यामजातौइतिजनेडः पृषोदरादिः द्वेवेण्वादिविकारस्य करंडादेः २६ समानाविति स्यूतादिषुसंबध्यते रसवत्यांतु रसाः संत्य

स्यूतप्रसेवौकंडोलपिटौकटकिलिंजकौ २६ समानौरसवत्यांतु पाकस्थानमहानसं॥ पौरोगवस्तदध्यक्षः सूपकारास्तु बल्लवाः २७ आरा
लिकाआंधसिकाः सूदाऔदनिकागुणाः॥

स्यां पाकस्थानमहानसे॥पाक स्थानं पाकस्यस्थानं॥महानसं महच्चतदनश्च त्रीणिपाकस्थानस्य सैपाकघर॥पा
कशाला॥ ॥पौरोगवः पुरः पूजितागौः भूमिः पुरोगवी तस्यायं यद्वा पुरः प्रथमंग्राह्यवस्तुषु गौर्नेत्रमस्य सुरोगुः प्रज्ञाद्यण् तस्या
ध्यक्षः अधिकृतः द्वेमहानसाधिकृतस्य वाकनीस॥सूपकारास्तुबल्लवाः शोभनाआपोऽस्मिन् कुसुकाभ्यश्वेत्यपोअतउत् सूपंकुर्वंति वल्लनं वल्लः वल्लसंवरणे वल्लोस्यास्ती
तिवा वल्लंवातिवा बल्लवः सूपकारेस्याद्भीमसेनेचगोदुहीतिविश्वः २७ आरालिकाः अरालंकुटिलंचरंति ठक्॥आंधसिकाः अंधःभक्तंशिल्पंयेषां ठक्प्रत्ययः॥सूदाः सू
दंतिक्षुगादीन् षूदहिंसायां सूदस्तुकथितः सूपकारेचव्यंजनांतरइतिविश्वमेदिन्यौ॥औदनिकाः ओदनंशिल्पंयेषांते शिल्पमितिठक्॥गुणाः गुणयंते गुणनिमंत्रणे गु

णोमोव्यामिप्रधानेरूपादौसूदइंद्रियं त्यागेशौर्यादिसंख्यादिसत्वाद्याहृत्तिरज्जुषु शक्राादावपिबुध्यांचेस्त्रक्त० इतिससपाककर्तुः आचारीइति आद्यंहृयंव्यंजनकारस्थेनिस्वा
मी॥ आपूपिकः आपूपाः पण्यंअस्य॥कांदविकः कंदोसंस्कृतं कांदवंपण्यमस्य तदस्यपण्यमितिठक्॥भक्ष्कारः भक्ष्यंकरोति कर्मण्यण् इमेत्रिषु पोरोगवाद्यः २८ अ
श्मंतं अश्मनोप्यंतोत्र शकंध्वादिः अश्मंतमश्मचुल्लीमरणेनवधावपि क्षेत्रेपिइतिविश्वः अस्वंतेपिपाठे अस्तूनामंतोत्र॥उध्मानं उद्धानमितिवा उत्ध्मायतेत्र ध्माशब्दा
दौ अधिकरणेल्युट् उद्धारमित्यपि॥अधिश्रयणी अधिश्रीयतेत्र श्रीञ्पाके अधिकरणेल्युट्॥चुल्लिः चुल्यते चुल्लभावकरणे चुद्यतेःअग्निरितिवा चुदप्रेरणे बाहुलका

आपूपिकः कांदविकोभक्ष्यकारइमेत्रिषु २८ अश्मंतमुद्धानमधिश्रयणीचुल्लिरंतिका॥अंगारधानिकांगारशकट्यपिहसंत्यपि २९
हसन्यप्यथनस्त्रीस्यादंगारोलातमुल्मुकम्॥

त्लिक्॥अंतिका अंत्यतेत्र अतिबंधने बाहुलकात्अधिकरणेण्वुल् अंतिकंनिकटेवाच्यलिंगस्त्रीशोभनौष
धौ चुल्यांज्येष्ठभगिन्यांचनाट्योक्तौकीर्त्यतेंतिका पंचचुल्लेः चूलइति॥अंगारधानिका अंगाराःधीयंतेऽस्यां अंगारधानिका ल्युडंतात्ङीषिकन्॥अंगारशकटी अंगारा
णांशकटी॥हसंती हसेहसने लटःशतृङीपिनुम् हसंत्यगारधान्यांचमल्लिकाद्याकिनीभिदोरितिविश्वः हसनीइत्यपि इतिचतुष्टयंसगडीइतिख्या० २९ अथअंगारःनस्त्री
पुंनपुंसकं अंगति अगिगतौ अंगिमदिमंदिभ्यआरन् अंगमियर्तिवा ऋगतौ कर्मण्यण् अंगारमुल्मुकेनस्त्रीपुल्लिंगस्त्वमहीसुतइतिविश्वः॥अलातं लादाने नला
तमस्य॥उल्मुकं उषदाहे उणादित्वात्साधुः अंगारः निखारा॥अलातं उल्मुकं द्वे अर्धदग्धकाष्ठस्य प्राकृतभाषयाकोलितइतिख्यातस्य॥ ७

अंबरीषंक्लीबे अंब्यतेत्र अविशब्दे अंबरीषइतिसाधुः अंबरीषंरणेभ्राष्ट्रे क्लीबंपुंसिनृपांतरे नरकस्यभेदेचकिशोरेभास्करेपिच आम्रातकेऽन्ततापेचनिमिषेमत्स्यभेदयोरि० ॥ भ्राष्ट्रः भ्रज्यंतेत्र भ्रस्जपाके ष्ट्रन्प्रत्ययः वाक्लीबे ३ भर्जनपात्रस्य भ्राष्ट्रतभाषयारवापरइति ॥ कंदुः पुल्लिंगएव स्कंदति स्कंदिर्गतिशोषणयोः पक्षेस्त्रीसाहचर्यात् स्वेदनीस्त्रियां स्विद्यतेअस्यामिति स्विदस्नेहने इकटईइतिख्यातस्य ३० मणिकः अलिंजरः स्यात् अलिंजरयति अलभूषणादौइक् अथवा अलिंजरः अलिंसामर्थ्यं जरयति जृणातिवा जृवयोहानौ पचाद्यच् ॥ मणिकः मणति मणशब्दे सर्वधातुभ्यइन् ततः स्वार्थेकन् हेमाठ किंवा डेराइतिख्यातस्य रांजण ॥ कर्करी कर्कहासे घञ् कर्करातिं रादाने आतोनुपसर्गेइतिकः कर्करीभांडभेदेनादर्पणेकठिनेत्रिष्वितिविश्वः ॥ आलुः आलू आलुनाति लुञ्छेदने कर्तरिक्किप् ॥ आलाति लाआदाने मिते

क्लीबेंबरीषंभ्राष्ट्रोवाकंदुर्वास्वेदनीस्त्रियाम् ३० अलिंजरः स्यान्मणिकः कर्कर्यालुर्गलंतिका ॥ पिठरः स्थाल्युखाकुंडंकलशस्तुत्रिषुद्वयोः ३१

तिडुः ह्रस्वपावे आलुर्गलंतिकायांस्त्रीक्लीबंमूलेचभेलकइतिविश्वः ॥ गलंतिका गलति गलअदनेल्लटः शलटीप्कन् त्रीणिघृतपक्कनिष्कासनसाधनस्य झाराइति ॥ पिठरः पेठति पिठबंधे इगुपधेतिकः पिठंरातिवा रादाने ॥ स्थाली तिष्ठत्यत्र ओदनादिः ष्ठागतिनिवृत्तौ आलच् स्थलंत्यत्रवा स्थलस्थाने ज्वलादित्वाण्णः जातित्वात्स्त्रीप्रत्ययः स्थालंभाजनभेदेपिस्थालीस्यात्पाटलोखयोरित्युक्तत्वात् ॥ उखा ओखति उखगतौ उखेतिवा उषति उषदाहे उभाभ्यांकः ॥ कुंडं कुंडयति कुंडिदाहे रक्षायांवा अनेकार्थत्वात् कुंडमग्न्यालयेमानभेदेदेवजलाशये कुंडीकमंडलौजारात्पतिवत्नीसुतेपुमान् पिठरेतु नवाइतिविश्वः चत्वारिओदनादिपचनपात्रस्य ॥ कलसः कलशः केनजलेनलसति लसश्लेषणक्रीडनयोः अच् कलंशवति शगतौ अन्येभ्योपीतिडः कलशः शंबलंचैवजिव्हायांरशनातथा कलशस्तुत्रिषु कलशः कलशी कलशं द्वयोरितियटेनसंबध्यते ३१

घटः घटी घटते घटचेष्टायां पचाद्यच् घटः समाधिभेदेनाशिरः कूटकुटेषुच घटोघटनगोष्ठीभघटनासत्वयोषितोल्य० ॥ कुटः कुटति कुटकौटिल्ये इगुपधेति कः ॥ निवापः नि वर्तंधिवंत्यनेन कुटनिवापौविकल्पेनस्त्रियां चत्वारि घटस्य ॥ शरावः शीर्यते शॄहिंसायां ऋदोरप् शृणातिवा ॥ वर्धमानकः वर्धते वृधुवृद्धौ लटः शानच् स्वार्थेकन् द्वेपात्र भेदस्य परळइति ॥ ऋजीषं ऋचीषमित्यपि अर्ज्यते अर्जअर्जने ईषन्प्रत्ययांतं ऋचशब्दे बाहुलकात्कीषन् ॥ पिष्टपचनं पच्यतेऽत्र पिष्टस्यपचनं द्वेपिष्टपचनोपयोगि- नः पात्रस्य प्राकृतभाषयातवा ॥ कंसः अस्त्री कम्यते कमुकांतौ समत्ययः कंसोस्त्रीतैजसद्रव्येकांस्येमानेसुरेतुना ॥ पानभाजनं पीयतेइति पानं पानस्यभाजनं द्वेदु ग्धादिपानपात्रस्य ३२ कुतेश्चर्मणः स्नेहपात्रं स्नेहस्यपात्रं स्नेहस्यतैलघृतादेः पात्रं ॥ कुतूः कुत्सितंतन्यते तनुविस्तारे डू कौतिवा प्राकृतभाषयाबुधला कुतूः शब्दः स्त्री

घटः कुटनिवापः स्त्रीशरावोवर्धमानकः ॥ ऋजीषंपिष्टपचनंकंसोऽस्त्रीपानभाजनम् ३२ कुतूः कृतेः स्नेहपात्रंसैवाल्पाकुतुपः पुमान् ॥ सर्वमावपनंभां डंपात्रामत्रंचभाजनं ३३ दर्विः कंबिः खजाकाचस्यात्तर्दूर्दारुहस्तकः ॥

लिंगः ॥ सैवाल्पाचेत् कुतुपः पुमान् कुत्वाडुपच् प्राकृत० डपकी बुधली ॥ सर्वं आवप- नादि भांडंस्यात् आवपनं आउप्यतेत्र डुपबीजतंतुसंताने ॥ भांडं भणति भणशब्दे अमंताड्ः भज्ञाद्यण् भांडमूलवणिग्वित्तेतुरंगाणांचमंडने नदीकूलद्वयीमध्ये भूषणेभा जनेपिचेत्य० ॥ पात्रामत्रंच पाति पारक्षणे पिबंत्यनेनवा पापाने ष्ट्रन् ॥ अमत्रं अमति अमगत्यादिषु अत्रन् पात्रंचआमत्रंचभाजने भाजयति भाजपृथक्कर्मणिल्युट् पंच भांडेइति ३३ दर्विः दर्वी दृणाति दृविदारणे दृङ्भ्यांविन्कृदिकारादक्तिनङीष्वा ॥ कंबिः कंबी कम्यते कमुकांतौ बाहुलकात्बिन्ङीष्वा ॥ खजका खजति खजमंथने खजेराकः एतत्साहचर्यात्पूर्वयोः स्त्रीत्वम् त्रीणिपल्लीइतिख्यातस्य ॥ तर्दूः तरति तॄप्लवनतरणयोः उमत्ययः दुगागमश्च तर्दति तृणति तर्दहिंसायां ॥ दारुहस्तकः दा रुणोहस्तकः इवेप्रतिकृतौइतिकन् एतत्साहचर्यात्तर्दूः शब्दः पुंसि द्वेपरिवेषणाद्युपयोगिनि ॥

शाकं श्यति शोतनूकरणे आत्वेकं बाहुलकात् शक्नोत्यनेनवा शकुशक्तौ हलश्चेतिघञ् शाकोद्वीपांतरेपिच शाकोद्रुमविशेषेचपुमान्हरितकेस्त्रियामितिविश्वः॥ हरित कं हरति-ह्रीयतेवा हृञ्हरणे हरितोवर्णोस्यास्तीति मत्वर्थेअच् स्वार्थेकन्॥ शिग्रुः शीक्यते शीकतेवा शीकृसेचने शिनोति शिञ्निशाने बाहुलकात्साधुः शिग्रुर्ना शाकमात्रेचशोभांजनमहीरुहइतिविश्वमेदिन्यौ त्रीणिवास्तुकशाकादेः अस्यशाकस्यनाडिका नाल ३४ कलंबः कडति कडमदे अंबच् डलयोरैक्यं॥ कलंबः केनलंबतेवा लबिअवस्रंसने कलंबःशाकभेदेपिस्याद्दंडशरयोःपुमान् द्वेशाकनालस्य माहुतभाषयादेठइति॥ वेसवारः वेसंसंप्रेरणंवारयति वृणोतिवा विसप्रेरणे घञ् वृञ्वरणे कर्मण्यण्॥ उपस्करः उपस्करोति व्यंजनेनसमवैति करोतेरस् समवायेचेतिसुट् द्वेसंस्कारार्थंदीयमानस्यहिंग्वादिकहरिद्राधान्याकशुंठिसर्षपादेः चित्रकंपिप्पलीमूलंपि

अस्त्रीशाकंहरितकंशिग्रुरस्यतुनाडिका ३४ कडंबश्चकलंबश्चवेसवारउपस्करः॥ तिंतिडीकंचचुक्रंचवृक्षाम्लमथवेल्लजं ३५ मरिचंकोलकंकृष्ण

प्पलीचव्यनागरं धान्याकंरजनीश्वेततंडुलाश्चसमांशकाः वेसवारइतिख्यातोशाकादिषुनियोजयेत् इत्यात्रेयसंहितायां विंशतिपलानिहरिद्रायाः दशपलानिधान्याकस्य पंचपलानिशुद्धजीरकस्य पलसार्धद्वयंमेथिकायाः एतच्चतुष्टयंभर्जितमेवग्राह्यं त्रीणिपलानिमरीचस्य अर्धपलंरामठस्यहिंगोः एतत्सर्वमेकत्रयोज्यंसंमर्दितंवेसवारइत्युच्यते माहुतभाषयामसालाइति अन्ये॥ तिंतिडीकं तिम्यति तिमआर्द्रीभावे उणादित्वात्साधुः॥ चुक्रं चुकति चुकव्यथनेबाहुलकाद्रक् चक्रिरम्योरुच्चोपधायाइतिरक्

॥ वृक्षाम्लं वृक्षस्यअम्लं त्रीणिचुक्रेतिख्यातस्य अ मसोलइतिवा॥ अथवेल्लजं वेल्लचलने वेल्लंजायते घञ् जनिरंतर्भावितण्यर्थः डप्रत्ययः ३५ मरीचं म्रियतेविषमनेन मृङ्प्राणत्यागे ईचप्रत्ययः॥ कोलकं कोलति कुलसंस्त्याने ण्वुल्॥ कृष्णं कृषविलेखने नक्प्रत्ययः कृष्णःसत्यवतीपुत्रेवायसेकेशवेर्जुने कृष्णास्याद्द्रौपदीनीलीकणाद्राक्षासुयोषिति मेचकेवाच्यलिंगेस्यात्क्लीबेमरिचलोहयोरितिविश्वः॥

ऊषणं ऊषति ऊषदाहे ल्युट् प्रत्ययः ऊषणंमरिचेक्लीबंकणांयामूषणास्मृता ॥ धर्मपत्तनं धर्मपत्तनेनजातं तत्रजातइत्यण् संज्ञापूर्वकत्वाद्वृद्ध्यभावः इतिषट्मिर्च्येइति॰
जीरकः जवति जुःसौत्रः जिनातिवा ज्यावयोहानौ रक्प्रत्ययः संप्रसारणं ॥ जरणः जरयति जृष्वयोहानौ नंद्यादिः जरणोहिंगुनिस्मृतं जरणोजीरकेपिस्यात्कृष्णासौ
वर्चलेपिचेतिविश्वः ॥ अजाजी अजमजति अजगतिक्षेपणयोः कर्मण्यण् ङीप् ॥ कणा कणति कणशब्दे पचाद्यच् कणाजीरककुंभीरमक्षिकापिप्पलीषुच कणोः
तिसूक्ष्मेधान्यांशे इतिविश्वः इतिचत्वारिजीरकस्य कृष्णेतुजीरके ३६ सुषवी सूप्रेरणे ऋदोरप् उपसर्गादितिषत्वं ॥ कारवी कारंवाति वागतिगंधनयोः कप्रत्ययः कार

मूषणंधर्मपत्तनं ॥ जीरकोजरणोजाजीकणाकृष्णेतुजीरके ३६ सुषवीका
रवीपृथ्वीपृथुःकालोपकुंचिका ॥ आर्द्रकंशृंगवेरस्यादथछत्रावितुन्नकम् ३७

भवतिवा अवरक्षणादौ कारवीमधुरादीप्यत्वक्पत्रीकृष्णाजीरके ॥ पृथ्वी प्रथप्रख्याने प्रथमस्थाने प्रथिम्रदिद्भ्रस्जीतिकुः गुणवचनात्ङीष् पृथ्वीमहत्यांचत्वक्पत्र्यांकृष्णाजीर
कइतिविश्वः पृथुःस्यान्महतीत्रिषु त्वक्पत्र्यांकृष्णाजीरेथपुमानग्नौनृपांतरइत्यकृतत्वात् ॥ काला कालोवर्णोस्त्यस्याः ॥ उपकुंचिका उपकुंचति कुंचकौटिल्यादौ षट्कृष्णवर्णजीर
कस्य भाकृतभाषा कालेंजिरं ॥ आर्द्रकं आर्द्रायांजातं तद्धितवुञ् आर्द्रयतिजिह्वांवा ॥ शृंगवेरं शृंगमिववेरंशरीरमस्य है आलेंइति इर्द्दंशंठ्याः पूर्वरूपं ॥ छत्रा छत्रमस्त्यस्याः मत्वर्थे
च् छत्रंस्यादातपत्राणेछत्रामधुरिकौषधौ धान्यकेचशिलींध्रेच इतिहेमचंद्रः ॥ वितुन्नकं विगतंतुंनकंदुःखमस्मात् वितुन्नकंचधान्याकेझ्झामालाप्ययूरकं इतिविश्वः ३७

शाकं श्यति शोतनूकरणे आत्वेकं बाहुलकात् शक्नोत्यनेनवा शक्लृशक्तौ हलश्चेतिघञ् शाकोद्वीपांतरेपिच शाकोद्रुमविशेषेचपुमान्हरितकेस्त्रियामितिविश्वः॥ हरितकं हरति-ह्रीयतेवा हृञ्हरणे हरितोवर्णोस्यास्तीति गवर्थेअच् स्वार्थेकन्॥ शिग्रुः शीक्यते शीकतेवा शीकृसेचने शिनोति शिञ्निशाने बाहुलकात्साधुः शिग्रुर्ना शाकमात्रेचशोभांजनमहीरुहइतिविश्वमेदिन्यौ त्रीणिवास्तूकशाकादेः अन्यशाकस्यनाडिका नालं ३४ कलंबः कडति कडमदे अंबच् डलयोरैक्यं॥ कलंबः केनलंबतेवा लबिअवस्त्रंसने कलंबशाकभेदेपिस्यात्कदंबशरयोःपुमान् देशाकनालस्यप्राकृतभाषयादेठइति॥ वेसवारः वेसंसंप्रेरणंवारयति वृणोतिवा विसप्रेरणे घञ् वृञ्वरणे कर्मण्यण्॥ उपस्करः उपस्करोति व्यंजनेनसमवैति करोतेरत् समवायेचेतिसुट् देसंस्कारार्थंदीयमानस्यहिंग्वादिकहरिद्राधान्याकशुंठिसर्षपादेः चित्रकंपिप्पलीमूलंपिप्पलीचव्यनागरं धान्याकंरजनीश्वेततंडुलाश्चसमांशकाः वेसवारइतिख्यातोशाकादिषुनियोजयेत् इत्यात्रेयसंहितायां विंशतिपलानिहरिद्रायाः दशपलानिधान्याकस्य पंचपलानिशुद्धजीरकस्य पलसार्धद्वयंमेथिकायाः एतच्चतुष्टयंभर्जितमेवग्राह्यं त्रीणिपलानिमरीचस्य अर्धपलंरामठस्यहिंगोः एतत्सर्वमेकत्रयोज्यंसंमर्दितंवेसवारइत्युच्यते प्राकृतभाषयामसालाइति अन्ये॥ तिन्तिडीकं निम्यति निमआर्द्रीभावे उणादित्वात्साधुः॥ चुक्रं चुकति चुकव्यथने प्रतिघातेच चकिरम्योरुच्चोपधायाइतिरक्॥ वृक्षाम्लं वृक्षस्यअम्लं त्रीणिचुक्रेतिख्यातस्य अमसोलइतिवा॥ अथवेल्लजं वेल्लचलने वेल्लंजायते घञ् जनिरंतर्भावितण्यर्थः डप्रत्ययः ३५ मरीचं म्रियतेविषमनेन मृङ्प्राणत्यागे ईचप्रत्ययः॥ कोलकं कोलति कुलसंस्त्याने ण्वुल्॥ कृष्णं कृषविलेखने नक्प्रत्ययः कृष्णःसत्यवतीपुत्रे वायसेकेशवेर्जुने कृष्णास्याद्द्रौपदीनीलीकणाद्राक्षासुयोषिति मेचकेवाच्यलिंगेस्यात्क्लीबेमरिचलोहयोरितिविश्वः॥

**अस्त्रीशाकंहरितकंशिग्रुरस्यतुनाडिका ३४ कडंबश्चकलंबश्चवेसवारउपस्करः॥ तिंतिडीकंचचुक्रंचवृक्षाम्लमथवेल्लजं ३५ मरिचंकोलकंकृष्ण**

ऊषणं ऊषति ऊषदाहे ल्युट् प्रत्ययः ऊषणं मरिचे क्लीबं कणायां मूषणा स्मृता॥ धर्मपत्तनं धर्मपत्तनेन जातं तत्र जात इत्यण् संज्ञापूर्वकत्वाद्वृद्ध्यभावः इति षट् भिन्नेयं इति॰ जीरकः जवति जुः सौत्रः जिनाति वा ज्या वयोहानौ रक् प्रत्ययः संप्रसारणं॥ जरणः जरयति जृष् वयोहानौ नंद्यादिः जरणोहिंगुनि स्मृतं जरणो जीरकेपि स्यात् कृष्णे सौ वर्चले पि चेति विश्वः॥ अजाजी अजमजति अज गतिक्षेपणयोः कर्मण्यण् ङीप्॥ कणा कणति कण शब्दे पचाद्यच् कणा जीरक कुंभीर मक्षिका पिप्पलीषु च कणोः तिसूक्ष्मे धान्यांशे इति विश्वः इति चत्वारि जीरकस्य कृष्णे तु जीरके ३६ सुषवी षूप्रेरणे ऋदोरप् उपसर्गादिति षत्वं॥ कारवी कारं वाति वा गतिगंधनयोः कप्रत्ययः कार

सूषणं धर्मपत्तनं॥ जीरको जरणोजाजी कणा कृष्णे तु जीरके ३६ सुषवी का
रवी पृथ्वी पृथुः कालोपकुंचिका॥ आर्द्रकं शृंगवेरं स्यादथ छत्रा वितुन्नकम् ३७

मवति वा अवरक्षणादौ कारवी मधुरादीप्यलक्ष्यत्नी कृष्णाजीरके॥ पृथ्वी प्रथयने प्रथ प्रस्थाने प्रथिम्रदिद् इति कुः गुणवचनात् ङीष् पृथ्वी भूमौ महत्यो च लक्ष्यपत्र्यां कृष्णाजीर क इति विश्वः पृथुः स्यान्महतीत्रिषु लक्ष्यपत्र्यां कृष्णाजीरे च पुमान् गौनृपांतर इत्यक्तत्वात्॥ काला कालो वर्णोस्त्यस्याः॥ उपकुंचिका उपकुंचति कुंच कौटिल्यादौ पद्कृष्णवर्णजीर कस्य प्राकृतभा॰ कालेंजिरे॥ आर्द्रकं आर्द्रायां जातं तद्धितवुञ् आर्द्रयति जिह्वां वा॥ शृंगवेरं शृंगमिव वेरं शरीरमस्य हे आलें इति इदं शंठ्याः पूर्वरूपं॥ छत्रा छत्रमस्त्यस्याः मत्वर्थे च छत्रं स्यादातपत्राणे छत्रा मधुरिकौषधौ धान्यके च शिलींध्रे च इति हेमचंद्रः॥ वितुन्नकं विगतं तुन्नकं दुःखमस्मात् वितुन्नकं च धान्याके झ्झटामाला मयूरक इति विश्वः ३७

कुस्तुंबुरु कुस्तुबरी कुत्सितंतुंबति तुबिअर्दने कुस्तुंबुरुणिजातिरितिनिर्देशादुरुः स्त्र ॥ धान्याकं धन्यते भक्षणार्थिभिः धनशब्दे धन्यकमपि धमकंधान्यकंधान्यं कुस्तुंबु रु धनीयकमितिरभसः ॥ छत्रा ॥ वितुंनकं ॥ कुस्तुंबुरु ॥ धान्याकं चत्वारिकोथिंबिरी धणे इति ॥ अथशुंठी शुंठति कफं शुंठिप्रतिघाते पचाद्यच्च गौरादिः शुंठिः स्त्र स्त्रोपि सधन्याशुंठिसैंधवमितिवैद्यकं ॥ महौषधं महच्चतदौषधंच महौषधंतुशुंठ्यांस्याद्विषायांलशुनेपिचेतिविश्वः ॥ विश्वं स्त्रीनपुंसकयोः विश्वा विशति विशाम् वेशाने कन् विश्वंकृत्स्नेंच भुवनेविश्वेदेवेषुनागरे विश्वाप्यतिविषायांस्यादितिविश्वः ॥ नागरं न गरेभवं तत्रभवइत्यण् नागरंमुस्तकेशुंठ्यांविदग्धेनगरोद्भवे ॥ विश्वभे षजं विश्वस्यदोषस्य भेषजं पंचसंज्ञइति ३८ आरनालकं आर्छति ऋगतौ आङ्पूर्वात् अच् णलति णलगंधे ज्वलितिकसंतेतिणः कप् आरोनालोऽस्य ॥ सौवीरं सुवी

**कुस्तुंबुरुचधान्याकमथशुंठीमहौषधम् ॥ स्त्रीनपुंसकयोर्विश्वंनागरंविश्वभेषजं ३८ आरनालकसौवीरकुल्माषाभिषुतानिच ॥ अवंतिसोमधान्याम्लकुजलानिचकांजिके ३९**

रेषुभवं तत्रभवइत्यण् ॥ कुल्माषं कोलति कुलसंख्याने क्विप् कुल् अर्धस्विन्नः माषोः स्त्रियन् कुल्माषः कुल्माषंस्यात्तुकांजिके कुल्माषोर्धस्विन्नधान्येयवकेचणकेपिचेतिहेमचंद्रः ॥ अभिषुतं अभिषूयतेस्म षुञ्अभिषवे क्तः उपसर्गादितिषत्वं कुल्माषाभिषुतमित्ये कपदंवा कुल्माषैर्यवादिभिरर्धस्विन्नैरभिषूयतेस्म ॥ अवंतिसोमं अवंतिसूयते सूधातोर्मन् ॥ धान्याम्लं धान्येषुयवादिषुअम्लं ॥ कुजलं कुत्सितंजलं एनेनपुं सके ॥ कांजिके कांजयति क चिकाचिदीप्तिबंधनयोः पृषोदरादिः कांचिकंकांजिकंदारंकुल्माषाभिषुतंतथा अवंतिसोमधान्याम्लमारनालमहारसं सौवीरचसु वीराम्लंतथान्तुन्नंतुषोदकमितिधन्वंतरिः अष्टकांजिकनामानि ३९ ७ ७ ७ ७

सहस्रवेधि सहस्रंवेधितुंशीलमस्य विधविधाने सप्यजानाविनिणिनिः॥ जतुकं जतुरेवजतुकं स्वार्थेकन् जतुकाजिनपत्र्यायांजतुकोहिंगुलाक्षयोः॥ बाल्हिकं बाल्हीकमपि व ल्हिकेषुभव तत्रभवइत्यण् बाल्हिकोदेशभेदेचबाल्हिकंहिंगुकुंकुमं॥ हिंगु हिनोति हिगनो हस्वेच हिमंगच्छतिवा मृगय्वादित्वात्साधुः॥ रामठं रमठदेशेभवं रमंतेनेन वा रमुक्रीडायां रमयतिवा बाहुलकादठच् पंचहिंगोः॥ तत्पत्री यस्यहिंगुवृक्षस्यपत्री लक्पत्रीइतिवापाठः॥ कारवी कारंवाति वागतिगंधनयोः केगौरादित्वात्ङीष् त त्पत्रीत्वचमारव्यातंत्वक्पत्रीकारवीतिचेतिरुद्रः त्वक्पत्रंतुवरांगके त्वक्पत्रीतिकारव्यामितिहैमः॥ पृथ्वी प्रथते प्रथप्रख्याने पृथ्वीभूमौमहत्यांचत्वक्पत्र्यांकृष्णाजीरक इतिविश्वः पृथुःस्यान्महतित्रिषु त्वक्पत्र्यांकृष्णजीरेस्त्रीपुमानग्नौनृपांतरे॥ बाष्पिका बाष्पमिव इवेप्रतिकृतौइतिकन्॥ कवरी केशानांसन्निवेशे सैव कवरीतिचेलिया

सहस्रवेधिजतुकंबाल्हिकंहिंगुरामठं॥ तत्पत्रीकारवीपृथ्वीबाष्पिकाकवरीपृथुः ४० निशाव्हा कांचनीपीताहरिद्रावरवर्णिनी॥ सा मुद्रयत्तुलवणमक्षीवंवशिरंचतत् ४१ ठः इदंनामपंचकंहिंगुवृक्षस्यपत्र्यां ४० निशाव्हा निशा आव्हायस्याः निशापदेनतत्पर्यायाः लक्ष्यंते कांचनी कां च्यनेनया करणेल्युट् ङीप् कांचिदीप्तौ कांचनः कांचनारेस्याच्चंपकेनागकेसरे उदुंबरेचधत्तूरेहरिद्रायांचकांचनी क्लीबेजकेसरेहेम्नि इतिविश्वः॥ पीता पीयतेस्म पीङ्पाने पापानेवा क्तप्रत्ययेईत्वं हरिंवर्णंद्राति द्राकुत्सायांगतौ कप्रत्ययः हिरिभिर्द्रूयतेवा हरितंद्रवतिवा द्रुगतौ अन्येष्वपीतिडः॥ वरवर्णिनी वरश्चासौवर्णश्चसोस्त्यस्याः पंचह रिद्रायाः नामानि॥ सामुद्रंयत्तुलवणंतदक्षीवं सामुद्रं समुद्रेभवं सामुद्रंलवणेचापिसामुद्रंदेहलक्षणेइतिहैमः॥ लवणं लुनाति लूञ्छेदने लवणंसैंधवादौनासिंधुरसोभिदो रसे तद्युक्तेवाच्यलिंगःस्यान्नदीभेदहृषोःस्त्रियां॥ अक्षीवं अक्षीवानि वागत्यादौ अक्ष्णः ई अक्षीवाति कप्रत्ययः॥ वपरं वशिरं वशकांतौ वशिरंशाति शदाने द्वेलवणनाः४१

सैंधवः सिंधुषु भवः सैंधवस्तु सिंधुदेशोद्भवे हये सैंधवः पुंनपुंसके शिनशिवं शिनं च तल्लिंगं च॥ अथ शीतं शिवं क्लीबं स्यौणेय मणिमंथयोः पुंसि शक्तुफलावृक्षे तथा मधुरिकौषधौ॥ मणिमंथं मणिमंथे मणिमंथाख्य पर्वते भवं अण्प्रत्ययः॥ सिंधुजे सिंधुषु जातं तस्मिन् चत्वारि माकूतभाषया सेंदेलोण इति॥ रौमकं रुमायां भवं॥ वसुकं वसुकायति कै शब्दे आतश्चेति कः वसुकं रोमके पुंसि शिवबल्यर्कपर्णयोरिति विश्वः वस्तकं पाठे वस्त इव वस्तकं इवेति कन् अजगंधत्वात् हेमाचार्यसेंधोणइति रस्यानस्य तो दुक्त रुमा शांभरी देशे तु नामको लवणाकरः॥ कृतके कृत्रिमे लवणे पाक्यं बिडं च॥ पाक्यं पच्यते ण्यत्प्रत्ययः चजोरिति कुत्वं॥ बिडं बिडति बिड भेदने इगुपधेति कः इति खारी निरव्यानस्य ४२ सौवर्चलं सुष्ठु वर्च्यते वर्चदीप्तौ वृषादित्वात् कलच् प्रज्ञाद्यण् अथ सौवर्चलं सर्जक्षारे च लवणांतरे॥ अक्षरुचके अक्षं च रुचकं च अश्नुते अक्षू व्याप्तौ पचाद्यच् अक्षो रथस्यावयवे च्व

सैंधवोऽस्त्री शीतशिवं माणिमंथं च सिंधुजे॥ रौमकं वसुकं पाक्यं बिडं च कृतके द्वयं ४२ सौवर्चलेऽक्षरुचके तिलकं तत्र मेचके॥ मत्स्यंडी फाणितं खंडविकारः शर्करा सिता ४३

हारिबिभीतके साधके शकटे कर्षे ज्ञाने चात्मनि राक्षसे अक्षं सौवर्चले तुल्ये हृषीके इति हेमचंद्रः॥ रुचकं रोचते रुच दीप्तौ इगुपधेति कः स्वार्थे कन् रुचको बीजपूरे च निष्के दंतकपोतयोः नद्योः सर्जिकाक्षारे स्यात् माल्याभरणमाल्ययोः सौवर्चले पि मंगल्यद्रव्ये पि कटके पि चेति विश्वमेदिन्यौ त्रीणि मधुरलवणभेदस्य सौंचल्खारखार इति॥ तत्र मधुर लवणभेदे मेचके कृष्णवर्णे सति तिलकं तिलति तेलति वा तिल स्नेहने तिल गतौ वा उभाभ्यां इगुपधेति कः स्वार्थे कन् तिलको द्रुमरोगाश्व भेदेषु तिलकालके क्लीबं सौवर्चले क्लोम्नोर्न‑स्त्रियां तु विशेषके एकं॥ मत्स्यंडी मदं मुदं वा स्यंदते स्यंदू प्रस्रवणे कर्मण्यण् पृषोदरादिः॥ फाणितं फाण्यते फण गतौ हे राबका कवी इति॥ खंडविकारे खंडः विकारो स्यत स्मिन्॥ शर्करा शृणाति पित्तं शॄ हिंसायां करन् प्रत्यये वा हुलकात् कस्येत्वाभावः शर्करा खंडविकृतौ कर्परांशे रुगंतरे उपलायां शर्करान्वितदेशे च कलशे पि चेति हेमः॥ सिता सिनोति षिञ् बंधने कर्तरि क्तः सिता मत्स्यसिते बद्धे धवले त्रिषु शर्करायां स्त्री हेमिश्री सारवर ४३

कूर्चिका कूर्चति कूर्चविकारे ण्वादेराकृतिगणत्वात् संज्ञायांण्वुल् दध्नासहपयःपक्वंयत्तस्याद्दधिकूर्चिका तक्रेणपक्वंयत्क्षीरंसाभवेत्तक्रकूर्चिका कूर्चिकासूचिकायांचतूलिकायां चकुड्मले कणादेद्रवनेक्षीरविकृतावपियोपितीत्यः॥ क्षीरविकृतिः क्षीरस्यविकृतिः एकं स्यात्॥ रसालातु रसानांलाति मूलविभुजादित्वात् कः॥ मार्जिता मार्ज्यतेस्म मृजुशौचालंकारयोः क्तप्रत्ययः तदुक्तंसूदशास्त्रे अर्धाढकःशचिरपर्युषितस्यदध्नः खंडस्यषोडशपलानिशशिप्रभस्य सर्पिष्पलंमधुपलंमरिचंद्विकर्षंशुंठ्याः पलार्धम पिचार्धपलंचतुर्णां सूक्ष्मेपटेललनयामृदुपाणिघृष्टाकर्पूरधूलिसुरभीकृतपात्रसंस्था एषावृकोदरकृतासरसारसालायास्वादिता भगवतामधुसूदनेनेतिदुदधि म धुशर्क रामरीचार्द्रकादिभिः कृतस्यलेह्यस्य भाकृतभाषयाश्रीखंडइति॥ तेमनंतु निष्ठानंस्यात् तेमनं तिम्यतेःनेन तिमआर्द्रीभावे करणेल्युट् तेमनंव्यंजनंकूदेतेमनीचुल्लिभिद्यपी

कूर्चिकाक्षीरविकृतिःस्याद्रसालातुमार्जिता॥ स्यात्तेमनंतुनिष्ठानंत्रिलिंगंवासितावधेः ४४ शूल्याकृतंभटित्रंस्याच्छूल्यमुख्यंतुपैठरम्॥
प्रणीतमुपसंपन्नंप्रयस्तस्यात्सुसंस्कृतम् ४५ त्रिहेमचंद्रः॥ निष्ठानं निष्ठीयतेत्र शागतिनिवृत्तौ अधिकरणेल्युट् इदध्यादिव्यंजनस्य भाकृतभाषयाकढीति

॥ इतःपरंवासितपर्यंतास्त्रिलिंगाः ४४ शूल्याकृतं शूलेनकृतं शूलात्पाकेतिडाच्॥ भटित्रं भटति भट भृतौ भट्यतेस्मवा इत्रप्रत्ययः॥ शूल्यं शूलेनसंस्कृतं श्रोणिलोहशलाकया पक्वमांसस्य॥ उख्यं उखायांसंस्कृतंयत् उभयत्रसूत्रेणयत् पैठरं पिठरेसंस्कृतं इस्थालीपक्वस्यान्नस्य॥ प्रणीतं प्रणीयते प्रणीतमुपसंपन्नेकृतेक्षिप्तेप्रवेशिते संस्कृताग्नौचेतिहैमः॥ उपसंपन्नं उपसंपद्यतेस्म पदगतौ क्तप्रत्ययः उपसंपन्नमुद्दिष्टंविहितेचसुसंस्कृतइतिविश्वः द्रुपाकेनसंस्कृतस्यव्यंजनादेः॥ प्रयस्तं प्रयतेस्म यसुप्रयत्ने कर्मणिक्तः॥ सुसंस्कृतं सुष्ठुसंस्क्रियतेस्म डुकृञ्करणेक्तः संपरिभ्यांकरोतौभूषणेइतिसुट् इप्रयत्ननिष्पन्नस्यद्रव्यांतरसंस्कृतस्यपक्वस्यनामनी ४५

पिच्छिलंतु विजिलंस्यात् पिच्छिलं पिच्छास्यास्ति पिच्छादित्वादिलच् पिच्छातुशाल्मलीवेष्टेमंडेवाश्वपदामये इतिविश्वः ॥ निजिलं विजनंविजिः इगुपधात्किदितीन् ओ विजीभयचलनयोः विजिलाति लाआदाने कप्रत्ययः हेमंडयुक्तदध्यादेः प्राकृतभाषयासाईस्कद्धादहीं मठ्ठा ॥ संमृष्टं संमृज्यते मृजूशब्दो कर्मणिक्तः ॥ शोधितं शोध्यतेस्म शुंधशब्दो प्राग्वत् हेकेशकीटाद्यपनयनेनशोधितस्यान्नादेः ॥ चिक्कणं चिक्कगतौ संपदादिः चिक्कंकणति कणशब्दे पचाद्यच् नित्यतेवा चितीसंज्ञाने ॥ मसृणं मस्यति मसीपरिणामे बाहुलकादृण्यः यद्वा मसृणोति ऋगतौ पृषोदरादिः मसृणोकर्कशेस्निग्धेत्रिषूमायांतुयोषिति।निविश्वः ॥ स्निग्धं स्निह्यतिस्म ष्णिह प्रीतौ श्रोणिस्निग्धस्य ॥ भावितं भाव्यतेस्म भावितंवासितेप्राप्ते ॥ वासितं वास्यतेस्म वासउपसेवायां सर्वेन्कांताः वासितोकरिणीनार्योवासितंभावितेनुतेइतिहैमः हेहिं

स्यात्पिछिलंतुविजिलंसंमृष्टंशोधितंसमे ॥ चिक्कणंमसृणंस्निग्धंतुल्येभावितवासिते ४६ आपक्कंपौलिरप्यूपोलाजाः पुंभूम्निचाक्षताः ॥ पृथुकः स्याच्चिपिटकोधानाभृष्टयवेस्त्रियः ४७ ग्वादियुक्तस्यव्यंजनादेः ४६ आपक्कं ईषत्पक्कं आङीषदर्थइतिसमासः ॥ पौलिः पोलति पुलमहत्वे ज्वलादित्वाण्णोस्क तंगमादित्वादिन् पोलेननिर्वृतः अप्यूपसाहचर्यात्पुंसि ॥ अप्यूपः आप्यूषयति आप्यूषनेवा ऊषरुजायां इगुपधेतिकः घञ्वा अप्युपइति उषदाहे श्रोणियवादिनाकृतपक्का न्नस्य प्राकृतभाषयापोळी ॥ लाजाः लज्जंते लजभर्जने घञ् पुंसिबहुत्वेच ॥ तथा अक्षताः लाजःस्यादार्द्रतंडुले नपुंसकमुशीरेचस्त्रियांपुंभूम्निचाक्षते ॥ अक्षताः क्षणु- हिंसायां क्तप्रत्ययः नक्षतंयेषांते अक्षताश्चपुंभूम्नीत्यर्थःअक्षतंनद्वयोःपंडेलाजेपुंभूम्निष्वहिंसिते लाद्यादिति ॥ पृथुकः प्रथते प्रथप्रख्याने औणादिकः पृथुकश्चिपिटेर्भकइति हेमचंद्रः ॥ चिपिटकः चिपिटमिव इवेप्रतिकृतौइतिकन् हेआर्द्रभर्जिततंडुलस्य प्राकृ॰ पोहे इति ॥ भृष्टयवे भर्जितयवेधानाः धाधातोःनः नित्यंस्त्रियांबहुत्वेच धानाभृष्टयवे क्लीरेधान्याकेचूर्णसक्तुष्विति हैमः ४७

पूपः पवनंपूः पूञ्पवने पुवंपानि पिबतिवा आनइतिकः॥ अपूपः नपूयते पूयीविशरणे यद्वा अपूपंपानि पिबतिवा प्राग्वत्कः॥ पिष्टकः पिष्टस्यविकारः संज्ञायामितिकन् पिष्टको घृतपूपादौनेत्ररोगांतरेपिचेतिविश्वः श्रीणिअपूपस्य प्राकृतभाषयावडा अथवा घारगा अथवा अनर्सा इति अपूपः पिष्टपूपः स्यादितिमुनिः तदुक्तं चंद्रांशकनिर्मलाःपूपाः शालितंडुलनिर्मिताः॥ दधिसक्तवः करंभः करंबोवा करंभः केनजलेनरभ्यतेमिश्रीक्रियते अकर्तरीतिघञ् केनवायुनानीयतेवा रभेरनेकार्थत्वं॥ दधिसक्तवः सचते ष चसमवाये दध्ना उपसिक्ताः अन्नेनव्यंजनमितिसमासः करंबइतिपाठे केनजलेनरंबते रबिशब्दे यद्वा किरति कीर्यतेवा कृविक्षेपे हे सक्तवः धानाचूर्णेपुंभूम्नि॥ भिस्सा भासते भसदीप्तौ बाहुलकात्सकइत्वं यद्वा भेदनंभिन् स्त्री भिदंस्यति पृषोदरादिः भक्तंभज्यतेस्म भजसेवायां भक्तमन्नेतत्परेचेतिहेमचंद्रः॥ अंधः अद्यते अदभक्षणे

पूपोऽपूपः पिष्टकः स्यात्करंभोदधिसक्तवः॥ भिस्सास्त्री भक्तमंधोन्नमोदनोस्त्रीसदीदिविः ४८ भिःसटादग्धिकासर्वरसाग्रेमंडमस्त्रियां

अदेर्नुम् धौचेत्यसुन् सांतः अन्नंपूर्ववत् अन्नंभक्तेचभुक्तेस्यादितिविश्वः॥ ओदनः उनत्ति उंदीक्लेदने उंदेर्नलोपश्चेतियुच् ऊदतेऽनेनवा ऊर्दक्रीडायां॥ ओदनंनस्त्रियांभक्तेब लायामोदनीस्त्रियाम् सः दीदिविः दीव्यतेत्यनेन दिवुक्रीडायां दिवो ह्रेदीर्घश्चाभ्यासस्य सइतिविशेषणात्पुंसि भट्अन्नस्य भातइति ४८ भिःसटा भिस्साटीकते डः ह्रस्वः॥ दग्धिका दह्यतेस्मक्तः हेदग्धान्नस्य करपइति॥ रसाग्रे रसश्चासावग्रश्च रसस्याग्रइतिवा अग्रोरसइतिरसाग्रः तस्मिन् सर्वेषांरसानांद्रवद्रव्याणामग्रंअ ग्रिमोद्रवःमंडःस्यात् मंडते मंडयतेवा मंडिभूषायां मन्यतेवा मनज्ञाने मंडःपत्रांगुलेशाकभेदेक्लीबंतुमस्तुनि आमलक्यांस्त्रियांमडा प्यस्त्रियांसारपिच्छयोरितिवि श्वः मंडंनपुंसके एकंप्राकृतभाषयानिवळइति॥ श्रीगोपालकृष्णाचरणारविंदाभ्यांनमः श्रीसीतारामाभ्यांनमः ७

मासरः मास्यते मसीपरिणामे बाहुलकादरन् मा श्रीः सरत्यत्रे निवा ॥आचामः आचम्यने चमुअदने॥निस्नावः निःस्राव्यते स्नुगतौ पर्यंतात्यत्र् द्वंद्वसमासः॥भक्तसमु द्भवे भक्तात्समुद्भवोयस्य तस्मिन्मंडेप्राकृतभाषयापेजइति ४९ यवागुः यौनि यूयनेवा यूमिश्रणे आगुच्॥उष्णिका उष्णेव कन्॥श्राणा श्रीयनेस्म श्रापाके कर्मणिक्तेल-स्यनत्वं॥विलेपी विलिंपति लिपउपदेहे अचूङीष्॥सेवतरला तरणंतरः तूप्लुवनादौ तरंलाति कप्रत्ययः पंचआर्द्रओदनस्य॥ "क्षेपकस्यव्याख्यानं श्रमणं॥अ-भ्यंजनं हैतैलस्य॥कृसरस्तु तिलोदनः तिलमिश्रओदनः"॥ गवांसर्वंत्रिषु गव्यं गोरिदं अथवा गविभवं अथवागोर्विकारः गोपयसोयत् इत्यादिष्षुयत्क्षीरादिद्र व्यंस्यात् एकं॥गोविट् गोःविट् पुरीषं॥गोमयं द्वेगोःपुरीषे शेणइति गोविट्शब्दः षांतः स्त्रियां सर्वविकारावयवादि गव्यंनपुंसकंज्यायांरणद्व्येप्ययोस्त्रियाम्

> मासराचामनिस्रावामंडेभक्तसमुद्भवे ४९ यवागूरुष्णिकाश्राणाविलेपीतरलाचसा॥'श्रमणाभ्यंजनेतैलंकृसरस्तुतिलोदनः'॥गव्यंत्रिषुगवां सर्वंगोविड्गोमयमस्त्रियाम् ५० तत्तुशुष्कंकरीषोस्त्रीदुग्धंक्षीरंपयःसमं॥पयस्यमाज्यंदध्यादिद्रप्संदधियनेतरत् ५१

गोसमूहेनृलिंगस्तुगोदु ग्धादौचगोहिते॥तद्गोमयंशुष्कंकरीषः स्यात् अस्त्री करीषं कीर्यते कृविक्षेपे ईषन्प्रत्ययः प्राकृतभाषयागोवरीति॥दुग्धं दुह्यतेस्म दुग्धंक्षीरेपूरितेचेतिहेमचंद्रः॥क्षीरं क्षीष्हिंसायां संपदादिः क्षियंईरयति कर्मण्यण् क्षीरंपानीयदुग्धयोरितिहेमः॥पयः पीयते पीङ्पाने पयतेवा पयगतौ असुन् पयःक्षीरेचनीरेचेतिहेमः त्रीणिदुग्धस्य आज्यदध्यादियत्तत्पयस्यं पयसः विकारः पयस्यं पयस्शब्दात् यत् आज्यंचदधिचआदियस्यआदिनातक्रंनवनीतंचएकं॥यत्घनेतरत् दधिन द्रप्सं अप्संवा दृप्यंते ऽनेन दृपहर्षादौ बाहुलकात्सः अमागमः अयद्वान्दृप्यनेनेन तृपप्रीणने॥घनेतरत् घनाद्द्रवात्स्यात्इतरत्श्लथं प्राकृतभाषयापातळदहीं द्रप्संदध्यघनंतथेतिनाममाला

बाणद्रप्सोसरावितिगर्गः ५१

घृतं घ्रियते घृसेके क्तः घृतमाज्यंबुदोसेष्वितिहैमचन्द्रः॥आज्यं आअज्यतेऽनेन अंजूव्यक्तादौ क्यप्॥हविः हूयते हूदानादौ हविःसर्पिषिहोतव्यइतिहैमः॥सर्पिः सर्पतिसृ प्लृगतौ इषिः नामचतुष्टयंघृतस्य हविःसर्पिः इमौशब्दौषांतौनपुंसके॥नवनीतं नवंचतन्नीतंच॥नवोद्धृतं नवंचतदुद्धृतंच हैय्यंगवीनमिति॥घृतमंथनात्दध्नःतत्कालमुद्धृ तंनवमित्यर्थः॥यत्ह्योगोदोहोद्भवं तत्तु हैयंगवीनं स्यात् पूर्वस्मिन्दिनेगोदोहजन्यं हैयंगवीनंसंज्ञायां इतिनिपातनात्साधुः प्राकृतभाषयाकाल्हेचेलोणी॥दंडाहतं दंडेन मथ्नाआहतंविलोडितं॥कालशेयं कलश्यांमंथपात्रेभवं दृतिकुक्षिकलशिवस्त्यस्तहेर्ढञ्॥अरिष्टं नरिष्टंअक्षेमंयस्मात् अरिष्टमशुभेतक्रेसूतिकागारआसवे शुभेमर णचिन्हेचेतिविश्वः॥गोरसः चतुष्कमिदंदंडमथितस्य रसमात्रस्य॥पादांबु पादःपादमात्रंचतुर्थांशंअंबुउदकंयस्मिन् मथितंदंडाहतंतक्रमित्युच्यते तं चन्ति तंच्यते-

घृतमाज्यंहविःसर्पिर्नवनीतंनवोद्धृतं॥तत्तुहैयंगवीनंयत्ह्योगोदोहोद्भवंघृतं ५२ दंडाहतंकालशेयमरिष्टमपिगोरसः तक्रंह्युदश्विन्मथितंपादाम्ब्वर्धांबुनिर्जलम् ५३ मंडंदधिभवंमस्तुपीयूषोऽभिनवंपयः॥

वा तंचुगतो रक्प्रत्ययः एकं॥अर्धांबु अर्ध मंबु उदकंयस्मिन् मथितं तदुदश्वित् उदा उदकेनश्वयतिवर्धते टुओश्विगतिवृद्ध्योः क्विपतुक् उदकस्यउदादेशः॥मथितं मथ्यतेस्म मंथविलोडने तौतं॥ निर्ज लं निर्गतंजलंयस्मात् जलरहितंतदपिदंडाहतं तन्मथितमिति एकैकं ५३ दधिभवंमंडंमस्तु दध्नः भवति मंडं मस्तु मस्यते मसीपरिणामे सिनन्नीतितुक् एकंव स्त्रनिःसृतदधिजलस्य दध्नःउपरिभागस्येत्यन्ये॥अभिनवं पयःपीयूषः नूतनप्रसूतायाः गोःक्षीरंपीयूषः पीयतेऽनेन पीङ्पाने ऊषन् पीयूषंसप्तदिवसावधि क्षीरेनयामृते इतिविश्वमेदिन्यौ एकंनवप्रसूतायाः गोःक्षीरस्य॥

अशनाया अशनस्यइच्छा॥ बुभुक्षा भोक्तुमिच्छेत्यर्थः भुजपालनाभ्यवहारयोः सन् अप्रत्ययः॥ क्षुत् क्षुध् बुभुक्षायां त्रीणि क्षुधायाः॥ ग्रासस्तु ग्रस्यते ग्रसु अदने अकर्तरिचेतिघञ्॥ कवलार्थकः कवलः पुमानित्यपिपाठः केनवलते वलतुमौ पचाद्यच् द्वे ग्रासस्य ५४ सपीतिः सहपीतिः पानं स्त्रियांक्तिन्॥ सहस्यसः स्त्री॥ तुल्यपानं तुल्यंचतत्पानंच द्वे बहुभिः संभील्यपानस्य॥ सग्धिः स्त्री सहभोजनं द्वे॥ उदन्यातु उदकस्येच्छा क्यच्॥ पिपासा पातुमिच्छा इच्छार्थेसन् अप्रत्ययः पापाने॥ तृट् ञितृष् पिपासायां संपदादिः॥ तर्षः घञ् पुंसि तर्षाभिमानृषोस्त्रियामितिविश्वः चत्वारितृषायाः॥ जग्धिस्तु भोजनं अदभक्षणे क्तिन् अदोजग्धिः ५५ जेमनं जि

अशनायाबुभुक्षाक्षुद्ग्रासस्तुकवलःपुमान् ५४ सपीतिःस्त्रीतुल्यपानंसग्धिःस्त्रीसहभोजनम्॥ उदन्यातुपिपासातृट्तर्षोजग्धिस्तुभोजनम् ५५ जेमनंलेहआहारोनिघासोन्यादइत्यपि॥ सौहित्यंतर्पणंतृप्तिःफेलाभुक्तसमुज्झितम् ५६ कामंप्रकामंपर्याप्तंनिकामेष्टंयथेप्सितम्॥

मु अदने ल्युट्॥ लेहः लिह आस्वादने घञ् लेपइतिपाठे लिपउपदेहे लिपस्तु अशनेचस्त्रियांचेतिहेमचंद्रः॥ आहारः आहरणं॥ निघासः॥ न्यादः घञपोश्चेतिघस्लादेशः समभोजनस्य॥ सौहित्यं सुहितस्यभावः ष्यञ्॥ तर्पणं तृपप्रीणने ल्युट्॥ तृप्तिः क्तिन् त्रीणितृप्तेः॥ भुक्तसमुज्झितं पूर्वंभुक्तंपश्चात्समुज्झितं फेला फेलृगतौ गुरोश्चहलइत्यप्रत्ययः द्वे भुक्तोत्सृष्टस्य ५६ कामं कमनं कमुकांतौ भावेघञ् कामंतुवादेनुमतिरेतसोः कामः स्यादिच्छाकामेष्विति हैमः॥ प्रकामं पर्याप्तं आप्लृव्याप्तौ भावेक्तः॥ निकामं इष्टं क्तेसाधुः इष्टमाशंसितेपिस्यात्पूजितेप्रेरितेत्रिषु सप्ततंतौपुमान् क्लीबेसंस्कारेक्रतुकर्मणि इतिविश्वः॥ यथेप्सितं आप्लृधातोःसन् आप्ज्ञपृधामीत् ईत्वं अभ्यासलोपः षट्यथेच्छायाः एतानिक्रियाविशेषणानि गोपेएनेशब्दाः॥ ७

एतेके गोपः गांपाति आतइतिकः गोपोगोपालकेगोष्ठाध्यक्षेपृथ्वीपनावपि ग्रामस्याधिकृतेपुंसिसारिवारव्योपधौस्त्रियां इतिविश्वः॥गोपालः गांपालयति पालरक्षणे कर्मण्य
ण् गोपालोनृपगोपेशेगोकिलेमुशलेहले॥गोसंख्यः गांसंचष्टे चक्षिङ्व्यक्तायांवाचि केमत्ययेख्यादेशः ॥गोधुक् सत्सूद्विषेतिक्विप् गोदुहइतिअकारांतः गांदोग्धि मूलवि
भुजादिः गोपगोदुहबल्लवाद्वतित्रिकांडशेषः॥आभीरः आसमंताद्भियंराति आअभिईरयतिवा॥बल्लवः वल्लुनं वल्लुसंवरणे बल्लुंवाति वा यति वागत्यादो आतइतिकः
५७ गोमहिष्यादिकं गोश्चमहिषीचगोमहिष्यौ आदीयस्यतत् आदिशब्देनखराजाविकादेर्ग्रहणं॥पादबंधनं पादेबंधनमस्य यादवंधनमितिपाठेतु गोमहिष्यादि
कधनं यदूनामिदं गवादियादवंवित्तमितिबोपालितः एकं॥गवीश्वरे गोमान् भूम्निमतुप्॥गोमी ज्योत्स्नेतिमिनिश्च गवामीश्वरः गवीश्वरः तत्रगोमान् गावः

गोपेगोपालगोसंख्यगोधुगाभीरबल्लवाः ५७ गोमहिष्यादिकंपादबंधनंद्वौगवीश्वरे॥गोमान्गोमीगोकुलंतुगोधनंस्याद्गवांव्रजे
५८ त्रिष्वाशितंगवीनंतद्गावोयत्राशिताःपुरा॥उक्षाभद्रोबलीवर्दऋषभोवृषभोवृषः ५९

विद्यंतेयस्य स गोमी बह्व्यः गावोयस्य त्रीणिनामा
नि॥गोकुलेतु गवांकुलंसमूहः गोकुलेधनेइतिव्याडिः त्रीणिगोसमूहनामानि॥गवांव्रजः गवांसमुदायः ५८ यत्र पुरागावःअशिताः भोजिताः तत्अशितंगवीनं
अषडक्षेतिखः सुम्निपातनात् त्रिषुलिंगेषु एकं पूर्वगवांचरणस्थानस्य॥उक्षा उक्षति उक्षसेचने श्वन्नितिनिपातनात्कनिः॥भद्रः भंदते भदिकल्याणे भद्रःशिवखंजरी
टेवृषभेतुन्नदंबके करिजातिविशेषेनाक्लीबंमंगलमुस्तयोः कांचनेचस्त्रियांरास्नाकृष्णाव्योमनदीषुच तिथिभेदेप्रसारिण्यांकट्फलानंतयोरपि त्रिषुश्रेष्ठेचसाधौचनपुंसिकर-
णांतरइत्युक्तत्वात्॥बलीवर्दः बरीवर्दइत्यपि ईश्वरश्चईवरो बौचनोईवरोचतोदंतानिवरीवर्दः अतिशायितंबलमस्यास्तीतिबली बलीचासोईवर्दश्चबलीवर्दः॥ऋषभः

ऋषति ऋषीगतौ॥ वृषभः वर्षति वृषुसेचने उणादयनअभच् सचकित् वृषभः श्रेष्ठवृषयोरितिविश्वः कैऋषइति वृषोधर्मेबलीवर्देसंख्यापुंराशिभदयोः श्रेष्ठेस्यादुत्तरस्थश्चवासमूषकशुक्ले वृषामूषकपर्यायेचस्त्री० ५९ अनड्वान् अनःशकटंवहति अनसिवहेः क्विबनसोडश्च॥ सौरभेयः सुरभ्याः अपत्यं ढक्॥गौः गच्छति गौः स्वर्गेचबलीवर्देरश्मौचकुलिशेपुमान् स्त्रीसौरभेयीदृग्बाणादिग्वाग्भूष्वप्सुभूम्निचनिविश्ववमेदिन्यौ नववृषभनामानि उक्षा उक्षाणौ एवं॥अन्वड्वान् अनड्वाहौ॥ उक्ष्णां वृषाणां संहतिःसमूहः औक्षकं गोत्रोक्षेतिवुञ्॥गवांसंहतिः गव्या खलगोरथात्इतित्रेतिसाधू॥गोत्रा वत्सधेन्वोः वात्सकधैनुकं वत्सानांसंहतिः वात्स

अनड्वान्सौरभेयोगौरुक्ष्णांसंहतिरौक्षकम्॥गव्यागोत्रागवांवत्सधेन्वोर्वात्सकधैनुके ६० वृषोमहान्महोक्षः स्याद्वृद्धोक्षस्तुजरद्गवः॥उत्पन्नउक्षाजातोक्षःसद्योजातस्तुतर्णकः ६१ शकृत्करिस्तुवत्सःस्याद्दम्यवत्सतरौसमौ

कं गोत्रेतिवुञ् धेनूनांसंहतिःधैनुकं अचित्तहस्तिधेनोष्ठक् एकैकं ६० महान्उक्षा महोक्षः महांश्चासौउक्षाच अचतुरेतिसाधुः एवं॥वृद्धोक्षस्तु वृद्धश्चासावुक्षाच तु उक्तसूत्रेणसाधुः॥जरद्गवः जरन्चासौगौश्च गोरतेतिटच् द्वेवृद्धवृषस्य महोक्षःस्यादुक्षतरःस्कंधिकःस्कंधवाहकः षोढन्षड्दशनोवत्सः कूटोभग्नविषाणकइति उत्पन्नउक्षाजातोक्षः अचतुरेतिसाधुः॥सद्यःजातस्तु तर्णकः तृणोति तृणभक्षणे ण्वुल् शकृत्करिस्तु शकृत्करोति॥वत्सः वदति वदवक्तायांवाचि सःप्रत्ययः वत्सः पुत्रादिवर्षयोः तर्णकेनोरसिक्लीबमितिविश्वः द्वे॥दम्यः दमितुंयोग्यः दमनार्हः दमुउपशमने अर्हार्थेपोरदुपेतियत् द्वेवत्सभावमतीत्यद्वितीयंवयस्प्राप्तस्य सगो ॥वत्सतरः अतिशायेनवत्सःइति

आर्षभ्यः ऋषभस्यप्रकृतिः ष्यः॥षंढतायोग्यः षंढतायांयोग्यः एकं॥षंढः सनोति सन्यतेवा षणुदाने षंढंपद्मादिसंघातेनक्लीस्याङ्गोपतौपुमान् इतिमेदिनी शंदइ तिपाठे शमेर्ढः बाहुलकात्एत्वादेशाभावः षंढःस्यात्पुंसिगोपतौ आकृष्णांडेवर्षपरे तृतीयाप्रकृतावपि॥गोपतिः गवांपतिः॥इट्चरः इषाचरति इषइच्छायां क्विप् श्रोणिसांडइतिरव्यातस्य ६२ स्कंधप्रदेशस्त वहः वहतियुगमनेन गोचरसंचरेतिसाधुः वहःस्याद्वृषभस्कंधेवाहेगंधवहेपिचेतिविश्वः एकं प्राकृतभाषया रवांदाइति॥सास्नातु सस्ति षसस्वप्ने सास्नारास्नावा रास्नासास्नेतिसाधुः॥गलकंबलः कंबलोनागराजेस्यात्सास्नाप्रावारयोः क्रमात् इतिविश्वः गोःकंठेलंबमा नस्यचर्मणः द्वेनामनी॥नस्तितस्तु नस्तंकृतमस्य॥नस्योतः नस्तायांउतः नासिकायांप्रोतः द्वे प्रोतनासिकस्य नाकांतवेसनटोंचलेल्याबईल॥प्रष्टवाट् प्रष्टभग्र

आर्षभ्यःषंढतायोग्यः षंडोगोपतिरिट्चरः ६२ स्कंधदेशोस्त्वस्यवहः सास्नातु गलकंबलः॥स्यान्नस्तितस्तुनस्योतःप्रष्टवाड्युगपार्श्वगः ६३ युगादीनांतुवोढारोयुग्यप्रासंग्यशाकटाः॥खनतितेनतद्वोढास्यदंहालिकसैरिकौ ६४ धूर्वहेधुर्यधौरेयधुरीणाःसधुरंधराः॥उभा वेकधुरीणैकधुरावेकधुरावहे ६५

गामिनंवहति॥युगपार्श्वगः युगस्यस्कंधकाष्ठस्यपार्श्वंगच्छति अन्येष्वपीतिडः द्वे दमनकालेकंधरोपितकाष्ठवाहस्य ६३ युगादीनांतुवोढारः युगंप्रासंगंशाकटंवावहंति युग्यः प्रासंग्यः तद्वहतिरथयुगप्रासंगं इतिसाधू॥शाकटः शकटादण् युगस्यवोढायुग्यः॥प्रसंगस्यस्कंधेधृ तकाष्ठस्यवोढाप्रासंग्यः॥शाकटः शकटस्यवोढाशाकटः॥तेनखनति हलेनखनति॥हालिकः सीरेणखनति॥सैरिकः तद्वोढा तस्यहलस्यवोढाहालिकः॥सी रस्यवोढासैरिकः हलसीराट्ठक् इतिवा ६४ धूर्वहे वहतीतिवहः धुरःवहः तस्मिन्नेतेशब्दाः धूर्यः धुरंवहति॥धौरेयः धुरोयड्ढकौ धुरंधारयति संज्ञायांइतिखच्मुम्॥ धुरीणः धुरंवहति॥सधुरंधरः धुरंधरेणसहिताः एते नामपञ्चकंधुरंधरस्य॥एकधुरावहे एकाचासौधूश्चतांआवहतीति उभौ एकधुरीणः एकधुरः एवं ६५

यः वै सर्वधुरावहः सतुसर्वधुरीणः खः सर्वधुरात्इनिखः॥माहेयी मह्याः अपत्यंस्त्री स्त्रीभ्योढक् मह्यते महपूजायां॥सौरभेयी सुरभ्याः अपत्यं ढक्॥गौः गच्छति गमेर्डोः॥उस्रा वसनिस्रीरमस्यां वसनिवासे उस्राऽर्जुन्युपवित्रयोः उस्रस्तुवृषभेप्रोक्तः किरणेचतथापुमान्॥माना मान्यते मानपूजायां तृच् मातरोगोजनन्योर्द्वे इतिरुद्रः मातागौर्यादिजननीगोब्राह्मण्यादिभूमिष्वितिविश्वः॥शृंगिणी शृंगेस्तोस्यामिति अतइनिः ६६ अर्जुनी अर्जुनवर्णयोगात् अर्जुनः ककुभेपार्थेकार्तवीर्येभि-सूरयोः मातुरेकसुतेपिस्यात्दूर्वलेपुनरन्यवत् नपुंसकंतृणेनेत्ररोगेस्यादर्जुनीगवी उषायांबाहुदानद्यां कुट्टन्यामपिचक्वचिदितिविश्वः॥अघ्न्या नहन्यते हंतिवाअ पात्रेदातारं अघ्न्यादयश्चेतिसाधुः॥रोहिणी रोहितवर्णयोगात् रोहिणीसोमवल्केभेकंथरोमामयोगवि इतिनवकंगवां॥याउत्तमागौः सा नैचिकी नीचैः चरति य

सतुसर्वधुरीणःस्याद्योवैसर्वधुरावहः॥माहेयीसौरभेयीगौरुस्रामाताचशृंगिणी ६६ अर्जुन्यघ्न्यारोहिणीस्यादुत्तमागोषुनैचिकी ॥वर्णादिभेदात्संज्ञाःस्युःशबलीधवलादयः ६७ द्विहायनीद्विवर्षागौरेकाब्दात्वेकहायनी॥चतुरब्दाचतुर्हायण्येवंत्र्यब्दात्रिहायणी ६८

द्वा निचिकर्णौशिरोदेशोइतिरभसः निचिशब्दात्स्वार्थेकन् प्रशस्तंनिचिकमस्याः ज्योत्स्नादित्वादण् नैचिकीगौरुत्तमातुनिचिकीसाप्रकीर्तिता इतिनाममाला नीचिकाणि चिकाचेतिद्विरूपकोशः वर्णादिभेदात् शबली शबला धवली धवला आदिनावर्णभेदात् कृष्णा कपिला पाटलाइत्यादि प्रमाणादिभेदात् दीर्घा खर्वा वामनी अवयवभेदात् पिंगाक्षी लंबकर्णी वक्रशृंगी ६७ द्विहायनी द्वौहायनौयस्याः दामहायेतिङीप्॥द्विवर्षा द्वेवर्षेवयःप्रमाणंयस्याः द्वे॥एकाब्दातु एकःअब्दोयस्याः एकहायनी एकः हायनोयस्याः॥द्वे॥चतुरब्दा चत्वारः अब्दाः यस्याः॥चतुर्हायणी चत्वारोहायनाःयस्याः द्वे॥त्र्यब्दा त्रयोऽब्दायस्याः॥त्रिहायनी त्रयःहायनाःयस्याः त्रि चतुर्भ्यांहायनेतिणत्वं द्वे ६८

वशा वष्टि वशकांतो पचादयच् वशीजनस्त्रीहायचोष्णायनत्वप्रसुत्वयोः वशानार्यांवंध्यगव्यांहास्तिन्यांदुहितर्यपीतिविश्वः॥ वंध्या बध्नाति बधबंधने इवांझइति॥ अवतोकातु अवगलितंतोकमपत्यंयस्याः॥ स्रवद्गर्भा स्रवद्गर्भोयस्याः द्वे सहसापतितगर्भायाः मृतवत्सास्त्रवद्गर्भाइत्यपि॥ अथसंधिनी संधाअस्त्यस्याः व्रीह्यादिभ्यश्चेतिइनिः अवश्यंसंधत्तेवा॥ वृषभेणआक्रांता मैथुनेथसंगता संधिनीवृषभाक्रांताकालदुग्धोस्त्रयोः स्त्रियाम् एकं॥ अथ गर्भोपघातिनी वेहत्स्यात् गर्भं उपहंति द्वेवयोगेसतिगर्भपातंकरोतितस्याः ६९ प्रजनेगर्भग्रहणेकाल्याप्राप्तकालाउपसर्या उपस्त्रियतेवृषेण स्वगतो एकंगर्भग्रहणयोग्यायाः॥ याबालगर्भिणी बाला

वशावंध्यावतोकातुस्रवद्गर्भाथसंधिनी॥ आक्रांतावृषभेणाथवेहद्गर्भोपघातिनी ६९ काल्योपसर्याप्रजनेप्रष्ठौहीबालगर्भिणी॥ स्यादचंडीतुसुकराबहुसूतिःपरेष्टुका ७० चिरप्रसूताबष्कयणीधेनुःस्यान्नवसूतिका॥ सुव्रतासुखसंदोह्यापीनोध्नीपीवरस्तनी ७१ द्रोणक्षीराद्रोणदुग्धाधेनुष्याबंधकेस्थिता॥

चासौगर्भिणीच साप्रष्ठौही प्रष्ठंवहति वहश्चेतिण्विः वाहइतिङीष् द्वेप्रथमगर्भधृतवत्याः॥ अचंडीतु नचंडी अचंडा॥ सुकरा सुखं करोति अत्र द्वे अकोपनायाः गरीबगाय सुशीलेत्यर्थः॥ बहुसूतिः बह्व्यःसूतिर्यस्याः॥ परेष्टुका परंइच्छति परैरिष्यतेवा इषेस्तुः द्वेबहुप्रसूतायाः ७० चिरप्रसूता चिरंप्रसूता॥ बष्कयणी बष्कते बष्कगतो बाहुल्यकादयन् बष्कयः तरुणवत्सः सोस्त्यस्याः बष्कयिणी बष्कयः एकहायनोवत्सोयस्याइतिवा द्वेबहुकालेनजातप्रसवायाः॥ नवसूतिका नवंसूतंप्रसवोयस्याः साधेनुःस्यात् धीयते धेट्पाने धेनुर्गोमात्रकेदोग्ध्याइतिहैमः द्वेनूतनप्रसूतायाः॥ सुव्रता शोभनंव्रतमस्याः॥ सुखसंदोह्या द्वे सुखेनदुग्धदात्री तस्याः॥ पीनोध्नी पीनंऊधोयस्याः॥ पीवरस्तनी पीवरौस्तनौयस्याः॥ द्रोणक्षीरा द्रोणपरिमितंक्षीरंयस्याः॥ द्रोणदुग्धा द्रोणंदोग्धि द्वेद्रोणपरिमितदुग्धदात्र्याः॥ याबंधकेस्थिता सा धेनुष्या संज्ञायांधेनुष्याइतिसाधुः॥

यामतिवर्षंप्रसूयते सा समांसमीना समायांसमायांविजायते समांसमांइतिख: एकंप्रतिवर्षंप्रसूतायाः ७२ ऊधस्क्लं बहूनीनिऊधः वहेर्धोदीर्घश्च असङ् ॥ आपीनं आप्यायतेस्म ओप्यायीवृद्धौ ॥ क्लीबं कासइति ॥ शिवककीलकौसमौ शिवकः श्यति गात्रकंडूंशेतेवात्र ॥ कीलकः किल्यते कीलबंधने हलश्चेतिघञ् स्वार्थेकन् द्वे बंधनकाष्ठस्य खुंटाइति ॥ दाम द्यति दोअवखंडने दीयतेवा देङ्‌रक्षणे मनिन् ॥ संदानं संदीयते ल्युट् द्वे बंधनरज्ज्वोः ॥ गोदोहनकालेपादबंधनरज्ज्वोः पशुरज्जुस्त्र दामनी दामेव मज्ञाद्यण् ॥ द्वे ॥ यस्यांईज्यांबहवः वृषाः बध्यंतेतस्यां दावणइति ७३ वैशाखः विशाखाप्रयोजनमस्य विशाखाषाढेत्यण् वैशाखोमासभेदेपिमंथनेचमर्कीर्तितः ॥ मंथः मथ्यतेनेन ॥ मंथानः मंथति बाहुलादानच् नाछील्येचानशवा मंथानः अकारांतः मंथति ॥ मंथाः मंथ्यतेनेन इनिः पंचमंथनदंडस्य रवीइति

समांसमीनासायैवप्रतिवर्षंप्रसूयते ७२ ऊधस्त्रक्लीबमापीनंसमौशिवककीलकौ ॥ नपुंसिदामसंदानंपशुरज्जुस्त्रदामनी ७३ वैशाखमंथमंथानमंथानोमंथदंडके ॥ कुठरोदंडविष्कंभोमंथनीगर्गरीसमे ७४ उष्ट्रेक्रमेलकमयमहांगाःकरभःशिशुः ॥

मंथाः मंथानौ मंथानः ॥ कुठरः कुठरइत्यपि कुठति कुठगतिप्रतिघाते ॥ कुठरइतिपाठे कुटकौटिल्ये ॥ दंडविष्कंभो दंडंविष्कभ्नाति स्कंभुरोधने सौत्रः द्वे मंथनदंडोयत्रस्थाप्यते तस्यस्तंभस्य प्राकृतभाषायांगुसळखांब ॥ मंथनी मथ्यतेऽस्यां ॥ गर्गरी गर्गइतिशब्दंराति गिरतिवा गृनिगरणे बाहुलकादरः द्वे मंथनपात्रस्य डेरा चरवीइति समे स्त्रीलिंगे ७४ उष्ट्रः ओषति उष्यतेवा उषदाहे ष्ट्रन् ॥ क्रमेलकः क्रमति क्रमुपादविक्षेपे अच् एलति इलगतौ एलयतिवा इलक्षेपे क्रमश्चासौएलकश्च ण्वुल् ॥ मयः मीनाति मयतेवा मीञ् हिंसायां मयगतौवा पचाद्यच् ॥ महांगः महांतिअंगानियस्य पश्चाद्वंद्वः नामचतुष्टयमुष्ट्रस्य ॥ उष्ट्रस्यशिशुः करभः किरति क्षीयतेवा कृविक्षेपे अभच् करभोमणिबंधादिकनिष्ठांतोष्ट्रतत्सुतइत्य॰ एकमुष्ट्रशिशोः ॥

दारवैः काष्ठमयैः पादबंधनैरुपेताः युक्ताः शृंखलकाः स्युः शृंखलं बंधनं येषां एकं दारुविकारशृंखलाप्रायबंधनयुक्तस्य करभस्य ७५ अजा अजति अजगतौ पचाद्यच् अजश्छागेहरेविष्णाबंबुजेवेधसिस्मरइतिहैमः॥ छागी छ्यति छायनेवा छोछेदने गन्जातेरिति ङीष् द्वेशोऌछ्रीइति॥ स्तभः स्तभ्नोति स्तंभुरोधने तुंभ इतिपाठे तोभते तुभहिंसायां शभइतिपाठे शभइतिहिंसायां॥ छागः छायते छोछेदने गन्प्रत्ययः॥ बस्तः बस्तअर्दने चुरादेरच्॥ छगलकः पंचनामानि अजस्य प्राकृतभाषयाबोकडइति॥ मेढ्रः मेहति मिहसेचने ष्ट्रन्॥ उरभ्रः उरुभ्रमति भ्रमुचलने डः पृषोदरादिः॥ उरणः॥ ऊर्णायुः ऊर्णाअस्यास्ति युस् यद्वा ऋच्छति अर्यते ऋगतौ क्युन्॥ मेषः मिषति मिषस्पर्धायां अच्॥ वृष्णिः वर्षति वृषुसेचने॥ एडकः इडति एलयतिवा इलगतिक्षेपणयोः ण्वुल् इं नामसप्तकं प्राकृतभाषया मेंढरूं अथवा एडका इतिख्याति ७६

करभाः स्युः शृंखलकादारवैःपादबंधनैः ७५ अजाछागीस्तभच्छागबस्तछगलकाअजे॥ मेढ्रोरभ्रोरणोर्णायुमेषवृष्णायएडके ७६ उष्ट्रोर भ्राजहृदेस्यादौष्ट्रकौरभ्रकाजकम्॥ चक्रीवंतस्तुबालेयारासभागर्दभाःखराः ७७

उष्ट्राणान्वपरउरभ्राणान्वपरअजानांवृंदेसमूहे औष्ट्रकं॥ औरभ्रकं॥ आजकं॥ समूहेवुञ् प्रत्येकं एकैकं॥ चक्रीवंतस्तु॥ चक्रीवान् चक्रवत् भ्रमणंचक्रमस्यास्ति आसंदीवदितिसाधुः॥ बालेयः बलयेउपहारायसंहितः छदिरुपधिबलेढञ् बलेः अपत्यंवा इतस्यानीतिढक् बालेयोगर्दभेपुंसिमृदोबलिहतेऽपिचेतिविश्वः॥ रासभः रासते रासृशब्दे अभच्॥ गर्दभः गर्दति गर्दशब्दे अभच् गर्दभः श्वेतकुमुदेगर्दभीगंधभिद्यपि रासभेगर्दभीस्त्र्यद्वजंतुरोगप्रभेदयोरितिविश्वः॥ खरः खंमुखंबिलंअतिशयितंयस्य खमुखेतिरः खरोरक्षोंतरेतीक्ष्णोदुःस्पर्शेरासभेपिचेतिहेमचंद्रः पंचगर्दभस्यनामानि गादवइति ७७

वैदेहिकः विदेहेषुभवः धूमादित्वाद्वुञ् विदेग्धिवा दिह उपचये वैनिश्चिनः देहःउपचयोयस्यांनेवा वैदेहिकोवाणिजकेशूद्रांद्रस्यासुतेपिचेतिविश्वहेमचंद्रौ॥सार्थवाहः सार्थवहतीति कर्मण्यण्॥नैगमः निगमेभवः तत्रभवइत्यण् नैगमःस्यादुपनिषद्वणिजोरितिविश्वः निगमोवणिजेपुर्यामितिविश्वः॥वाणिजः वणिक् वणिक्स्त्रियांवणिज्यायांपुमान्वाणिजकेपिचेतिविश्वः॥पण्याजीवः पण्यते पणव्यवहारे अवद्यपण्येतिनिपातः पण्यमाजीवोयस्य॥आपणिकः आपणोव्यवहारोऽस्यास्ति मत्वर्थेठन्॥क्रयविक्रयिकः क्रयविक्रयाभ्यांजीवति अपन्नामाभिक्रयविक्रयाभ्यांजीवमानस्य वाणीइति ७८ विक्रेता विक्रीणाति डुक्रीञ्द्रव्यविनिमये॥विक्रयिकः विक्रयेणजीवति क्रयविक्रयगृहणं सघातविग्रहार्थं इतिकृत्वा उभयंसाधु हे वस्त्रपात्रादिविक्रयकारिणः॥क्रायकः ण्वुलनगिदं क्रीणाति॥क्रयिकः क्रयेणजीवतिठन् हे मूल्येनवस्त्रादिग्राहकस्य॥वाणिज्यं वणिजांकर्म ब्राह्मणादित्वात्ष्यञ्॥वणिज्या दूतवणिग्भ्यांचेतियःस्वभावात्स्त्रीलिंगःस्यात्॥मूल्यं मूलेनआनाम्यं नौवयोइत्यादिनायत्॥वस्नः वसत्यत्र नप्रत्ययः वस्नंवस्त्रेधनेमूल्येभृतावितिहेमचंद्रः॥अवक्रियः अवक्रियतेनेन घप्रत्ययः इतित्रीणि ७९ नीवी नितरांइन्वति इविप्रीणने आगमशास्त्रानित्यत्वान्नुमभ् नीविरित्यपि नीवीस्याद्वसनग्रंथौनीवीमूलधनेपिचेतिहेमः॥परिपणः परिपण्यते पणव्यवहारेस्तुतौच घप्रत्ययः द्रव्यर्यप्रयुज्यते॥मूलधनं मूलंचतद्धनंच भ्रयंक्रयविक्रयादिव्यवहारेयन्मूलधनंतस्य भांडवलइतिख्या॰ नीवीस्त्रीस्यात्॥मूलधनादधिकमुत्पन्नंफलंसलाभःस्यात् लभ्यते अकर्तरिइतिघञ् फलति फलनिष्पत्तौ फलंजातीफलेसस्येहेतूत्थेव्युष्टिलाभयोरितिविश्वः फलंहेतुकृतेजातीफलेफलकसस्ययोः त्रिफलायांचकंकोलेशस्त्राग्रेव्युष्टिलाभयोरित्यकृत्वात्॥लभ्यते डुलभष्प्राप्तौ एकंनपाइतिख्या॰॥

वैदेहकःसार्थवाहोनैगमोवाणिजोवणिक्॥पण्याजीवोह्यापणिकःक्रयविक्रयिकश्चसः ७८ विक्रेतास्याद्विक्रयिकःक्रायिकक्रयिकौसमौ॥वाणिज्यंतुवणिज्यास्यान्मूल्यंवस्नोप्यवक्रियः ७९ नीवीपरिपणोमूलधनंलाभोधिकंफलम्॥

परिदानं परिवृत्यदानं क्वचित्प्रतिदानमितिपाठः॥परीवर्तः परिवर्तनं भावेघञ्॥नैमेयः स्वार्थेण्॥नियमः नि मानं निमयः नैमेयोपि मज्ञाद्यण् निमयइत्यपि चत्वा रिपरिवर्तनस्य अदलाबदल इतिख्यातस्य ८० उपनिधिः उपनिधीयते डुधाञ् उपसर्गेघोः किः॥न्यासः न्यस्यते असुक्षेपणे कर्मणिघञ् द्वेनिक्षेपस्य ठेव पुरलेलें द्रव्यइतिप्रसिद्धस्य स्मृतौत्वेषांभेदोनास्ति तस्यनिक्षेपस्यनिक्षेप्तुःअर्पणं प्रतिदानं प्रतीपदानं प्रतिदानं एकं॥ क्रये क्रयविषये यदापणेप्रसारितंवस्तु तत्क्रय्यं क्री यते ग्राहकाःगृण्हीयुरितिमत्या आपणेप्रसारितस्य एकं॥ यत्क्रेतव्यमात्रं क्रेतुंयोग्यं तन्मात्रकंयत् तत्क्रेयंस्यात् अचोयत् एकंहट्टेप्रसारणयोगस्य ८१ एवं विक्रेयं विक्री यते॥ पणितव्यं पण्यते पणव्यवहारे॥पण्यं पणेभवं त्रीणि विक्रेयक्रियाकर्मणः क्रय्यादयोवाच्यलिंगाः॥ सत्यापनं सत्यस्यकरणं॥ सत्यंकारः सत्यंकरोति कारे सत्या

**परिदानंपरीवर्तोनैमेयनियमावपि ८० पुमानुपनिधिर्न्यासः प्रतिदानंतदर्पणं॥ क्रयेप्रसारितंक्रय्यंक्रेयंक्रेतव्यमात्रके ८१ विक्रे-**
**यंपणितव्यंचपण्यंक्रय्यादयस्त्रिषु॥ क्लीबेसत्यापनंसत्यंकारः सत्याकृतिः स्त्रियां ८२ विपणोविक्रयः संख्याः संख्येयेह्यादशत्रिषु**

गदस्येतिमुम्॥ सत्याकृतिः सत्यापनासत्यकृतिरितिस्त्रीकांडेबोपालितः अयंअवश्यं मयैवक्रेतव्यमित्यादिरूपस्य सत्यस्यकरणे सईकरणें इतिख्याते॥ सत्यंकारस्कैं लोकेसत्याकृतिः सत्यादशपथइतिडाच् ८२ विपणः विपणनं॥ विक्रयः विक्रयणं द्वेविक्रयक्रियायाः॥ आदशा दशशब्दमभिव्याप्य एकाद्याअष्टादशांताः संख्या शब्दाः संख्येये त्रिलिंगाः नेच यथा एकोविप्रः एकंपात्रं एकागौः दशब्राह्मणाः दशस्त्रियः दशपत्राणि नतुविप्रस्यैक इत्यादि एवं अष्टादशपर्यंताः उदाहरणे ऊह्याः तेषुचतुष्पर्यंता वाच्यलिंगाः शेषंत्रिषुसमं ह्निशब्दादेतेषांसंख्येयेएववृत्तिर्नतुसंख्यायामितिसूचितम्॥ ॥श्रीमज्जानकीनाथायनमः॥ ॥

विंशत्याद्याः विंशतिराद्यायासांताःसर्वाःसंख्याः सदैकत्वेसदैवएकवचनांताः संख्येयसंख्ययोर्वर्तंते यथा एकोनविंशतिर्गावः विंशत्याकुलालैःकृताः शतंघटाः संतीत्यादि संख्यायांयथा पटानांविंशतिः गवांशतं ८३ संख्यार्थे विंशत्यादीनांयदासंख्यार्थस्तदा द्विवचनबहुवचनेस्तः संख्यांतरार्थेवर्तमानायाविंशत्यादि संख्यायाः द्विवचनेबहुवचनेअपिस्यातामित्यर्थः यथाद्वेविंशती तिस्रोविंशतयइति तासांविंशत्यादिनवतिमभिव्याप्यस्त्रीलिंगाः यथा विंशत्यापुरुषैःकृ तं विंशतिःफलानीति॥ पंक्तेरिति पंक्तिर्दशाक्षरंछंदोदशसंख्यावलीष्वपीतिविश्वः पंक्तेर्दशगुणोत्तरंक्रमाच्छतसहस्रादिज्ञेयं यथादशगुणापंक्तिः शतं एवमेव दशगु णितानिशतानि सहस्रं दशगुणितानिसहस्राण्ययुतमित्याद्यूह्यं यच्चाह एकदशशतसहस्रायुतलक्षप्रयुतकोटयःक्रमशः अर्बुदमब्जंखर्वनिखर्वमहापद्मशंकवस्त

विंशत्याद्याःसदैकत्वेसर्वाःसंख्येयसंख्ययोः ८३ संख्यार्थेद्विबहुत्वेस्तस्तासुचानवतेःस्त्रियः॥ पंक्तेःशतसहस्रादिक्रमाद्दशगुणोत्तरम्
८४ यौतवंद्रुवयंपाय्यमितिमानार्थकंत्रयम् ॥मानंतुलांगुलिप्रस्थैर्गुंजाःपंचाद्यमाषकः ८५ स्यात् जलधिश्चांत्यंमध्यंपरार्धमितिदशगुणोत्तराःसंज्ञाः

संख्यायाःस्थानानांव्यवहारार्थंकृताःपूर्वैरिति ८४ यौतवं यौतुःशोधनं शोधकोवा यौनेवाहुलकात्तुन् तस्येदं॥ द्रुवयं मानेवयः॥ पाय्यं इतित्रयंमानार्थकं मीय तेऽनेन मानंसमानंअर्थोयस्य माङ्माने परिमाणवाचकमित्यर्थः॥तत्मानंतुलांगुलिप्रस्थैर्भिनत्ति तुलामानंअंगुलिमानंप्रस्थमानंचेतित्रिविधमित्यर्थः एतदेवोन्मान प्रमाणपरिमाणशब्दैःक्रमेणव्यवह्रियते तदुक्तं ऊर्ध्वमानंकिलोन्मानंपरिमाणंतुसर्वतः अयामस्तुप्रमाणंस्यात्संख्याभिन्नातुसर्वतइति॥ पंचगुंजाः आद्यमाषः मंष्य तेनेन मषहिंसायां आद्यश्चासौमाषकश्च शास्त्रीयमाषकत्वात् तदेवाह पंचकृष्णलोमाषइति एकं आद्येतिविशेषणंद्विकृष्णलस्यराजतमाषस्य व्यावृत्यर्थं तस्यशा स्त्रेप्रायशोव्यवहाराभावात् ८५

तेषोडशमाषाअक्षः कर्षश्चस्यात् अश्नुते अक्ष्णोति अश्नुते अक्षःयस्यावयवं व्यवहारेबीभीतके सायके शकटे कर्षे ज्ञाने चात्मनि रावणात्मजेहेमचंद्रः कर्षति कृषवि-
लेखने कर्षीनाकर्षणेमानप्रभेदेपुंनपुंसकं अस्त्रीक्लीबपुंसोःस्यात् इतोल्काइतिरव्यातस्य॥कर्षचतुष्टयं पलंस्यात् एकं कर्षाणांचतुष्टयं पलति पलगतौ अच् पलमुन्मान
मांसयोरितिहैमः॥सुवर्णः शोभनोवर्णोयस्य सुवर्णोनास्वर्णकर्षसुवर्णाचमरवांतरे स्त्रीकृष्णागुरुणिक्लीबेकांचनेहरिचंदनइतिविश्वः रुद्रस्तु सुवर्णंस्वर्णबिल्वयोरिति
क्लीबमाह॥बिस्तः बिस्यतेस्म बिसउत्सर्गे क्तः इहेम्नः सुवर्णस्याक्षे अशीतिगुंजाभिस्तु लितेसुवर्णएवेत्यर्थः॥तस्यहेम्नःपले कुरुबिस्तइत्येकंनाम कुरुषुबिस्तः ८६
पलानांशतंतुलास्यात् तोलयति तुलउन्माने अतुलोपेतिनिपातनात्गुणाभावः तुलासादृश्यमानयोः गृहाणांदारुबंधायपीठिकायामपीष्यते शतेपलशतेभांडे इति

तेषोडशाक्षः कर्षोऽस्त्रीपलंकर्षचतुष्टयम्॥सुवर्णबिस्तौहेम्नोऽक्षेकुरुबिस्तस्तुतत्पले ८६ तुलास्त्रियांपलशतंभारःस्याद्विंशतिस्तुलाः॥आचितोदशभाराःस्युःशाकटोभारआचितः ८७ कार्षापणःकार्षिकःस्यात्

विश्वहेमचंद्रौ तुलास्त्रियां एकं॥विंशतिस्तुलाएकोभारः
स्यात् एकं भ्रियतइति भृञ्भरणे भारःस्यादीवधेविष्णोपलानांद्विसहस्रकइतिकोशांतरेउक्तत्वात् भारःसहस्रद्वितयंपलानामपिवीवधइत्यजयश्च पुरुषेणवो
ढुं पलसहस्रंवोढुंशक्यतइत्यर्थः॥दशभाराः आचितइतिस्युः आचीयतेस्म चिञ्चयने भारैर्दशभिराचितइति रत्नकोशः॥यः शाकटःशकटेनऊह्यते भारः सो
पिआचितइत्येकं आचितःशाकटोऽन्येषे पलानामयुतद्वयइतिविश्वः ८७ कार्षापणः कर्षस्यायंकार्षः कार्षस्यकार्षेणवाआपणः आपणनं पणव्यवहारादौ नित्यंपणः
परिमाणेइत्यप् कार्षापणोऽस्त्री कार्षिकेपणषोडशिकेपिच॥कार्षिकः कर्षस्यायं अध्यात्मादित्वाठ्ठञ् द्वेराजतकर्षपरिमितरूप्यकस्य रुपयाइतिरव्यातस्य॥ ६९

नाम्रिके ताम्रस्यायं तस्मिन्कार्षिके पणइति कर्षस्यायं पण्यतेनेन पणव्यवहारादौ अपृथग्निसंज्ञापूर्वकत्वाद्वृद्ध्यभावः पणोवराटमानेस्यान्मूल्येकार्षापणेगृहे क्र-
य्यशाकादिकेद्यूतव्यवहारेभृतौधने एकंताम्रकृतकार्षापणस्यपैसाइतिख्यातस्य इतितुलामानमुक्तं अंगुलिमानंचहस्तादिनृवर्गेउक्तं प्रस्थमानंत्वाह आ
ढकादयः शब्दाः परिमाणविशेषवाचकाः प्रत्येकंभिन्नाः स्युः तेचयथा आढकः आढौकते ढौकृगतौ अच् पृषोदरादिः आढकीचतुर्वर्यास्त्रीपरिमाणांतरेत्रिषु ए
कंपायलीइतिख्या०॥ द्रोणः द्रवति द्रुगतौ नप्रत्ययः द्रोणोस्त्रियामाढकेस्यादाढकादिचतुष्टये पुमान्कृपीपतौकृष्णकाकेस्त्रीनीरदंतरे स्त्रियांकाष्ठांबुवाहिन्यां
गवादीनामपीष्यतइतिविश्वः इत्येकंअदमणीइतिख्या०॥ इयमप्यस्त्रियां॥ खारी खंआराति इत्येकंदीडमणीइतिख्यातस्य॥ वाहः ऊह्यतेनेन वहप्रापणे ह

कार्षिकेताम्रिकेपणः॥ अस्त्रियामाढकद्रोणौखारीवाहोनिकुंचकः ८८ कुडवःप्रस्थइत्याद्याःपरिमाणार्थकाःपृथक्॥

लश्चेतिघञ् वाहोऽश्वमानयोः वाहइत्येकंबारामणीइति० खारइतिपुंसिवा खारिरिनि ह्रस्वांतोपिस्त्रियां॥ निकुंचकः निकुंचनि कुचकौटिल्ये ण्वुलंतं ८८ कुडवः कुंड्यते कुंड
नेवा कुडिदाहे बाहुलकात्कवः कुटपइत्यपिपाठइतिमुकुटः पावशेरइत्येकम्॥ प्रस्थः प्रस्थोस्त्रियांमानभेदेसानावत्यज्ञवस्तुनि आद्यशब्दाच्छर्पणारादीनां
ग्रहणं पलंप्रकुंचकंमुष्टिःकुडवस्तच्चतुष्टयं चत्वारःकुडवाःप्रस्थश्चतुष्प्रस्थंतथाढकं अष्टाढकोभवेद्द्रोणोद्विद्रोणःशूर्पउच्यते सार्धशूर्पोभवेत्खारीद्विशूर्पोद्रोण्युदाहृ
ता तमेवभारंजानीयाद्वाहोभारचतुष्टयमिति अन्यच्च अष्टमुष्टिभवेत्किंचित्किंचिदष्टौतुपुष्कलं पुष्कलानितुचत्वारिआढकःपरिकीर्तितः चतुराढकोभवेद्द्रोणइत्यत-

न्मानलक्षणमित्युक्तं अत्रपलादित्रयमभिन्नं तत्तद्देशभेदात्लंस्थान्यथात्वंच यथामगधदेशे द्रोणस्कन्दवार्याः खलुषोडशांशः स्यादाढकोद्रोणचतुर्थभागइत्या दि रूपकादेश्चतुरीयभागः पादइत्युच्यते एकं पद्यते पदगतौ पादोबुध्नेतुरीयांशेशैलप्रत्यंतपर्वते श्लोकपादेपिचक्री।बंधुलिंगःकिरणेपुनरीतिकोशांतरं अंशः अंश्यते अंशविभाजने घञ् अंशोविभाजनेप्रोक्तएकदेशेपिवस्तुनइतिहेमचंद्रः॥भागः भज्यते भजसेवायां कर्मणिघञ् भागोरूपार्धकेचांशेनथाभाग्येकदेशयोरितिहे मः॥वंटकः वंट्यते वटिविभाजने कर्मणिघञ् स्वार्थेकः अणिआगमभस्य वांटाइतिभाषा १९ द्रव्यं द्रुरिव द्रव्यंचभव्ये द्रव्यंभव्येधनेस्यादौजतुद्रुमविकारयोः विनयेभेषजेरीत्यामितिहेमः॥वित्तं विद्यतेस्मा विद्लृलाभे वित्तोभोगइतिसाधुः वित्तंक्लीवंधनेवाच्यलिंगेख्यातेविचारिते॥स्वापतेयं स्वपतौसाधु स्वपतेर्ढञ्॥रिक्थं रिच्य ते रिचिरविवेचने क्थन् ऋक्थं ऋच्यते ऋचशब्दे बाहुलकात्॥धनं धनति धनधान्ये पचाद्यच् धनंतुगोधनेवित्तेइतिविश्वः॥वसु वसति उष्यतेवा वसिन्गुणैः वसनिवासे

पादस्तुरीयोभागःस्यादंशभागौतुवंटके १९ द्रव्यंवित्तंस्वापतेयंरिक्थमृक्थंधनंवसु॥ हिरण्यंद्रविणंद्युम्नमर्थरैविभवाअपि २०

उप्रत्ययः इत्याद्युक्तं वसुर्मयूखवाग्निधनाधिपेषुयोक्त्रंसंस्याद्वसुहाटकेच इदंतोपंथस्थानधनेपुरत्नेवसुरसूनंतस्थान्मधुरेन्यवच्चेतिविश्वप्रकाशः॥हिरण्यं हर्यति हर्यगति कांत्योः कन्यन्प्रत्ययः हिरादेशश्च इत्याद्युक्तं हिरण्यंरेतसिद्रव्येशातकुंभवराटयोः अस्त्रयेमानभेदेस्यादकुप्येपीनपुंसकं द्रविणं द्रवति द्रूयतेवा द्रुगतौ द्रुदक्षिभ्या मिनण् द्रविणंतुद्वयोर्वित्तेकांचनेचपराक्रमइतिविश्वः॥द्युम्नं दिवंम्नाति म्ना अभ्यासे आतोनुपसर्गेइतिकः द्युम्नंवित्तेबिलेपिचेतिहेमचंद्रः॥अर्थः अर्थ्यते अर्थउप याच्ञायां अकर्तरिघञ् ऋच्छति अर्यतेवा ऋगतौ थन् अर्थोविषयार्थनयोर्धनकारणवस्तुषु अभिधेयेचशब्दानांनिवृत्तौचप्रयोजनइतिकोशांतरात्॥राः राति सुखं राय तेवा रादाने रातेर्डैः राद्वयोर्विभवेस्वर्णेइतिरुद्रः॥विभवः विभवति पचाद्यच् विभवोधननिर्वृत्त्योरितिहेमः तत्र अर्थादित्रयंपुंसि राः रायौ रायः एवमूह्यं त्रयोदशध नस्यनामानि २०

कोशः कुशयने कुशसंश्लेषणे कुष्यते कुषनिकर्षे उभाभ्यामपि घञ् कोशस्तालव्यांतोमूर्धन्यांतोवा द्वेअपिकृताकृतयोः घटिताघटितयोर्हेमरूप्ययोः ताभ्यांहेमरूप्याभ्यांयदन्यत्ताम्रादितत्कुप्यंस्यात् गुप्यते गुपूरक्षणे राजसूयेतिसाधुः एवं कुप्यंन्हस्वादि अर्थाद्धिरण्यमरूप्यंचाकुप्यं तदद्वयंकुप्यं अकुप्यंच॥आहतं रूप्यात् आहतइतियत् मुद्रितंचेत् रूप्यं रूपमाहन्यतेऽस्य रूप्यंस्यादाहतस्वर्णरजतरजतेपिचेतिविश्वः ११ गारुत्मतं गरुत्मतः जातं मुच्यतेस्मशक्तिभिः॥मरकतं मरकतंरत्ने न अन्येष्वपिड्डतिडः॥अश्मगर्भः अश्मनोगर्भः॥हरिन्मणिः हरिद्वर्णोमणिः शाकपार्थिवादिः चत्वारिपाचइतिप्रसिद्धस्यमणेः॥शोणरत्नं शोणंचतद्रत्नंच॥लोहितकः लोहितमेव कन्॥पद्मरागः पद्ममिवरागोऽस्य त्रीणिपद्मरागस्यमाणीकइतिख्यातस्य॥मौक्तिकं मुक्तैव तस्येदमित्यण्॥मुक्ता मौक्तिकशब्दोविनयादिः मुक्ता

स्यात्कोशश्चहिरण्यंचहेमरूप्येकृताकृते॥ताभ्यांयदन्यत्तत्कुप्यंरूप्यंतद्द्वयमाहतं ११ गारुत्मतंमरकतमश्मगर्भोहरिन्मणिः॥शोण
रत्नंलोहितकःपद्मरागोथमौक्तिकम् १२ मुक्ताथविद्रुमःपुंसिप्रवालंपुंनपुंसकम्॥रत्नंमणिर्द्वयोरश्मजातौमुक्तादिकेपिच १३

मौक्तिकपुंश्चल्योरितिहेमः द्वे मोतीइतिप्रसिद्धस्य॥प्रवालः प्रवलति वलप्राणने ज्वलादित्वाण्णः प्रवालोऽस्त्रीकिसलयेवीणादंडेचविद्रुमइतिविश्वः द्वेपोवळेइतिख्यातस्य॥रत्नं रमंतेऽस्मिन् रमुक्रीडायां रमेस्तंचेतिसाधुः रत्नंस्वजातिश्रेष्ठेस्यान्मणावितिहेमः॥मणिः मण्यते मणशब्दे मणिःस्त्रीपुंसयोरश्मजातौमुक्तादिकेपिचेतिविश्वः तत्रमणिःस्त्रीपुंसयोः स्त्रियांङीषंतोपिमणी द्वेअश्मजातौमरकतादौमुक्तादिकेपिवर्तते आदिग्रहणात् विद्रुमेपि कनकंकुलिशंनीलंपद्मरागंचमौक्तिकं एतानिपंचरत्नानिरत्नशास्त्रविदोविदुः सुवर्णरजतंमुक्ताराजावर्तंप्रवालकं रत्नपंचकमाख्यातंशेषंवस्तुप्रचक्षतइतिवा मुक्ताफलंहिरण्यंचवैडूर्यंपद्मरागकं पुष्परागंचगोमेदंनीलंगारुत्मतंतथा प्रवालमुक्तान्युक्तानिमहारत्नानिवैनवेतिप्रयोगदर्पणात् १३

स्वर्णं सुष्ठु अर्णोति अर्ण गतौ पचाद्यच् यद्वा शोभनः अर्णो गतिरनेन ॥ सुवर्णं शोभनः वर्णोऽस्य सुष्ठु वर्ण्यते वा वर्णवर्णने कर्मणि घञ् ॥ कनकं कनति कनी दीप्तौ कृञादिभ्यो वुन् कनकं हेम्नि पुंसि स्यात् किंशुके नागकेसरे धत्तूरे कांचनारे च कालीये चंपकेपि चेति कोशांतरम् ॥ हिरण्यं प्राग्व्युत्पादितः हिनोति हीयते वा हिगत्यादौ इति हर्यशब्दः सिध्यति ॥ हेम ॥ हाटकं हटति हट दीप्तौ हाटयति वा ण्वुल् ॥ तपनीयं तप्यतेऽनेन तप संतापे करणे अनीयर् ॥ शातकुंभं शातकुंभे पर्वते भवं तत्र इत्यण् ॥ गांगेयं गंगाया अपत्यं यं गर्भं ऋषुवे गंगा पावकाद्दीप्ततेजसं तदुल्बं पर्वते न्यस्तं हिरण्यं समपद्यत इति वायुपुराणे गांगेयः स्यात् पुमान् भीष्मे क्लीबं स्वर्णकसेरुणोरिति कोशांतरम् ॥ भर्म बिभर्ति भरति वा मनिन् ॥ कर्बुरं कर्बत्यनेन कर्व दर्पे मद्गुरादयश्चेति साधुः कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः कर्बुरा कृष्णवृंतायां शबले पुनरन्यवदिति विश्वः कर्बूरमित्यपि दीर्घमध्यं शब्दर-

स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ॥ तपनीयं शातकुंभं गांगेयं भर्म कर्बुरम् ९४ चामीकरं जातरूपं महारजतकांचने ॥ रुक्मं कार्तस्वरं जांबूनदमष्टापदोऽस्त्रियाम् ९५ अलंकारसुवर्णं यच्छृंगीकनकमित्यदः ॥

त्नावल्यां कर्बूर इत्यप्यन्यत्र कर्बूरः स्यात् पुमान् ध्वांते स्वर्णे पुनपुंसकमिति मेदिनी भर्मेत्यदंतमपि द्विरूपकोशे ९४ चामीकरं चमीकरे आकरे भवं इत्याद्यूह्यं ॥ जातरूपं जातं रूपं यस्य यद्वा प्रशस्तं जातं जातरूपं प्रशंसायां रूपम् ॥ महारजतं महच्च तद्रजतं च ॥ कांचनं कांचति कचि दीप्तौ नंद्यादिः ॥ रुक्मं रोचते रुच दीप्तौ आणादिकः रुक्मं लोहे सुवर्णे चेति हेमचंद्रः ॥ कार्तस्वरं कृतस्वरे आकरविशेषे भवं अण् प्रत्ययः इत्याद्यूह्यं ॥ जांबूनदं जंबूरसस्य नद्यां भवं अण् प्रत्ययः ॥ अष्टापदः अष्टौ धातवः पदानि स्थानान्यस्य यद्वा अष्टानां पदं अष्टनः संज्ञायामिति दीर्घः अष्टापदं पुंसि क्लीबे च इत्येकोनविंशतिः सुवर्णस्य ९५ यदलंकाररूपं सुवर्णं तत् शृंगीकनकमुच्यते शृंगीति पृथक् तत्र शृंगं प्राधान्यं यस्याः गौरादिः इत्याद्यूह्यं भूषणं कनकं शृंगीति नाममाला यन्माला भूषणं कनकं शृंगीति ॥

दुर्वर्णं दुष्टोवर्णोस्यानेनवा दुर्वर्णंस्त्रिषुसदृर्णेक्लीबमेषेयरूप्ययोः॥रजतं रजति रज्यतेवा रंजरागे पृषिरंजिभ्यांकिदित्यतच् रजतंत्रिषुशुक्लेस्यात्क्लीबंहारेचनिष्कयोः॥रू प्यं रूपयति रूप्यतेवा रूपरूपक्रियायां अचोयत्॥स्वर्जूरं स्वर्जति स्वर्जव्यथने ऊरः प्रत्ययः स्वर्जूरंरूप्यफलयोःस्वर्जूरःकीटवृक्षयोः॥श्वेतं श्वेतते श्विताववर्णे अच् श्वेतो द्वीपाद्रिभेदयोः श्वेतावराटिकाकाष्ठपाटलाशंखिनीषुच तत्रतु स्वर्जुरंह्रस्वोकारमितिरामनाथः अपिशब्दात् तारंकलधौतमित्यपि इतिपंचकंरजतस्य ९६ रीतिः रीयते रिणातिवा रीङ्क्षरणे रीगतिरेषणयोः उभाभ्यामपिक्तिन् रीतिः स्त्रियांस्यंदप्रचारयोः पित्तलेलोहकिट्टेच भ्रमणे॥आरकूटः आरंकूटयते कूटदाहे पचाद्यच्

दुर्वर्णंरजतंरूप्यंस्वर्जूरंश्वेतमित्यपि ९६ रीतिःस्त्रियामारकूटोनस्त्रियामथताम्रकम्॥शुल्बंम्लेच्छमुखंद्व्यष्टवरिष्ठोदुंबराणिच ९७

आरकूटोस्त्रियांद्रव्यंरीतौतुरीतिकोमलभिनिरभाराः रीतिःस्त्रियां रीतीत्यपि आरकूटः क्लीबपुंसोः द्वेपित्तलस्य॥ताम्रं ताम्यति तम्यतेवा तमुकांक्षायां रक्प्रत्यये कः॥शुल्बं शलति शलगतौ उल्बादयश्चेतिसाधुः यद्वा शुल्वयति शुल्व्यतेवा शुल्वमाने अच्घञ्वा शुल्बंताम्रेयज्ञकर्मण्याचारेजलसन्निधाविति हेमचंद्रः॥म्लेच्छ मुखं म्लेच्छदेशोमुखमुत्पत्तिरस्य म्लेच्छस्यमुखमिवेतिवा॥द्व्यष्टं द्वेहेमरूप्येअष्टतेस्य अशव्याप्तौ द्वष्टमपि॥वरिष्ठं अतिशयेनवरं ऊरुर्वा वरिष्ठंताम्रकेक्लीबमि तिदवर्गद्वितीयांतेरुद्रः॥उदुंबरं उंशंभुंवृणोति वृञ्वरणे पचाद्यच् औदुंबरंभवत्ताम्रेफलादौयज्ञशारिवनइत्यजयः उदुंबरस्तुदेहल्यांरसभेदेनपुंडिते नेथेवकु ष्ठभेदेपिताम्रेपिस्यान्नपुंसकम् इतिषट्ताम्रस्य ९७

लोहः लोहति लुह्यतेवा लुहगार्ध्ये लूयतेनेनवा लूञ्छेदने रुह्यति रोहतिवा रुहप्रादुर्भावे कपिलकादित्वात्पृषोदरादिर्वा लोहोस्त्रीशस्त्रकलहेजांमकेसर्वतैजसे॥ शस्त्रकं शस्यतेनेन शसुहिंसायाम् दाम्नीतिष्ट्रन्॥ तीक्ष्णं तेजयति तेज्यतेवा अनेनवा तिजनिशाने तिजेदीर्घश्चेतिसाधुः तीक्ष्णंसामुद्रलवणेविषलोहाजिमुष्कके क्लीबंयवाग्रकेपुंसितिग्मात्मत्यागिनोस्त्रिषु॥ पिंडं पिंडते पिंड्यतेवा पिडिसंघाते पिंडोबालेबलेसांद्रेगेहागारेकदेशयोः देहमात्रेनिवापेचगोलसिल्हकयोरपि ओंड्रपुष्पेचपुंसिस्यात्क्लीबमाजीवनायसोः पिंडीतुपिंडतगरेःखाबूरखर्जूरभेदयोरित्युक्तत्वात्॥ कालायसं कालंचतदयश्च समासांतः टच् कृष्णायसमितिरत्नमाला॥ अयः एति अयतेवा असुन्॥ अश्मसारः अश्मनःसारः अश्मसारंचशस्त्रकमित्यमरमाला समलोहस्य॥ मंडूरं मंडने मडिभूषायां मंडूरंटवर्गमध्यं॥ सिंहाणं शिघ्यते

लोहोस्त्रीशस्त्रकंतीक्ष्णंपिंडंकालायसायसी॥ अश्मसारोथमंडूरंसिंहाणमपितन्मले ९८ सर्वंस्यात्तैजसंलोहंविकारस्त्वयसःकुशी॥

शिघिआघ्राणे सिंमाणयतिवा पृषोदरादिः सिंहानमितिपाठेतु सिंहवद्दनिति अनप्राणने सिंहमानयतिवा सिंघाणमित्यपि हेलोहमलस्यलोहकीटइतिख्यातस्य ९८ सर्वमपितैजसं स्वर्णरजतादिकं लोहमित्युच्यते प्रज्ञाद्यणिलौहमित्यपि तेजसोविकारः यद्वा तेजोस्त्यस्य यद्वा सर्वं स्वर्णादितैजसंलोहंचस्यात् एकं तदेवाह सुवर्णरजतंताम्ररीतिः कांस्यंतथात्रपु सीसंकालायसंचैवमष्टौलोहानिचक्षतइति॥ अयस्कविशेषाल्लोहसंज्ञंस्यात्॥ अयसः विकारः फालाख्यः कुशीस्यात् एकं कुंभ्रमिंश्यति शोनसूकरणे कप्रत्ययः कुशीफाले पिवंदायामितिविश्वः कुशीफालेकुशोदर्भेकुशवल्यांकुशंजले कुशोरामसुतेद्वीपेपापिष्ठेयोक्त्रमत्तयोरित्युक्तः कुशीस्त्रियां॥

क्षारः क्षरति क्षरसंचलने ज्वलदित्वाण्णः क्षारः काचेरसेगुडे भस्मनिधूर्तेलवणेइतिहेमचंद्रश्च ॥ काचः काचते कचबंधनेदीप्तौच काचः शिक्यमणौनेत्ररोगभेदेमृद्भेदेइति विश्वः हैं कांचस्य कांच बांगडखारइति ॥ चपलः चोपति चुपमंदायांगतौ औणादिः इत्याद्युह्यं ॥ रसः रस्यते रसआस्वादने घञ् रसयतिधान्तूक्ता एयंतादच् रसः स्वादेजलेवीर्येशृंगारादौविषेद्रवे बोलरागेगृहेधातौतिक्तादौपारदेपिच रसातुरसनापाठासल्लकीक्षितिकुंगुषु ॥ सूतः सूयतेस्म षूप्रसवेक्तः सूतस्तुसारथौतक्ष्णिक्षत्रियाद्ब्राह्मणीसुते बंदिपाठकयोःपुंसिप्रसूतेप्रेरितेत्रिष्विति विश्वः ॥ पारदः पारंददाति डुदाञ्दाने कः अन्वयः पारतइतिपाठेतु पारंतनोति तनुविस्तारे डः रसेंद्रः पारदः प्रोक्तः पारतोपिनिगद्यतइतितारपालः पारतस्तुमनाक्पांडुः सूतस्तुरहितोमलात् पारदस्तुमनाकृशानः सर्वतुल्यगुणाः स्मृताइतिशब्दार्णवः चत्वारिपारदस्य पाराइति ९९ यन्माहिषंशृंगंतद्गव

क्षारःकाचोऽथचपलोरसःसूतश्चपारदे ९९ गवलंमाहिषंशृंगमभ्रकंगिरिजामले ॥ स्त्रोतोंजनंतुसौवीरंकापोतांजनयामुने १००

लमित्येकं गवतं गवः गुङशब्दे तलानि परदोहिप्रायेणगवलेनिधाप्यतेनेनतदभिधानं अभ्रकं अभ्राति पचाद्यच् अभ्रयतेवा घञ् अभ्रगतौ अभ्रस्यप्रतिकृतिर्वा अभ्रएवकन् ॥ गिरिजामलं गिरौजातं जनीप्रादुर्भावे अमति अमगतौ कलच् तच्चतत् हे अभ्रकइतिख्यातस्य गिरिजंअमलंइतिकश्चित् तन्मतेत्रीणि गिरिजंगिरिजाबीजममलंगबलध्वजमितिवाचस्पतिः ॥ स्रोतोंजनं अंज्यतेनयनमनेन अंजूव्यक्त्यादौ ल्युट् अंजनंस्त्रोतोजमंजनं यमुनास्त्रोतसोजातत्वात् शाकपार्थिवादिः ॥ सौवीरं सुवीरदेशेभवं सौवीरंकोजिकेस्त्रोतोंजनेचबदरीफले नातुनीचैर्नीतिविश्वः ॥ कपोतांजनं कपोतस्येदं कपोतवर्णत्वात् कपोतंचतदंजनंच ॥ यामुनं यमुनायांभवं यद्वा यमुनायाइदं तद्धु छायामलत्वात् यमुनास्त्रोतसोजातमंजनंस्त्रोतोंजनं धन्वंतरिस्तु अंजनमेचकंकृष्णसौवीरंस्यात्सुवीरजं कपोतकंयामुनंचस्त्रोतोंजनमुदाहृतमिति चत्वारिसौवीरांजनस्य सुरमाइतिख्यातस्य १००

तुत्थांजनं तुत्थयति तुथ्यनेवा तुत्थआवरणे अचूधञ्वा तुत्थंचतदंजनंच ॥ शिखिग्रीवं शिखिनोग्रीवा शिखिग्रीवाअस्यास्ति तद्वर्णत्वात् ॥ वितुन्नकं वितुद्यतेस्म तुदव्यथने क्तेन्नः ॥ मयूरकं मयूरस्यप्रतिकृतिः इवार्थेकन् मयूरंकायतिवा माहश्यात् कैशब्दे ॥ कर्परी कल्पते कृपूसामर्थ्ये बाहुलकात्साधुः पंचमोरभू तइतिख्यातस्य ॥ दार्विका दारुहरिद्रा तस्याः विकारः दार्वी ततः कन् ॥ काथोद्भवं अजापयसिआवर्तितं तुत्थंरसांजनादिसंज्ञंस्यात् दार्विकेत्यपि तुत्थंस्यादमृतासंगंकर्परीतुन्नमित्यपीतिरभसः ॥ रसांजनं रसजंअंजनं शाकपार्थिवादिवत् १०१ रसगर्भं रसोगर्भोऽस्य ॥ तार्क्ष्यशैलं तार्क्ष्यशैलेभवमभेदोपचारादितिमुकुटः ॥ गंधाश्मा गंधयुक्तोश्मा ॥ गंधकः गंधोस्यास्ति गंधिकइतिपाठेतु शोभनोगंधोऽस्य मत्वर्थेठन् आमोदलेशयोर्गंधः ससगंधिकइतिरभसः सौगंधिकइत्यपि त्रीणिगंधस्य ॥ चक्षुष्या चक्षुषेहिता शरीराव

तुत्थांजनंशिखिग्रीवंवितुन्नकमयूरके ॥ कर्परीदार्विकाक्वाथोद्भवंतुत्थंरसांजनं १०१ रसगर्भंतार्क्ष्यशैलंगंधाश्मनितुगंधकः ॥ सौगंधिकश्चचक्षुष्याकुलाल्यौतुकुलत्थिका १०२ रीतिपुष्पंपुष्पकेतुपुष्पकंकुसुमांजनं ॥

यवाद्यत्वात् चक्षुष्याकुंभकारीचकुलत्थिकेतिरत्नकोशः चक्षुष्यः केतकेपुंडरीकसंज्ञकपादयोः कुलत्थिकाक्षभगयोः स्त्रियामाक्षिहितेन्यवदितिकोशांतराच्च ॥ कुलाली कुलमलति अलभूषणादौ कर्मण्यण् ॥ कुलत्थिका कुलेतिष्ठति कुलत्थप्रतिकृतिरितिवा अयंतुत्थविशेषस्यनिकासरमाइतिख्यातस्य १०२ रीतिपुष्पं रीतेः पित्तलस्यपुष्पमिव ॥ पुष्पकेतु पुष्पस्यकेतुरिव नाशकत्वात् उदंतंनपुंसके पुष्पकेतुकुसुमांजनमितिरुद्रः ॥ पुष्पकं पुष्पस्यप्रतिकृतिः इवेतिकन् पौष्पकमित्यपि ॥ कुसुमांजनं कुसुममिवकुसुमनाशकंवाअंजनं चत्वारिध्मायमानपित्तलादुत्पन्नस्य जस्ताचेंफूलइतिख्यातस्य ॥

मेषकंबलः मेषलोमकृतः कंबलः शाकपार्थिवादिः॥ऊर्णायुः ऊर्णास्यास्ति ऊर्णायायुस् ऊर्णायुर्नाक्षणेभंगेमेषकंबलमेषयोरितिविश्वः ऊर्णायुरुदंतः पुंसि द्वे मेषकंबलस्य॥शशोर्णं शशस्योर्णा शशोर्णकारणकारमितिचंद्रगोमिलिंगानुशासनात्क्लीबत्वं॥शशलोम शशस्यलोम द्वे शशलोम्नः॥मधु मन्यते मनज्ञाने फलिपाटलिउणादिसूत्रेणसाधुः मधुपुष्परसेक्षौद्रेमद्येनानुमधौद्रुमे वसंतेदैत्यभिद्देभेस्याज्जीवंत्यांतुयोषितीतिविश्वमेदिन्यौ॥क्षौद्रं क्षुद्राभिर्मक्षिकाभिः कृतं अण्प्रत्ययः॥माक्षिकं मक्षिकाभिः कृतं क्षौद्रंतुमधुनीरयोरितिहेमचंद्रः आदिनाभ्रामरपौत्तिकादिग्रहणं॥मधूच्छिष्टं मधुनाउच्छिष्यते॥सिक्थकं सिंचति सिंच्यतेवा सिचक्षरणे थक्स्वार्थेकः द्वे मेणइतिख्या॰ १०७ मनः शिला मनः शब्दवाच्याशिला मनः शिलइतिद्विरूपकोशः॥मनोगुप्ता मनसागुप्ता॥मनोह्वाना मनशब्दे

मेषकंबलऊर्णायुःशशोर्णंशशलोमनि॥मधुक्षौद्रंमाक्षिकादिमधूच्छिष्टंतुसिक्थकम्॥१०७ मनःशिलामनोगुप्तामनोह्वानागजिह्विका॥नेपालीकुनटीगोलायवक्षारोयवाग्रजः १०८ पाक्यःस्यात्स्वर्जिकाक्षारःकापोतःसुखवर्चकः॥

नह्यते कथ्यते ह्वेञ्शब्दे आतइतिअङ्॥नागजिह्विका नागानांजिह्वेव चत्वारिमनःशिलायाः॥नेपाली नेपालेभवा भवार्थेण् नेपालीमनःशिलास्यात्स्त्रवहानवमाल्ययोरितिविश्वः॥कुनटी कौनटति नटअवस्यंदने इगुपधात्गौरादिः यद्वा कुत्सितानटीव॥गोला गांदीप्तिंलाति कप्रत्ययः गुडयतेवा गुडवेष्टने डलयोरैक्यं गोलागोदावरीसख्योःकुनटीदुर्गयोःस्त्रियां पात्रांजनेमंडनेवालिंजरेबालस्येलने द्वयोर्लस्त्र्यांपुमान्स्पंकपयुक्तेभिधेयवत् श्रीणिनेपालदेशोद्भवायांमनःशिलायां संबेकार्थाइत्येके॥यवक्षारः यवानांक्षारः॥यवाग्रजः यवाग्राज्जायतेस्य १०८ पाक्यः पाके साधुः त्रीणिजवखारइतिख्या॰॥स्वर्जिकाक्षारः स्वर्जिकारसजःक्षारः शाकपार्थिवादिः स्वर्जिकांदग्ध्वाक्षार्यतइतिस्वर्जिकाक्षारः स्वर्जिकाक्षारइतिरामनाथः॥कापोतः कपोतवर्णोस्यास्ति॥सुखवर्चकः सुखंवर्चयति वर्चदीप्तौ क्वुन्॥

सौवर्चलं सुवर्चलायाइदं तस्येदमित्यण् अथसौवर्चलंसर्जक्षारेचलवणांतरइत्य० ॥ रुचकं रोचतेऽनेन रुचदीप्तावभिप्रीतौच रुचकोबीजपूरेऽस्त्रीनिष्केदंतक पोतयोः नद्वयोःस्वर्जिकाक्षारेपुंश्चाभरणमाल्ययोः सौवर्चलेपिमंगल्यद्रव्येपिकटकेपिचेतिकोशांतरं हेक्षारभेदस्य संचलखारइतिख्या० प्रागुक्तमपिक्षार प्रसंगात्पुनरुक्तं पंचापिसर्जिकाक्षारस्येतिरुभूत्यादयः ॥ त्वक्क्षीरी त्वचोवंशात्क्षीरमस्याः ॥ वंशरोचना रोचते नंद्यादिः वंशस्यरोचना वंशलोचनेतिहेमचं द्रः त्वक्क्षीरीवंशजाशुभ्रावंशक्षीरीतुवैष्णवीतिशाश्वतः हेवेणुजन्यौषधिविशेषस्यवंशलोचनइतिख्या० १०९ शिग्रुजं शिग्रोर्जायतेस्म डप्रत्ययः ॥ श्वेत मरिचं श्वेतंमरीचमिव हेसौभांजनबीजस्य शेवग्याचेंबीजइति ॥ ऐक्षवंमूलंमोरटंस्यात् मुरसंवेष्टने शाकादिभ्योटन् इक्षोरिदं एकं ॥ ग्रंथिकं ग्रंथिरेव स्वार्थेकः

सौवर्चलंस्याद्रुचकंत्वक्क्षीरीवंशरोचना १०९ शिग्रुजंश्वेतमरिचंमोरटंमूलमैक्षवम् ॥ ग्रंथि कंपिप्पलीमूलंचटिकाशिरइत्यपि ११० गोलोमीभूतकेशोनापत्रांगंरक्तचंदनम् ॥

ग्रंथिकंपिप्पलीमूलेगुग्गुलुग्रंथिपर्णयोः करीरेपुंसिदेवज्ञेसहदेवाख्यपाडवइतिविश्वः ॥ पिप्पलीमूलं पिप्पल्याःमूलं ॥ चटिकाशिरः चटिकायाः शिरइव चटकाशिरइतिहेमचंद्रः व्यस्तमपि शिरोनापिप्पलीमूलइतिमेदिनी अयंपिप्पलीमूलस्य पिंपळीमूळइतिख्या० ११० गोलोमी गोरिवलोमान्यस्याः गोलो मीश्वेतदूर्वायांस्याद्वचाभूतकेशयोरितिविश्वः ॥ भूतकेशः भूतानांकेशइव हेजटामांसीइतिप्रसिद्धायाः ॥ पत्रांगं पत्राण्यंगेऽस्य पत्रांगंनद्वयोर्भूर्जेपद्मकेरक्त चंदनइतिविश्वः ॥ रक्तचंदनं रक्तंचंदनमिव रक्तसारत्वात् हेरक्तचंदनतुल्यस्य रक्त सारद्रव्यस्य कृष्णाशिंसवपतंगइतिचख्यातस्य ॥ ७२

त्रिकटु त्रयाणांकटूनांसमाहारः सनपुंसकं॥ त्र्यूषणं ऊषति ऊषदाहे इगुपधेतिकेप्रामेकृत्यल्युटइतिल्युट् पात्राद्यंतरयोनस्त्रीत्वाभावेसनपुंसकमितिसाधुः त्रया
णांऊषणानांसमाहारस्त्र्यूषणमितिद्विरूपकोशः॥ व्योषं विशेषेणओषति उषदाहे पचाद्यच् त्रीणिशंठपिप्पलीमरीचानांसमाहारस्य॥ त्रिफला त्रयाणांफलानां
समाहारः अजादित्वाट्टाप् तृफलाइत्यपि नत्र तृफति तृफतृप्तौ त्रिफलातृफलार्चेतित्रिकांडशेषः॥ फलत्रिकं फलानांत्रिकं हरीतक्यामलकबिभीतकफलानांस
माहारस्य ११॥ इतिवैश्यवर्गः शूद्रः शोचति शुचशोके शुचेर्दश्चेतिरक् दीर्घश्चेतिसाधुः॥ अवरवर्णः अवरोऽधमोवर्णोऽस्य अवरश्चासौवर्णश्चेति
वा॥ वृषलः वृष्यते वर्षतिवा वृषुसेचने वृषंधर्मंलुनातिवा लूञ्छेदने अन्येभ्योपीतिडः वृषलातिवा॥ जघन्यजः जघन्यात्पादाज्जातः जनीप्रादुर्भावे चत्वारिशूद्र

त्रिकटुत्र्यूषणंव्योषंत्रिफलातुफलत्रिकम् ११॥ इतिवैश्यवर्गः शूद्राश्चावरवर्णाश्चवृषलाश्चजघन्यजाः॥ आचांडालात्तुसंकीर्णा
अंबष्ठकरणादयः १ शूद्राविशोस्तुकरणोंऽबष्ठोवैश्याद्विजन्मनोः॥

स्य॥ चंडालो ब्राह्मण्यांशूद्राज्जातः तमभिव्याप्य वक्ष्यमाणा अंबष्ठकरणादयः अं
बष्ठश्चकरणश्चांबष्ठकरणौ आदीयेषांते आदिशब्दात्उग्रादयः संकीर्णाः प्रतिलोमानुलोमजत्वान्मिश्राः संकीर्यंतेस्म कॄविक्षेपे एकं १ शूद्राविशोः शूद्राचविट्चत
योः सुतइतिवक्ष्यमाणेनान्वयः करणइत्येकं नत्रेत्थं किरति कीर्यतेवा कॄबहुलमन्यत्रापीतियुच् सतुलेखनवृत्तिःस्यात् करणंहेतुकर्मणोः बालवाद्रोहंसलेपेनृत्यगीत
प्रभेदयोः क्रियाभेदेंद्रियक्षेत्रकारसंवेशनेषुच कायस्थेसाधनेक्लीबंपुंसिशूद्राविशोःसुतेइतिविश्वः॥ वैश्यायांब्राह्मणाज्जातः सुतोंऽबष्ठः वैश्याचद्विजन्माचत
योःसुतःअंबष्ठः अंबतिष्ठति अंबष्ठोदेशभेदेपिविप्राद्वैश्यासुतेपिच अंबष्ठाप्यम्ललोण्यांस्यात्पाठायूथिकयोरपीतिविश्वः सतुचिकित्सावृत्तिः॥ ७

शूद्राक्षत्रिययोः शूद्राच क्षत्रियश्च तयोः सुतः उग्रः उच्यते उच्चसमवाये सतु शस्त्रवृत्तिः उग्रः शूद्रासुतेक्षत्रादुद्रे पुंसि त्रिषूत्कटे ॥ क्षत्रियाविशोः क्षत्रिया विट् च तयोः सुतः मागधः मगध्यति मगधदेशे भवो मागधो मगधोद्भूते शकुजीरकबंदिनोः वैश्यतः क्षत्रियापुत्रे मागधी स्यात्तु पिप्पली यूथी भाषाविशेषश्चेति हेमचंद्रः सतु राजादिस्तुतिपाठवृत्तिः एकैकं २ अर्याक्षत्रिययोः अर्या च क्षत्रियश्च तयोः सुतः माहिष्यः महिष्यां साधुः तत्र साधुरिति यत् अविमह्योष्टिषञ्च स्वार्थे ष्यञ् यद्वा मह्यते महति वा महपूजायां अस्य ज्योतिषं शाकुनं शास्त्रं च स्वरशास्त्रं च जीविका ॥ अर्या वैश्या अर्या शूद्रयोः अर्या च शूद्रश्च तयोः सुतः क्षत्ता क्षदति क्षदनेवा क्षदसंवृतौ तस्य वृत्तिः पापर्द्धिकादिः क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ भुजिष्यात नयोपि स्यान्नियुक्ता वेधसोः पुमान् ॥ ब्राह्मण्यां क्षत्रियाज्जातः सूत इत्युच्यते सूयते स्म सू

शूद्राक्षत्रिययोरुग्रो मागधः क्षत्रियाविशोः २ माहिष्योऽर्याक्षत्रिययोः क्षत्तार्याशूद्रयोः सुतः ॥ ब्राह्मण्यां क्षत्रियात्सूतस्तस्यां वैदेहको विशः ३ रथकारस्तु माहिष्यात्करण्यां यस्य संभवः ॥ स्याच्चंडालस्तु जनितो ब्राह्मण्यां वृषलेन यः ४

ङ् प्रसवे क्तः तस्य गजबंधनमश्वानां वाहनं कर्म सारथ्येत्यादिर्जीविका सूतः पारदसारथ्योरित्युक्तत्वात् ॥ तस्यां ब्राह्मण्यां वैश्याज्जातो वैदेहकः विदेहेषु भवः विदेहस्यापत्यं वा स्वार्थे कः वैदेहिको वाणिजके शूद्राद्वैश्यसुतेपि च तिविश्वः चतुःषष्टिकलाकर्मशैल्यं तदुपजीविका पण्यांगनानां राज्ञां च कुर्यात्संगं तदिच्छया उपजीव्यं तु तास्ववेति एकैकं ३ करण्यां शूद्राविशोः सुतायां माहिष्याद्वैश्याक्षत्रिययोः जाताज्जातो रथकारः स्यात् रथं करोति रथकारस्तु माहिष्यात्करणीजे च तक्षणि अस्य वर्तनं तु रथकर्मेधनादिभिः ॥ ब्राह्मण्यां वृषलेन शूद्रेण यउत्पादितः स चंडालः स्यात् चांडाल इत्यपि चंडति चडि कोपे मृतचैलैर्निद्यमांसैः स्मशानेन स्य जीवनमित्येकैकं ४

कारुः करोति कारुस्तु कारके शिल्पोविश्वकर्मणि शिल्पिनीतिहेमचंद्रः॥ शिल्पी शिल्पमस्यास्ति शिल्पंतुवाच्यवत्कारौस्त्रियांकोलदलौषधौ तक्षाचतंत्रवायश्चना पितोरजकस्तथा पंचमश्चर्मकारश्चकारवः शिल्पिनोमताः इतिचित्रकादेः॥ तैः सहजातिभिः संहतैः श्रेणिः श्रयति श्रीयतेवा श्रिञ्सेवायां श्रेणिः स्त्रीपुंसयोः पं क्तौसमानशिल्पिसंहतौ द्वयोः स्त्रियांपुंसिच एकंसजातीयशिल्पिसंघस्य॥ कुलकः कौलति कुलसंस्त्याने कुलकंतुपटोलेस्यात्संबद्धश्लोकसंहतौ पुंसिवल्मीककाकेंदुकुलश्रेष्ठेषुकथ्यते कुलिकइतिपाठेतु कुलमधीनत्वेनास्यास्ति कुलिकोनागभेदेस्याद्दुभेदेकुलसत्तमइतिमेदिनी॥ कुलश्रेष्ठी कुलश्रेष्ठमस्त्यस्य द्वेका रुसंघेमुख्यस्य शिल्पिभेदानाह मालाकारः मालांकरोति मालास्यास्ति यद्वा मालाशिल्पमस्य मालिकास्सम्लापुत्रीग्रीवालंकरणेपिच पुष्पमाल्येनदीभेदेपक्षि-

कारुः शिल्पीसंहतैस्तैर्द्वयोः श्रेणिः सजातिभिः॥ कुलकः स्यात्कुलश्रेष्ठीमालाकारस्तुमालिकः ५ कुंभकारः कुलालः स्यात्पलगंडस्तुलेपकः॥ तं तुवायकुविंदः स्यात्तुन्नवायस्तुसौचिकः ६

मात्रेतुमालिकः द्वेमाळीइति० ५ कुंभकारः कुंभंकरोति कुंभकारीकुलस्त्र्यांचपुंसिस्याद्घटकारकइतिविश्वः कुंभू मिंलालयति लडविलासे डलयोरैक्यं कुलंमलतीवा कुलमलतिवा घूकेकुलालः ककुभेकुंभकारेजनांतरे द्वेकुंभारइति॥ पलगंडः पलंमांसंतत्तुल्येनमृदादिना गंडतिवदनैकदेशमिवकरोति गडिवदनैकदेशे॥ लेपकः लिंपति लिपउपदेहे द्वेसुधादिलेपकारस्यगृहादौ॥ तंतुवायः तंतून्वयति वेञ्तंतुसंताने तंत्रवाय पाठेतु तंतवोवितन्यतेयस्मिन्तत्तंत्रं तद्वयति॥ कुविंदः कुंभुवंकुत्सितंवाविंदति विद्लृलाभे कुपिंदइत्यपि कुपक्रोधे द्वेपटानांनिर्मातरि कोष्टीइतिख्याते॥ तु न्नवायः तुन्नंछिन्नंवयति वेञ् ॥ सौचिकः सूच्यावानंशिल्पमस्यसौचिकः शिल्प मितिठक् द्वेकंचुक्यादेर्निर्मातरि शिंपीइतिख्याते रफूवालाइत्यपि ६

रंगाजीवः रंगेणाजीवति जीवप्राणधारणे रंगः श्वेतपीतरक्तादिकः आजीवोऽस्येतिवा ॥ चित्रकरः चित्रंकरोति दिवाविभेतिटः हेचितारीइतिख्यातस्य ॥ शस्त्रमार्जः शस्त्रंमार्ष्टीति मृजूशुद्धौ ॥ असिधावकः असिंधावति धावुगतिशुद्ध्योः कर्मण्यण् कन् हेसिकलकरइतिख्यातस्य ॥ पादूकृत् पद्यतेऽनया पदगतौ ऊःसच्णित् पादूं पादत्राणंकरोति तांतः ॥ चर्मकरोति चर्मकारः कर्मण्यण् ॥ व्योकारः व्योकरोति व्योइत्यव्ययं लोहबीजवाचीतिश्रीभोजराजः ॥ लोहकारः लोहंकरोति हेलोहारइतिख्यातस्य ७ नाडिंधमः नाडींवंशनलींधमति ध्माशब्दाग्निसंयोगयोः नाडीमुष्ट्योश्चेतिखच् खित्यनव्ययस्येतिन्हस्वः मुम् ॥ स्वर्णकारः स्वर्णंकरोति ॥ कलादः कलामादत्ते मूलविभुजादिः ॥ रुक्मकारकः रुक्मंकरोति चत्वारिस्वर्णकारस्यसोनारइतिख्या० ॥ शांखिकः शंखः शिल्पमस्य ॥ कांबविकः कंबोर्विकारोस्यास्तीति तस्यवि

रंगाजीवश्चित्रकरः शस्त्रमार्जोसिधावकः ॥ पादूकृच्च र्मकारः स्याद्व्योकारोलोहकारकः ७ नाडिंधमःस्वर्णकारः कलादोरुक्मकारकः स्याच्छांखिकःकांबविकः शौल्विकस्ताम्रकुट्टकः ८ तक्षातुवर्धकिस्त्वष्टारथकारस्तुकाष्ठतट् ॥ ग्रामाधीनोग्रामतक्षःकौटतक्षोनधीनकः ९

कारइत्यण् ततः शिल्पमितिठक् हे कासारइतिख्या० ॥ शौल्विकः शुल्वंघट्टनंशिल्पमस्य ॥ ताम्रकुट्टकः ताम्रंकुट्टयति कुट्टछेदने हेतांबटइतिख्यातस्य ८ तक्षा तक्ष्णोति तक्षूतनूकरणे कनिन् ॥ वर्धकिः वर्धति वर्धछेदने वर्द्धकर्षति कर्षहिंसायां बाहुलकाड्डिः ॥ त्वष्टा त्वक्षति त्वक्षूतनूकरणे तृच्प्रत्ययः ॥ त्वष्टापुमान्देवशिल्पि तक्ष्णोरादित्यभिदापि ॥ रथकारः रथंकरोति अण् ॥ काष्ठतट् काष्ठंतक्षाति पंचवर्धकेः सुतारइ० ॥ ग्रामाधीनः ग्रामेऽधीनः ॥ ग्रामतक्षः ग्रामस्यतक्षा ग्रामकौटाभ्यांचतक्ष्णइतिटच् इतिहेगावचासुतारइति० ॥ अनधीनकः नाधीनः स्वार्थेकः ॥ स्वाधीनोयस्तक्षासकौटतक्षः स्यात् कुट्यांभवः कौटश्चासौतक्षाच एकंस्वतंत्रसुतारइत्यस्य ९

क्षुरी क्षुरोऽस्यास्ति॥ मुंडी मुंडं करोति॥ दिवाकीर्तिः दिवा कीर्तिरस्य दिवाकीर्तिस्तु पुंसि स्यान्नापितांतावसाययोरिति विश्वः॥ नापितः नापोसंजातोस्य न आपि यति स्नवा पिगतो॥ अंतावसायी नखानामंतमवसातुंशीलमस्य अवपूर्वात्षोंतकर्मणि इन्यनः णिनौ युगागमः पंच नापितस्य नाहावीड् इति ख्या॰॥ निर्णेजकः निर्णेनेक्ति निजिर् शौद्धौ॥ रजकः रजति रंजरागे द्वे वस्त्राणां धावकस्य परीट् इति ख्या॰॥ शौंडिकः शुंडा सुरापण्यमस्य तदस्य पण्यं इति ठक्॥ मंडहारकः मंडं सुराग्रं संहरति द्वे शौंडिकस्य मद्योपजीविनः कलाल इति ख्यात॰ १० जाबालः जवमत्ति आलानि वा अ ल भूषणादौ ला आदाने॥ अजाजीवः अजा-आजीवो जीविकास्य द्वे अजापालस्य मेंढपाळ धनगर इति ख्या॰॥ देवाजीवः देवैराजीवितुं शीलमस्य इत्यादि सूत्र्यं देवाजीवीत्यपि॥ देवलः देवान् जीविकार्थं लाति देवं लक्षणया तत्स्वं लाति वा द्वे देवोपजीविनः गुरव इति॥ माया विस्मं मानियस्यां मिमीते वा मामाने माङ् माने वा मायास्याच्छांबरीबुध्योर्मायः पीतांबरे स्मर इत्य॰॥ शांबरी शंबराख्य दैत्यस्येयं द्वे इंद्रजालादि मायायाः गारुड इति ख्याता या॥ मायाकारः मायां करोति॥ प्रातिहारिकः प्रतिहारो व्याजः प्रयोजनमस्य प्रयोजनमिति ठक् द्वे इंद्रजालिकस्य ११ शैलाली शिलालिना प्रोक्तं नटसूत्रमधीयते॥ शैलूषः शिलूषस्य ऋषेरपत्यं अण् नटे बिल्वे च शैलूष इति तालव्यादि मूर्धन्यांतेर प्रसः॥ जायाजीवः जायया जीवंति जीव प्राणधारणे कृशाश्वी कृशाश्वेन प्रोक्तं नटसूत्रमधीयते कर्मंद कृशाश्वादिनिः॥

क्षुरी मुंडी दिवाकीर्तिनापितांतावसायिनः॥ निर्णेजकः स्याद्रजकः शौंडिको मंडहारकः १० जाबालः स्यादजाजीवो देवाजीवस्तु देवलः॥ स्यान्माया शांबरी मायाकारस्तु प्रातिहारिकः ११ शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः॥

भरतः भरतस्यमुनेः शिष्यः संज्ञापूर्वकत्वान्नवृद्धिः भारतइत्यपि रंगावतारीशैलूषोनटोभरतआरताविति वाचस्पतिः॥ नटः नटति घट्नटेषुनटवाइतिख्यातेषु॥ चारणः चारयतिकीर्तिं चरणतो॥ कुशीलवः कुत्सितंशीलमस्त्यस्य कुशीलंवातिवा हेकथकानांनटविशेषाणां १२ मार्दंगिकाः मृदंगः तल्लक्षणयातद्वादनंशीलमस्तियेषां॥ मौरजिकाः मुरजःशिल्पंयेषां हेमृदंगवादनकुशलानां मृदंगापरवाजोइतिख्या०॥ पाणिवादाः पाणिंवादयंति॥ पाणिघाः पाणिंघ्नंति हेयेपाणितलेनैवप्राण्यंतरेमृदंगादिध्वनिमनुकुर्वंतितेषां॥ वेणुध्माः वेणुंधमंति ध्माशब्दादौ वैणविकाः वेणवंशिल्पमस्तियेषां हेवेणुवादिनां॥ वीणावादाः वीणांवादयंति॥ वैणिकाः वीणाशि-

भरताइत्यपिनटाश्चारणास्तुकुशीलवाः १२ मार्दंगिकामौरजिकाःपाणिवादास्तुपाणिघाः॥ वेणुध्माःस्युर्वैणविकावीणावादास्तुवैणिकाः १३ जीवांतकःशाकुनिकोद्वौवागुरिकजालिकौ॥ वैतंसिकःकौटिकश्चमांसिकश्चसमंत्रयं १४ भृतकोभृतिभुक्कर्मकरोवैतनिकोपिसः॥ वार्तावहोवैवधिकोभारवाहस्तुभारिकः १५

ल्पमस्तियेषां वेणुध्माआदंतः सोमपावत् हेवीणावादिनां विणेकरीइतिख्यातानां १३ जीवांतकः जीवानामंतकः जीवंतिकइत्यपि॥ शाकुनिकः शकुनान्हंति हेपक्षिणांहंतारि पक्ष्यांचापारधीइतिख्याते॥ वागुरिकः वागुरयामृगबंधीन्याचरति॥ जालिकः जालेनचरति॥ वैतंसिकः वीतंसेनमृगपक्ष्यादिबंधनोपायेनचरति॥ कौटिकः कूटेनमृगादिबंधनयंत्रेणचरति॥ मांसिकः मांसंपण्यमस्य अयंमांसविक्रयजीविनः खाटकीइति० १४ भृतकः भ्रियतेस्म भृञ् भरणे यद्वा भृतिंकरोति भृतिभुक् भृतिंवेतनंभुंक्ते॥ कर्मकरः कर्मकरोति कर्माणिकरोतीइतिदः॥ वैतनिकः वेतनेनजीवति चत्वारिवेतनोपजीविनः चाकरमजूरइतिप्रसिद्धस्य॥ वार्तावहः वार्तायावहः पत्रादेश्च॥ वैवधिकः विविधंवहति विवधिक इत्यपि हेवार्तावहकंकावडीइतिख्याते॥ भारवाहः भारंवहति॥ भारिकः भारोस्तिवाह्यत्वेनास्य हेओझेकरीइतिख्यातस्य भारीतिनांतोप्यन्यत्र १५

विवर्णः विगतोवर्णोयस्ययस्माद्वा वर्णोद्विजादौशुक्लादौरक्तौरूपयशोक्षरइतिविश्वः॥ पामरः पामानंराति यद्वा पाधर्मः म्रियतेयेन पुंसिसंज्ञायांयः॥ नीचः डप्रत्ययांतः॥ प्राकृतः प्रकृतौभवः यद्वा प्रकृष्टमकृतमकार्यमस्य॥ पृथक्जनः सज्जनेभ्यः पृथक्भूतोजनः शाकपार्थिवादिवत्॥ निहीनः निश्चयेनहीनः॥ अपसदः अपकृष्टमपकृष्टेवासीदति षद्लृविशरणादौ अपशोदइतिभरतमालायां॥ जाल्मः जालयति जल्-च्छादने इतिधातूनामनेकार्थत्वात् जालंकरोति जाल्मस्तु पामरेत्यक्तत्वात् असमीक्ष्यकारिणिचेतिहैमः॥ क्षुल्लकः क्षुधंलाति स्वार्थेकन् यद्वा क्षुणति क्षुद्यतेवा क्षुदसोदे यद्वा क्षुधालक्यते लकआस्वादने खुल्लकइत्यपि तत्रोक्तंरभसकोशे खुल्लकस्त्रिषुनीचेल्पइति॥ इतरः इनाकामेनतीर्यते ऋदोरप् इतंगमनंरातिवा यद्वा इतेनज्ञानेनरीयतेइत्याद्यूह्यं दशनीचस्य १६ भृत्यः

विवर्णः पामरोनीचःप्राकृतश्चपृथक्जनः॥ निहीनोपसदोजाल्मःक्षुल्लकश्चेतरश्चसः १६ भृत्येदासेयदासेरदासगोप्यकचेटकाः॥ नियोज्यकिंकरप्रेष्यभुजिष्यपरिचारकाः १७ पराचितपरिस्कंद

म्रियते भृञ्भरणे भृत्यःपोष्येभृतो भृत्येइतिविश्वः॥ दासेयः दास्याअपत्यं दासेरःउक्तार्थेद्रुक्॥ दासः दंसयति दंस्यंतेवा दसिदीप्तौ दास्यते दासृदाने घञ् दाशइतितालव्यांतोऽपि॥ गोप्यकः गुप्यते गुपूरक्षणे स्वार्थेकः गोप्यंकायतिवा कैशब्दे॥ चेटकः चेट्यते चिटपरप्रेष्ये चेडकइत्यपि॥ नियोज्यः नियुज्यते युजिर्योगे प्रयोज्यनियोज्यौशक्यार्थेइतिसाधु॥ किंकरः किंचित्कुत्सितंवाकरोति॥ प्रेष्यः प्रेष्यते इषगतौ प्रैष्यइत्यपि॥ भुजिष्यः भुंक्तेस्वाम्युच्छिष्टं॥ परिचारकः परिचरति चरगत्यादौ एकादशभृत्यस्य १७ पराचितः परैराचीयतेवर्ध्यते चिञ्चयने पराजितोपि तत्रेत्थं परैराजीयतेस्म भूतेक्तः॥ परिस्कंदः परिस्कंदति स्कंदिर्गत्यादौ पचाद्यच् परेश्चेतिवाषत्वं परिष्कन्दः परिस्कन्नश्चइत्यपि॥

परजातः परस्माज्जातः परपोषितत्वात् इत्याद्यूह्यं ॥ परैधितः परैरेधितः ॥ संवर्धितः चत्वारि अ्योदासिन्येनपस्योषितस्य ॥ मंदः मंदते स्वपिति मदिस्त्वत्यादौ पचा द्यच् मंदोतीक्ष्णेचमूर्खेचस्वैरेचाभाग्यरोगिणोः अल्पेचत्रिषुपुंसिस्याद्धस्तिजात्यंतरेशनाविति विश्वः ॥ तुंदपरिमृजः तुंदंउदरंपरिमार्ष्टि मृजूशुद्धौ तुंदशोक योरितिकः ॥ आलस्यः नलसति लसश्लेषणे अलसमस्त्यस्य अलसः अलसएव आलस्यः अर्शआद्यच् ॥ शीतकः शीतंकरोति ॥ अलसः ॥ अनुष्णः नउष्णः अनु ष्णः उष्णोदक्षः उष्णोग्रीष्मेपुमान्दक्षाशीतयोरन्यलिंगकः आलसइत्यपि षट् आलशीइति० १८ दक्षः दक्षते दक्षवृद्धौ शीघ्रार्थेच दक्षःप्रजापतौकुक्कुटष भेकुक्कुटेपथि द्रुमेदक्षातुमेदिन्यामितिविश्वः ॥ चतुरः चतति चत्यतेवा चतेयाचने उरच् ॥ पेशलः पेशनं पिशसमाधौ घञ् पेशांलाति इत्याद्यूह्यं ॥ पटुः

**परजातपरैधिताः ॥ मंदस्तुंदपरिमृजआलस्यःशीतकोऽलसोनुष्णः १८ दक्षेतुचतुरपेशलपटवःसूत्थानउष्णश्च ॥ चंडालप्लवमातंग दिवाकीर्तिजनंगमाः १९ निषादश्वपचावंतेवासिचांडालपुक्कसाः ॥**

पाटयति पटुर्दक्षेचनीरोगेचतुरेप्यभिधेयवत् ॥ सूत्थानः सुष्ठुउत्थानमुद्योगोऽस्य ॥ उ ष्णः उष्णात्वंशीघ्रकारित्वमस्यास्ति अर्शआद्यच् षट्दक्षस्य ॥ चंडालः चंडते चडिकोपे ॥ प्लवः प्लवते प्लुङ्गतौ प्लवःप्लक्षेप्लुतौकपौ ॥ मातंगः मतंगस्यापत्यं मतंगस्यायंवा त स्येदमित्यण् ॥ दिवाकीर्तिः दिवाकीर्तिरस्य ॥ जनंगमः अधार्मिकान्जनान्गच्छति जनेभ्योगच्छतिवा गमेश्चेतिखच् जलंगमइत्यपि १९ निषादः निषीदतिपापमस्मिन् ह लश्चेतिघञ् षद्लुविशरणादौ निषादःस्वरभेदेपिचंडालेधीवरांतरइत्युक्तत्वात् ॥ श्वपचः श्वानंपचति पचाद्यच् श्वपाकइत्यपि ॥ अंतेवासी ग्रामादेरंतेवसति चांडा लः चंडंआलाति मज्ञाद्यण् ॥ पुक्कसः पुक्कुत्सितंपुण्यंवापुमांसंवाकसति कसगतौ पुक्कसःश्वपचेऽधमेइतिमेदिनी दशचांडालस्य ॥

अन्त्यावांतरभेदो: किंकिंचिन्त्सोनाहतः किरातादयस्त्रयोम्लेच्छजातयश्चंडालानांभेदाः किरात· अतति अतसातत्यगमने किरतिशरान् किरश्चासौ अतश्च किरातोम्लेच्छभेदे स्याद्भूनिंबेऽल्पतनावपि स्त्रियांचामरवाहिन्यांकुट्टनीदुर्गयोरपि॥शबरः शबति शवगतौ शवंरातिवा शबरोम्लेच्छदेशेऽपपानीयेशांबरंपिबेतिविश्वः॥पुलिंदः पोलति पुलम हत्वे पुलिकः कथ्यतेम्लेंछे पुलिंदोपिनिगद्यतइतिनारपालः पुलिंदपत्रशाबरइतिरत्नकोशः॥म्लेच्छः म्लेच्छति म्लेच्छअव्यक्तेशब्दे एतेसर्वेवनचराः स्युः नदुक्तंच गोमांस भक्षकोयस्तुलोकबाह्यंचभाषते सर्वाचारविहीनोसौम्लेच्छइत्यभिधीयते सूतसंहितायामपि ब्राह्मण्यांवैश्यतोजातःक्षत्ताभवतिनामतः अस्यामनेनचौर्येणम्ले-च्छोविप्रःप्रजायतइति २० व्याधः विध्यति व्यधताडने॥मृगवधाजीवः मृगवधेनाजीवति॥मृगयुः मृगान्वधार्थयाति यामापणे मृगयुः पुंसिगोमायौव्याधेचपरमेष्ठि-

भेदाः किरातशबरपुलिंदाम्लेच्छजातयः· २० व्याधोमृगवधाजीवोमृगयुर्लुब्धकोपिसः॥कौलेयकःसारमेयः कुक्कुरोमृगदंशकः २१ शुनको भषकः श्वास्यादलर्कस्तुसयोगितः॥

नि॥लुब्धकः लुभ्यतेऽस्मिन् लुभगार्द्धे कः स्वार्थेकः चत्वारिव्याधस्य॥कौलेयकः कुलेभवः कुलकुक्षिग्रीवाभ्यइतिढक-ञ् कौलेयकःसारमेयेकुलीनेपीतिहेमचंद्रः॥सारमेयः सरमायाः अपत्यं स्त्रीभ्योढक्॥कुक्कुरः कोकते कुकआदाने कुरति कुरशब्दे कुक चासौकुरश्च कुक्कुरःसारमेये नाग्रंथिपर्णेनपुंसकमितिविश्वः कुर्कुरइतिराजमुकुटः कुक्कुरस्तुशातिःश्वानः कपिलोमंडलःशुनइतिवाचस्पतिः॥मृगदंशकः मृगान्दंशति दंशदशने २१ शुन-कः शुनति शुनगतौ॥भषकः भषति भषभेभूने॥श्वा श्वयति टुओश्विगतिवृद्ध्योः रासश्वानस्य॥योगितः प्रयोगेणउन्मत्तत्वंप्रापितःश्वा अलर्कःस्यात् अल-मर्च्यते अर्च्यतेवा अर्कस्तवने अर्च्चपूजायां घञ् शकंध्वादिः अलर्कोधवलार्केस्याद्योगोन्मादितकुक्कुरइतिविश्वः अलकइतिमुकुटः एकम्॥ ७

योमृगयायांकुशलः श्वा सविश्वक द्रुरित्येकं विश्वकंसर्वंद्रवति द्रुगतौ यद्वा विश्वंकंदते कदिआह्वानादौ विश्वक द्रुस्त्रिषुखलेश्वानारवेदानुगेः पुमान् एकं पारधीकुत्ता शिकारीकुत्ताइतिख्या०॥शुनी गौरादित्वान्ङीष् सरमास्यात् सरति सृगतौ अमप्रत्ययोबाहुलकात् २२ योग्राम्यः सूकरः सविड्वरः स्यात् विषंविष्ठां वरति चरगत्यादौ एकंगांवडुकरइति॥ यस्तरुणः पशुःरजादिःसवर्करः वर्कते वृकआदने वर्करः परिहासेस्याच्छागेशुवपशाव पिइतिविश्वः वर्करोमेषशावकइत्यप्यन्यत्र एकंतरुणपशुमात्रस्य बकराइत्यादिख्या०॥आच्छोदनं आच्छिद्यंतेत्र॥ मृगव्यं मृगाव्ययंतेत्र व्ययगतौ॥आखेटः आखिद्यंतेःत्र खिदत्रासे॥ मृगया मृग्यतेःत्र वयप्रत्ययः मृगअन्वेषणे मृगयास्त्रियां चत्वारिपापर्द्धेः शिकारीइतिख्या०॥२३॥ लुब्धयोगा लुब्धकसंबंधात्॥ दक्षिणारुः दक्षिणेपार्श्वेऽरुर्व्रणमस्य सकुरंगकः॥

श्वाविश्वकद्रुर्मृगयाकुशलः सरमाशुनी २२ विड्वरः सूकरोग्राम्योवर्करस्तरुणः पशुः॥ आच्छोदनंमृगव्यंस्यादाखेटोमृगयास्त्रियां २३ दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मांकुरंगकः॥ चौरैकागारिकस्तेनदस्युतस्करमोषकाः २४ प्रतिरोधिपरास्कंदिपाटच्चरमलिम्लुचाः॥

दक्षिणेर्मास्यात् दक्षिणेईर्मास्य एकं॥ चौरः चोरणं चुरस्तेये णयंतादप्रत्ययः संज्ञापूर्वकत्वान्न गुणः पचाद्यचि चोरइत्यपि चोरःपाटच्चरेपिस्याच्चौरपुष्पौषधावपीतिविश्वः॥ ऐकागारिकः एकमसहायंप्रयोजनमस्य॥ स्तेनः स्तेनयति स्तेनचौर्ये॥ दस्युः दस्यति दसुउपक्षये युप्रत्ययः दस्युश्चौरेरिपौपुंसीतिहैमः॥तस्करः तत्करोति॥मोषकः मुष्णाति मुषस्तेये ण्वुल् २५ प्रतिरोधी प्रतिरोद्धुंशीलमस्य रुधिर् आवरणे सुप्यजातावितिणिनिः॥ परास्कंदी परानस्कंदितुंशीलमस्य स्कंदिर्गत्यादौ॥पाटच्चरः पाटयंश्चरति चंरट् पृषोदरादिः पटच्चरइत्यपि चौरजीर्णपटयोः पटच्चरइतिनामानुशासनं॥ मलिम्लुचः मल्यते मलधारणे मलिःपृतंम्लोचति म्लुचस्तेये मूलविभुजादिः मलिम्लुचोमासभेदे चौरज्वरनयोःपुमानितिविश्वः दशचौरस्य॥

चौरिका चोरस्यभावः कर्मवा मनोज्ञादित्वात्वुञ् चौरिकेत्यपि॥ स्तैन्यं स्तेनस्यभावः कर्मवा स्तेनाद्यन्नलोपश्च स्तेन्यामितिष्यञंतंके चिदिच्छंति स्तेयंस्तैन्यंचचौर्यस्या चौरिकाचौरिकेस्त्रियामितिवाचस्पतिः॥ चौर्यं चोरस्यकर्म ष्यञ् चत्वारिचोरकर्मणः॥ चौर्यधनंलोप्त्रंस्यात् लुप्यते लुप्लृछेदने लोप्त्रम्‌ष्ट्रणिचोरितइतिविश्वः लोत मितिजटाधरः तस्यचोरस्यधनं एकं २५ मृगपक्षिणां मृगाश्चपक्षिणश्चतेषांबंधननिमित्तंयदुपकरणंपाशजालादिसवीतंसइत्येकं विनंस्यते नसिअलंकारे घञ् उपस र्गस्येतिदीर्घः वीतंसोबंधनोपायेमृगाणामपिपक्षिणां तेषामेवचविश्वासहेतोःप्रावरणेपिचेतिविश्वः विनंसइत्यपि॥ उन्माथः उन्मथ्यतेनेन मथविलोडने हलश्चेति घञ् उन्माथः कूटयंत्रेस्यात्मारथेघातकेपुमान्॥कूटयंत्रं हेमृगपक्षिबंधनार्थंछलेनयद्यंत्रंनिवेश्यतेतन्न सांपळाइतिख्याते॥ वागुरा अवागुरते गुरीहिंसायां इगु

चौरिकास्तैन्यचौर्येचस्तेयंलोप्त्रंतुतद्धने २५ वीतंसस्तूपकरणंबंधनेमृगपक्षिणां॥ उन्माथः कूटयंत्रंस्याद्वागुरामृगबंधनी २६ शुल्बंवराटकंस्त्री तुरज्जुस्त्रिषुवटीगुणः॥ उद्घाटनंघटीयंत्रंसलिलोद्वाहनंप्रहिः २७

पधेतिकेअवाकारस्यलोपः॥ मृगबंधनी मृगोबध्यतेःनया करणेल्युट् ङीजालीकृतरज्जु विशेषे मृगाबंजाळेइति॰ २६ शुल्बं शुल्बयति शुल्व्यतेवा शुल्बविसर्गे ण्यंतादच् शुल्बेत्यपि रज्जुःशुल्बावराटोनेतिरत्नकोशात् स्त्रियां शुल्बंताम्रेयज्ञकर्मण्याचा रेजलसन्निधाविति विश्वः॥ वराटकं वरमटति अटगतौ अणंतात्स्वार्थेकः कम्यंवटाकरइतिपाठंस्वामीचरणाःपठंति॥ रज्जुः सृज्यते सृजविसर्गे रज्जुर्वेण्यांगुणेयोषि दितिविश्वमेदिन्यौ॥ वटी वटति वटवेष्टने वस्यतेवा वटीत्रिषुगुणेपुंसिस्यान्यग्रोधकपर्दयोः॥ गुणः गुण्यते गुणआमंत्रणे गुणामौर्व्यामप्रधानेरूपादौसूदइंद्रिये त्यागे शौर्यादिसंध्यादिसत्वाद्यावृत्तिरज्जुषु शुक्लादावपिबुध्यांचेत्यु॰॥ नत्रयवराटकः पुंसि क्लीबेच रज्जुःस्त्रियां वटीत्रिषु पंचरज्जोः चन्हाटदोरइत्यादिख्या॰॥ प्रहिः कूपा सलिलोद्वाहनं सलिलंजलमूर्ध्वंवाह्यतेयेनतद्वयं उद्घाटनं घटीयंत्र राहाटगाडगे इतिख्यातं उद्घाट्यतेनेन घटसंघाते ण्यंतात्ल्युट् घटीनांयंत्रं २७

वेमा वयति तंतून् अनेन वेञ्तंतुसंताने वेमइत्यपि ॥ वापदंडः वापस्य दंडः वायदंडइचिक्कचित्पाठः तत्रेत्थं वायस्यदंडः द्वे वस्त्रव्यूतिदंडस्य कोष्ठ्याचेंधाटेंइतिख्यातस्य सूत्रं सूच्यते सूत्रवेष्टने सीव्यतेऽनेनवा षिवुतंतुसंताने सूत्रंतुसूचनाकारिग्रंथेतंतुव्यवस्थयोरितिहैमः ॥ तंतुः तन्यते तनुविस्तारे नरि पुंसि तंतुः सूत्रनंतुरितिहारावल्याः संहतोपि द्वे सूतइतिख्यातस्य ॥ वाणिः वाणनं वणशब्दे ॥ व्यूतिः विशिष्टाऊतिः व्युतिरितिद्विरूपकोशः द्वेतंतुवानस्यविणणेंइतिख्यातस्य ॥ लेप्यादिकर्मणि लेप्यमादिर्यस्य तच्चतत्कर्मचं लेप्यंमृदापुत्तलिकादिकरणं आदिशब्दात्काष्ठपुत्तलिकादिग्रहणं तत्रपुस्तमित्येकं पुस्त्यते पुस्तआदरादौ तदुक्तं मृदावादारुणावाथ वस्त्रेणाप्यथचर्मणा लोहरत्नैःकृतंवापि पुस्तमित्यभिधीयते २८ वस्त्रदंतादिभिः कृता पुत्रिकापांचालिकास्यात् आदिनाकाष्ठमृच्छिलादि पुत्रीइव इवेतिकन् पंचाल-

पुंसिवेमावापदंडः सूत्राणिनरितंतवः ॥ वाणिर्व्यूतिःस्त्रियौतुल्ये पुस्तंलेप्यादिकर्मणि २८ पांचालिकापुत्रिकास्याद्वस्त्रदंतादिभिः कृता ॥ जतुत्रपुविकारेतुजातुषंत्रापुषंत्रिषु २९ पिटकःपेटकःपेटामंजूषाःथविहंगिका ॥

देशोभवा जनपदस्तदवध्योश्चेतिवुञ् आदिवृद्धिः स्यात्पुत्रिकापुत्तलिकादुहित्रोर्यावनूलिके नापुत्रेशरभेधूर्तेशेतवृक्षसपभेदयोरितिविश्वमेदिन्यौ पांचालिकास्त्रियांवस्त्रपुत्रिकागीतभेदयोः पंचालिकेत्यपि तत्रेत्थं पंचभिर्वर्गैरल्यते अलभूषणादौ घञ् एकंबाहुलीइतिख्यातस्य ॥ जतुत्रपुविकारेतु जातुषं जतुनःलाक्षायाःविकारः ॥ त्रपुषःवंगस्यविकारः त्रापुषं त्रिषु एकैकं २९ पिटकः पेटति पिटसंघाते क्वुन् पिटकस्त्रिषुविस्फोटेमंजूषायांपुनःपुमान् पेडकःपुस्तकादीनांमंजूषायांकदंबकइतिविश्वः ॥ पेटकः ण्वुल् ॥ पेटा पेडतिमुकुटः तत्र पिंडते पिडिसंघाते आगमानित्यत्वान्नुम् न पीडतिस्वामी तत्रच पीडयति पीडअवगाहे पचाद्यच् ॥ मंजूषा दुमस्जोशुद्धौ नुम् चत्वारिवस्त्रालंकारादिस्थापनार्थंकृतायामंजूषायाःपेटीइतिख्यातायाः आद्योपेटारिकायां परोमहत्यामितिस्वामी ॥ विहंगिका विहायसागच्छति खच्चाडिद्वावाच्यः मुकुटस्तु विहंगमेतिपठति तत्कारणंडित्वविकल्पः

भारयष्टिः भारस्ययष्टिः एकंशिक्याधारलगुडस्य खुंटीइतिख्या॰ इयंभारोद्वहनार्थाचतुर्दंडिकेतिसभ्याः शिक्याधारस्कंधग्राह्ययोर्लगुडइतिद्रविडाः॥तदालंबि तस्यांभारयष्ट्यांआलंबितुंशीलमस्य लबिअवस्रंसने॥शिक्यं शक्नोतिवोढुं॥काचः स्यात् कच्यनेत्र कचबंधने काचःशिक्येमणौनेत्ररोगभदेमृद्भेदंतर इतिविश्वमेदिन्यौ द्वे आलंबमानस्यरज्जुपंजरस्य शिंकेइतिख्यातस्य॥पादुका पद्यतेऽनया पदगतौ ३० पादूः॥उपानत् पदेउपनह्यते पादमुपनह्यति वा णहबंधने संपदादिभ्यइतिक्विप् चेनिवाक्विप् नहिवृतीतिदीर्घः अयमपिस्त्रियां पादत्राणस्य जोडाइतिख्यातस्य॥सैवोपानत् पदायता पदवत् आयता पदायांसेनबद्धेत्यर्थः॥अनुपदीना स्यात् अनुशयामेसादृश्येवा अनुपदंबद्धा अनुपदीनाउपानत् इतिकौमुद्यांस्पष्टं एकंवाहाण इतिख्या॰॥नध्री नह्यतेऽनया

भारयष्टिस्तदालंबिशिक्यंकाचोऽथपादुका ३० पादूरुपानत्स्त्रीसैवानुपदीनापदायता॥नध्रीवध्रीवरत्रास्यादश्वादेस्ताड
नीकशा ३१ चांडालिकातुकंडोलवीणाचंडालवल्लकी॥

णहबंधने दाम्नीशसेतिष्ट्रन् षित्वात्ङीष्॥वध्री वर्धने वृधुवर्धने वृधिवपिभ्यांरन् गौरादित्वात्ङीष्॥वरत्रा व्रियतेऽनया वृञ्वरणे वृञश्चित् इत्यत्रनगुणः भाषिचर्ममय्यारज्जाः वाधीइतिख्यातायाः॥अश्वादेस्ताडनी रज्जुः कशास्यात् ताड्यतेऽनया तडआघाते पर्यंतात्ल्युट्॥कशति कशशब्दे पचाद्यच् कशगतिशासनयोर्वा आदिनाउष्ट्रगर्दभचोरादिग्रहणं एकंजरबंदइति॰॥ ३१ चांडालिका चंडालस्येयं अण्ङीप् स्वार्थेकन् ह्रस्वः चंडालेनकृतावा कुलालादिभ्योवुञ्वा चांडालिकाकिन्नरायामुपायामोषधीभिदीत्यकरू॰ चंडालिकेत्यपि॥कंडोलवीणा कंडोलस्यचंडालस्यवीणा कंटोलवीणेत्यपि कंडोलीतिपृथक्पदमपि कडिमदेबाहुलकादोलच्॥चंडालवल्लकी चंडालस्यवल्लकी भाषाकिंनरीतिख्यातायाअंत्यजवीणायाः॥

नाराची स्वल्पोनाराचोबाणभेदः इति गौरादित्वात् ङीष् ॥ एषणिका इष्यतेनया इषगतौ ल्युट् टित्वात् ङीप् हे स्वर्णकाराणांनाराचाकृतिर्यालोहशलाकातत्र कांटा न राजूइतिख्याते॥ शाणः शण्यते शणदाने अकर्तरीतिघञ् श्यतिवा शोतनूकरणे बाहुलकात् अणः॥ निकषः निकषति कषहिंसायां पचाद्यच् निकषःशाणफलके इतिविश्वमेदिन्यौ ॥ कषः त्रीणिस्वर्णादि यत्र घर्षणेनपरीक्ष्यते तस्याः शिलायाः करोटी निसाणाइत्यादिख्यातायाः खड्गादितीक्ष्णकरणयंत्रस्येत्यन्ये ३२ व्रश्चनः व्र-श्च्यते नेन करणेल्युट् ओव्रश्चूछेदने ॥ पत्रपरशुः पत्रमिवपरशुः हे स्वर्णादिच्छेदनस्यपरशोः कानसइतिख्यातस्य ॥ ईषिका ईष्यते इषतिवा ईषउंछे वुन्प्रत्ययः ईषिकेतिपाठेतु इष्यते इषगत्यादौ क्वुन् इषीकेत्यपि पृषोदरादिः॥ तूलिका तूलति तूल्यतेवा तूलनिष्कर्षे क्वुन् हे शलाकाभेदस्य सळईइतिख्यातस्य ॥ तैजसावर्तनी

नाराचीस्यादेषणिकाशाणस्तुनिकषःकषः ३२ व्रश्चनः पत्रपरशुरीषिकातूलिकासमे॥ तैजसावर्तनीमूषा भस्त्राचर्मप्रसेविका ३३ आस्फोटनी वेधनिकाकृपाणीकर्तरीसमे ॥

तैजसंसुवर्णादिआवर्त्यतेयत्र ल्युट् अधिकरणे इत्युवर्तते ॥ स्वर्णादिपाकार्थंपात्रविशेषःस्यात् मूषति मूषस्तेये मूषी मूषा स्वावर्तनीमूषीतिशब्दार्णवः मुषस्तेयइत्यस्माद्भिदाद्यङ्न्हस्वादिरपि ह्रस्वा मुषा मुषी गौरादिः मूसइतिख्याता एकं॥ भस्त्रा भस्यतेनया भसदीप्तौ त्रन् नितुत्रेतिनेट्॥ चर्मप्रसेविका चर्मणाप्रसीव्यते षिवुतंतुसंताने संज्ञायामितिण्वुल् चर्मप्रसेवकइत्यपि हे अग्निज्वलनार्थस्यचर्मप्रसेवकस्य भातांइतिख्यातस्य ३३ आस्फोटनी आस्फोट्यतेनया स्फुट भेदने करणेल्युट् लास्फोटनीइत्यपि तत्र ललंतौमास्फोटयंति पृषोदरादिः॥ वेधनिका विध्यतेनया विधविधाने करणेल्युट् स्वार्थेकः वेधनीतुलास्फोटन्यांस्फोटनीहृषदं शिकेतिवाचस्पतिः हे मुक्तादेर्वेधोपयुक्तस्य शस्त्रभेदस्य सांमताइतिख्या०॥ कृपाणी कृपामणति अणशब्दे कर्मण्यण्॥ कर्तरी कृंतति कृतीछेदने बाहुलकादरः इत्या-द्युक्तं हे स्वर्णपत्रादिविछिद्यतेयेनतस्यकातरइतिख्यातस्य॥

वृक्षादनी वृक्षमत्ति अद भक्षणे कृत्यल्युटोबहुलमितिल्युट् ॥ वृक्षभेदी वृक्षंभेत्तुंशीलमस्य भिदिर् विदारणे सुप्यजातौणिनिः ॥ वृक्षभेदनार्थस्यशस्त्रभेदस्य ॥ वाकसतासणीइतिख्यातस्य ॥ टंकः टंकयति टकिबंधने टमितिशब्दंकायतिवा कैशब्दे ॥ पाषाणदारणः पाषाणोदार्यतेऽनेन दृविदारणे ॥ पाषाणदारणार्थस्य घनभेदस्यटांकीइतिप्रसिद्धस्य ३४ क्रकचः क्रइतिकचति कचशब्दे पचाद्यच् ॥ करपत्रं करेणकरात्वा पतति पत्लृपतने ॥ करवतइतिख्या॰ ॥ आरा आइति ऋगतौ आङ्पूर्वात्पचाद्यच् अच् आर्यतेवा भिदादौ ॥ चर्मप्रभेदिका धात्वर्थनिर्देशेण्वुल् चर्मणःप्रभेदिका ॥ चर्मखंडनार्थस्य शस्त्रभेदस्यआरीइतिख्या॰ ॥ सूर्मी शोभनाऊर्मिः बहुव्रीहिर्वा सर्वतोक्तिगौरादित्वात्ङीष् सूर्मीरितिवा अन्यपक्षेगौरादित्वं ॥ स्थूणा तिष्ठति ष्ठागतिनिवृत्तौ रास्नासास्नास्थूणेतिसाधुः ॥ अयःप्रतिमा

वृक्षादनीवृक्षभेदीटंकःपाषाणदारणः ३४ क्रकचोऽस्त्रीकरपत्रमाराचर्मप्रभेदिका ॥ सूर्मीस्थूणायःप्रतिमाशिल्पंकर्मकलादिकं ३५ प्रतिमानंप्रतिबिंबप्रतिमाप्रतियातनाप्रतिच्छाया ॥ प्रतिकृतिरर्चापुंसिप्रतिनिधिरुपमोपमानंस्यात् ३६ अयसः प्रतिमा श्रोणिलोहप्रतिमायाः ॥ कलादिकंयत्कर्मतच्छिल्पं कलागीतनृत्यादिः आदिनासुवर्णकारादिग्रहणं शील्यते शल्यतेवा शीलसमाधौ शलगतौवा उभाभ्यांधातुभ्यां औणादिकःप्रत्ययः शिल्पंस्त्रुवेक्रियायोगेइतिविश्वः एकं ३५ प्रतिमानं प्रतिकृत्यमीयतेऽनेन माङ्माने करणेल्युट् अनादेशः ॥ प्रतिबिंबं प्रतिकृतिर्बिंबस्य कुगतीतिसमासः ॥ प्रतिमा प्रतिमीयतेऽनया आतश्चोपसर्गेइतिकरणेअङ् ॥ प्रतियातना प्रतियात्यतेऽनया यतनिरोपस्कारयोः चुरादिः ण्यासंश्रन्थेतियुच् ॥ प्रतिच्छाया प्रकृष्टाछाया प्रादिसमासः ॥ प्रतिकृतिः प्रकृष्टाकृतिः प्रतिनिधेःकृतिर्वा ॥ अर्चा अर्च्यते अर्चपूजायां ॥ प्रतिनिधिः प्रतिनिधीयते सदृशीक्रियते उपसर्गेघोःकिः अष्टौप्रतिमायाः प्रतिनिधिःपुंसि ॥ उप

मा आनश्चोपसर्गे भावेकरणेवा अङ् उपमानमित्यत्रापित्यष्ट्॥ तथा उपमानं ट्टे करणे भावेचयेनोपमीयते याचोपमितिरूपयोरेनेनामनी केचित्तुपूर्वाविनेइत्याहुः॥
३६ समादिसमानोत्तरसतकं वाच्यलिंगाः स्युः समानि समवैकुव्ये अच् तुलयासंमितः नौवयोधर्मेत्यादिनायत् सदृक्षादयस्त्रयोपित्यदादिषु दृशइतिसाधवः आ
धारणेनसहवोपसर्जनस्येतिसहस्यसादेशः सहमानेनवर्ततेसमानं मानंअस्येनिवासमानः अमीतुनिभादयउत्तरपदस्थाएव सदृशपर्याया वाच्यलिंगाश्चस्युः
तेयथा पितृनिभः पुत्रः मातृसंकाशाकन्या देवनीकाशमपत्यमित्यादि निभस्तुकथितोव्याजेपुल्लिंगः सदृशेषुच निकाशोनिश्चयेतुल्यइतिविश्वः आदिशब्दा
द्भूतरूपकल्पादिग्रहणं यथा पितृभूतः पितृरूपः पितृकल्पः॥ कर्मण्या कर्मणासंपद्यते संपदादिभ्यइत्यधिकारेकर्मवेषाद्यत् कर्मणिसाधुर्वा॥ विधा क

वाच्यलिंगाः समस्तुल्यः सदृक्षः सदृशः सदृक्॥ साधारणः समानश्चस्युरुत्तरपदेत्वमी ३७ निभसंकाशनीकाशप्रतीकाशोपमादयः॥
कर्मण्यातुविधाभृत्याभृतयोभर्मवेतनम् ३८ भरण्यंभरणंमूल्यंनिर्वेशः पणइत्यपि॥ र्माणिविधीयंतेः नया आलश्चोपसर्गे इतिकरणेअङ्॥

भृत्या भ्रीयंतेकर्मकरा अनया भृञ् भरणे संज्ञायांसमजेतिक्यप् तुगागमश्च॥ भृतिः॥ भर्म भ्रियतेः नेन डु भृञ् भृञ्वा मनिन्॥ वेतनं वीयतेनेन वींग
त्यादौ वीयतीभ्यांतनन्ः ३८ भरण्यं भरणेसाधुः भरण्येत्यपि॥ भरणं भृञोल्युडादिसाधः भरणंवेतनेभृताविति विश्वः॥ मूल्यं मूलेनआनाम्यं नौवयो
धर्मेत्यादिनायत् मूल्यंस्यादेतनेरत्नइतिविश्वः॥ निर्वेशः निर्विश्यतेः नेनवा कर्मणिकरणेयत्र् विशप्रवेशने निर्वेशस्तुपुमान्भोगेवेतनेमूर्छनेपिचेत्युक्तः॰
॥ पणः पण्यते नित्यंपणः परिमाणेइत्यप् पणोवराटमानेस्यान्मूल्येकार्षापणेग्लहे क्रय्यशाकादिकेद्यूतव्यवहारेभृतौधनइ॰ एकादशवेतनस्य॥

सुरा सुअतीवरायंत्यनया रैशब्दे आतश्चोपसर्गेकरणेड् सुरा चषकमद्ययोः पुल्लिंगःस्त्रिदिवेशेस्यात्॥हलिप्रिया हलिनोबलस्यप्रिया॥हाला हलत्यंगं ह लविलेखने ज्वलितिकसंतेभ्योणः॥परिस्रुत् परितःस्रवति स्रुस्रवणे क्किप्‌चेतिक्किप् तुक्॥ वरुणात्मजा वरुणस्यसमुद्रस्य ३९ गंधोत्तमा गंधउत्तमोयस्याः॥प्रसन्ना प्रसीदतिस्म षद्‌ विशरणादौ क्तप्रत्ययः प्रसन्नास्त्रीसुरायांस्यादच्छसंतुष्टयोस्त्रिषु॥इरा इंकामंराति रादाने आतोनुपसर्गेड्‌ इतिकः॥कादंबरी कु-त्सितंअंबरं कदंबरंशीलांबरमस्यास्ति अर्शआद्यच् तस्येदं कदंबेजातोरसःकादंबः तंराति कादंबरी गौरादित्वान्ङीष् इत्याद्यूह्यं कादंबरस्तुदध्यग्रेमद्यभेदे नपुंसकं स्त्रीवारुणीपरभृतासारतीसारिकास्वपि॥परिस्रुता परितःस्रुता यद्वा परितःस्रूयतेस्म लोकैः स्रुगतौ॥मदिरा माद्यंत्यनया मदीहर्षे किरच्॥कश्य

सुराहलिप्रियाहालापरिस्रुद्वरुणात्मजा ३९ गंधोत्तमाप्रसन्नेराकादंबर्यःपरिस्रुता॥मदिराकश्यमद्येचाप्यवदंशस्तुभक्षणं ४० शुंडापानंमद स्थानंमधुवारामधुक्रमाः॥मध्वासवोमाधवको

कश्यतेऽनेन कशशब्दे बाहुलकात् उभयत्रयत्॥मद्यं माद्यतेऽनेन मद्याश्वमध्ययोःकश्यमित्रिरंतिदेवः क श्यस्त्रिषुकशार्हेस्यात्क्लीबंमद्याश्वमध्ययोरितिविश्वः त्रयोदशमद्यस्य तेषु गौडीपैष्टीचमाध्वीचविज्ञेयात्रिविधासुरेतिवचनात् सुरादिद्वयंगौड्यादित्रिविधमद्यस्य शेषंमद्यमात्रस्य॥पानरुचिजननाययद्द्रव्यंव्यंजनादिअशितुमिच्छंतिसोऽवदंशोज्ञेयः अवदश्यते दंशदशने इत्येकं॥भक्षणं भर्जितचणकादि तस्य ४० शुंडा शुन्यते शुन गतौ त्रमंनाड्डः शुंडापानगृहेमता अप्यंबुहस्तिनीवेश्याहस्तिहस्तसुरासुचेतिमेदिनी शुंडापिजलहस्तिन्यांमदिराकरिहस्तयोरितिविश्वकोशश्च॥पानं पिबंत्यत्र अधि करणे पापाने ल्युट् समस्तमपि शुंडापानं॥मदस्थानं मदस्यस्थानं द्वेमद्यगृहस्य॥मधुवारः मधुनोवारः॥ मधुक्रमः मधुनोक्रमः द्वेमधुपानावसरस्य॥मध्वासवः मधु कपुष्पंमधुतस्यासवः॥माधवकः मधुनाकृतः संधितः॥

मधु मन्यते मनज्ञाने मधुपुष्परसेक्षौद्रेमद्येनातुमधुद्रुमइतिविश्वमेदिन्यौ॥ माद्वीकं मृद्वीकाद्राक्षातस्याः विकारः तस्यविकारइत्यण् केचित्तुमाध्वीकमितिपठंति तत्रपृषोदरादित्वं अद्वयोरितिक्लीबत्वंस्यात् चत्वारिमधुकपुष्पकृतमद्यस्य गुरुत्वरणारक्त द्वौद्वौपर्यायावाहुः ४१ मैरेयं मिरायांदेशविशेषेऔषधिविशेषेवाभवं नद्यादिभ्योढक्॥ आसवः आसूयते षुञ्अभिषवे ऋदोरप्॥ शीधुः शेरतेऽनेन शीङोधुक् पुंनपुंसकयोर्दारुजीवातुस्थाणुशीधवइतित्रिकांडशेषः यद्यपि शीधुरिक्षुरसैःपक्वैरपक्वैरासवोभवेत् मैरेयंधातकीपुष्पगुडधानांबुसंहितमितिमाधवः तथापिभेदमनादृत्योक्तं श्रीणिइक्षुशाकादिजन्यमद्यविशेषस्य शीधुरस्त्रियां आसवःपुमान्॥ मेदकः मेद्यति ञिमिदास्नेहने॥ जगलः भृशंगलति गल्यतेवा गलअदने यङ् लुगंतात्अच् संज्ञापूर्वकत्वाद्दीर्घोकितइतिनदीर्घः मेदकेपिष्टमद्येचेत्यक्तत्वात् जगलोमदनद्रुमेचेति द्वे कल्कस्य मद्यभे

**मधुमाद्वीकमद्वयोः ४१ मैरेयमासवःशीधुर्मेदकोजगलःसमौ॥ संधानंस्यादभिषवःकिण्वंपुंसितुनग्नहूः ४२ कारोत्तरःसुरामंडआपानंपानगोष्ठिका॥**

दस्येत्येके॥ संधानं संधीयते संधानंस्यादभिषवेतथासंघट्टनेपिचेतिविश्वः॥ अभिषवः अभिषूयते षुञ्अभिषवे ऋदोरप् भवेदभिषवःस्नानेमद्यसंधानयज्ञयोरितिविश्वः द्वेमद्यसंधानस्य॥ फलवंशांकुरादिकंबहुकालंयत्संधीयतेतस्येत्येके॥ किण्वं कणनं कणशब्दे उल्बादयश्चेतिसाधुः किण्वंपापेसुराबीजइतिविश्वः॥ नग्नहूः ह्वानं ह्वयतेवा नग्नस्यहूः नग्नहूः नग्नह्वौ नग्नह्वः ह्वेञ्स्पर्धायांशब्देच अस्मात्संपदादित्वात्क्विपिसंप्रसारणेपूर्वरूपेहलइतिदीर्घे भावप्रत्ययांतेनतग्नशब्दस्यसमासः कर्तृप्रत्ययांतेनवा एवंरूपाणीति द्वे तंडुलादिद्रव्यकृतसुराबीजस्य॥ मत्तनग्नकृताह्वानस्येत्यन्ये॥ सुरायाःमंडः अग्रभागः कारोत्तरः स्यात् कारेणक्रिययाउत्तरः कारोत्तमइतिस्वामी एकं॥ आपानं आसंभूयपिबंत्यस्मिन् अधिकरणेल्युट्॥ पानगोष्ठिका पानस्यगोष्ठिका स्वार्थेकः द्वेपानसभायाः

चषकः चष्यतेनेन चषभक्षणे चषकोस्त्रीसुरापात्रेमधुमद्यप्रभेदयोरितिमेदिनी॥पानपात्रं पानस्यपात्रं द्वेमद्यपात्रस्य॥सरकः स्त्रियते सृगतौ कृञादिभ्योवुन् सरकः सीधुपानेस्त्रशीधुनोर्मद्यभाजनइत्यजयः अपिशब्दात्सरकोप्यस्त्री सरकंवानानुतर्षेनोनरत्नकोशः॥अनुतर्षणं अनुतर्षणमनेन ञितृषपिपासायांभावेकरणे वाल्यट् चषकश्चानुतर्षश्चेतिभागुरिः द्वेमद्यपानस्य चत्वारिमद्यपानपात्रस्येतिमुकुटः ४३ धूर्तः धूर्वति धूर्वीहिंसायां तन्प्रत्ययः राल्लोपः धूर्तस्तुखंडलवणेध-न्तूरेनाविटेत्रिषु धार्तइतिपाठेतु धावनेनआर्तः धावुगतिशत्स्योः संपदादिः बाहुलकावलोपः॥अक्षदेवी अक्षैर्दीव्यति सप्यजातौइतिणिनिः॥कितवः कितंवा यति कितेनवातिवा कमन्ययः कितवोधूर्तवन्मत्तेवंचकेकनकाव्हयइतिविश्वः॥अक्षधूर्तः अक्षेषु धूर्तः सप्तमीशौंडैः इतिसमासः॥ द्यूतकृत् द्यूतंकरोति पंच द्यूतकृतः

चषकोऽस्त्रीपानपात्रंसरकोप्यनुतर्षणं ४३ धूर्तोऽक्षदेवीकितवोऽक्षधूर्तोद्यूतकृत्समाः॥ स्यर्लग्नकाः प्रतिभुवःसभिका द्यूतकारकाः ४४
द्यूतोऽस्त्रियामक्षवतीकैतवंपणइत्यपि॥ पणोक्षेषुग्लहोऽक्षास्तु सोगटीखेळणारा इतिख्या॰॥लग्नकः लजतेस्म आलस्जीव्रीडने गत्यर्थेति क्तः स्वार्थेकः॥प्रतिभूः प्रतिप्रतिनिधिर्भवति प्रतिभूः द्वेऋणादौप्रतिनिधिभूतस्य धनिकाधमर्णयोरंतरेयःतिष्ठतिविश्वासार्थंतस्य जामीनइतिख्या॰॥ सभिकः सभाद्यूतंआश्रयत्वेनास्यास्ति अत्र्यादित्वाट्ठन् संभाद्यूतसंभागृहइतिरुद्रः॥ द्यूतकारकः द्यूतंकारयति द्वे येद्यूतंकारयंतितेषां ४४ द्यूतः देवनं दिवुक्रीडादौभावेक्तः॥अक्षवती अक्षाः पाशकाः संत्यस्यां॥कैतवं कितवस्यकर्म हायनांतेत्यादिनाअण् कैतवंतुछलेद्यूतेकैतवः कितवेरिपौ॥ पणः पणोग्लहोऽस्त्यस्मिन् अर्शआद्यच् चत्वारि द्यूतस्य॥पणः पण्यते उत्सृज्यंते पणव्यवहारे अप्प्रत्ययः॥ग्लहः ग्लह्यतेनेन ग्लहआदाने गृ ह्यतेवा अक्षेषु ग्लहः इतिसाधुः द्वे द्यूतजयेलभ्यमानस्य॥अक्षः अक्षति अक्षूव्याप्तौ पचाद्यच् अक्षोज्ञाना त्मशकटावयवेषुसपाशके रुद्राक्षद्राक्षयोःसर्पेबिभीतकतरावपि चक्रेवर्षेपुमान्क्लीबमक्षसौवर्चलेंद्रियइत्य॰॥

देवनः दीव्यतियेन करणेल्युट् देवनंव्यवहारेस्याज्जिगीषाक्रीडयोरपि अक्षेषुदेवनः प्रोक्तइतिविश्वः॥ पाशकः पाशयति पाशबंधने त्रयंफांसेइतिख्यातस्य॥ ४५ शारीणामिनस्ततोवामदक्षिणतोनयनंपरिणायः परिन्योर्नीणोद्युताभ्रेषयोरितियञ् इत्येकं॥ अष्टापदं अष्टौपदान्यस्य अष्टापदं अष्टनः संज्ञायामितिदीर्घः अस्त्रियाम्॥ शारिफलं शारीणांफलंपट्टः अष्टापदोःस्त्रीफलकेशारीणांफलकेपिचेतिमेदिनी फलंहेतुससुत्थेस्यात्फलकेव्युष्टिलाभयोरितिविश्वः द्वे शारीणां खेलनाधारपट्टस्य सोंगट्यांचापटइति॥ प्राणिद्यूतं प्राणिभिः कृतंद्यूतं ससमाह्वयइत्युच्यते घप्रत्ययः सम्यगाह्वयंतेत्र एकं॥ प्राणिद्यूतं मेषमहिषगवादिकृत युद्धंसमाह्वयइत्यर्थः अप्राणिभिःकृतमितिद्यूतमुच्यते प्राणिभिःक्रियतेयत्तुसविज्ञेयःसमाह्वयइत्युक्तत्वात् ४६ अत्रकेषांचिल्लिंगासंग्रहादसंपूर्णत्वंनिवारय

देवनाःपाशकाश्चतै ४५ परिणायस्तुशारीणांसमंतान्नयनेस्त्रियाम्॥ अष्टापदंशारिफलंप्राणिद्यूतंसमाह्वयः ४६ उक्ताभूरिप्रयो गत्वादेकस्मिन्येऽत्रयौगिकाः॥ ताद्धर्म्यादन्यतोवृत्ताबूह्यालिंगांतरेऽपिते ४७ इतिशूद्रवर्गः इतिद्वितीयकांडःसमाप्तः नि उक्ताइ

ति अत्रशूद्रवर्गेयेयौगिकाःशब्दाः मार्दंगिकमालाकारवैणविकादिप्रमुखाः पुंसिबहुलप्रयोगत्वान्निबिडप्रयोगदर्शनादेकस्मिन्नेवलिंगेपुंसियेयौगिकाःप्रोक्तास्तेतद्धर्म्ययोगवशात्तेषामन्यतोन्यत्रजातौवृत्तौसत्यां अन्यत्रस्त्रियांक्लीबेचोहनीयाः अपिशब्दाद्रूढाअपि करणकुलालादयोजातिवचनात्पुंसिस्त्रियांचवर्ततेइतिज्ञेयम् यस्यावयवशक्त्याएवार्थोबुद्ध्यतेसयौगिकः स्यात् यस्यावयवशक्तिमनपेक्ष्यसमुदायशक्तिमात्रेणार्थोबुध्यतेसरूढः तत्रयौगिकोलिंगांतरे यथा मालाकारीस्त्री मालाकारंकुलं एवंकुंभकारी स्त्री कुंभकारंकुलमित्यादि अणंतत्वात्स्त्रियांङीप् अयौगिकोयथाकरणादयः अत्रजातेरस्त्रीविषयादितिङीष् ४७ इतिशूद्रवर्गः

इतिसविग्रहामरकोशेद्वितीयकांडस्यव्याख्यानंसमाप्तम् २

इतिसविग्रहामरकोशेद्वितीयकांडःसमाप्तिमगमत्

# अथसविग्रहअमरकोशतृतीयकांडप्रारंभः

श्रीगणेशायनमः विशेष्यनिघ्नैर्दिते ॥ वक्ष्यमाणवर्गानाह ॥ सामान्येकांडे ॥ साधारणत्वात् ॥ एतैराक्षिमाक्तनमामकावर्गाकच्यंते ॥ एतैः कैः विशेष्यनिघ्नैः ॥ विशेष्यस्त्रीदारादि पूर्वोक्तं तन्नि-
घ्नंअधीनंयेषांतैः लिंगवचनैः सुकृत्वादिशब्दैः संकीर्णैः परस्परविजातीयार्थैः ॥ कर्मपारायणादिभिः ॥ नानार्थैश्च ॥ अनेकार्थेषुवर्तमानैर्नाकलोकादिभिः ॥ अव्ययैःस्वरादिभिर्लिंगादि
संग्रहैः ॥ लिंगान्यादौयेषांतानितेषांसंग्रहाः ॥ आदिशब्दान्नामानि ॥ लंकाशेफालिकेत्यादीनितैः ॥ तेचवर्गा स्वतंत्रानेत्याह ॥ कीदृशाः वर्गाः ॥ वर्गसंश्रयाः वर्गाः पूर्वोक्तस्वर्गादिवर्गाः
संश्रयाः संबंधिनोयेषांते १ प्रायशोरूपभेदेनअस्मिन्शास्त्रेलिंगनिर्णयः ॥ नह्देवात्रवर्गेपिस्यादितिभ्रमनिरासार्थंव्यापकंलक्षणमाह ॥ स्त्रीदारार्थैरिति ॥ यादृशैः स्त्रीलिंगत्वा

विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि लिंगादिसंग्रहैर्वर्गाः सामान्येवर्गसंश्रयाः ॥ १ ॥
स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतंपदैः गुणद्रव्यक्रियाशब्दास्तथास्युस्तस्यभेदकाः २ ॥

दियुक्तैः स्त्रीदाराद्यैः ॥ आदिना कलत्रादि ॥ पदैर्यद्विशेष्यं स्त्रीदारादिरूपंयथाप्रस्तुतंप्रक्रांतंतस्यविशेष्यस्यभेदकाः व्यावर्त्तकागुणद्रव्यक्रियाविशिष्टाः शब्दास्तथास्युः ॥ विशेष्यस्ययादृ
दृशोलिंगवचनेतादृशलिंगवचनाएवभवेयुरित्यर्थः ॥ तत्रगुणः सुकृतादिस्तद्विशिष्टोयथा ॥ सुकृतिनीस्त्री ॥ सुकृतिनोदाराः ॥ सुकृतिकलत्रं ॥ द्रव्यंदंडादितद्विशिष्टोयथा ॥ दंडिनी
स्त्री ॥ दंडिनोदाराः ॥ दंडिकलत्रं ॥ क्रियावचनादिव्यापारस्तद्विशिष्टोयथा ॥ पाचकास्त्री ॥ पाचकादाराः ॥ पाचकंकुलं २ ७ ७ ७

सुकृती सुकृतमस्यास्ति इनिः ॥ पुण्यवान् पुण्यमस्यास्ति मतुप् ॥ धन्यः धनायअर्हः धनंलब्धेतियुक्तं धन्याधान्यामलक्ष्योः स्याद्धन्यंपुण्यवतित्रिष्विति विश्वमेदिन्यौ अयंभाग्य संपन्नस्य ॥ महेच्छः महतीच्छास्य गोस्त्रियोरितिह्रस्वः ॥ महाशयः महानाशयोस्य आशयस्यादभिप्रायेमानसाधारयोरपि द्वेउदारचित्तंयस्यतस्य ॥ हृदयालुः प्रशस्तंहृदयं यस्य ॥ सुहृदयः शोभनंहृदयमस्यास्ति मित्त्वाविवक्षणान्न हृद्भावः सहृदयइतिवापाठः तत्रहृदयेनसहेति बहुव्रीहिः माणिमात्रस्यनथात्वादत्रप्रशस्तपरत्वंहृदयशब्दस्य द्वे वि शुद्धमनसः हृदयवान् हृदयिक इत्यपि ॥ महोत्साहः महानुत्साहोयस्य ॥ महोद्यमः महानुद्यमोस्य द्वे दुःसाध्य कृत्येपिसाधनपरस्य ३ प्रवीणः प्रकृष्टवीणास्य यद्वावीणयाप्र

सुकृतीपुण्यवान्धन्योमहेच्छस्तुमहाशयः हृदयालुःसुहृदयोमहोत्साहोमहोद्यमः ३ प्रवीणेनि
पुणाभिज्ञविज्ञनिष्णातशिक्षिताः वैज्ञानिकःकृतमुखःकृतीकुशलइत्यपि ४

गायंतिप्रगीयतेवा सत्त्वापेतिण्यंतादच् निपुणः निपुणति पुणकर्मणिशुभे कः अभिज्ञः अभिजानाति ॥ विज्ञः विजानाति उभयत्रापिआनश्चोपेतिकः ॥ निष्णातः ॥ निष्णातेग तर्थेतिक्तः ॥ शिक्षितः अशिक्षिष्ट शिक्षाविद्यापादानेकर्त्तरिक्तः वैज्ञानिकः विज्ञानंबुद्धिः तत्रनियुक्तइतिठक् इत्याद्युक्तं ॥ कृतमुखः कृतंमुखमस्य सर्वेषांकृतमुखत्वाद् त्रकृतशब्दस्यसंस्कृतपरत्वं ॥ कृती कृतंकर्मप्रशस्तमस्य सत्वर्थेइतिः ॥ कुशलः कुशान्लातिकः कौपृथिव्यांशलतिवा शलचलने अच् कौशानयति चालयति राजका र्याणिवा कुशलः शिक्षितेभिज्ञ क्षेमेचसुकृतेचापिपर्याप्तेचनपुंसकमितिविश्वमेदिन्यौ दशप्रवीणस्य ४ ७ ६ ७

खलपूः खलंखलं पुनाति पूञ् पवने क्विप् खलं मस्थानकल्केपितिविश्व ॥ बहुकरः बहु करोति अच् द्वे भूसंमार्जनकृत् ॥ दीर्घसूत्रः दीर्घंसूत्रं व्यवस्थायस्य सूत्रं तंतुव्यवस्थयोरि तिविश्वः ॥ चिरक्रियः चिरेणक्रियायस्य द्वे विलंबेन क्रियासंपादकस्य ॥ जाल्मः जालयति जाल्यतेवा जल अपवारणे बाहुलकात् मः जाल्मस्तु पामरे ऽसमीक्ष्यकारिणिचेतिहेमः ॥ असमी- क्ष्यकारी असमीक्ष्य अविचार्यकर्तुंशीलमस्य द्वे योगुणदोषानविमृश्य करोतितस्य ॥ मंदः क्रियासुमंदो लसः कुंठोवा सत्कुंठइत्येकं ॥ कुंठति कुठिगतिप्रतिघाते आलस्येन १७ कर्मक्षमः कर्मसुक्षमः ॥ अलंकर्मीणः कर्मणेक्रियायै अलंसमर्थः अषडक्षीणेतिखः द्वे क्रियाकरणेसमर्थस्य ॥ क्रियावान् क्रियास्यास्तिमतुप् एकं कार्मः कर्मशीलः कर्मशीलमस्य छत्रादित्वाण् प्रत्ययः स्त्रियांतुकार्मी ताच्छीलीनिङीप् द्वे कर्मफलमनपेक्ष्य प्रवृत्तस्य ॥ कर्मशूरः कर्मणिशूरः ॥ कर्मठः कर्मणिघटते कर्मणिघटोठच् द्वे प्रयत्नेन प्रारब्धकर्मपरिसमापकस्य १८

खलपूः स्याद्बहुकरो दीर्घसूत्रश्चिरक्रियः जाल्मोसमीक्ष्यकारी स्यात्कुंठोमंदः क्रियासु यः १७ कर्मक्षमोलंकर्मीणः क्रियावान्कर्मसूद्यतः सकार्मः कर्म शीलोयः कर्मशूरस्तुकर्मठः १८ भरण्यभुक्कर्मकरः कर्मकारस्तुतत्क्रियः अपस्नातोमृतस्नातआमिषाशीतुशाष्कुलः १९ बुभुक्षितः स्यात्क्षुधितोजिघत्सुरशनायितः

भरण्यभुक् भरण्यंवेतनंभुंक्ते क्विप् कर्मण्यभुगित्यपि ॥ कर्मकरः कर्मकरोति कर्मणिभृतोऽइति द्वे मूल्येन कर्मकुर्वतः यः तत्क्रियः सकर्मकारकः तत्कर्मैवक्रियायस्य कर्मकरोति क र्मण्यण् ॥ अभृतक्रियइत्यर्थः योवेतनंविना कर्मकरोतितस्यैकं ॥ अपस्नातः अपकृष्टस्नानः मृतस्नातः मृतेस्नातः द्वे मृतशुद्धिस्नातस्य ॥ आमिषाशी आमिषमश्नाति अश- भोजने णिनिः ॥ शाष्कुलः शष्कुलीशष्कुलमांसेपि मांसमात्रेपि सामान्यतो नामास्ति शोषइत्यण् स्त्राशीतुशाष्कुलइतिपठंति तत्र पृषोदरादिः शष्कुलः शष्कुलमांसस्यपाणिकेपिशिताशि नीतिहेमः १९ बुभुक्षितः बुभुक्षासंजातास्य इतच् क्षुधितः क्षुधास्तिस्य ॥ जिघत्सुः अत्तुमिच्छुः सनाशंसेतिउः ॥ अशनायितः अशनस्येच्छा अशनायासा संजातास्य चत्वारि बुभुक्षितस्य ॥

परान्नः परस्यान्नंपरान्नंनित्यंमस्य मत्वर्थेअच् ॥ परपिंडादः परस्यपिंडः तमत्ति कर्मण्यण् पिंडमाजीवनइतिधरणिः हेपरान्नजीवनस्य ॥ भक्षकः भक्षयति भक्षअदने ण्वुल् ॥ घस्मरः घस्ति घस्लृअदने क्मरच् ॥ अद्मरः अत्तीतिअद्मक्षणेक्मरच् त्रीणिभक्षणपरस्य २० आद्यूनः आदेवीव् दिवेःक्तः ॥ औदरिकः उदरेप्रसितः औदरिकः उदराट्ठगितिठक् ॥ द्वे विजिगीषाविवर्जितेउत्कर्षेच्छारहिते उदराट्टगाद्यूनइतिठक् ॥ आत्मंभरि. आत्मानंबिभर्ति ॥ कुक्षिंभरिः कुक्षिंबिभर्ति फलेग्रहेइतिसूत्रेउभयोर्निपातनं ॥ द्वे स्वोदरबिभर्तिनस्य पोटभरूइतिख्या० २१ सर्वान्नीनः सर्वेषामन्नानितानि भक्षयति अनुपदेतिखः ॥ सर्वान्नभोजी सर्वेषांअन्नानि सर्वान्नानिभोक्तुंशीलमस्य सप्यजातात्रिविणिनिः द्वे सर्वान्नभक्षकस्य ॥ गृध्नुः गर्धनशीलः गृध्नु

परान्नः परपिंडादोभक्षकोघस्मरोद्मरः २० आद्यूनःस्यादौदरिकोविजिगीषाविवर्जिते उभौत्वात्मंभरिःकुक्षिंभरिःस्वोदरपूरके २१ सर्वान्नीनस्तुसर्वान्नभोजीगृध्नुस्तुगर्धनः लुब्धोभिलाषुकस्तृष्णक्समौलोलुपलोलुभौ २२

अभिकांक्षायां त्रसिगृधीतिक्नुः द्वे आकांक्षाशीलस्य ॥ लुब्धः लुभ्यतिस्म लुभगार्ध्ये गत्यर्थेतिक्तः लुब्धआकांक्षिणि व्याधइतिहेमचंद्रः ॥ अभिलाषुकः अभिलष्यति लषकांतौ लषपतेत्युकञ् ॥ तृष्णक् तृष्यति ञितृषापिपासायां स्वपितृषोर्नजिङ् ॥ तृष्णक् तृष्णजौ तृष्णजः एवंद्वेर्ध त्रीणिअभिलाषशीलस्य पंचापिलुब्धस्येतिकेचित् ॥ लोलुपः गर्हितंलुंपति लुप्लृ छेदने लुपसदेतियङंताद्रच् ॥ लोलुभः भृशंलुभ्यति धातोरेकाचइतियङंताद्रच् लुभगार्ध्ये द्वे अतिलुब्धस्य २२

७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७

सोन्मदः उन्मादेनसहवर्त्तते ॥ सून्मादइत्यपि तत्र सः अतिशयितउन्मादोस्य उन्मदइत्यपिच पाठः तत्र तुउद्गतोमदोहर्षोस्य उन्मदिष्णुः उन्मादशीलः अलंकृञीतीष्णुच् हेउन्माद शीलस्य ॥ अविनीतः नव्यनाथि णीञ्प्रापणेक्तः ॥ समुद्धतः समुद्धंतिस्म हंतेक्तः समुद्धन्यतेस्मोतिवा समुद्धतंससुदीर्णेप्यविनीतेचवाच्यवत् हेदुर्विनीतस्य ॥ मत्तः मद्यते स्म गत्यर्थेतिमदेः क्तः ॥ शौंडः शंडायांपानागारे भवः तत्रभवः शौंडोमत्तेचविख्यातेपिप्पल्यांतुभवेत्स्त्रियामितिविश्वमेदिन्यौ ॥ उत्कटः उद्गतः कटआवरणमावरकोयस्य यद्वा संभोदश्वकटच् उत्कटस्तीव्रमत्तयोरिपिति हेमः ॥ क्षीबः क्षीबतेस्म क्षिबमदे अनुपसर्गेतिनिपातितः क्षीबमृइतिनांतोप्यस्ति चत्वारि मत्तस्य ॥ कामुकः कामयते कमुकांतौ लषेतिउकञ् ॥

सोन्मादस्तून्मदिष्णुःस्यादविनीतःसमुद्धतः मत्तेशौंडोत्कटक्षीबाः कामुकेकमिताऽनुकः २३ कम्रःकामयिताऽभीकः कमनःकामनोभिकः वि

धेयोविनयग्राहीवचनेस्थितआश्रवः २४ वश्यःप्रणेयोनिभृतविनीतप्रश्रिताःसमाः धृष्टेधृष्णग्वियातश्चप्रगल्भःप्रतिभान्विते २५

कमिता णिङभावेतृच् ॥ अनुकः अनुकामयते अभिकामयते अनुकाभिकेतिसाधुः २३ कम्रः रप्रत्ययः ॥ कामयिता कामयतेस्तृच् ॥ अभिकामयते ॥ अभीकः अनुकाभिकेतिसाधुः अभीकः कामुकेक्रूरेनिर्भयेत्रिषुनाकवौ अभिकइत्यपि अभीकोदीर्घमध्यो ह्रस्वमध्यश्च ॥ कमनः अनुदात्तेतिसुच् कमनः कामुकामेभिरूपे ऽशोकपादपे ॥ कामनइत्यपि नवकामुकस्य ॥ विधेयः प्रवृत्तौनिवृत्तौवा विधातुंशक्य अचोयत् ॥ विनयग्राही विनयंगृहीतुंशीलमस्य णिनिः ॥ वचनेस्थितः वचनेतिष्ठतिस्म तत्पुरुषेकृतीत्यलुक् ॥ आश्रवः आशृणोति श्रुश्रवणे पचाद्यच् आश्रवोवचनेस्थिते प्रतिज्ञायांचक्लेशेचेतिहेमः व त्वारिवचनधारिणः २४ वश्यः वशमधीनत्वंगतः वशंगतइतियत् वशमायत्ततायांस्यादितिविश्वः ॥ प्रणेयः प्रकर्षेणनेतुंशक्यः अचोयत् हेवशंगतस्य अत्रविधेयादिषडपिवशंगतस्यवा ॥ निभृतः नितरां अभारि भृञ्भरणे क्तप्रत्ययः ॥ विनीतः व्यनायिइति ॥ प्रश्रितः प्रथममश्राथिश्रुगुंथेः श्रिन्सेवायां निष्ठा त्रयंविनीतस्य ॥ धृष्टः धृष्णोतिस्म ञिधृषाप्रागल्भ्ये निष्ठा ॥ धृष्णक् धृषेश्चेतिनजिङ् धृष्णुरित्यपि धृष्णक् धृष्णजौ धृष्णजः एवंनेयं ॥ वियातः विरुद्धंयातंचेष्टितंयस्य त्रीणिनिर्लज्जस्य ॥ प्रगल्भः प्रगल्भतेगल्भधार्ष्ट्येपचाद्यच् ॥ प्रतिभान्वितः प्रतिभयान्वितः प्रज्ञानवनवोन्मेषशालिनीप्रतिभामतेतिरुद्रः हेप्रत्युत्पन्नमतेः २५

अधृष्टः ॥ शालीनः शालाप्रवेशमर्हति शालीनकौपीनेनिसाधुः हे स लज्जस्य ॥ विलक्षः विशेषेण लक्षयति लक्ष आलोचने अच् ॥ विस्मयान्वितः विस्मयेनाश्चर्येणान्वितः हे परकीय धर्मशीलादौ साश्चर्यस्य ॥ अधीरः नधीरो धैर्यं यस्य ॥ कातरः ईषत्तरति ईषदर्थे चेतिको : कादेशः हे भयक्षुत्पिपासादिव्याकुलस्य ॥ त्रस्तः त्रस्यति त्रसीउद्वेगे क्तः त्रस्नुरित्यपि ॥ भीरुः बिभेति ञिभी भये क्रुः भिकरार्त्तेत्रिलिंगः स्याद्दूरयोषितियोषितीति विश्वमेदिन्यौ ॥ भीत इत्यपि ॥ भीरुकः क्रुकन् बिभेति ॥ भीलुकः क्लुकन् चत्वारि भयशीलस्य २६ आशंसुः आशंसते आङ्शासि इच्छायां सनाशंसेत्युः ॥ आशंसिता ताच्छील्ये तृन् हे वांछितार्थप्राप्तीच्छोः ॥ गृहयालुः गृहयति गृह ग्रहणे आलुच् ॥ गृहीता गृहीतेत्यपि तृच् हे ग्रहणशीलस्य ॥ श्रद्धया आस्तिक्यबुद्ध्या युक्त-

स्याद् धृष्टे तु शालीनो विलक्षो विस्मयान्विते अधीरे कातरस्त्रस्ते भीरुभीरुकभीलुकाः २६ आशंसुराशंसितरि गृहयालुर्ग्रहीतरि श्रद्धालुः श्रद्धया युक्ते पतयालुस्तु पातुके २७ लज्जाशीलेऽपत्रपिष्णुर्वन्दारुरभिवादके शरारुर्घातुको हिंस्रः स्याद्वर्द्धिष्णुस्तु वर्द्धनः २८

स्तत्र श्रद्धालुरित्युच्यते ॥ श्रद्धाति आलुच् ॥ पतयालुः पतयति तच्छीलः पतगतौ वा आलुच् ॥ पातुकः लषपतेत्युकञ् २७ लज्जाशीलः लज्जाशीलमस्य ॥ अपत्रपिष्णुः अपत्रपते इष्णुच् हे लोकलज्जायुतस्य ॥ वंदारुः वंदते तच्छीलः वदि अभिवादनस्तुत्योः शृवंद्योरारुः ॥ अभिवादकः अभिवादयति ण्वुल् हे वंदनशीलस्य ॥ शरारुः शृणाति तच्छीलः शॄ हिंसायां ॥ घातुकः उकञ् हंति ॥ हिंस्रः हिनस्ति हिसि हिंसायां नमिकंपीति रः हिंस्राकाकादनीमांस्योः स्त्रियां ॥ स्याद्घातुकेन्यवदिति विश्वमेदिन्यौ त्रीणि हिंसाशीलस्य ॥ वर्द्धिष्णुः वर्द्धते तच्छीलः वृधु वृद्धौ इष्णुच् ॥ वर्धनः अनुदात्तेति युच् ॥ वर्द्धनः छेदने वर्द्धो वर्द्धनी तु गलंतिका हैमः हे वर्द्धनशीलस्य २८ ७ ७ ७

उत्पतिष्णुः उत्पततितच्छीलः पत्लृगतौ ॥ उत्पतिता हे उत्पतनशीलस्य अत्र येत्रिन्निष्णुचस्नुक्नुक्माजित्यादयः प्रत्ययास्तेतच्छीलतद्धर्मतत्साधुकारिषुबोद्धव्याः ताच्छील्ये प्रयोगः प्रायेण ॥ अलंकरिष्णुः अलंकरणशीलः ॥ मंडनः मंडनशीलः मडिभूषायां क्रुधमंडार्थेभ्यश्चेति युच् हे अलंकरणशीलस्य ॥ भूष्णुः चात्स्नुः भवनशीलः ॥ भविष्णुः ॥ भविता त्रीणि भवनशीले ॥ वर्तिष्णुः वर्त्तनशीलः इष्णुच् ॥ वर्तनः वृतुवर्त्तने अनुदात्तेतश्चेति युच् हे वर्त्तनशीलस्य २९ निराकरिष्णुः निराकरणशीलः ॥ क्षिप्नुः क्षेपणशीलः क्षिपप्रेरणे क्रुक्षिष्णुमिति केचित् हे निराकरणशीलस्य ॥ सांद्रस्निग्धः मेदुरः स्यात् ॥ सांद्रो घनः सचासौ स्निग्धश्च मदनशीलः जिमिदास्नेहने घुरच् एकं ॥ ज्ञाता जानाति तृन् ॥ विदुरः वेदनशीलः विदिभिदिच्छिदेः कुरच् ॥ विंदुः विंदुरिच्छुरिति साधुः त्रीणि ज्ञानशीलस्य ॥ विकाशी विकसति कसगतौ त्रौकसे निघिनुण् तालव्यांतोपि ॥ विकस्वरः विकसनशीलः वरच् विश्वकरइत्यपि विकाराःस्फुटनेव्यक्तावितिदन्त्यांने घरणि. हे विकासशीले ३० विसृत्वरः विसरणशीलः सृगतौ इण्नशजीतिक्वरप्तुक् ॥ विसृमरः स्मरच् ॥ प्रसारी प्रसरणशीलः घिनुण् ॥ विसारी विसारोस्यास्ति इनिः चत्वारि प्रसारणशीले ॥ सहिष्णुः सहनशीलः षहमर्षणे इष्णुच् ॥ सहनः अनुदात्तेतिश्च युच् ॥ क्षंता क्षमणशीलः क्षमूषसहने तृन् तितिक्षुः तितिक्षणशीलः सन्नंतादुः ॥ क्षमिता तृन् पक्षे इट् ॥ क्षमी घिनुण् इति षट् क्षमाशीले ॥ ३१

उत्पतिष्णुस्तूत्पतितालंकरिष्णुस्तु मंडनः भूष्णुर्भविष्णुर्भविता वर्तिष्णुर्वर्तनः समौ २९ निराकरिष्णुः क्षिप्नुः स्यात्सांद्रस्निग्धस्तु मेदुरः ज्ञाता तु विदुरो विंदुर्विकासी तु विकस्वरः ३० विसृत्वरो विसृमरः प्रसारी च विसारिणि सहिष्णुः सहनः क्षंता तितिक्षुः क्षमिता क्षमी ३१

क्रोधनः क्रोधनशीलः क्रुधकोपे क्रुधमंडेतियुच् अमर्षणः ॥ नमर्षणशीलः प्राग्वत् ॥ कोपी अवश्यंकुप्यति आवश्यकेणिनिः त्रीणिक्रोधनस्य ॥ चंडः चंडने चंडिकोपे पचाद्यच् चंडस्त्वयमदासे
तिकोपने ॥ तीव्रेदैत्यविशेषेनचंडीतुशिवयोषिति चंडाधनहरीशंखपुष्प्योरितिहेमचंद्रः ॥ अत्यंतकोपनः अत्यंतंकुप्यति द्वे अतिक्रोधनस्य क्रुधेनियुच् ॥ जागरूकः जागरणशीलः जागृनिद्रा
क्षये जागर्तेरूकः ॥ जागरिता तृन् द्वे जागरणशीले ॥ घूर्णितः घूर्णतेस्म घूर्णभ्रमणे गत्यर्थेक्तः घूर्णाजातास्येतिवा इतच् ॥ प्रचलायितः प्रचलइवाचरति क्यङ् प्रचलायाजातास्येतिवा प्रच
लायतेस्म गत्यर्थेतिक्तः द्वे संजातघूर्णस्य ३२ स्वप्नक् स्वपनशीलः स्वपिइतिनजिङ् ॥ शयालुः शयनशीलः शीङ्स्वप्ने शीङ्ग्रोवाच्यइत्यालुच् शयालुःस्यादजगरेनिद्राशीलेचकुंजरे इतिविश्वमेदिन्यौ
निद्रालुः निद्राशीलः द्राकुत्सायांगतौआलुच त्रीणिनिद्राशीलस्यनिद्राणः स्वप्नक्शयालुर्निद्रालुर्निद्राणशयितौसमौ क्तसंयोगादिरितिनत्वं निद्रातिस्मानिद्रितइत्यपि इतच् ॥ शयितः शेतेस्मक्तः द्वे निद्रांप्राप्त

क्रोधनोमर्षणःकोपीचंडस्त्वत्यंतकोपनः जागरूकोजागरिताघूर्णितःप्रचलायितः ३२ स्वप्नक्शयालुर्निद्रालु
र्निद्राणशयितौसमौ पराङ्मुखःपराचीनःस्यादवाङप्यधोमुखः ३३ देवानंचतिदेवद्र्यङ्विष्वद्र्यङ्विश्वगंचति ॥
यःसहांचतिसध्र्यङ्ससतिर्यङ्यस्तिरोंचति ३४

स्य ॥ पराङ्मुखः परांचत्यनभिमुखोभवति अंचुगतिपूजनयोः परापूर्वकात्क्विन् पराचीनः पराङ्मुखस्यविभां
चेरितिखः द्वे विमुखस्य ॥ अवाङ् अवांचत्यधोमुखीभवति अवाङ् क्विन्नंतं अवांचौ अवांचः एवमूह्यं ॥ अधोमुखः अधोमुखंयस्य द्वे ३३ देवद्र्यङ् देवानंचतिगच्छतिपूजयतिवा क्विनिअन्या
न्यादेशः एकं चांतं स्त्रियांतुदेवद्रीची ॥ विष्वद्र्यङ् विश्वक्समंतात्अंचतिगच्छति विश्वद्र्यङ् इतितालव्यमध्योपि स्त्रियांविष्वद्रीची चांतं एकं सध्र्यङ् सहांचतितुल्यंगच्छति एकं
सध्र्यङ् सध्र्यंचौ सध्र्यञ्चः एवमुन्नेयं सर्वत्रअन्येःक्विनिअन्यादेशःस्त्रियांतुसध्रीची तिर्यङ् तिरोवक्रंअंचति क्विन्मात्रं एकं ३४ ७ ७ ७

वदः वदति वदव्यक्तायांवाचि ॥ वदावदः अतिशयेनवदति पचाद्यच् ॥ वक्ता वक्ति वचपरिभाषणे तृन् वक्तातुपंडितेपिस्याद्वाग्मिन्याप्यभिधेयवदितिविश्वः त्रीणिवक्तुः ॥ वागीशः वाचामीशः वाक्पतिः वाचांपतिः द्वे पटुवक्तुः वाचोयुक्तिपटुः वाचोयुक्तिः सयुक्तिकत्वं तत्रपटुः वाक्दिक्पश्यद्भ्यइति अलुक् ॥ वाग्मी प्रशस्तावागस्य वाचोग्मिनिः वाग्मीपटौसुराचार्येइतिविश्वमेदिन्यौ द्वेनैयायिकस्य ॥ वावदूकः कुर्वादिपाठादूकः ॥ अतिवक्ता अतिवक्ति साधुकारिण्युपसंख्यानंइतिआक्रेस्तच्छीलेतिसूत्रांत्यपदार्थः द्वे बहुभाषिणि ३५ जल्पाकः जल्पति जल्प व्यक्तायांवाचि षाकन् ॥ वाचालः ॥ वाचाटः आलजाटचौबहुभाषिणि इतिसाधु ॥ बहुगर्ह्यवाक् बहुगर्ह्यावाग्यस्य जल्पाकिषिस्त्वास्त्रीयांङीष् ॥ चत्वारिबहुगर्ह्यभाषिणः ॥ दुर्मुखः दुष्टं निंदितंमुखंयस्य दुर्मुखः कपिभिन्नांगभिदोर्नासुखरेत्रिष्विति विश्वः ॥ मुखरः निंदितंमुखमस्य मत्वर्थेरः मुखशद्बोत्रलक्षणयावचनपरः ॥ अबध्दमुखः नबध्दंनियमितंमुखमस्य त्री

वदोवदावदोवक्तावागीशोवाक्पतिःसमौ वाचोयुक्तिपटुर्वाग्मीवावदूकोतिवक्तरि ३५ स्याज्जल्पाकस्तुवाचालोवाचाटोबहुगर्ह्यवाक् दुर्मुखेमुखराबध्दमुखौशक्तुःप्रियंवदे ३६ लोहलःस्यादस्फुटवाग्गर्ह्यवादीतुकद्वदः समौकुवादकुचरौस्यादसौम्यस्वरोस्वरः ३७

ण्यप्रियवादिनः ॥ शक्तुः शक्नोति वक्तुमिति शक्तेस्तौकः ॥ प्रियंवदः प्रियंवदति प्रियवशेवदः खच् मुम् शक्तइतिस्वामी शक्तइतिसर्वधरः द्वे प्रियवक्तरि ३६ लोहलः लोहंलाति कमत्ययः लोहलःशृंखलाधारा । व्यक्तवाचिनित्रिष्वितिविश्वहेमचंद्रौ ॥ अस्फुटवाक् नस्फुटावागस्य ॥ द्वे अस्फुटवादिनि ॥ गर्ह्यवादि गर्ह्यंवदति णिनिः ॥ कद्वदः कुत्सितंवदति रथवदयोश्चेति कत् द्वे कुत्सितवादिनः ॥ कुवादः कुत्सितंवदति बहुव्रीहिर्वा ॥ कुचरः कुत्सितंचरति अच् द्वे दोषकथनशीलस्य ॥ असौम्यस्वरः असौम्योरुक्षःस्वरोयस्य ॥ अस्वरः अप्रशस्तःस्वरोयस्य द्वे काकादिवद्रूक्षस्वरस्य ३७

रवणः रवणशीलः रुशब्दे उभयत्र चलनेतियुच् ॥ शब्दनः शब्दनशीलः द्वेशब्दशीलस्य ॥ नांदीवादी नांदीवदनशीलः णिनिः ॥ नांदीकरः नांदीकरोतिवदति टप्रत्ययः तदेवाह आशीर्वचनसंयुक्तास्तुतिर्यस्मात्प्रवर्तते देवद्विजनृपादीनांतस्मान्नांदीतिकीर्तितइतिरभसः द्वेस्तुतिविशेषवादीनः नाटकादौमंगलार्थंमेयादिवादनशीलस्येत्यर्थः ॥ जडः जलति जलघातने अच् डलयोरभेदः इष्टंवानिष्टंवास्त्रयदुःखंवानचेहयोमोहात् विंदति परवशगः सभवेदिहजडसंज्ञकःपुरुषः ॥ अज्ञः नजानाति इगुपधेतिकः द्वेअत्यंतमूढस्य यो वक्तुंश्रोतुंच शिक्षितोनस्यात्स एडमूकः एडोबधिरश्चासौमूकश्च पाठांतरेतु नास्त्येडोमूकोस्मादित्यर्थः त्रिलिंगोनेडमूकः स्याच्छठेवाग्श्रुतिवर्जितइतिरभसः एकं ३८ तूष्णींशीलः

रवणःशब्दनोनांदीवादीनांदीकरःसमौ जडोज्ञएडमूकस्तुवक्तुंश्रोतुमशिक्षिते ३८
तूष्णींशीलस्तुतूष्णीकोनग्नोवासादिगंबरे निष्कासितोऽवकृष्टःस्यादपध्वस्तस्तुधिक्कृतः ३९

तूष्णींशीलंयस्य शीलेकोमलोपश्चेतिसाधुः ॥ तूष्णीकः द्वेमौनशीलस्य ॥ नग्नः नजतेस्म ओनजीव्रीडेक्तः नग्नोवंदिक्षपणयोःपुंसित्रिषुविवाससीतिविश्वः ॥ अवासाः नवासोस्य ॥ दिगंबरः दिगेवांबरंयस्य दिगंबरःस्यात्क्षपणे धनेतमसिशंकरे त्रीणिनग्नस्य ॥ निष्कासितः निष्कास्यतेस्म कसगतौ ण्यंतात्क्तः निष्कासितइत्यपि ॥ अवकृष्टः अवकृष्यतेस्म कृषविलेखनेक्तः द्वेनिर्गमितस्य ॥ अपध्वस्तः अपध्वस्यतेस्म ध्वंसुअधःपतनेक्तः अपध्वस्तःपरित्यक्तेविदितेप्यवचूर्णिते ॥ धिक्कृतः धिगितिकृतः द्वे निर्भर्त्सितस्य ३९ ७ ७ ७ ७ ७ ७ ७ ७ ७ . ७ ७

आत्तगर्वः आत्तोगर्वोयस्य आत्तगंधइत्यपिपाठांतरं गंधोगंधकआमोदेलेशेसंबध्धगर्वयोरितिविश्वः गंधोगर्वोलवोपिचेतित्रिकांडशेषः॥ अभिभूतः अभिभूयतेस्म क्तः द्वे भग्नदर्पस्य चत्वारोधिपर्यायाइत्येके॥ दापितः दाप्यतेस्म दापयतीति॥ साधितः साध्यतेस्म साधसंसिध्दौ द्वे धनादिकं प्रदापितस्य प्रदापितस्यधनादेर्वा॥ प्रत्यादिष्टः प्रत्यादिश्यतेस्म दिशअतिसर्जने क्तः निरस्तः निरस्यतेस्म असुक्षेपणे क्तः निरस्तः प्रेषितशरेसंत्यक्तेत्वरितोदिते निष्ठ्युते प्रतिहतेचेतिहेमः॥ प्रत्याख्यातः प्रत्याख्यायतेस्म ख्यामकथने चक्षिङ्वा॥ निराकृतः क्तः चत्वारिनिराकृतस्य ४० निकृतः न्यकारि कृञः क्तः निकृतंविप्रलब्धेस्यान्छठेत्रिषितिविश्वमेदिन्यौ॥ विप्रकृतः द्वे विवर्णीकृतस्य॥ विप्रलब्धः

आत्तगर्वोभिभूतःस्याद्दापितःसाधितःसमौ प्रत्यादिष्टोनिरस्तःस्यात्प्रत्याख्यातोनिराकृतः ४० निकृतःस्याद्विप्रकृतोविप्रलब्धस्तुवंचितः मनोहतःप्रतिहतःप्रतिबद्धोहतश्चसः ४१ अधिक्षिप्तःप्रतिक्षिप्तोबद्धेकीलितसंयतौ आपन्नआपन्नःस्यात्कांदिशीकोभयद्रुतः ४२

विप्रलभ्यतेस्म वंचुगतौ॥ वंचितः वंच्यतेस्म क्तः द्वे वंचतांगतस्य॥ मनोहतः मनोहतंयस्य॥ प्रतिहतः प्रतिहन्यतेस्म हंतेः क्तः प्रवेत्प्रतिहतंद्विष्टेप्रतिस्खलितरुद्धयोः॥ प्रतिबध्दः प्रतिबध्यतेस्म बंधबंधने॥ हतः हन्यतेस्म चत्वारिमनसिहतस्य हतमनोभंगस्येत्यर्थ ४१ अधिक्षिप्तः अधिक्षिप्यतेस्म क्षिपप्रेरणे क्तः अतिक्षिप्तः प्रणिहितेक्कासितेभर्त्सितेत्रिषितिविश्वहेमचंद्रौ॥ प्रतिक्षिप्तः प्रतिक्षिप्तंवारितेस्यात्प्रेषितेपंचकेत्रिषित्युक्तत्वात् द्वे कृताक्षेपस्य कस्यचिच्छौर्यादिकंप्रतिस्पर्धमानस्य दुर्वचनमधिक्षेपइतिराजमुकुटः॥ बध्दः बध्यतेस्म बंधबंधने॥ कीलितः कील्यतेस्म कीलबंधने॥ संयतः संयम्यतेस्म यमउपरमे क्तः त्रीणिरज्ज्वादिनानिबध्दस्य॥ आपन्नः आपद्यतेस्म पदगतौ इमेसर्वेक्तप्रत्ययांताः आपन्नः प्रापद्विपत्सेपिवाच्यलिंगकः॥ आपन्नासः आपदं प्राप्तः द्वे आपदंप्राप्तस्य॥ कांदिशीकः कांदिशंयामीत्याह तदाहेतिमाशद्धादिभ्यइतिठक् पृषोदरादिः ४२ ७ ७ ७ ७ ७ ७ ७

आक्षारितः आक्षार्यतेस्म क्षरसंचलने ण्यंतात्क्तः आक्षारो मैथुनं प्रत्याक्रोशोस्य इति वा ॥ क्षारितः क्षारितः स्नाविनेक्षारै रभिशस्तोपि च त्रिषु ॥ अभिशस्तः अभिशस्यतेस्म शसुहिंसा यां क्तः त्रीणि मैथुननिमित्तं मिथ्यादूषितस्य ॥ संकसुकः संकसतीति कस गतौ उकन् ॥ अस्थिरः नस्थिरः द्वे चलस्वभावस्य ॥ व्यसनार्त्तः व्यसनेनार्त्तः ॥ उपरक्तः उपरज्यतेस्म रं- जरागेक्तः ॥ उपरक्तो व्यसनार्ते राहुग्रस्तेंदुसूर्ययोरिति विश्वः द्वे व्यसनपीडितस्य ॥ विहस्तः विक्षिप्तः हस्तो यस्य व्याकुलः कुड धातोरिगुपेति कः ४३ विक्लवः विक्लवते क्लुङ् गतौ अच् विह्वलः विह्वलतीति ह्वल चलने अच् द्वे शोकादिना गात्रभंगं प्राप्तस्य ॥ विवशः विरुद्धं वष्टि वश कांतौ अच् विवशास्त्रिषु वश्यात्मादिष्टदुष्टधियोरपि ॥ अरिष्टदुष्टधीः अरिष्टेन दुष्टा धीर्यस्य द्वे आसन्नमरणस्

आक्षारितः क्षारितोभिशस्ते संकसुकोस्थिरे व्यसनार्त्तोपरक्तौ द्वौ विहस्तो व्याकुलौ समौ ४३ विक्लवो विह्वलः स्यात्तु विवशो ऽरिष्टदुष्ट- धीः कश्यः कशार्हे सन्नद्धे त्वाततायी वधोद्यते द्वेष्ये त्वक्षिगतो वध्यः शीर्षच्छेद्य इमौ समौ विष्यो विषेण यो वध्यो मुसल्यो मुसलेन यः ४५

चित्तलक्षणेन दूषितमतेः ॥ कश्यः कशामर्हति दंडादित्वाद्यः कश्यं कशार्हम् यद्योनित्यक्तत्वात् ॥ कशार्हः कशां तेजं स्मर्हति अर्ह इत्यच् द्वे ताडनार्हस्य ॥ सन्नद्धे सन्नह्यतिस्म णह बंधने क्तः ॥ वधोद्यते वधे उद्यतः तत्र आततायी त्येकं आततं यथा तथा ऽयितुं शीलमस्य अय गतौ सुप्यजातौ णिनिः ४४ द्वेष्यः द्वेष्टुमर्हः द्विष अप्रीतौ ण्यत् ॥ अक्षिगतः अक्षिविषयं गतः शाक पार्थिवादिः द्वे द्वेषार्हस्य ॥ वध्यः वधमर्हति दंडादित्वाद्यः यद्वा हंतुमर्हः हतो वध चेति यत् शीर्षच्छेद्यः ॥ शीर्षस्य च्छेदस्तमर्हति शीर्षच्छेदाद्यच्चेति यत् द्वे शिरच्छेदार्हस्य वध्यः वधमर्हति ॥ यो विषेण वध्यः हंतव्यः स विष्य इत्येकं नौवयोधर्मेति यत् यः मुसलेन वध्यः स मुसल्यः दंडादिः एकं ४५

अहंकारवान् अहंकारोस्यास्ति मतुप् अहंशुभमितिमांतमव्ययं ॥ अहंयुः अहंविद्यतेयस्य अहंशुभेनियुस् द्वेअहंकारिणः ॥ शुभंयुः शुभमस्यास्ति युस् ॥ शुभान्वितः शुभेनान्वितः ॥ ईशुभयुक्तस्य मातापित्रादि दृष्टकारणनिरपेक्षाअदृष्टसहकृतेभ्योगुणेभ्योजाताये देवास्तेदिव्योपपादुकाउच्यंते उपपद्यंते पदगतौ उकञ् द्विविभवाः झूमेनियत् तेचतेच नारकव्याद्‍ लयेदिव्यपदं एकं ॥ नृगवाद्याः नाचगौश्चाद्यौयेषां आद्यशब्देनखराश्वादीनांग्रहणं ॥ जरायुजाः स्युः जरायोर्गर्भाशयाज्जाताः एकं ५० ॥ कृमिदंशाद्याः कृमिश्चदंशश्चाद्यौयेषां आद्यशब्देनमशकमत्कुणादिग्रहणं ॥ स्वेदजाः स्युः स्वेदहेतुत्वादूष्मास्वेदः ततोजाताः स्वेदजाः ॥ पक्षिसर्पादयः पक्षीचसर्पश्चआदीयेषां आदिशब्दात् नक्रमत्स्यपिपीलिकादयः ॥ अंडजाः अंडेभ्योजाताः एकं इतिप्राणिवर्गः ॥ तरुगुल्माद्याः तरुश्चगुल्मश्चाद्यौयेषां आद्यशब्देनतृणौषधिलतादिग्रहः ॥ उद्भिदः उच्यंते एकं शुक्लउद्भिदंति भिदिरविदारणे द्वौ उद्भि त्पर्यायावाह ॥ उद्भिज्जं उद्भिदोजातं ॥ उद्भिदं उद्भिज्जमि इगुपेतिकः ५१ ७ ७ ७ ७ ७

अहंकारवानहंयुः शुभंयुस्तुशुभान्वितः दिव्योपपादुकादेवानृगवाद्याजरायुजाः ५० स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोंडजाः इतिप्रा णिवर्गः उद्भिदुस्तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भिदम् ५१

सुंदरं सुष्ठ्वियते ह्यादरे ग्रहहद्भिनिअप् यद्वा सुउनत्तिच्चित्तं द्रवीकरोति उंदादेदने बाहुलकादरः शकंध्वादिः क्रियांगौरादिः ॥ रुचिरं रोचते रुचदीप्तावभिप्रीतौच ॥ किरच् ॥ चारु चरति चित्ते चरगतौ अुण् तदुक्तं विश्वप्रकाशे चारुर्बृहस्पतौ पुंसि शोभनेत्वभिधेयवदिति ॥ सुषमं सुशोभनं समं सर्वमस्य सुविनिर्दुर्भ्य इति त्वं ॥ साधु साधेरुण् तदुक्तं हेमचंद्रे साधुर्जैनेमुनौ वार्धुषिके सज्जनरम्ययोरिति ॥ शोभनं शोभते शुभदीप्तौ अनुदात्तेतियुच् शोभनं योगभेदेनासुंदरे वाच्यलिंगक इति कोशांतरात् ॥ कांतं कम्यतेस्म कमु कांतौ कमत्ययः यद्वा कनतिस्म कनीदीप्त्यादौ क्तः तदाह कांतास्यात्त्रियंगौस्त्री शोभनेभिधुनाधवे लोहेचचंद्रसूर्यायः पर्यायाच्च शिलासुचेतिविश्वमेदिन्यौ ॥ मनोरमं मनोरम

**सुंदरंरुचिरंचारुसुषमंसाधुशोभनं कांतंमनोरमंरुच्यंमनोज्ञंमंजुमंजुलं ५२ तदासेचनकंतृप्तेर्नास्त्यंतोयस्यदर्शनात् अभीष्टे ऽभी-**
**प्सितंहृद्यंदयितंवल्लभंप्रियं ५३**

यति रमक्रीडायां ण्यंतात्कर्मण्यण् मनोहरमितिपाठेतु मनोहरति ॥ रुच्यं रोचते रुच्यतेवा राजसूयेतिसाधुः ॥ मनोज्ञं मनसाजानाति इगुपधेतिकः मंजु मज्यते मजिध्वनौ इति सौत्रोधातुः बाहुलकादुः ॥ मंजुलं मंजुमंजुत्वं लाति कः मंजुलंचजलांतर इत्यकत्वात् तदुक्तंच हेमे रम्ये कुंजेमंजुलस्तु दात्यूह इति द्वादशसुंदरस्य ० ५२ यस्यदर्शनात् तृप्तेरंतोनास्ति तदासेचनकं स्यात् असेचनकमपि नसिच्यतेमनोत्र षिचक्षरणे ॥ अभीष्टं अभीतइष्यतेस्म इषइच्छायां क्तः ॥ अभीप्सितं अभ्याप्तुमिष्यतेस्म आप्लृव्याप्तौ क्तः ॥ हृद्यं हृदिप्रियं यत् तदुक्तं विश्वप्रकाशे हृद्यं धवलजीरेनत्वस्त्रियेत्वद्रुवेपिच वशाकृद्दर्मंत्रेनत्वद्यो हृध्यारव्यभेषज इति ॥ दयितं दय्यतेस्म दयदानादौ क्तः वल्लभं वल्यते बल्लतेवा वल्लसंवरणे अभच् तदुक्तं विश्वप्रकाशे वल्लभोदयिते ध्यक्षे सल्लक्षण तुरंगभइति ॥ प्रियं प्रीणाति प्रीञ्तर्पणे तदुक्तं हेमे प्रियोवि

ध्यौषधे त्वद्ये धवे इति षडभीष्टस्य ५३ ७ ७

व्याघ्रादयएतेशब्दाउत्तरपदे ॥श्रेष्ठार्थगोचराः श्रेष्ठार्थोगोचरोविषयोयेषांते क्वचिद्वाचकाइतिपाठः यथापुरुषव्याघ्रः पुरुषः व्याघ्रइव पुरुषश्रेष्ठइत्यर्थः आद्यशब्देनसोमादीनांग्रहणं न यथा नृसोमः व्याघ्रादिराकृतिगणः उपमितंव्याघ्रादिभिःसामान्यप्रयोगे इतिविशेष्यस्यपूर्वनिपाते व्याघ्रादेरुत्तरपदत्वं ५९ अप्राग्र्यं प्राग्र्यात्भिन्नं प्रधानादन्यत् ॥ हृयहीने ह्राभ्यांहीने न्यपमप्रधानस्य ॥ विशंकटं वेःशंकटच् ॥ पृथु प्रथने प्रथप्रख्याने तदुक्तंहेमचंद्रे पृथुर्विशालेमृपालेवाषिकाकृष्णाजीरयोरिति ॥ बृहत् बर्हति बृहद्वृधौ अतिप्रत्ययः ॥ विशालं शालच् विशालःखिंद्रवारुण्यामुज्जयिन्यांतुयोषिति नृपरक्षभिदोःपुंसिपृथुलेत्वभिधेयवदितिविश्वमेदिन्यौ ॥ पृथुलं पृथुत्वमस्यास्ति मत्वर्थे लच् पृथुलंलातिवा ॥ महत् महति महपूजायां वर्तमानेइतिसूत्रेनिपातितः ५० वड्रं वलते वलसंवरणेसंचरणेचरकृउलयोरेकत्वस्मरणं ॥ उरु ऊर्णोति ऊर्णुञ् आच्छादने नुलोपेन्हस्वः ॥ विपुलं विपोलति पुलमहत्वे इगुपेति

**स्युरुत्तरपदेव्याघ्रपुंगवर्षभकुंजराः सिंहशार्दूलनागाद्याःपुंसिश्रेष्ठार्थगोचराः ५९ अप्राग्र्यंद्वयहीनेद्वेअप्रधानोपसर्जने विशंकटंपृथुबृहद्विशालंपृथुलंमहत् ६० वड्रोरुविपुलंपीनपीव्नीतुस्थूलपीवरे स्तोकाल्पक्षुल्लकाःसूक्ष्मंश्लक्ष्णंदभ्रंकृशंतनु ६१**

कः तदुक्तंविश्वे विपुलंपृथुलेगाधेमेरुपश्चिमभूधरेइति नवचितीर्णस्य ॥ पीनं प्यायतेस्म ओप्यायीवृद्धौ क्तेनत्वं ॥ पीव प्यायते प्यैङ्वृद्धौ क्वनिप्संप्रसारणं स्त्रीपीवरीस्यात् ॥ स्थूलं स्थूलयति स्थूलबृंहणे अच् तदुक्तंहैमे स्थूलः पीनेजडेइति पीवरं प्यायते निपातनः तदुक्तंहेमचंद्रे पीवरःस्थूलकूर्मयोरिति चत्वारिस्थूलस्य ॥ स्तोकः स्तुच्यते ष्टुचप्रसादे घञ् ॥ अल्पः अल्पंते चार्यते अलभूषणादौ पः ॥ क्षुल्लकः क्षोदनं क्षुदिरसंपेषणे संपदादिः लातेःकः परसवर्णः स्वार्थेकः इत्याद्युक्तं तदाह क्षुल्लकस्त्रीषुनीचेल्पेइति श्लक्ष्णं श्लिष्यते श्लिष्यतिवा श्लिषआलिंगने श्लिषेरचोपधायाइतिसाधुः सूक्ष्मं सूच्यते सूचपैशून्ये सूचेःस्मन् सूक्ष्मंस्यात्कतके ऽध्यात्मेपुंस्यणौभिदुचाल्पकइतिविश्वेउक्तं ॥ दभ्रं दभ्यते दंभुदंभने रक् ॥ कृशं कृश्यतेस्म कृशतनूकरणे अनुपतिसाधुः ॥ तनु तन्यते तनुविस्तारे उः तदुक्तंविश्वमेदिन्योः तनुःकायेत्वचिस्त्रीस्यात्त्रिषल्पेविरले कृशेइति. ६१

मात्रा मीयते माङ्माने ष्ट्रन्टाप् मात्रंन्ववधृतौस्वार्थेकालेल्येमात्रापरिच्छदे अक्षरावयवेद्रव्येमानेल्पेकर्णभूषणे कालेनूनेचेतिहैमः ॥ त्रुटिः त्रुट्यते त्रुटछेदने इन् किंत्
॥ लवः लूयते लूञ् छेदने अप् ॥ लेशः लिशति लिशगतौ लिश्यतेवा अच् घञ् वा ॥ कणः कणति कणनिमीलने अच् कणोधान्यांशलेशयोरित्यल्पत्वात् कणाजीरकपि
प्पल्योरितिहैमचंद्रश्च ॥ अणुः अणति अण्यतेवा अणशब्दे अणश्चेत्युः अणुव्रीह्यल्पयोरितिहैमः लवादयः पुंसि तत्रस्त्रियोमात्रात्रुटीश्च त्रुटीतिङीबंतोपिक्वचित् एका
दशासूक्ष्मस्य स्तोकाद्यणवंता एकार्थाइतिकेचित् शेषंविशेषणनिघ्नं ॥ अल्पिष्ठं अतिशयेनअल्पं ॥ अल्पीयः ॥ कनीयः अतिशयेनअल्पं कनिष्ठं इत्यपि ॥ अणीयः अतिशा
येनअणुः ईयसुन् चत्वार्यत्यल्पे ६२ प्रभूतं प्रभवतिस्म क्तः तदुक्तंहैमे प्रभूतस्तु उद्गते प्राज्यइति ॥ प्रचुरं प्रचोरति चुरस्तेये णिजभावेइगुपधेतिकः ॥ प्राज्यं प्रनीयते अज

स्त्रियांमात्रात्रुटिःपुंसिलवलेशकणाणवः अत्यल्पेल्पिष्ठमल्पीयः कनीयोणीयइत्यपि ६१ प्रभूतंप्रचुरंप्राज्यमदभ्रंबहुलंबहु ॥
पुरुहूःपुरुभूयिष्ठंस्फारंभूयश्चभूरिच ६२

गतौ ण्यत् यद्वा प्रकर्षेणाज्यतेकाम्यते अज्यूञ्व्यक्त्यादौ क्यप् ॥ अदभ्रं दभ्रादन्यत् नञ्समासः नलोपः बहु
लं बहून्लाति बहुलानीलिकायांस्यादेलायांत्रिषुपिति कृत्तिकासुस्त्रियांभूम्निविहायसिनपुंसकं पुंस्यग्नौकृष्णपक्षेचवाच्यवत्प्राज्यकृष्णयोरितिविश्वमेदिन्यौ ॥ ब
हु बहते वहिवृद्धौ उः नलोपः तदुक्तंविश्वे बहुस्त्र्यादिसंख्यासुविपुलेत्वभिधेयवदिति ॥ पुरुहं पुरून्हंतिगच्छति डः यद्वा पुरून्जहाति जिहीतेवा कः पुरुहू इत्यपि
पुरुहः पुरुव्हे पुरुव्हः एवं पुरुहुत्वक्लीबे पुरु पिपर्तिपूर्यतेवा पृपालनपूरणयोः कुप्रत्ययः उत्वं तदुक्तंहैमे पुरुः प्राज्येभिधेयवत् पुंसिस्याद्देवलोकेचनृपभेदपरागयोरिति
॥ भूयिष्ठं अतिशयेनबहु बहोर्लोपइतिसाधुः ॥ स्फारं स्फायते स्फायीवृद्धौ रक्पलोपः स्फिरमित्यपिपाठः तदुक्तंहेमचंद्रे स्फारस्तत्करकादीनांबहुधेविपुलेपिचेति ॥ भूयः
बहुशब्दात्तद्ईयसुन् ईलोपः प्रकृतेर्भूआदेशः भूरिः क्रिन् अतिशयेनबहु भूयशद्वविग्रहः तदुक्तंहैमे ॥ भूरिस्यात्प्रचुरेस्वर्णेइति द्वादशबहुलस्य ६२

दवीयः अत्यंतंदूरं ईयसुनइष्ठन् ॥ दविष्ठं ॥ सुदूरं सुतरांदूरं नयंअत्यंतदूरस्य ॥ दीर्घं दृणाति दृविदारणे ॥आयतं आयम्यतेस्म क्तः आयततेवा अच् द्वेदीर्घस्य ॥ वर्तुलं उलच् निस्तलं निर्गततलमस्य तदुक्तंविश्वे निस्तलंवर्तुलेचलइति ॥ वृत्तं वर्ततेस्म क्तः त्रीणिवर्तुलस्य ॥ यदून्नतानतं तत् बंधुरंस्यात् ॥ एकं उन्नतंचदानतंच बध्नाति बंधबंधने म ुरादिः बंधूरमित्यपि ६९ उच्चः उच्चिनोति डः उच्चैस्त्वमस्त्यत्रवा मत्वर्थेअच् ॥ प्रांशुः प्रकृष्टाअंशवोयस्य ॥उन्नतः उन्नमतिस्म नमप्रह्वत्वे क्तः ॥ उदग्रः उद्गतमग्रमस्य ॥उच्छ्रितः उच्छ्रयतिस्म श्रिञ्सेवायां उच्छ्रितंत्रिषुसंजातेसमुन्नद्धप्रवृद्धयोरित्युक्तत्वात् ॥तुंगः तुंज्यते तुजिहिंसायां घञ्कुत्वं षट्उन्नतस्य ॥वामनः वामयतिमदं डुवम् उद्गिरणे ल्युः ॥ न्यक् न्यंचति अंचुगतौ न्यङ्चांतः स्त्रियांतुनीची ॥नीचः नीचैस्त्वमस्त्यत्र मत्वर्थेअच् नीचः पामरखर्वयोरितिहेमचंद्रः ॥खर्वः खर्वति खर्वगतौ अच् ॥ ह्रस्वः ह्रस-

दवीयश्चदविष्ठंचसुदूरंदीर्घमायतम् वर्तुलंनिस्तलंवृत्तंबंधुरंतून्नतानतम् ६९ उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुंगेथवामने। न्यङ्नीचखर्वह्रस्वाःस्युरवाग्रेवनतानतम् ७० अरालंवृजिनंजिह्मूर्मिमत्कुंचितंनतम् आविद्धंकुटिलंभुग्नंवेल्लितंवक्रमित्यपि ७१

ति ह्रसशद्वे वप्रत्ययः पंचह्रस्वस्य ॥अवाग्रं अवनतमग्रमस्य ॥अवनतं अवनमतिस्म क्तः ७० अरालं ऋच्छति ऋगतौ विच् अरमालातिकः अरालातिवा तदुक्तंविश्वे अरालुःकुटिले सर्जरसेसमदंतिनीति ॥ वृजिनं वृज्यते वृजीवर्जने इनन् तदुक्तंकोशांतरे वृजिनंकिल्विषेक्लीबंकेशेनाकुटिलेत्रिषु ॥जिह्मं जहाति हीयतेवा ओहाक्त्यागे मन् तदुक्तंहैमे जिह्मस्तुकुटिलेमंदेजिह्मंतगरपादपइति ॥ऊर्मिमत् ऊर्मिरस्यास्तिमतुप् ॥कुंचितं कुंचतिस्म कुचकौटिल्ये क्तः ॥नतं नमतिस्म तदुक्तंकोशांतरे नतंतगरपादांस्यात्क्लीबंकुटिलनम्रयोरिति ॥आविद्धं आविध्यतेस्म व्यधताडने क्तः तदुक्तंकोशांतरे आविद्धोवाच्यलिंगेस्यात्कुटिलेचपराहतइति ॥कुटिलं कुटिंकौटिल्यंलाति कुटतिवा कुटि कौटिल्ये इलच् तदुक्तंकोशांतरे कुटिलात्वापगायांस्त्रीभुग्नेतुवाच्यलिंगकः ॥ भुग्नं भुजतिस्म भुजोकौटिल्योक्तः वेल्लितं वेल्लतिस्म वेल्लचलने क्तः वेल्लितंगमनेक्लीबंकुटिलेविधुतेत्रिषित्युक्तं ॥वक्रं वंचतिस्म वंचुगतौरक् एकादशवक्रस्य ७१

ऋजुः अर्जीनिअर्जअर्जने अर्जिदृशीतिसाधुः ॥ अजिह्मः भिन्नोजिह्मात् ॥ प्रगुणः प्रकृष्टागुणास्य त्रीण्यवक्रस्य ॥ व्यक्तः व्यस्यतेस्म असुक्षेपणेक्तः तदुक्तंविश्वे व्यस्तस्तुव्याकुलेव्यास इति ॥ अप्रगुणः भिन्नः प्रगुणात् ॥ आकुलः आकोलति कुलसंस्त्याने इगुपधेतिकः त्रीणिव्याकुलस्य ॥ शाश्वतः शश्वद्भवः तत्रेत्यण् ॥ ध्रुवः ध्रुवति ध्रुवस्थैर्येकः ॥ नित्यः नियतंभवः त्य प् ॥ सदातनः सदाभवः ॥ सनातनः सनाभवः सायंचिरेतिसाधू पंचनित्यस्य ७२ स्थास्नुः स्थानशीलः ग्स्नुः ॥ स्थिरतरः अतिशयेनस्थिरः तरप् ॥ स्थेयान् स्थेयांसौ स्थेयांसः ईयसुन् एवसूत्रं त्रीण्यतिस्थिरस्य यएकरूपतया एकेनैवस्वभावेनकालव्यापी कालस्यव्यापकः आकाशादिः सकूटस्थः सोपिस्थइतिकः स्यात् एकं कूटोनिश्चलः सन्तिष्ठती

ऋजावजिह्मप्रगुणौव्यस्तेत्वप्रगुणाकुलौ शाश्वतस्तुध्रुवोनित्यसदातनसनातनाः ७२ स्थास्नुःस्थिरतरःस्थेयानेकरूपतयातुयः का
लव्यापीसकूटस्थःस्थावरोजंगमेतरः ७३ चरिष्णुजंगमचरंत्रसमिंगंचराचरं चलनंकंपनंकंप्रंचलंलोलंचलाचलम् ७४

ति तदुक्तंमेदिन्यां कूटोस्त्रीनिश्चले मूलेराशाविति ॥ स्थावरः स्थानशीलः वरच् ॥ जंगमेतरः जंगमादितरः द्वेअचरस्य ७३ चरिष्णु चरणशीलं चरगतौ इष्णुच् ॥ जंगमं वक्रंगच्छति ॥ नित्यमितियङ् ॥ चरं चरति तदुक्तंकोशांतरे चरोक्षद्यूतभेदेच भौमेचारे त्रसेचलइति ॥ त्रसं त्रसति त्रसीउद्वेगे अच् ॥ इगं इंगति इगिगतौ अच् चराचरं चरिचलीतिसाधुः तदुक्तंविश्वमेदिन्योः चराचरंजंगमेस्याद्गविष्टपयोरपि षड्चरस्य ॥ चलनं चलनशीलं चलगतौ चलनेतियुच् चलनंभ्रमणेकंपेकंप्रेतुवाच्यलिंगकमिति विश्वमेदिन्यौ ॥ कंपनं कंपनशीलं कपिचलनेयुच् तदुक्तंकोशांतरे कंपनंनद्वयोः कंपेकंप्रेस्यादभिधेयवत् ॥ कंप्रं नमिकंपीतिरः त्रयंकंपनशीलस्य ॥ चलं चलतिअच् ॥ लोलंलोडति लुडविलोडने अच् डलयोरेकत्वं ॥ चलाचलं चरिचलीतिद्वित्वादि ७४

चंचलं चंचति चंचुगतौ बाहुलकादलच् चंचुलातुतडिल्लक्ष्म्योश्चंचलश्चपलेनल इत्युक्तत्वात् ॥ तरलं तरति तरलं चंचलेरिंगेभास्वरेपित्रिलिंगकं हारमध्यमणौपुंसियवागूसुरयोस्त्रियामितिविश्वमेदिन्यौ ॥ पारिप्लवं परिप्लवते प्लुङ्गतौ अच् प्रज्ञात्यण् तदुक्तंहैमे पारिप्लवश्चाकुलेस्याच्चंचलइति चपलंचडुलंचेत्येत्यपिपाठः ॥ अतिरिक्तः अतिरिच्यतेस्म रिचिरविरेचनेक्तः ॥ समधिकः सम्यगधिकः हे अधिकमूतस्य ॥ हृढसंधिः हृढसंधानमस्य सः ॥ संहतः संहन्यतेस्म क्तः संहतंसंगतंहृढेइतिहैमः हृढसंधानस्य ७५ खक्खटं खक्खटमिति कक्खहसनेअटन् कवर्गद्वितीयादीत्यन्येकठिनं कठकृच्छ्जीवने ॥ क्रूरं कृंतति कृतीछेदनेरक्धातोः क्रूआदेशः तदुक्तंहैमे

चंचलंतरलंचैवपारिप्लवपरिप्लवे अतिरिक्तःसमधिकोहृढसंधिस्तुसंहतः ७५ कर्कशंकठिनंक्रूरंकठोरंनिष्ठुरंहृढम् जठरंमूर्तिमन्मूर्तंप्रवृद्धंप्रौढमेधितम् ७६ पुराणेप्रतनप्रत्नपुरातनचिरंतनाः प्रत्यग्रोभिनवोनव्योनवीनोनूतनोनवः ७७

क्रूरानृशंसघोरोष्णकठिनाइति ॥ कठोरं कठिचकिभ्यांमोरन् ॥ निष्ठुरं निनिष्ठति ॥ हृढं दृंहतिदृंहतिस्मवा दृहदृहिवृद्धौ हृढः स्थूलेतिसाधुः तदुक्तंकोशांतरे हृढंस्थूलेनितांते च प्रगाढे बलवत्यपि ॥ जठरं जीर्यते जॄष्वयोहानौ अठच् तदुक्तंविश्वे जरठः कर्कशे पांडौ कठिनेप्यभिधेयवदिति ॥ मूर्तिमत् मूर्तिः काठिन्यमस्यास्तिमतुप् ॥ मूर्तं मूर्छतिस्म मूर्तः स्यात्त्रिषुमूर्छालेकठिनेमूर्तिमत्यपीतिविश्वः मूर्छामोहसमुच्छ्रायपयोः क्तः नवकठिनस्य ॥ प्रवृद्धं प्रवर्ध्यतेस्म वृधुवृध्दौक्तः ॥ प्रौढं प्रोह्यतेस्म वहप्रापणेक्तः ॥ एधितं एधतेस्म एधवृध्दौक्तः अयंप्रवृद्धस्य ७६ पुराणं पुराभवं सायंचिरेतिसाधुः पुराणप्रोक्तेइतिनिपातनात् पुराणंप्रत्नशास्त्रयोरित्युक्तत्वात् ॥ प्रतनं ॥ प्रत्नं तनप्रत्नौ पुरातनं पुराभवं ॥ चिरंतनं चिरंभवं सायंचिरेतिसाधुः पंचपुरातनस्य ॥ प्रत्यग्रः प्रतिनवंअग्रमस्य ॥ अभिनवः अभिनूयते णुस्तुतौ ॥ अप् नव्यः यत् नवएव नवीनः खः नूतनः त्नप् ॥ नवः अप् ७७

नूत्नः त्नः सप्तनूतनस्य ॥ सुकुमारं सुष्ठुकुमार्यते कुमारक्रीडायां घः ॥ कोमलं कमेरकन् अतउत्वंच कोमलंमृदुलेजलइतिविश्वः ॥ मृदुलं मृदुर्गुणोस्यास्ति मत्वर्थे ॥
मृदु मृद्यते मृदस्सौदेकः मृदुतीक्ष्णेतु कोमलंइतिहैमः चत्वारिकोमलस्य ॥ अन्वक् अन्वंचति अंचुगतौ क्विन् अन्वक्षं अनुगतमक्षमिंद्रियं ॥ अनुगं ॥ अनुगच्छति गम्लृ
गतौ डः ॥ अनुपदं पदस्यानुपश्चात् चत्वारिपश्चादित्यर्थे अव्ययीभावत्वात्क्लीबंअव्ययंच ७८ प्रत्यक्षं अक्षमिंद्रियंप्रतिगतं प्रासादिमासः समक्षमित्यपि ॥ ऐंद्रिय
कं इंद्रियेणानुभूयते हेइंद्रियग्राह्यस्य ॥ प्रत्यक्षत्वात् अप्रत्यक्षं अक्षेषुप्रतिगतंप्रत्यक्षंन अनध्यक्षमितिपाठइतिकेचित् तत्रेत्थं अक्षेषुअध्यक्षंअतिक्रांतं अध्यक्षंवि
भक्त्यर्थेव्ययीभावः ॥ अतींद्रियं इंद्रियेभ्यःअतिक्रांतं तत्रेत्थं अपरोक्षमैंद्रियकंपरोक्षंस्यादतींद्रियमिति हेइंद्रियैरग्राह्यस्य ॥ एकतानः एकंतानयति तनुश्रद्धोपकर

नूत्नश्चसुकुमारंतु कोमलंमृदुलंमृदु अन्वगन्वक्षमनुगेऽनुपदंक्लीबमव्ययम् ७८ प्रत्यक्षंस्यादैंद्रियकमप्रत्यक्षमतींद्रियम् ए
कतानोनन्यवृत्तिरेकाग्रैकायनावपि ७९ अप्येकसर्गएकाग्र्योप्येकायनगतोपिसः पुंस्यादिःपूर्वपौरस्त्यप्रथमाद्याअथास्त्रियाम् ८०

णयोः कर्मण्यण् ॥ एकस्तानोविस्तारोस्यवा अनन्यवृत्तिः ॥ नअन्यावृत्तिरस्य ॥ पुंवद्भावः ॥ एकाग्रः एकमेकस्मिन्वाग्रमस्य ॥ एकायनः एकमयनमस्य ७९ एकसर्गः एकमे
कस्मिन्वासर्गोनिश्चयोस्य ॥ एकाग्र्यः एकंअग्रंज्ञेयमस्य ॥ एकायनगतः एकंचतदयनंच एकायनंगतः एकस्मिन्नयनेगतंज्ञानमस्येतिवा सपेकाग्रस्य ॥ आदिः आप्रथमंदी
यतेगृह्यतेउपसर्गेघोःकिः ॥ पूर्वः पूर्वति पूर्वपूरणे पूर्वंतुपूर्वजेप्राच्यांप्राग पश्चुर्ति भेदकइत्युक्तत्वात् ॥ पौरस्त्यः पुरोभवः दक्षिणेत्यक् ॥ प्रथमः प्रथते प्रथप्रख्याने प्रथरे
मच् तदुक्तंकोशांतरे प्रथमस्तुभवेदादौप्रधानेपिचवाच्यवत् ॥ आद्यः आदौभवः दिगादित्वात्यत् पंचकमाद्यस्य ८०        ७        ७

अंतः अमति अमगतौ बाहुलकात्तृन् अंजतिवा अंतिबंधने अच् अंतःस्वरूपेनिकटेप्रांतेनिश्चयनाशयोरितिहेमचंद्रः ॥ जघन्यं जघनेभवं यत् तदुक्तं कोशांतरे जघन्यंहेम निर्ह्लीबंचरमेगर्हितेन्यवदिति ॥ चरमं चरति चरगतौ अमच् ॥ अंत्यं अंतेभवं यत् तदुक्तंहेमचंद्रे अंत्यस्त्वंतभवे धमइति ॥ पाश्चात्यं पश्चाद्भवं त्यक् ॥ पश्चिमं अग्रेतिडिमच् तत्रअंतस्तुपुंसि क्लीबेच यथास्तच्छंदास्त्रीकुलस्यांतः षडंत्यस्य ॥ मोघं मुह्यंत्यस्मिन् मुहवैचित्ये अन्यंकादित्वात्कुत्वं मोघोहीनेनिष्फलेचमोघोस्यात्साटलीतराविति हेमः ॥ निरर्थकं निर्गतोर्थोयस्मात् कप् हेव्यर्थस्य स्पष्टं स्पशयनेस्म क्तः ॥ स्फुटं स्फुटविकसने इगुपेतिकः स्फुटोव्यक्तप्रफुल्लयोरितिउक्तत्वात् ॥ प्रव्यक्तं प्रव्यज्यतेस्म क्तः

अंतोजघन्यंचरममंत्यपाश्चात्यपश्चिमाः मोघंनिरर्थकंस्पष्टंस्फुटंप्रव्यक्तमुल्बणम् ८१ साधारणंतुसामान्यमेकाकीत्वेकएककः भिन्नार्थकाअन्यतरएकस्त्वोऽन्यतरावपि ८२

प्रव्यज्यतेस्मेतिवा अंजुविशेषणेक्तः उल्बणं घञ् उद्बणाति वणशब्दे अच् पृषोदरादिः चत्वारिस्पष्टस्य ८१ साधारणं आधारणेनसह सहस्यसादेशः ॥ सामान्यं समानस्य भावः घञ् जातिवाचिसामान्यंतुक्लीबं एकमप्यनेकसंबंधिसाधारणं हे ॥ एकाकी एकादाकिनच् ॥ एकः पक्षेकन्लुक्चौच एकंसंख्यांतरेश्रेष्ठेकेवलेतरयोस्त्रिषु त्रीणिअ सहायोस्य ॥ भिन्नः ॥ अन्यतरः अन्यएव स्वार्थेतरबित्यर्थः क्वचिदेकतरइतिपाठः तत्रेत्थं एकात् ॥ डतरच्प्रत्ययः ॥ इणः कन् ॥ एकः त्वः तनोति ॥ तनोतेः वः क्विप्आगमानित्यत्वान्नतुक् तुकपक्षेत्वत् ॥ अन्यः अनिति अनमावर्णेयः ॥ इतरः इनाकामेनतरति इतरः पामरेन्यस्मिन्निहेमचंद्रः त्वशब्दवत्सर्वशब्दवत् षट्भिन्नार्थकाः भिन्नस्यवाच

उच्चावचं उदक्च अवाक्च मयूरव्यंसकादि ॥ नैकभेदं एकोभेदोस्य नएकभेदं सुप्सुपेतिनशब्देनसमासः हे बहुविधस्य ॥ उच्चंडं उच्चंडनं चंडिकोपे घञ् ॥ अविलंबितं विलं
ब्यतेस्म नविलंबितं लबिअवस्रंसनेक्तः स्वामीतुअविलंबनमितिपठति हे तूर्णस्य ॥ अरुंतुदः अरुर्व्रणंतुदति विध्यरुषोस्तुदइतिखच् मुम् ॥ मर्मस्पृक् मर्मस्पृशति स्पृशउत्तापेक्विन्
हे मर्मभेदिनः ॥ अबाधं नबाधास्य निरर्गलं निर्गतार्गलास्य ॥ हे निर्बाधस्य ८३ प्रसव्यं प्रगतंसव्यात् प्रसव्यंवाच्यलिंगः स्यात्प्रतिकूलानुकूलयोरिति ॥ प्रतिकूलं प्रतीपंकूलात् ॥
अपसव्यं ॥ अपगतंसव्यात् अपसव्यंत्रिलिंगंतुदक्षिणप्रतिकूलयोरितिविश्वः ॥ अपष्ठु अपतिष्ठति सुषामादिः कुः तदुक्तंकोशांतरे अपष्ठुःपुंसिकालेचवामेस्यादन्यलिंगकइति च

उच्चावचंनैकभेदमुच्चंडमविलंबितं ॥ अरुंतुदस्तुमर्मस्पृगबाधंतुनिरर्गलं ८३ प्रसव्यंप्रतिकूलंस्यादपसव्यमपष्ठुच वामंशरी
रंसव्यंस्यादपसव्यंतुदक्षिणं ८४ संकटंनातुसंबाधःकलिलंगहनंसमे संकीर्णेसंकुलाकीर्णेमुंडितंपरिवापितं ८५

लाद्विपरीतस्य यद्वामंशरीरंतत्सव्यं ॥ सूयते षूप्रेरणे अघ्न्यादयश्चेतिनिपातः एकं यद्दक्षिणंशरीरंतदपसव्यंस्यात् अपक्रांतंसव्यात् एकं ८४ संकटं संबाधार्थात्संशब्दात्संप्रोदश्चकटच् संक
टति कटेवर्षावरणयोः अच् ॥ संबाधः सम्यग्बाधतेत्र बाधृलोडने घञ् तदुक्तंविश्वे संबाधःसंकटेभगइति नापुंसान् हे अल्पावकाशेवर्त्मादौ ॥ कलिलं कलतेकल्यतेवा क-
लशब्दसंख्यानयोः इलच् ॥ गहनं गाह्यते गाहविलोडने युच् ह्रस्वः पृषोदरादित्वात् तदुक्तंकोशेगहनंवनदुःखयोरिति हे दुरधिगम्यस्य यथागहनंशास्त्रंदुर्ज्ञानमित्यर्थः ॥ संकी
र्णं संकीर्यतेस्मक्तः संकीर्णोनिचितेपिस्यादशुद्धेचाभिधेयवत् ॥ संकुलं संकोलति कुलसंस्त्याने इगुपधेतिकः आकीर्णं आकीर्यतेस्म कृविक्षेपेक्तः व्यंजनादिभिरत्यंतमिश्रस्य यथासंकीर्णवर्गः
केचित्तुएतान्पूर्वपर्यायानाहुः संकीर्णोमृषिपत्नीनामितिप्रयोगात् ॥ मुंडितं मुंड्यतेस्म मुडिखंडनेक्तः ॥ परिवापितं परिवाप्यतेस्म हे कृतमुंडनस्य ८५

घ्राणं घ्रायतेस्म घ्रागंधोपादाने घ्रातं ञुदविदेति वानत्वं तदुक्तं हैमे घ्राणंतु घ्रात घोणयोरिति द्वे आघ्रातस्य ॥ दिग्धं दिह्यतेस्म दिह उपचये तदुक्तं कोशांतरे दिग्धोवि-षाक्तबाणे स्यात्पुंसि लिप्तेन्यलिंगक इति ॥ लिप्तं लिप्यतेस्म लिप उपदेहे तदुक्तं हैमे लिप्तं भक्ति विलिप्तयोरिति द्वे विलिप्तस्य ॥ समुदक्तं समुदच्यतेस्म अंचु गतौ केन लोपः उद्धृतं उध्रियतेस्म हृञ् हरणे धृञ् धारणे वा तदुक्तं अन्यकोशे उद्धृतं स्यात्त्रिषूत्क्षिप्तपरिष्कृतोद्धृतेप्यपि चेति कूपादेर्जलादेः ॥ वेष्टितं वेष्ट्यतेस्म वेष्ट वेष्टने ॥ वलयितं वलयं जातमस्य ॥ तारकादिः यद्वा वलयवत्कृतं तत्करोतीति णिच् ॥ संवीतं संवीयतेस्म व्येञ् संवरणे क्तः ॥ रुद्धं रुध्यतेस्म रुधिर आवरणे ॥ आवृतं आव्रियतेस्म वृञ् आवरणे पंच नद्यादिवेष्टित

घ्राणघ्रातेदिग्धलिप्तेसमुदक्तोद्धृतेसमौ वेष्टितंस्याद्वलयितंसंवीतंरुद्धमावृतम् १० रुग्णंभुग्नेथनिशितंक्ष्णुतंशातानितेजिते स्या द्विनाशोन्मुखंपक्वंह्रीणह्रीतौतुलज्जिते ११ वृत्तेतुवृत्तव्यावृत्तौसंयोजितउपाहितः प्राप्यंगम्यंसमासाद्यंस्यन्नंरीणंस्नुतंस्रुतम् १२

स्य नगरादेः १० रुग्णं रुज्यतेस्म रुजो भंगे ॥ भुग्नं भुज्यतेस्म भुजो कौटिल्ये द्वे व्यथितस्य ॥ निशितं निशायतेस्म शो तनूकरणे केशाच्छोरन्यतरस्यामिति इत्वं निशातमित्यपि पाठः इत्वविकल्पात् ॥ क्ष्णुतं क्ष्णूयतेस्म क्ष्णु तेजने ॥ शातं ॥ तेजितं तेज्यतेस्म तिज निशातने चुरादिः ण्यंतात्क्तः चत्वारि शाणादिना तीक्ष्णीकृतस्य ॥ विनाशोन्मुखं प्रत्यासन्नविनाशं पक्वं स्यात् विनाशः विनशनं भावे घञ् उद्गतं मुखमारंभोस्य विनाशे उन्मुखं पच्यतेस्म डुपचष् पाके तदुक्तं हैमे पक्वं परिणते नाशाभिमुखे इति एकं ॥ ह्रीणः अह्रैषीत् ह्री लज्जायां ञुदविदेति वानत्वं ॥ ह्रीतः ॥ लज्जितः लज्जा संजातास्य त्रीणि नामानि संजातलज्जस्य ११ वृत्तः वृतं वृत्ते वृ टे मृत इत्युक्तत्वात् व्रियतेस्म वृञ् वरणे ॥ वृत्तः वृत्यतेस्म वृतु वरणे ॥ व्यावृतः वावृत इति केचित् तन्मते वावृत्यतेस्म त्रीणि कृतवरणस्य ॥ संयोजितः संयोज्यतेस्म युजिर् योगे स्वयंवरादौ स्त्री कृतवरादेरित्यर्थः संयोजित इति भरतमालायां ॥ उपाहितः उपाधीयतेस्म दधातेर्हिः उपाहितेनक्षोत्पाते पुमानारोपिते त्रिष्वित्युक्तत्वात् द्वे संयोगं प्रापितस्य ॥ प्राप्यं प्राप्यते आप्लृ व्याप्तौ ण्यत् ॥ गम्यं गम्यते गम्लृ गतौ पोरदुपधादिति यत् ॥ समासाद्यं समासद्यते षद्लृ विशरणादौ ण्यत् त्रीणि प्राप्तुं शक्यस्य ॥ स्यन्नं स्यंद्यतेस्म स्यंदू प्रस्रवणे केयस्येति इड्भावः ॥ रीणं रीयतेस्म रीङ् स्रवणे स्वादय ओदितः ओदितश्चेति नत्वं ॥ स्नुतं स्नूयतेस्म ष्णु प्रस्रवणे स्रुतं स्रूयतेस्म स्रु गतौ चत्वारि प्रस्रुतस्य नामानि १२

संगूढः संगुह्यतेस्म गुहू संवरणे ॥ संकलितः संकल्यतेस्म फलसंख्यानेर्हे योजिस्यांकादेः यथाद्वौ त्रयः पंच च संकलिता दश भवंति ॥ अवगीतः अवगीयतेस्म गैशब्दे क्तः ईत्वं तदुक्तं विश्वे अवगी तं तु निर्वादे दुष्टगर्हितयोरपीति ॥ ख्यातगर्हणः ख्याता गर्हणा यस्य हे निंदितस्य ॥ विविधः विचित्रा विधा यस्य ॥ बहुविधः बहवो विधा यस्य ॥ नानारूपः नानारूपं यस्य ॥ पृथग्विधा यस्य चत्वारि ॥९३॥ अवरीणः अवरीयतेस्म रीङ् स्रवणे नष्टानत्वं ॥ धिक्कृतः धिगकारि यद्वा निर्भर्त्सितः उक्तः हे निंदितमात्रस्य ॥ अवध्वस्तः अवध्वस्यतेस्म ध्वंसु गतौ च अपध्वस्त इति पाठः तदुक्तं विश्वे अ पध्वस्तं परित्यक्ते विदितेप्यवचूर्णित इति ॥ अवचूर्णितः अवचूर्ण्यतेस्म सत्योपपंति यद्वा चूर्ण पेषे हे चूर्णीकृतस्य ॥ अनायासकृतं ॥ फाण्टं स्यात् एकं अनायासेन कृतः कषायविशेषः फण्यते स्म क्षुब्धस्वांतेत्यादिना ः नागासेनिपातितं माधवस्तु नवनीतभवा सा गवस्था पन्नं द्रव्यं फाण्टं इति वेदभाष्ये आह फणगतौ ॥ स्वनितं स्वन्यतेस्म स्वनशब्दे ॥ ध्वनितं ध्वन्यतेस्म ध्वनशब्दे

संगूढः स्यात्संकलितोवगीतः ख्यातगर्हणो विविधः स्याद्बहुविधो नानारूपः पृथग्विधः ९३ अवरीणो धिक्कृतश्चाप्यवध्वस्तोवचूर्णितः अनायासकृतं फाण्टं स्वनितं ध्वनितं समे ९४ बद्धे संदानितं मूतमुद्दितं संदितं सितं निष्पक्वं क्वथितं पाके क्षीराज्यहविषां शृतम् ९५

हे शब्दितस्य इमौ स्कांतौ ९४ बद्धं बध्यतेस्म बध बंधने ॥ संदानितं संदान्यतेस्म दानखंडनेक्तः ॥ मूतं मूयतेस्म मूङ् बंधने ॥ उद्दितं उद्यतेसंद्यतेस्म दो अवखंडने केद्यतिइत्वं ॥ उदितमित्यपिपाठः ॥ संदितं सीतं सीयतेस्म षिञ् बंधने क्तः षट्बद्धस्य ॥ निष्पक्वं निश्चयेनपक्वं केपचोवः ॥ क्वथितं क्वथ्यतेस्म क्वथेनिष्पाके हे साकल्येनपक्वस्य कषायादेः क्षी राज्यहविषां ॥ पाके ॥ शृतमित्येकं ९५

मुनिवन्ह्यादौ निर्वाणइत्येकं निर्वानिस्म वागतिगंधयोः यथानिर्वाणोमुनिः निर्मुक्तः निर्वाणोवन्हिः निर्गतइत्यर्थः आदिशब्दान्निर्वाणो हस्तीनिमग्नइत्यर्थः तदुक्तंविश्वे निर्वामिक्तं गमनेनिर्वृतौ गजमज्जने संगमेप्यपवर्गेचेति निर्वाणोवातइतिनिः पूर्वाद्वांतेर्निष्ठातस्यनत्वं एवं गतेअनिलेकेनिर्वातइत्येकं निर्गतः वातोयस्मात् समस्तेपठितु गतश्वासावनिलश्च तस्मिन् ॥ पक्वं परिणतं परिणमतिस्म नमधातोः क्तेमलोपः हेपाकंप्राप्तस्य ॥ गूनं गूयतेस्म गुपुरीषोत्सर्गे दुग्वोर्दीर्घश्चेतिनत्वं ॥ हन्नं हद्यतेस्म हदपुरीषोत्सर्गे रदाभ्यामिति नत्वं हेकृतपुरीषोत्सर्गस्य ॥ मीढं मिह्यतेस्म मिहसेचने क्तेढोढेलोपःदीर्घश्च ॥ मूत्रितं मूत्र्यतेस्म मूत्रप्रस्रावे हेकृतमूत्रोत्सर्गस्य १६ पुष्टं पुष्यतेस्म पुषपुष्टौ पुषितं स्यादिवृद्धिः ॥ सोढं स-

निर्वाणोमुनिवन्ह्यादौ निर्वातस्तुगतेनिले पक्वंपरिणतेगूनंहन्नेमीढंतुमूत्रिते १६ पुष्टेतुपुषितंसोढेक्षान्तमुद्वान्तमुद्गते दान्तस्तुदमितेशान्तःशमितेप्रार्थितेर्दितः १७

ह्यतेस्म षहमर्षणे क्तेओत्वं ॥ क्षांतं क्षम्यतेस्म क्षमूषसहने हेक्षमांप्रापितस्य ॥ उद्वांतः उद्वम्यतेस्म टुवमुद्गिरणे उद्वानमितिमुकुटेनोक्तं उद्वांतमितिरामनाथेनच ॥ उद्गतः उद्गम्यतेस्म गम्लृगतौ हेवमनेनत्यक्तस्यान्नादेः ॥ दांतः दम्यतेस्म दमुउपशमे वादांतशांतेति साधुः तदुक्तंकोशांतरे दांतस्तुदमितेपिस्यात्तपः क्लेशसहेपिचेति ॥ दमितः हेदमंप्रापितस्य यथादमितमिंद्रियं ॥ शांतः शम्यतेस्म शमुउपशमे शांतोरोगः निवृत्तइत्यर्थइति तदुक्तंकोशांतरे शांतोतिसुकरसयोः पुंसित्रिषुसमन्वितेति ॥ शमितः ण्यंतात्क्तः हेशमंप्रापितस्य ॥ प्रार्थितः प्रार्थ्यतेस्म अर्थयांचायां क्तप्रत्ययः ॥ अर्दितः अर्द्यतेस्म अर्दगतौयाचनेच तदुक्तंकोशांतरे अर्दितंयाचितेपिस्याद्धातव्याधौचहिंसितेति हेयाचितस्य १७

ज्ञप्तः ज्ञप्यतेस्म मारणादौमित् ॥ज्ञपितः हे बोधं प्रापितस्य ॥ छन्नः छाद्यतेस्म छद अपवारणे वादांतेतिसाधुः तदुक्तं हैमे छन्नं रहश्छादितयोरिति हे आच्छादितस्य ॥ पूजितः पूज्यतेस्म पूजपूजायां ॥अंचितः अंच्यतेस्म अंचुपूजायां अर्चितइत्यपि पाठे अर्चपूजायां हेनामनि ॥ पूर्णः पूर्यतेस्म पूरीआप्यायने तदुक्तं हैमे पूर्णः कृत्स्नेच पूरितेइति ॥ पूरितः हे ॥ क्लिष्टः क्लिश्यतेस्म क्लिशविबाधने क्लिशितः हे क्लेशं प्रापितस्य ॥अवसितः अवस्यतेस्म अवसीयतेस्मवा षोअंतकर्मणि तत्र तौ तत्वं तदुक्तं हैमे सितस्त्ववसितेबद्धेवर्णेसितातु शर्कराइति ॥ सितः हे समासस्य १८ प्रुष्टः प्रुष्यतेस्म प्लुष्यतेस्मवा प्रुषप्लुषदाहे ॥प्लुष्टः ॥उषितः उष्यतेस्म उषदाहे तदुक्तं हैमे उषितव्युषिते ॥दग्धेइति ॥दग्धः दह्यतेस्म

ज्ञप्तस्तुज्ञपितेछन्नश्छादितेपूजितेंचितः पूर्णस्तुपूरितेक्लिष्टःक्लिशितेवसितेसितः १८ प्रुष्टप्लुष्टोषि
तादग्धेतष्टत्वष्टौतनूकृते वेधितच्छिद्रितौविद्धेविन्नवित्तौविचारिते १९

दह भस्मीकरणे चत्वारि दग्धस्य इमेक्तांताः ॥ तष्टः तक्ष्यतेस्म ॥त्वष्टः त्वक्ष्यतेस्म तक्षूत्वक्षूतनूकरणे ॥तनूकृतः अनन्तुस्तनुरकारितनूकृतः त्रीणि यथातष्टंकाष्ठंशस्त्रेणाल्पीकृतमितिनद्वत् ॥वेधितः वेध्यतेस्म विधविधाने ण्यंताक्तः ॥छिद्रितः छिद्र्यतेस्म छिद्र भेदनेक्तः ॥विद्धः विध्यतेस्म व्यधताडने भागवत् तदुक्तं विश्वे विद्धं स्याद्वेधितेक्षिप्तेसदृशेचाभिसंतेत्रिषिति त्रीणि यथाकर्णौविद्धौ ॥विन्नः विद्यतेस्म विदविचारणे नुदेतिस्त्नेसाहचर्यात् तदुक्तं विश्वे विन्नंविचारितेलब्धइति ॥वित्तः तदुक्तंकोशांतरे-वित्तंक्लीबंधनेवाच्यलिंगंख्यातेविचारितेइति ॥विचारितः विचार्यतेस्म चरगतौ त्रीणिभासविचारस्य १९

निष्प्रभः निष्क्रांताप्रभास्मात् ॥ विगतः विगच्छतिस्म गम्लृगत्यर्थे क्तः तदुक्तंरुद्रे विगतोवीनभिप्रभाविति ॥ अरोकः रोचनंरोकः भावे घञ् नरोकोस्य रुचदीप्तौ त्रीणिविरी-
सिहीनस्य ॥ विलीनः विलीयतेस्म लिङ् श्लेषणे गत्यर्थेक्तः ॥ विद्रुतः विद्रवतिस्म ॥ द्रुगतौ गत्यर्थे तदुक्तंहेमे द्रुतंशीघ्रविलीनयोरिति त्रीणिद्रवीभूतस्य घृतादेः ॥ सिद्धः सि
ध्यतिस्म षिधुसंराद्धौक्तः ॥ निर्वृतः निवर्त्ततेस्म वृतुवर्त्तने ॥ निष्पन्नः निष्पद्यतेस्म पदगतौ गत्यर्थे तदुक्तंहेमे सिद्धोवाद्यादिकेदेवयो नौनिष्पन्नमुक्तयोः नित्येप्रसिद्धेचेति
त्रयंसिद्धस्य ॥ दारितः दार्यतेस्म दृविदारणे ॥ भिन्नः भिद्यतेस्म भिदिरविदारणे ॥ भेदितः त्रीणिभेदंप्रापितस्य १०० ऊतं ऊयतेस्म उञ्तंतुसंतानेक्तः ॥ स्यूतं सि
व्यतेस्म षिवुतंतुसंतानेक्तः ॥ ऊतं ऊयतेस्म वेञ्तंतुसंतानेक्तः स्यूतं स्यूतिःसीवनसंतत्योः स्त्रियांस्यूतःप्रसेवकइत्युक्तत्वात् ॥ उतं त्रितयं ॥ तंतुसंतते संतन्यतेस्मतंतुभिः सं

निष्प्रभेविगतारोकौविलीनेविद्रुतद्रुतौ सिद्धेनिर्वृत्तनिष्पन्नौदारितेभिन्नभेदितौ १०० ऊतंस्यूतमुतंचेतित्रितयंतंतुसंतते
स्यादर्हितनमस्यितनमसितमपचायितार्चितापचितम् १०१ वरिवसितेवरिवस्यितमुपासितंचोपचरितंच संतापितसंतप्तौधू
पितधूपायितौचदूनश्च १०२

ततं अर्हितं आर्ह्यतेस्म अर्हपूजायांक्तः ॥ नमस्यितं ॥ नमसितं ॥ नमः कृतं नमोवरिवरिति ॥ क्यच् क्यस्यविभाषेतियलोपविकल्पः
अपचायितं अपचाय्यतेस्म चायृपूजानिशामनयोः ॥ अर्चितं अर्च्यतेस्म अर्चपूजायां ॥ अपचितं चिभावः षट्आर्चितस्य १०१ वरिवसितं वरिवः कृतं नमोवरिवइति क्यच् क्यस्य
विभाषेतियलोपविकल्पः वरिवस्यितं ॥ उपासितं उपास्यतेस्म आसउपवेशने ॥ उपचरितं उपचर्यतेस्म चरेः क्तः चत्वारिशश्रूषितस्य ॥ संतापितं संताप्यतेस्म तपदाहे चुरादिः
॥ संतप्तं संतप्यतेस्म तपसंतापे धूपितं धूप्यतेस्म धूपसंतापे ॥ धूपायितं आयादयइतिवा ॥ दूनं दूयतेस्म दुदुउपतापे पंचसंतापितस्य एभ्यः अकर्मकेभ्यः कर्तरिक्तोन्येतान्येवरूपा
णि १०२

हृष्टः हर्षतेस्म हृष्यतिस्मवा हृषुअलीके हृषतुष्टौ तदुक्तंकोशांतरे हृषोरोमांचितेपिच जातहर्षेप्रतिहतेविस्मितेप्यभिधेयवदिति ॥ मत्तः माद्यतिस्म मदीहर्षे ॥ तृप्तः तृप्यतिस्म तृपप्रीणने ॥ प्रह्लन्नः ह्लादतेस्म ह्लादीसुखेच ह्लादोवेति ह्रस्वः ॥ प्रमुदितः प्रमोदतेस्म मुदहर्षे ॥ प्रीतः प्रीयतेस्म प्रीङ्प्रीणने इमेक्तांताःसर्वे षट्प्रमुदितस्य ॥ छिन्नं छिद्यतेस्म छिदिरद्वैधीकरणे क्तः तदुक्तंकोशांतरे छिन्नंक्रुतेत्रिलिंगेस्याड्डुड्च्यामपियोषिति ॥ छातं छायतेस्म छोछेदने ॥ लूनं लूयतेस्म लूञ्छेदने ॥ कृत्तं कृत्यतेस्म कृतीछेदने ॥ दातं दायतेस्म दापूलवने ॥ दीनं दीयतेस्म दोअवखंडने ॥ छितं शाच्छोरितिविकल्पः ॥ वृक्णं वृश्च्यतेस्म ओव्रश्चूछेदने अष्टौखंडितस्य १०३ स्रस्तं स्रस्यते ध्वस्यते भ्रस्यतेस्म ध्वस्तं ॥ भ्रष्टं स्रसु ध्वंसु भ्रंसु अवस्रंसने ॥ स्कन्नं स्कद्यतेस्म स्कंदिरगत्यादौ ॥ पन्नं पद्यतेस्म पदगतौ ॥ च्युतं च्यूयतेस्म च्यूङ्गतौ ॥ गलितं गल्यतेस्म गलअदने ससच्यु

हृष्टेमत्त स्तृप्तः प्रह्लन्नः प्रमुदितःप्रीतः छिन्नंछातंलूनंकृत्तंदातंदितंछितंवृक्णं १०३ स्रस्तंध्वस्तंभ्रष्टंस्कन्नंपन्नंच्युतंगलितं लब्धं
प्राप्तंविन्नंभावितमासादितंचभूतंच १०४ अन्वेषितंगवेषितमन्विष्टंमार्गितंमृगितम् आर्द्रंसार्द्रंक्लिन्नंतिमितं

तस्य एभ्योगत्यर्थाकर्मकेतिकर्तरिक्ते एतान्येवरूपाणि ॥ लब्धं लभ्यतेस्म डुलभष्प्राप्तौ ॥ प्राप्तं प्राप्यतेस्म आप्लृव्याप्तौ ॥ विन्नं विद्यतेस्म विद्लृलाभे ॥ भावितं भाव्यतेस्म भूप्राप्तौ ॥ आसादितं आसाद्यतेस्म षद्लृविशरणादौ ॥ भूतं षट्प्राप्तस्य १०४ अन्वेषितं अन्वेष्यतेस्म एषृगतौ इषिण्येतीवा ॥ गवेषितं गवेष्यतेस्म गवेषमार्गणे ॥ अन्विष्टं अन्विष्यतेस्म इषइच्छायां ॥ मार्गितं मार्ग्यतेस्म मार्गअन्वेषणे ॥ मृगितं मृग्यतेस्म मृगअन्वेषणे पंचगवेषितस्य यथाइतस्ततोगवेषितोपिचोरोनदृष्टः ॥ आर्द्रं आर्द्यतेस्म अर्दगतौ अर्देर्दीर्घश्चेतिरक् तदुक्तंकोशांतरे आर्द्रानक्षत्रभेदेस्यात्स्त्रियांक्लिन्नेभिधेयवदिति ॥ सार्द्रं आर्द्रत्वेनसह ॥ क्लिन्नं क्लिद्यतेस्म क्लिदूआर्द्रीभावे ॥ तिमितं तिम्यतेस्म ॥

स्तिमितं स्तिम्यतिस्म तिमष्टिम आर्द्रीभावे तदुक्तं कोशे स्तिमितस्तरलेक्लिन्नइति ॥ समुन्नं समुनतिस्म उंदी क्लेदने ॥ उन्नं अकर्मकत्वात्क्तः ससक्लिन्नस्य १०५ त्रातं त्रायते स्म त्रैङ्पालने तदुक्तं हैमे त्राणंत्रानेरक्षणेच त्रायमाणौषधावपीति ॥ त्राणं नुदविदेतिनिष्ठानत्वविकल्पः ॥ रक्षितं रक्ष्यतेस्म रक्षपालने ॥ अवितं अव्यतेस्म अवरक्षणादौ ॥ गोपायितं गोपाय्यतेस्म गुपूरक्षणे आयादयइतिआयविकल्पः ॥ गुप्तं गुप्यतेस्म गुप्तंगूढेत्रातेइतिहैमः षट्रक्षितस्य ॥ अवगणितं अवगण्यतेस्म गणसंख्याने ॥ अवमतं अवमन्यतेस्म मनज्ञानेक्तः ॥ अवज्ञातं ॥ अवमानितं अवमान्यतेस्म मानपूजायां ॥ परिभूतं परिभूयतेस्म परिभवतेः तिरस्कारार्थत्वं पंचअवमानितस्य १०६ त्यक्तं त्यज्यतेस्म त्यजहानौक्तेकुत्वं ॥ हीनं हीयतेस्म ओहाकत्यागेक्तः घुमेतिईत्वंतस्यनत्वं ॥ विधुतं विधूयतेस्म धुञ्कंपने ॥ समुज्झितं समुज्झ्यतेस्म उज्झउत्सर्गे ॥ धूतं धूयतेस्म धूविधूनने तदुक्तं हैमचंद्रे धूतेभर्त्सितकंपितावितिः ॥ उत्सृष्टं उत्सृज्यतेस्म सृजविसर्गेक्तेषत्वंजकारस्य षट्उत्सृष्टस्य ॥ उक्तं उच्यतेस्म वचभाषणे ब्रुवोवच्चिर्वासंप्रसारणं ॥ भाषितं भाष्यतेस्म भाषव्यक्तायांवाचि ॥ उदितं उद्यतेस्म वदव्यक्तायांवाचि क्तेसंप्रसारणं ॥ जल्पितं जल्प्यतेस्म जल्पव्यक्तायांवाचि ॥ आख्यातं आख्यायतेस्म ख्याप्रकथने चक्षिङ्वा ॥ अभिहितं अभिधीयतेस्म दधातेर्हिः ॥ लपितं लप्यतेस्म लपव्यक्तायांवाचि सप्तउदितस्य १०७ बुद्धं बुध्यतेस्म बुधअवगमने ॥ बुधितं बुधिरबोधनेक्तः तदुक्तं हैमे बुधः पंडितेजिनेति ॥ मनितं मन्यतेस्म मनुअवबोधने यस्यविभाषेतिअनित्वं ॥ विदितं विद्यतेस्म विदज्ञाने ॥ प्रतिपन्नं प्रतिपद्यतेस्म पदगतौ केरदाभ्यामितिनत्वं ॥

स्तिमितंसमुन्नमुत्तंच १०५ त्रातंत्राणंरक्षितमवितंगोपायितंचगुप्तंच अवगणितमवमतावज्ञातेवमानितंचपरिभूते १०६ त्यक्तंहीनंविधुतंसमुज्झितंधूतमुत्सृष्टे उक्तंभाषितमुदितंजल्पितमाख्यातमभिहितंलपितम् १०७ बुद्धंबुधितंमनितंविदितंप्रतिपन्न

अवसितं अवसीयतेस्म षोंतकर्मणि क्तेद्यतिस्यतीत्वं ॥ अवगतं अवगम्यतेस्म गम्लृगतौ सप्तावगतस्य ॥ ऊरीकृतं ऊरीक्रियतेस्म उरीकृतमित्यपिपाठः ॥ उररीकृतं उररी क्रियतेस्म अनंगंअंगमकारि ॥ अंगीकृतं त्रिषुच्चिप्रत्ययेईत्वं ॥ आश्रुतं आश्रूयतेस्म श्रुश्रवणे ॥ प्रतिज्ञातं प्रतिज्ञायतेस्म सर्वत्रक्तप्रत्ययः १०८ संगीर्णं संगीर्यतेस्म गॄ निगरणे केईत्वं ॥ विदितं विद्यतेस्म विद्ज्ञाने ॥ संश्रुतं संश्रूयतेस्म ॥ समाहितं समाधीयतेस्म दधातेर्हिः ॥ उपश्रुतं उपश्रूयतेस्म प्रतिश्रुतमित्यपिपाठः ॥ उपगतं उपग म्यतेस्म एकादशांगीकृतस्य ॥ ईलितं ईड्यतेस्म ईडस्तुतौ ॥ शस्तं शस्यतेस्म शंसुस्तुतौ तदुक्तं हेमे शस्तंक्षेमे प्रशस्तेचेति ॥ पणायितं पणाय्यतेस्म पणव्यवहारेस्तुतौ- आयोवा ॥ पनायितं पनाय्यतेस्म पनच आयोवा ॥ प्रणुतं प्रणूयतेस्म णुस्तुतौ ॥ पणितं ॥ पनितं १०९ गीर्णं गीर्यतेस्म गॄशब्दे ॥ वर्णितं वर्ण्यतेस्म वर्णवर्णक्रियागुणविस्तारेवचनेषु ॥ अभिष्टुतं अभिष्टूयतेस्म ष्टुञ्स्तुतौ ॥ ईडितं ॥ स्तुतं स्तुतमर्थायेषांतानि द्वादश ॥ भक्षितं भक्ष्यतेस्म भक्षअदने ॥ चर्वितं चर्व्यतेस्म चर्वअदने ॥ लिप्तं- लिप्यतेस्म लिपउपदेहे क्वचिल्लीढमित्यपिपाठः तत्रलिहआस्वादने ॥ धातुःढलोपेदीर्घः ॥ प्रत्यवसितं प्रत्यवसीयतेस्म षोंतकर्मणि ॥ गिलितं गीर्यतेस्म गॄनिगरणे ॥ खादितं खाद्यतेस्म खादृभक्षणे ॥ प्सातं प्सायतेस्म प्साभक्षणे ११० अभ्यवहृतं अभ्यवह्रीयतेस्म ॥ अन्नं अद्यतेस्म ॥ जग्धं अदोजग्धिर्ल्यप्तिकिति ज्ञापकात् जग्धिर्वा ॥ ग्रस्तं ग्रस्यतेस्म ग्रसुग्लसुअदने ॥ ग्लस्तं ॥ अशितं अश्यतेस्म अशभोजने ॥ भुक्तं भुज्यतेस्म भुजपालनाभ्यवहारयोः चतुर्दशखादितस्य इमेसर्वेक्तांताः ॥

मर्वसितावगते ऊरीकृतमुररीकृतसंगीकृतमाश्रुतंप्रतिज्ञातं १०८ संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतं ईलितशस्तपणायितपनायितप्रणुतपणितप नितानि १०९ अपिगीर्णवर्णिताभिष्टुतेडितानिस्तुतार्थानि भक्षितचर्वितलीढप्रत्यवसितगिलितखादितप्सातं ११० अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते ॥

धभावस्य यत्कर्म वृत्तं तत् ॥ अवदानं वृत्तं कर्म भूतपूर्वं चरित्रं ॥ कर्मणः कर्मणि वा वृत्तं ॥ नर्त्तनं वृतु वर्त्तने भावे निष्ठा क्वचिदपदानमिति पाठः एकं प्रशस्तकर्मणः ॥ काम्यदानं त्प्रवारणं वृञ् ओल्युट् काम्यस्य वरस्त्री हस्त्यश्वादेर्दानं इत्याद्युक्तं ॥ प्रव्रियते दज्ञवरणे प्रवारणं महादानमिति त्रिकांडशेषः प्रहारणमिति त्रिकांडशेषः ३ वशक्रिया वशस्य क्रिया ॥ करणं ॥ संवननं वनु याचने ल्युट् संवदनमित्यपि स्यात्संवदनमालोचे वशीकारेन पुंसकमिति मेदिनी द्वे मणिमंत्रादिना वशीकरणस्य ॥ मूलकर्म ओषधीनां मूले रुच्चाटनादि यत्कर्म तत्कार्मणं कर्मैव तद्युक्तात्कर्मणोण् एकं ॥ विधूननं धूञ् कंपने ल्युट् नुक् ॥ विधुवनं धूविधूनने गाङ्कुटेति ङित्वाद्गुणाभावः विधुननमिति जटाधरः द्वे कंपनस्य ॥ तर्पणं तृप प्रीणने ॥ प्रीणनं प्रीञ् तर्पणे ल्युट् नुक् ॥ अवनं अव रक्षणादौ त्रीणि तृप्तेः ४ पर्याप्तिः त्रोणार्थात्क्तिन् ॥ परित्राणं त्रैङ् पालने हस्तधारणं हस्तेन ह-

अवदानं कर्म वृत्तं काम्यदानं प्रवारणं ३ वशक्रिया संवननं मूलकर्म तु कार्मणम् विधूननं विधुवनं तर्पणं प्रीणनावनं ४ पर्याप्तिः स्यात्परित्रा णं हस्तधारणमित्यपि सेवनं सीवनं स्यूतिर्विदरः स्फुटनं भिदा ५ आक्रोशनमभिषंगः संवेदो वेदना न ना

स्तस्य वा धारणं ॥ रोधः क्वचित् हस्तवारणमित्यपि तत्र यं हस्तेन वारणं त्रीणि मारोद्यतनिवारणस्य ॥ सेवनं षिवु तंतुसंताने ल्युट् ॥ सीवनं पृषोदरादिः ॥ स्यूतिः क्तिनि ऊठ् सेवस्य सेवनं स्यूतिरिति पाठस्तन्त्याय्यः त्रीणि सूचीक्रियायाः ॥ विदरः निदरं दृ विदारणे अप् ॥ स्फुटनं स्फुट विकसने कुटादित्वाद्गुणाभावः स्फोटनमिति भरतमालायां ॥ भिदा भिदिर् विदारणे भिदादयङ् त्रीणि द्विधाभावस्य ५ आक्रोशनं क्रुश आह्वाने ॥ अभीषंगः अभिषंग इत्यपि उपसर्गस्य निदीर्घत्वविकल्पात् द्वे शापयुक्तगालिप्रदानस्य ॥ संवेदः विद ज्ञाने घञ् ॥ वेदना विदन्वेत्तनाख्याननिवासेषु तत्र वेदनानान अतो वेदनमित्यपि द्वे अनुभवस्य आक्रोशनमभीषंगः संवेदो वेदना न ना ॥ संमूर्छनमभिव्याप्तिर्याच्ञाभिशस्तिर्नादना ॥

संमूर्छनं मूर्छामोहसमुच्छाययोः ल्युट् ॥ अभिव्याप्तिः अभिव्यापनं आप्लृव्याप्तौ क्तिन् हेैसर्वतोव्याप्तेः ॥ याञ्चा याचनं टुयाचृयांचायां ॥ भिक्षा ॥ भिक्षणं भिक्षायांचादौ ॥ अर्थना अर्थयांचायां ॥ अर्दना अर्दगतौयाचने उभाभ्यामपियुच् चत्वारियाचनस्य याञ्चेतियजयाचेतिनङ् ६ वर्धनं वर्धछेदनपूरणयोः ॥ छेदनं छिदिरद्वैधीकरणे उभयत्रल्युट् वर्धनंछेदनेहृध्यादितिदंत्योऽध्यादावजयः हेैकर्तनस्य ॥ आनंदनं टुनदिसमृद्धौ आमंत्रणमितिक्वचित्पाठः तत्रमंत्रिगुप्तभाषणे ॥ सभाजनं सभाजप्रीतिसेवनयोः उभयत्रल्युट् सभाजनमितिराजमुकुटः ॥ आप्रच्छन्नं ल्युट्प्रच्छज्ञीप्सायां आङ्पूर्वआनंदार्थः वीणिस्वागतसंप्रसारणादिनाविहितस्यानंदस्य ॥ आम्नायः घञ्युक् आम्नानं म्नाअभ्यासे ॥ संप्रदायः दाञोघञ्युगागमः हेैगुरुपरंपरागतस्यसदुपदेशस्य ॥ क्षयः क्षयणं क्षिक्षये एरच् क्षिया क्षिषहिंसायां षित्वादङ् हेैअपचयस्य ७ ग्रहः ग्रहणं ग्राहः ग्रहउपादाने ग्रहेत्यप् हेैग्रहणस्य ॥ वशः वशकांतौ वशिरण्योरुपसंख्यानइत्यप् ॥ कांतिः कमुकांतौ हेैइच्छायाः ॥ रक्षणः रक्षपालने नङ् ॥ रक्षा त्राणं त्रैङ्पालनेल्युट् हेैरक्षणस्य ॥ रणः रणनं रणशब्दे वशिरण्योरित्यप् ॥ क्वणः क्वणनं क्वणशब्दे क्वणोवीणेत्यप् हेैशब्दकरणस्य व्यधः व्यधनं व्यधताडने व्यधजपेत्यप् ॥ वेधः वेधनं विधविधाने घञ् हेैवेधनस्य ॥ पचा पचनं डुपचष्पाके षित्वादङ् हेैपचनस्य ॥ हवः ह्वानं ह्वेञ्स्पर्धायां शब्दे च भावत्तुपेतिसाधुः ॥ हूतिः हेैआह्वानस्य ॥ वरः वरणं वृञ्वरणे ग्रहवृदृइत्यप् तपोभिरिष्यनेयस्मदेवेभ्यः सवरोमतः ॥ वृतिः क्तिन् हेैवेष्टनेसंभक्तौच ८

संमूर्छनमभिव्याप्तिर्याञ्चाभिक्षार्थनार्दना ६ वर्धनच्छेदनेथहेैआनंदनसभाजने आप्रच्छन्नमथाम्नायः संप्रदायः क्षयेक्षिया ७
ग्रहेग्राहोवशः कांतौरक्षणस्त्राणेरणः क्वणे व्यधोवेधोपचापाकेहवोहूतौवरोवृतौ ८

ओषः ओषणं उषदाहे घञ् ॥ प्लोषः प्लोषणं प्लुषदाहे प्रोषइत्यपिशब्दार्थकोशे हेदाहस्य ॥ नयः नयनं णञ्गतौ घञ्संज्ञात्वात् वृध्यभावः ॥ नायः णीञ्प्रापणे एरच् हेयंनीतेः ॥ ज्यानिः ज्यानं ज्यावयोहानौ क्तिन्संप्रसरणं ॥ जीर्णः जरणं जृषवयोहानौ हेजीर्णतायाः ॥ क्रमः क्रमणं घञ्नोभानोपेति वृध्यभावः क्रमुअ नवस्थाने क्लमिः इकृष्यादिभ्यः हेक्रमणस्य ॥ स्फातिः स्फायनं स्फायी वृध्दौ क्तिन् स्फातिर्वृध्दिः प्रसारोनेति बोपालितः ॥ वृध्दिः वर्ध्दनं वृधुवृध्दौ क्तिन् हेवृध्देः ॥ प्रथा प्रथनं प्रथप्रख्याने भिदादृङ् ॥ ख्यातिः ख्यानं ख्याप्रकथने चक्षिङादेशोवा हे प्रख्यानेः ॥ स्पृष्टिः स्पर्शने स्पृशसंस्पर्शे ॥ पृक्तिः पृचेः क्तिन् हेस्पर्शस्य ॥ स्नवः स्नवनं ष्णुप्रस्नवणे ॥ स्रवः स्रुगतौ हेप्रस्रवणस्य ९ एधा एधवृध्दौ अप्रत्ययः विधेत्यपि तन्नेत्यं विधाजलासनेऋध्दौप्रकारे वेतसेविधाविति मेदिनी धाञअ

ओषःप्लोषेनयोनायेज्यानिर्जीर्णौक्रमोक्लमौ स्फातिर्वृध्दौप्रथाख्यातोस्पृष्टिःपृक्तौस्नवःस्रवे ९ एधासमृध्दौस्फुरणेस्फुरणा

प्रमितौप्रमा प्रसूतिःप्रसवेश्च्योतेप्राघारःक्लमथःक्लमे १०

ङ् ॥ समृध्दिः समर्ध्दनं ऋधुवृध्दौ क्तिन् हेउपचयस्य ॥ स्फुरणं स्फुरस्फुरणेसंचलने कुटादिः ॥ स्फुरणा स्वार्थण्यंताद्युच् स्फुलनंस्फोरणंस्फारणंचेत्यपि हेस्फुरणस्य ॥ प्रमितिः प्रमाणं डुमिञ्प्रक्षेपणे ॥ प्रमा माङ्माने आतश्चेत्यङ् हेयथार्थज्ञानस्य ॥ प्रसूतिः प्रसवनं षूङ्प्रसवे षूप्रेरणेवा प्रसवः अप् हेगर्भविमोचनस्य ॥ श्च्योतः श्च्योतनं श्च्युतिर्क्षरणे घञ् ॥ प्राघारः प्रघरणं घृक्षरणदीप्त्योः घञ्उपेतिदीर्घः हेघृतादेःक्षरणे ॥ क्लमथः क्लमनं क्लमु ग्लानौ शमादिभ्योथच् ॥ क्लमः घञ्नोदेतिवृध्यभावः हेग्लानेः १०

उत्कर्षः उत्कर्षणं कृषविलेखने घञ् ॥ अतिशायः अतिशयनं द्वे प्रकर्षस्य ॥ संधिः संधानं धाञ् उपसर्गे घोः किः ॥ श्लेषः श्लेषणं श्लिष आलिंगने घञ् द्वे संधानस्य ॥ विषयः विषयनं षिञ् बंधने एरच् ॥ आशयः एरच् आश्रय इत्यपि पाठः अत्राप्यच् द्वे आश्रयस्य ॥ क्षिपा क्षेपणं क्षेपणं क्षिप क्षेपणे भिदाद्यङ् ल्युट् द्वे प्रेरणस्य ॥ गीर्णिः गीलनं गॄ निगरणे क्तिन् ॥ नाविष्ठावत्वान्नत्वं ॥ गिरिः इकु द्वे निगरणस्य गिलणे इति रभसः ॥ गुरणं गुरी उद्यमे कुटादिः गूरणमिति मुकुटः ॥ उद्यमः उद्यमनं यमउपरमे घञ् द्वे भाराद्युद्यमस्य ११ उन्नायः उन्नयनं अवोदोर्नियः इति घञ् ॥ उन्नयः एरच् द्वे उन्नयनस्य ऊर्ध्वं नयनस्य ॥ श्रायः श्रयणं श्रीञ् सेवायां श्रिणीभि घञ् श्रयणं द्वे सेवायाः ॥ जयनं ल्युट् जयः एरच् द्वे जयस्य ॥ निगादः निगदनं गद व्यक्तायां वाचि ॥ निगदः नौ गद इति अप् पक्षे घञ् द्वे कथनस्य ॥ मादः मदनं मदी हर्षे घञ् ॥ मदः

उत्कर्षोऽतिशये संधिः श्लेषे विषय आश्रये क्षिपायां क्षेपणं गीर्णिर्गिरौ गुरणमुद्यमे ११ उन्नाय उन्नये श्रायः श्रयणे जयने जयः निगादो निगदे मादो मद उद्वेग उद्भ्रमे १२ विमर्दनं परिमलोऽभ्युपपत्तिरनुग्रहः निग्रहस्तद्विरुद्धः स्यादभियोगस्त्वभिग्रहः १३

अप् द्वे हर्षस्य ॥ उद्वेगः उद्वेजनं ओविजी भयचलनयोः घञ् ॥ उद्भ्रमः उद्भ्रमणं भ्रमु अनवस्थाने घञ् नोदेति वृध्यभावः द्वे उद्वेजनस्य १२ विमर्दनं मृदुक्षोदे ल्युट् ॥ परिमलः परिमलनं मल धारणे घञ् संज्ञात्वात् वृध्यभावः द्वे कुंकुमादिमर्दनस्य तदुक्तं विश्वे परिमलो विमर्देऽपीति ॥ अभ्युपपत्तिः अभ्युपपदनं पद गतौ क्तिन् ॥ अनुग्रहः अनुग्रहणं ग्रह उपादाने अप् द्वे अंगीकारस्य ॥ तद्विरुद्धः निग्रहः स्यात् अप् ततोऽनुग्रहात् नियमेन ग्रहणं विग्रहः स्तु विरोधः स्यादित्यपि पाठः ॥ तत्र विरोधनं रुधिर आवरणे घञ् ॥ एकं अभियोगः अभियोजनं घञ् अभिग्रहः अप् युजिर योगे अभिग्रहो भिग्रहणेऽप्यभियोगे च गौरवे इति रुद्रः १३ द्वे कलहाह्वानस्य ॥

मुष्टिबंधः मुष्टेर्बंधः ॥ संग्राहः संग्रहणं समिमुणाविति घञ् द्वे मुष्टिबंधस्य ॥ डिंभः डिंबन डि विनोदे घञ् डीङ्विहायसांगतौ डिंबइत्यपि भयध्वनौ उक्तं सेमिडिंबः प्लीहनिविप्लवइतिरभसः ॥ डमरः डयनं डमेतिशाहस्यरानंघअर्थेकः विद्रवेडिंबं ॥ विप्लवः विप्लवनं प्लुङ्गतौ अप् त्रीणिजरलुंठनादेः कृपसर्गविशेषस्य प्रलयस्यवा अशक्त्र्कलहस्येतिरामस्वामी ॥ बंधनं बंधबंधने ल्युट् ॥ प्रसितिः प्रसयनं षिञ्बंधने क्तिन् ॥ चारः चरणं चरगतौ घञ् अनेकार्थत्वात्बंधने नदुक्तंरुद्रकोशे बंधा प्रसर्पयोश्चारइति त्रयंबंधनस्य स्वामीतु चारस्थानेस्वारं पठित्वास्वारादीनांचतुर्णांपर्यायतामाह स्वृशब्दोपतापयोः अचप्रज्ञाद्यण् ॥ स्पर्शः स्पृशति स्पृशबाधन स्पर्शनयोः रेफहीनस्यप्रकृतिः स्पर्शोरुजायांदानेचेतिविश्वः स्पशइतिरेफहीनोपि ॥ स्प्रष्टा स्पृशति तृच्अमागमः स्पष्टेत्यपि उपतप्ता उपतपति तपसंतापे त्रीणि

मुष्टिबंधस्तुसंग्राहोडिंबेडमरविप्लवौ बंधनंप्रसितिश्चारःस्पर्शस्प्रष्टोपतप्तरि १४ निकारोविप्रकारःस्यादाकारस्त्विंगइंगितम् परिणामोविकारोद्वेसमेविकृतिविक्रिये १५

संतप्तस्य संतापस्यवा १४ निकारः निरुष्टीकरणं उभयत्रकृञोघञ् ॥ विप्रकारः विप्रकरणं नदुक्तंध रण्यां निकारस्त्वासपरिभवेधान्यस्योत्क्षेपणेपिचेति द्वे अपकारस्य ॥ आकारः आकरणं घञ् ॥ इंगः इंगनं इंगितं इगिगतौ क्तः त्रीणि अभिप्रायानुरूपचेष्टायाः ॥ परिणामः परिणमनं णमप्रह्वत्वे घञ् ॥ विकारः विकरणं घञ् द्वे प्रकृतेरन्यथाभावे यथामृद्विकारोघटः ॥ विकृतिः विक्रिया द्वे विरुद्धक्रियायाः परिणामस्यैवपर्यायाविभावपिवा शुक्लुदत्तु आद्यद्वयंपरि णतस्योत्तरद्वयंविकृतेरिति ॥ १५ अपहारः अपहरणं हृञ्हरणे ॥ अपचयः अपचयनं चिञ्चयनेएरच् द्वे अपहरणस्य ॥ समाहारः समाहरणं घञ् ॥ समुच्चयः समुच्चयनं चिञ्चयनेएरच् द्वे राशीकरणस्य ॥ ७ ७

प्रत्याहारः प्रत्याहरणं घञ् ॥उपादानं द्वेस्वविषयेभ्यइंद्रियेपरावर्त्तनस्य ॥विहारःविहरणं उभयत्र घञ् ॥परिक्रमः नोदेतिवृध्यभावः परिक्रमणं क्रमुपादविक्षे
पे द्वेपर्यागते १६ अभिहारः अभिहरणं अभिग्रहणं घञ्ल्युट् आभ्योहारइत्यपि द्वेचौर्यकरणस्य ॥निर्हारःनिर्हरणं अभ्यवकर्षणं द्वेशल्यादेर्निष्कासनस्य
उभयत्रघञ्ल्युटौ ॥अनुहारः अनुहरणं ॥अनुकारः अनुकरणं उभौ घञतौ द्वेविडंबनस्य अर्थस्य धनादेरपगमेव्ययइत्येकं ॥ व्ययनं एरच् व्ययवित्तेसमुत्सर्गे
इत्युक्तत्वात् १७ प्रवाहः प्रवहणं वहप्रापणे घञ् ॥प्रवृत्तिः प्रवर्त्तनं वृतुवर्त्तने क्तिन् द्वेअविछेदेनजलादिप्रवृत्तेः यद्बहिर्गमनंसप्रवाहउच्यते एकं प्रकृष्टो
वहः गौचरेतिसाधुः प्रवहस्तु बहिर्यात्रामातरिश्वप्रभेदयोरितिविश्वः ॥वियामः वियमनं घञ् ॥वियमः अप् ॥यामः यमः अप्घञ् ॥संयामः संयमः यमःसमु

प्रत्याहारउपादानंविहारस्तुपरिक्रमः १६ अभिहारोभिग्रहणंनिर्हारोभ्यवकर्षणम् अनुहारोनुकारस्स्यादर्थस्यापगमेव्ययः १७
प्रवाहस्तुप्रवृत्तिःस्यात्प्रवहोगमनंबहिः वियामोवियमोयामोयमःसंयामसंयमौ १८ हिंसाकर्माभिचारःस्याज्जागर्याजागराद्वयोः
विघ्नोंतरायःप्रत्यूहःस्यादुपघ्नोंतिकाश्रये १९

पनिविष्वुचेतिसाधवः षट्संयमनस्य १८ हिंसाकर्म॥अभिचारःस्यात् एकं हिंसाफलं कर्मजार
णमारणादीत्यर्थः शाकपार्थिवादिः ॥अभिचरणं घञ् ॥ जागर्या जागरणं जागरा जागर्त्तेरकारोवापक्षेयक्जाग्रोवीतिगुणः द्वेजागरणस्य अग्रियेत्यपि
पाठःजागर्तिश्चेतिमुकुटः तत्रजागरास्त्रीपुंसयोः॥विघ्नः विहननं घञर्थेकः ॥अंतरायः अंतर्मध्येअंतरस्यव्यवधानस्यचा अयनं॥अयगतौ त्रीणि
विघ्नस्य अंतिकाश्रयेउपघ्नइत्येकं॥अंतिकेआश्रीयते आश्रयणंवा एरच् उपहन्यते उपहननंवा उपघ्नआश्रयेइतिसाधुः १९

व्यत्यासः व्यत्यसनं असुक्षेपणे॥विपर्यासः विपर्यसनं उभयत्रघञ् ॥व्यत्ययनं विपर्ययः विपर्यसनं उभयत्रएरच् विपर्यायइतिभरतमालायाम् चत्वारिव्य
तिक्रमस्य॥पर्ययः पर्ययणं एरच् अतिक्रमः अतिक्रमणं घञ् ॥अतिपातः अतिपतनं पत्लृगतौ ॥उपात्ययः उपात्ययनं एरच् चत्वारिअतिक्रमस्य ३३
समाहूययच्चारान्प्रेषणं तत्रप्रतिशासनंस्यात् शासुअनुशिष्टौ ल्युट् एकं॥ भृत्यादिप्रेषणस्य ॥ ऋतुषुद्विजन्मनांछंदोगानांयास्तुतिभूमिः स्तवनदेशः ससंस्ता
वः स्यात् एकं॥ समेत्य स्तुवंत्यत्र षुञ्स्तुतौ यज्ञेसमिस्तुवइतिघञ् अधिकरणे ३४ यत्रकाष्ठेकाष्ठंनिधाय तक्ष्यतेवास्यादिनातन्नृक्रियते सकाष्ठरूपआधारउद्

स्याद्व्यत्यासोविपर्यासोव्यत्ययश्चविपर्यये॥पर्यायोऽतिक्रमस्तस्मिन्नतिपातउपात्ययः ३३ प्रेषणंयत्समाहूयतत्रस्यात्प्रतिशासनं
॥ससंस्तावःक्रतुषुयास्तुतिभूमिर्द्विजन्मनाम् ३४ निधायतक्ष्यतेयत्रकाष्ठेकाष्ठंसमुद्घनः॥ स्तंबघ्नस्तुस्तंबघनः स्तंबोयेननि
हन्यते ३५ आविधोविध्यतेयेनतत्रविष्वक्समेनिघः॥ उत्कारश्चनिकारश्चद्वौधान्योत्क्षेपणार्थकौ ३६ घनः उद्घनोत्याधानंइतिसाधुः

ऊर्ध्वंहन्यतेऽस्मिन् एकं॥ स्तंबः तृणादिगुच्छउन्मूल्यतेयेनसः खनित्रः स्तंबघ्नः स्तंबघनः द्वेस्यातां स्तंबोहन्यतेयेन स्तंबेकचेतिकः अप्चघनादेशश्च क
पक्षेगमहनेत्युपधालोपः२ःयेनशस्त्रादिनाविध्यतेतत्रसआविधःस्यात् आविध्यतेयेन व्यधताडने घञर्थेकसप्रसारणं एकं॥ भ्रमरसूच्यादेः विंधणेइ–
त्यादिख्यातस्य॥ विष्वक्समेवृक्षेनिघःस्यात् विष्वक्आसमंतात् समंसमानंतत्र नियतंहन्यते नियोनिमीतिसाधुः एकं तुल्यारोहपरिणाहवृक्षादेः॥उत्का
रः उत्करणं॥निकारः निकरणं॥कृविक्षेपे कृधान्येइतिघञ् द्वौधान्योत्क्षेपणार्थकौस्यातां धान्यस्यउत्क्षेपणंअर्थोययोस्तौ ३६ ७

निगारः निगरणं गृनिगरणे ॥उद्गारः उद्गरणं गृशब्दे उभयत्र घञ् ॥क्ष्वेडः विवक्षणं दुःखशब्दे ॥उद्ग्राहः उद्ग्रहणं ग्रहउपादाने उभयत्र घञ् निगारादिउद्ग्राहांताः ग रणादिषुउन्नेयाः यथा गरणेअभ्यवहारेनिगारइत्येकं गिळणे इतिख्यातस्य आदिना उद्गरणे वमने उद्गारःस्यात् विस्रवणे शब्दे विस्रावः इत्येकं शिंकइतिख्या तायाः उद्ग्रहणे ऊर्ध्वीकृत्यग्रहणे उद्ग्राहः स्यात् ढेंकरइतिख्यातः क्रमेणैकैकं ३७ आरतिः आर्येष ॥अवरतिः॥आरमणं रमक्रीडायां त्रिषुक्तिन् ॥विरतिः ॥उपरामः उपरमणं घञ् उपरमणइतिख्यातस्य चत्वारिउपरतेः॥निष्ठेवः ष्ठिवुनिरसने घञ् ॥निष्ठ्युतिः क्तिन्प्रत्ययेऊठ् ॥निष्ठेवनं निष्ठीवनं ल्युट् चत्वारि मुखेनश्लेष्मनिरसनस्य अभिन्नानि समानानिस्युः ३८ जवनं ल्युट् जुः सौत्रोवेगे ॥जूतिः ऊतियूतिजूतीतिसाधुः द्वे वेगस्य ॥सातिः षोंतकर्मणिक्तिन् ॥अव

निगारोद्गारविस्रावोद्ग्राहास्तुगरणादिषु ३७ आरत्यविरतिविरत्यउपरामेथास्त्रियांतुनिष्ठेवः निष्ठ्यूतिर्निष्ठेवनंनिष्ठीवनमि त्यभिन्नानि ३८ जवनेजूतिःसातिस्त्ववसानेस्यादथज्वरेजूर्तिः उदजस्तुपशुप्रेरणमकरणिरित्यादयःशापे ३९ गोत्रांतेभ्यस्त स्यवृंदमित्यौपगवकादिकम् आपूपिकंशाष्कुलिकमेवमाद्यमचेतसाम् ४०

सानं द्वे समापनस्य ॥ज्वरः ज्वररोगेघञ् संतापपूर्वकत्वात्तत्थ्यभावः ॥जूर्तिः ज्वरस्तसेल्यूट् द्वे ज्वरस्य पशूनां धेन्वादिप्राणिनां प्रेरणं उदजइत्युच्यते ॥उदजनं अजगतौ अप् अपत्र पोरित्युक्तेर्विभाषेण ॥एकं शापे आक्रोशे योत्येअकरणिरि त्यादयः ॥अकरणं आदिशब्देन ॥अजीवनिः अजननिः आक्रोशेनन्यनिः ॥अवग्राहः मियाहदलि आक्रोशेवन्योग्रहइति घञ् ३९ गोत्रांतेभ्यः अपत्यप्रत्ययांते- भ्यः औपगवादिशब्देभ्यस्तस्यवृंदं समूह इत्यर्थे औपगवादिकं उपगोरपत्यानिपुमांसः औपगवास्तेषांसमूहः गोत्रोक्षेतिवुञ् आदिशब्देन गार्गकं ॥दाक्षकमित्यादि अचेतसां जडानां अपूपादीनां वृंदं आपूपिकं अपूपानांसमूहः अचित्तेतिठक् ॥शाष्कुलिकं शष्कुलीनांसमूहः आदिनासाक्तुकं इत्यादृत्ता एकैकं ४० ७ ७ ७

माणवानांबालानांसमूहः ब्राह्मणमाणववाडवाद्यत् माणव्यं सहायाः सखायः तेषांसमूहः॥सहायता ग्रामजनेतिसूत्रे गजसाहायाभ्यांचेति वक्तव्यं इतितल् हला नांसमूहोहल्या पाशादित्वाद्यन् एकैकं द्विजन्मनांब्राह्मणानांवाडवानांचसमूहः ब्राह्मण्यवाडव्येस्यातां ब्राह्मणमाणवेतियत् ४१ पर्शुकानांआस्थिविशेषानां समूहः॥पार्श्वं पर्श्वाणस् पृष्ठानांसमूहः पृष्ठ्यं पृष्ठाद्यत् यज्ञविषये ऽदःस्मरंति॥ खलिनी खलानांसमूहः॥खल्याच इनित्रेतिइनिः खलगोरथात् हेस्वलसमू हस्य मनुष्यानां समूहोमानुष्यकं ४२ ग्रामाणांसमूहोग्रामता जनानांसमूहोजनता उभयत्र ग्रामजनेतितल् धूमानांसमूहो धूम्या॥ पाशानांसमूहः पाश्या गलानांतु हल्काशानांसमूहोगल्या पाशादयइमे॥सहस्राणांसमूहः॥साहस्रं॥करीषाणां शुष्कगोमयानांसमूहः कारिषं॥ वर्मणांकवचानांसमूहः वार्मणं सह

माणवानांतुमाणव्यंसहायानांसहायता हल्याहलानांब्राह्मण्यवाडव्येतुद्विजन्मनां ४१ द्वेपर्शुकानांपृष्ठानांपार्श्वंपृष्ठ्यमनु क्रमात् खलानांखलिनीखल्याप्यथमानुष्यकंनृणां ४२ ग्रामताजनताधूम्यापाश्यागल्यापृथक्पृथक् अपिसाहस्रकारी षवार्मणाथर्वणादिकम् ४३ इतिसंकीर्णवर्गः नानार्थाःकेपिकांतादिवर्गेष्वेवात्रकीर्तिताः भूरिप्रयोगायेयेषुपर्यायेष्वपि तेषुते १

स्यादिभ्योभिक्षादित्वादण् अथर्वणांसमूहः आथर्वणं आदिशह्वात् चार्मणमांगारंचार्मिणमित्याद्यूह्यं॥ इतिसंकीर्णार्थानांवर्गः॥संकी र्णार्थत्वंच घञादीनांकर्तृभिन्नकारकेभावेचविधानात् भावेप्रायेणविग्रहोदर्शितः कारकेषुतुयथासंभवमूह्यः॥ इतिसंकीर्णवर्गविवरणं॥ अथानेकार्थाः अत्र नानार्थवर्गेवक्ष्यमाणेषु कांतादिवर्गेष्वेवकांताआदयोयेषांखांतगांतादीनांवर्गेष्वेवकेपिनानार्थाप्रोक्ताः॥ येकांतादयोनाकलोकादयः॥शह्वाः॥भूरिप्रयोगाःभूरि प्रयोगोयेषांनाटककाव्यालंकारादेषु येषुपर्यायेषुदृश्यंते तेष्वपिपर्यायेषुकथिताः अपिशह्वात्इहापि॥यथानाकशह्वः॥अतःपुनरुक्तिर्नोद्भाव्येतिभावः१

आकाशेस्वर्गेपिनाक इत्येकंनामवर्तते नअकंदुःखमत्र नभ्राडित्यत्रनिपतितः ॥ लोकस्तु भुवनेजनेवर्तते एकं लोक्यते लोकदर्शने कर्मणिघञ् ॥ श्लोकः पद्येअनु ष्टुबादौवत्ने यशसिकीर्तौ इत्येकं ॥ श्लोक्यते श्लोकसंघाते घञ् शरेबाणेखड्गेचसायकः स्यात् स्यति ण्वुलयुक् २ क्रोष्टा सृगालः ॥ वरुणः पाशी ॥ जंबुकौ जंबुक शब्दवाच्यौ स्यातां ॥ जमति जमु अदने मृगवादिः तदुक्तंमेदिन्यां ॥ जंबुकः फेरवेनीचे पश्चिमाशापतावपीति ॥ चिपिटः ॥ भ्रष्टव्रीहितंडुलः ॥ अर्भकः शिशुः ता वुभौपृथुकौस्यातां ॥ प्रथते प्रथप्रख्याने ॥ औणादिकः तदुक्तंकोशांतरे ॥ पृथुकः पुंसिचिपिटेशिशौस्यादभिधेयवत् इति ॥ दर्शनंद्योतश्च ॥ अलोकौ ॥ स्यातां ॥

आकाशेत्रिदिवेनाकोलोकस्तुभुवनेजने पद्येयशसिचश्लोकः शरेखड्गेचसायकः २ जंबुकौक्रोष्टुवरुणौपृथुकौचिपिटार्भकौ ॥
आलोकौदर्शनेद्योतौभेरीपटहमानकौ ३ उत्संगचिन्हयोरंकः कलंकोंकापवादयोः तक्षकोनागवर्धक्योरर्कः स्फटिकसूर्ययोः ४

आलोकनं लोकदर्शनं घञ् ॥ आलोकस्तु उभानद्योते दर्शने बंदिभाषण इतिमेदिनीकारः ॥ भेरीपटहं ॥ आनकौस्यातां भेरीचपटहश्चतयोः समाहारः ॥ तुर्यांगत्वा देकवद्भावः अनितीति अनप्राणने ण्वुल् तदुक्तंमेदिन्यां ॥ आनकः पटहेभेर्यांमृदंगेध्वनदंबुद इति ३ उत्संगः क्रोडः तत्रचिन्हेचांकः ॥ अंक्यतेनेन अ किलक्षणे करणेघञ् तदुक्तंमेदिन्यां अंकोरूपकभेदो ।ऽगचिन्हरेखाजिभूषणे ॥ रूपकांशांतिकोत्संगस्थानेकंपापदः स्वयोरिति ॥ कलंकः अंकापवादयोः चिन्हादोषा परोपयोः स्यात् कलति कलशब्दसंख्यानयोः क्विप् अकश्च कलंकोंके । पवादेचकालायसमलेपिच ॥ नागवर्धक्योः नागविशेषत्वष्ट्रोः तक्षकः स्यात् तक्षति तक्षूतनूकरणे ण्वुल् स्फटिकसूर्ययोः अर्कशब्दः स्यात् अर्च्यते अर्कस्तवने अर्चपूजायांवा घञ् तदुक्तंमेदिन्यांअर्कोर्कपर्णेस्फाटिके रवौताम्रेदिवस्पताविति ४

मारुतेवार्यो वेधसिब्रह्मणि ब्रह्मेसूर्ये कइत्येकाक्षररूपशब्दः स्यात् ॥ कायति कचतिवा केशाहे कचदी सौडः तदुक्तंमेदिन्यां कोब्रह्मणिसमीरात्मयमदंभेषुभास्करे॥ मयूराग्नौचपुंसिस्यात्सुखशीर्षजलेषुकमिति ॥ शिरोंबुनोः ॥ कंस्यात् मयूराग्नौच पुंसिस्यात्सुखशीर्षजलेषुकामितिमेदिनी ॥ सुखेवपिकंस्यात् कमितिक्लीबं कशा हूस्त्र ॥ पुंसिरूपंतु ॥ कः कौकाः इत्यादिरूपंकल्पं ॥ तुच्छधान्येतंदुलरहितेधान्येसंक्षेपेलघुनिभक्तसिक्थके ॥ पुलाकः स्यात् पोलनं पुलमहत्वे संपदादिः पुलमकति अकङ्कादि लायांगतोइत्याद्युक्तं ५ करिणः वारणस्यपुच्छमूलोपांते पुच्छपुलस्यउपांते पायुपिधानमांसपिंडे उलूकेपक्षिविशेषच पेचकः पचतिः पच्यतेवा पचिमध्योरित्वोपधायाः इतिवुन् ॥ कमंडलौच करेणौवर्षोपले ॥ करकः करोति करकस्तुपुमान् पक्षिविशेषेदाडिमेपिच द्वयोर्मेघोपलेनस्त्री करकंचकमंडलावितिमेदिनी ॥ सुगतेबुद्धेचका

मारुतेवेधसिब्रध्नेपुंसिकः कंशिरोंबुनोः स्यात्पुलाकस्तुच्छधान्येसंक्षेपेभक्तसिक्थके ५ उलूकेकरिणःपुच्छमूलोपांतेचपेचकः कमं डलौचकरकःसुगतेचविनायकः ६ किष्कुर्हस्तेवितस्तौचशूककीटेचवृश्चिकः प्रतिकूलेप्रतीकस्त्रिष्वेकदेशेतुपुंस्ययम् ७ गाद्विघ्नराजे ॥ विनायकः स्यात् विनयतिण्वुल् विनायकस्तु ॥ हेरंबेतार्क्ष्येविघ्नेजिनेगुरौ ६ हस्तेहस्तप्रमाणेवितस्तौचकिष्कुः स्यात् कायतेनेन कौशब्दे मृगय्वादिः तदुक्तंकोशे ॥ किष्कुर्द्वयोर्वितस्तौचसमकोष्ठेकरेपिचेति ॥ चकारात् ॥ प्रकोष्ठेपि शूककीटे कीटविशेषे ॥ वृश्चिकः स्यात् वृश्चति ओव्रश्चू छेदने वृश्चेःकिकन् चकारात् अष्टमराशौ तदुक्तंहलायुधे वृश्चिकस्तुद्रुमेराशौशूककीटौषधीभिदोरिति ॥ प्रतिकूलेप्रतीकः स्यात् प्रतिकूले त्रिषु अयंप्रतीकः एकदेशेपुंसिस्यात् प्रतिगताईलक्ष्मीर्येनकप्रत्ययः प्रकोवयवेपिस्यात्प्रति कूलविलोमयोः ७ ७ ७ ७ ७ ७ ७

भूनिंबेकिराततिक्ते कत्तृणेभूस्तृणेपिच ॥ भूतिकंस्यात् भवति कित्तृकत् कत्तृणभूस्तृणे गंधतृणविशेषौ ॥ ज्योत्स्निकायां ॥ पटोल्यां ॥ घोषे अपामार्गे ॥ कोशातकी स्याद
कोशमतति अतसातत्यगमने कुनगौरादिः तदुक्तं मेदिन्यां ॥ कोशातकः कर्नेपुंसि पटोल्यां घोषकेस्त्रियामिति ८ ज्योत्स्ना चंद्रमसोभासि स्फुरज्योतिर्निशिस्मृ
ते त्यजयः कट्फलेकायफल इति ख्यात वृक्षभेदे शितखदिरे च ॥ सोमवल्कः स्यात् ॥ सोमइव वल्को वल्कलमस्य ॥ सिल्हके पण्यभेदे ॥ तिलकल्के निःस्नेहति-
लचूर्णे च ॥ पिण्याकः पण्यते पणव्यवहारे पिनाकादिः पिण्याकोस्त्री तिलकल्के हिंगु बाल्हीकसिल्हकइति ॥ रामठे हिंगुनि बाल्हीकंस्यात् ईत्यतेवह्रतिवा अली

स्याद्भूतिकंतु भूनिंबेकत्तृणेभूस्तृणेपिच ज्योत्स्निकायांच घोषेच कोशातक्यथ कट्फले ८ सितेचखदिरे सोमवल्कः स्यादथ सि
ल्हके तिलकल्केच पिण्याको बाल्हीकं रामठेपिच ९ महेंद्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः रुक्तापशंकास्वातंकः स्वल्पेपिक्षुल्ल
कस्त्रिषु १०

कादिः तदुक्तं रभसकोशे ॥ बाल्हीकं बाल्हीकं धीराहिंगुनोर्नाश्वदेशयोरिति ॥ चकारात् प्रतिपदोक्तकोशस्थ पदसंग्रहः ९ महेंद्रगुग्गुलूलूकव्यालग्राहिषु ॥ कौशि
कः कुशिकस्यापत्यं ॥ कौशिको नकुले व्यालग्राहे गुग्गुलशक्रयोः ॥ विश्वामित्रेचकोशज्ञोल्लूकयोरपि कौशिकः ॥ कौशिकी चंडिकायांच नदीभेदेच योषितीतिवि
श्वः ॥ रुक्तापशंकासु रोगसंतापभयेषु आतंकः स्त्रेकंनाम आतंकनं नफि ऊ कृजी वने धन्वभावे करणेवा आतंको रोगसंतापशंकासु सुरजध्वनावितिविश्वः
स्वल्पेक्षुल्लकः स्यात् ॥ क्षोदनं अिक्षुदासंचूर्णने संपदादिः क्षुदं क्षुधं कान्यानि अ॰ ॥ ह्वात्नुनीचाल्पयोर्ग्रहणं क्षुल्लकस्त्रिषुनीचेल्पइति कोशांतरात् १०

जैवातृकः शशांकेपि ॥ जीवति जीवप्राणधारणे आतृकन्प्रत्ययश्च तदुक्तं कोशांतरे जैवातृकः पुमान्सोमेदीर्घायुष्कृशयोस्त्रिषीति ॥ अश्वस्य खुरेपि वर्त्तकः वर्त्तते वृतु वर्त्तने ण्वुल् अपिशद्वात् पक्षिवर्त्तिकयोर्ग्रहणं वर्त्तकस्त खुरेश्वस्य विहगे वर्त्तिका द्वयोरिति विश्ववात् एवं सर्वत्र ॥ व्याघ्रेपि पुंडरीकः स्यात् पुंडयति पुडि भूषायां पुंडरीकं सितांभोजे सितछत्रे च भेषजे पुंसि व्याघ्रेग्निदिग्गजे कोशकारांतरेपि चेति विश्वः ॥ यवान्यामपि दीपकः स्यात् दीपयति दीपी दीप्तौ ण्वुल् तदुक्तं विश्वे दीपकं वागलंकारे वाच्यावद्दीपकारके दीपकस्त्वाजमोदायां यवानी बर्हचूडयोरिति ११ कपिक्रोष्टुश्वानः शालावृकशद्ववाच्याः स्युः ॥ शालां वृणोति वृञ्वरणे कक् स्वर्णेपि गैरिकं स्यात् गिरौ भवं गैरिकं धातुरुक्मयोरित्युक्तत्वात् मेदिन्यां पीडार्थेपि व्यलीकं स्यात् अलति अलभूषणादौ विगतं च नत् अलीकादिः तदुक्तं विश्वे व्यलीकमप्रियाकार्यवैल

जैवातृकः शशांकेपि खुरेप्यश्वस्य वर्त्तकः ॥ व्याघ्रेपि पुंडरीको ना यवान्यामपि दीपकः ११ शालावृकाः कपिक्रोष्टुश्वानः स्वर्णेपि गैरिकं ॥ पीडार्थेपि व्यलीकं स्यादलीकं त्वप्रियेऽनृते १२ शीलान्वयावनूके द्वे शल्के शकलवल्कले ॥ साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले १३

क्ष्येष्वपि पीडनइति ॥ अप्रियेनृते अलीकं स्यात् अलीकमप्रियेपि स्यात् द्वयसत्येनपुंसकमितिविश्वः १२ शीलान्वययोः स्वभाववंशयोः ॥ अनूकं स्यात् अनूच्यति उच समवाये इगुपधेति कः तदुक्तं मेदिन्यां अनूकं तु कुले शीले पुंसि स्यात् गतजन्मनीति ॥ शकलवल्कले खंडत्वचोर्द्वे शल्के स्यातां शलति शल चलने कन् ॥ सुवर्णानां हेम्नः कर्षाणां साष्टे शते ॥ हेम्नि च ॥ उरोभूषणे हेमपले दीनारे द्रव्यभेदे च निष्कः स्यात् अष्टभिः सह वर्त्तत इति तदुक्तं मेदिन्यां ॥ निष्कमस्त्री साष्टहेमशते दीनारकर्षयोरिति ॥ गुंजानामशीतिः कर्षः कर्षचतुष्टयं तु पलं स्यात् ॥ दीनारः सांव्यवहारिकं रूपकमित्यर्थः १३ ६ ६

शमलैनसी: पुरीषपापयोः॥दंभेपि॥ कल्कः स्यात् कल्यतेकलशब्दानयोः कः तदुक्तंविश्वे त्रिषुपापशाये कल्को ऽस्त्रीविटकिट्टेभदंभयोरिति कल्को ऽस्त्री घृततैला
दिशेषेदंभेविभीतिकइतिमेदिनी॥शूलशंकरधन्वनोः पिनाकः स्यात् अस्त्रियांच पनाय्यते पत्तक्तौ पिनाकादिः तदुक्तंमेदिन्यां पिनाकोऽस्त्रीरुद्रचापेपां
सुवर्षेत्रिशूलयोरिति १४ करण्यांहस्तिन्यांधेनुकाचस्यात् धेनुरेवधेनुकास्वार्थेकन् स्याद्धेनुकाकरिण्यांचधेनावपीतिविश्वः चकारात्धेन्यामपि मेघजाले
मेघव्राते कालिकास्यात् कालोवर्णोयस्याः यद्वाकाल्येव तदुक्तंरभसेधूसरीयोगिनीभेदमानवाहेष्वकालिका ऋमदेयवस्तुमूल्येकार्ष्णीकाक्यांघनेषुचे

दीर्मारेपिचनिष्कोऽस्त्रीकल्कोऽस्त्रीशमलैनसीः दंभेप्यथपिनाकोऽस्त्रीशूलशंकरधन्वनोः १४ धेनुकातुकरेणवांचमेघजालेचकालिका
कारिकायातनावृत्त्योः कर्णिकाकर्णभूषणे १५ करिहस्तांगुलोपद्मबीजकोश्यांत्रिषूत्तरे वृंदारकोरूपिमुख्यावेकेमुख्यान्यकेवलाः १६

ति॥यातनावृत्त्योः कारिकास्यात् तदुक्तंमेदिन्यां कारिकानटयोषिति कृतौविवरणश्लोकेशिल्पयातनयोरपि नपुंसकंतुकर्मादौकारकेकर्तरित्रिष्विति यातनाकर्ष्योरि
त्यपिपाठः१५ करिहस्तांगुलौ करिहस्ताग्रे॥पद्मबीजकोश्यांच कमलांतर्गतकोशेकर्णिकास्यात् कर्णस्यालंकारः तदुक्तंमेदिन्यां कर्णिकाकरिहस्ताग्रेकरमध्यांगु
लावपि कमुकादिच्छटायोजवराटेकर्णभूषणे कर्णिकाकथ्यतेत्यंतसूक्ष्मवस्त्वग्निमंथयोरिति उत्तरेअतः परंरवांतेभ्यः प्राक्शब्दास्त्रिषुउक्त्याः वृंदारकोरूपिमुख्यौ
क्तः प्रशस्तंवृंदमस्यशृंगवृंदाभ्यामारकन् एकेमुख्यान्यकेवलाः स्युः मुख्यश्चान्यश्चकेवलश्चेति तदुक्तंमेदिन्यांवृंदारकः सुरेपुंसिमनोज्ञःश्रेष्ठयोस्त्रिष्विति एकंसं
ख्यांतरेश्रेष्ठेकेवलेतरयोस्त्रिष्वीतिविश्वः १६

दांभिकः यः आदूरेभिनेक्षणः कौक्कुटिकः स्यात् दंभोस्यास्तिठन् आदूरेरितेईक्षणेयेन कुक्कुटीं पश्यति संज्ञायांललाटकुक्कुटीइनिठक् दांभिकोमायावीइत्यर्थः योदूतःप्रभोः चाभिनः क्रोधप्रसन्नताविज्ञानायभालदर्शी यश्चकार्याक्षमः तावुभौलालाटिकौस्यातां भालंललाटंपश्यति कार्यंकर्तुमक्षमः ललाटंपश्यति ठक्भाग्वत् कार्याक्षमोभावदर्शीतिपाठः तत्र भावंचित्ताभिप्रायं लालाटिकः प्रभोर्भालदर्शिन्याश्लेषणांतरहविश्वः लालाटिकः सदालस्यप्रभक्तभावनिदर्शनीस्य जयश्च १७ इतिकांतवर्गः खांतानाह त्विड्करज्वालासु शोभाकिरणकीलेषु मयूखःस्यात् मिमीते माङ्माने माङऊखोमयश्च त्विड्वकरश्च ज्वालाच अलिबाणौ शिलीमुखौस्तः अलिर्भ्रमबाणश्च शिलीशल्यंमुखेयस्य शाम्यत्यनेन शमउपशमे शमेःखः ललाटास्थि शंखःस्यात् सच निधौनिधिभेदे कंबौच वर्तते नखियां इंद्रियेपि

स्याद्दांभिकःकौक्कुटिकोयश्चादूरेरितेक्षणः लालाटिकःप्रभोर्भालदर्शीकार्याक्षमश्चयः १७ मयूखस्त्विट्करज्वालास्वलिबाणौशिलीमुखौ॥
शंखोनिधौललाटास्थिकंबौनस्त्रीन्द्रियेपिखं १८ घृणिज्वालेअपिशिखे,खांताः शैलवृक्षौनगावगौ ॥ आशुगौवायुविशिखौशरार्कविहगाःखगाः१९

खंखर्वतेखनति खनुअवदारणे अन्येभ्योपीडः अपिशब्दात् अन्यत्रापि तदुक्तंमेदिन्यां खमिंद्रियेपुरेक्षेत्रेशून्यबिंदौविहायसि संवेदनेदेवलोकेशर्मण्यपिनपुंसकमिति १८ घृणिज्वाले किरणप्रभे शिखेअपिस्यातां शैलेइति शीङ्ञोन्हस्वश्चेतिखः अपिशब्देनअन्यत्र शिखाशाखाबर्हिचूडालांगलिक्ययमात्रके चूडामात्रेपिशिखायांचज्वालायांप्रपदेपिचेतिमेदिनी इतिखांताः गांतानाह शैलवृक्षौ नगौअगौचस्यातां नगच्छतःनौ गम्लृगतौ डः नञः प्रकृतिभावोवा तदुक्तंधिद्वेनगोमहीरुहेशैलेभास्करेपवनाशने इति वायुविशिखौसमीरबाणौ आशुगौस्यातां आशुगच्छतिडः शरअर्कविहगाः खगाः खगशब्दवाच्याःस्युः खेगच्छति गमेर्डः
खगःसूर्येग्रहेदेवमार्गणेचविहंगमेइतिविश्वः १९

पक्षिसूर्यौ पतंगौस्यातां पतति गच्छतीति पतंगः पक्षिणि चकारात् अन्यत्र तदुक्तं मेदिन्यां पतंगः शलभे शालिप्रभेदे पक्षिसूर्ययोरिति क्रमुकवृंदयोः वृक्षसमूहयोः पूगः स्यात् पूगं तत्फलं विज्ञेयं क्रमुकस्य ङ्वीबद्धमर्थः पुनाति पूञ् पवने पशावपि मृगाद्याः मृगवाञ्चकास्तु मृग्यते मृग अन्वेषणे घञ् तदुक्तं विश्वे मृगः पशौ कुरंगेच करिनक्षत्रभेदयोः अन्वेषणायां याचायां मृगी तु वनितांतरे इति प्रवाहजवयोरपि च्छटितिनिर्गमरंहसोः वेगः स्यात् वेजनं घञ् २० कौसुमे रेणौ स्नानीयादौ रजस्यपि परागः स्यात् कुसुमस्यायं स्नात्यनेन गंधचूर्णेन परागच्छति डः आदिशब्दस्य ग्रहणं अन्यत्र कमलादिभ्रमशांतये कामशास्त्रोक्तं चंदकर्पूरादिरूपं तदुक्तं हलायुधे परागः कौसुमे रेणौ धूलिस्नानीययोरपि गिरिप्रभेदे विख्यातावुपरागे च चंदने इति नागमातंगौ गजे स्यातां नअगः मतंगस्यायं नागश्चमा

पतंगौ पक्षिसूर्यौ च पूगः क्रमुकवृंदयोः पशावपि मृगा वेगः प्रवाहजवयोरपि २० परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि ॥
गजेपि नागमातंगौ अपांगस्तिलकेपि च २१ सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु योगः सन्नहनोपायध्यानसंगतियुक्तिषु २२

तंगश्च अपिशब्दात् अन्यत्र उक्तं तिलकेपि अपांगः स्यात् अपगतोंगात् निरादयः इति समासः अपांगो नयनस्यांते स्याच्चित्रकप्रधानयोरित्यजयः अपांगस्त्वंगहीने स्यान्नेत्रांते तिलकेपि चेति विश्वः २१ स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु सर्गः स्यात् स्वभावः प्रकृतिः निर्मोकस्त्यागः अध्यायः काव्यादिविरामस्थानं सृज्यते सृज विसर्गे घञ् तदुक्तं मेदिन्यां सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिष्विति सन्नहनोपायध्यानसंगतियुक्तिषु कवचसामादिचित्तवृत्तिनिरोधसंगमेषु योगः स्यात् योजनं युज समाधौ युजिर योगे घञ् उक्तं योगोपूर्वार्थसंप्राप्तौ संगतिध्यानयुक्तिषु वपुःस्थैर्यप्रयोगे च विष्कंभादिषु भेषजे विश्रब्धघातके द्रव्योपाय सन्नहनेष्वपि कार्मणेपि चेति मेदिनी २२

स्रक्चंदनस्त्र्यादिभूतौ अहेश्चफणकाययोः भोगःस्यात् भोजनं भृज्‌पालनाभ्यवहारयोः घञिकुत्वं स्त्रीआदिर्येषांतेषांतस्त्र्यो आदिनाहस्त्यश्वादिकर्मकाराणांचभूतिः तदुक्तंवि
श्वे भोगःस्रग्वेधनेपुंसिशरीरफणयोर्मतः पालनेभ्यवहारेस्त्र्योषितादिभूतावपीति चातकेहरिणेसारंगःपुंसिस्यात् शबलेतुकर्बुरेतुत्रिलिंग्यांस्यात् सारंअंगंयस्य शा
कंध्वादित्वात्पररूपं सारंगच्छति वा सारंगःपुंसिहरिणेचातकेचमतंगजे शबलेत्रिषुतिमेदिनी २३ कपौ प्लवगः वर्त्तते प्लवेनगच्छति चकारात्सारथेर्ग्रहणं तदुक्तंचमे
दिन्यां प्लवगोवानरेभेकेसारथौचोष्णदीधितेरिति शापेआक्रोशेपराभवेतिरस्कारेअभिषंगः अभिषंजनं षंजसंगे घञ् यानाद्यंगे पुंसिच युगःस्यात् युगंयुग्मेकृता
दिषु योजनं युज्यतेवा युजिरयोगेघञ्‌संज्ञापूर्वकत्वान्नगुणः आदिनाशकटाद्यंगानांग्रहणं तदुक्तंविश्वे युगोरथेहलाद्यंगेनद्वयोःकृतादिषु युग्मेहस्तचतुष्केषु दृष्टिका-

भोगःस्रक्चंदनस्त्र्यादिभूतावहेश्चफणकाययोः चातकेहरिणेपुंसिसारंगःशबलेत्रिषु २३ कपौचप्लवगःशापेत्वभिषंगःपराभवे याना
द्यंगेयुगःपुंसियुगंयुग्मकृतादिषु २४ स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले लक्ष्यदृष्ट्यास्त्रियांपुंसिगौर्लिंगंचिन्हशेफसोः २५

मौषधेपिचेति २४ स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले स्वर्गश्चइषुश्चशरः पशुश्चस्त्ररभिर्वृषोवा वाक्‌चदिक्‌चनेत्रंचघृणिश्चरश्मिः भूश्चजलंचस्वर्गादिजलांतानांद्वंद्वेनै
क्यं लक्ष्यदृष्ट्यांप्रयोगदृष्ट्यां स्त्रियांपुंसिचगौशब्दोज्ञेयः गच्छतिगम्यतेवानेनवा तदुक्तंकेशवे गौर्नादित्येबलीवर्देकिरणक्रतुभेदयोः स्त्रीतुस्याद्दिशिभारत्यांभूमौचसुरभावपि
नृस्त्रियोःस्वर्गवज्रांबुरश्मिदृग्बाणलोमस्विति तदेवोक्तंविश्वे गौः स्वर्गेवृषभेरश्मौवज्रेशीतकरेपुमान् अर्जुनीनेत्रदिग्बाणभूवाग्वारिषुयोषिति चिन्हशेफयोः लिंगंस्या
त् लिंग्यतेनेन लिगिगतौ लिंगंचिन्हेनुमानेचसांख्योक्तप्रकृतावपि शिवमूर्त्तिविशेषेपिमेहनेपिनपुंसकमितिमेदिनी २५ ७ ७ ७

प्राधान्यसान्वोः प्रकृतशिखरयोः श्रृंगंस्यात् तदुक्तंमेदिन्यां श्रृंगंप्रकृतेशिखरेचिन्हेक्रीडांबुयंत्रके पाषाणोत्कर्षयोश्चापिश्रृंगःस्यात्कूर्चशीर्षकइति मूर्द्धगुह्ययोः मस्तकयोन्योः वरांगंस्यात् वरंचतदंगंच तदुक्तंहेमे वरांगंयोनिमातंगमस्तकेषुगुडत्वचीति श्यादिकीर्त्यंतेषुसप्तसुपदेषुभगंस्यात् भज्यते भजसेवायां घञ्जिसंज्ञापूर्वकत्वात् ह्रस्वभावइत्यादुक्तं तदुक्तंमेदिन्यां भगंश्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु महात्म्यैश्वर्ययत्नेषुधर्मेमोक्षे ऽथनारवाविति इतिगांताः २६ परिघाते परितोमारणे अस्त्रे अस्त्रविशेषे परिघःस्यात् परिहननं परिहन्यतेनेनवा हनहिंसागत्योः परौघइतिसाधुः अपिशद्बेनार्गलेच तदुक्तंविश्वे परिघोयोगभेदे

शृंगंप्राधान्यसान्वोश्चवरांगंमूर्द्धगुह्ययोः भगंश्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु २६ इतिगांताः ॥ परिघः परिघातेस्त्रेप्यो घोवृंदेंभसांरये मूल्येपूजाविधावर्घोंहोदुःखव्यसनेष्वघम् २७ त्रिष्विष्टेल्पेलघुः ॥ इतिघांताः ॥

स्त्रविशेषेर्गलघातयोरिति अंभसांरये जलवेगे वृंदे परंपरायांनृत्यंओघःस्यात् वहति वहप्रापणे अचून्यंकादित्वात्साधुः तदुक्तंविश्वे ओघोवेगेजलस्यचेति वृंदेपरंपरायांचओघानृत्यांतरेऽस्त्रियोरिति मूल्ये पूजाविधौ पूजोपकरणे अर्घः वर्त्तते अर्घ्यतेनेन अर्हपूजायां हलश्चेति घञ् न्यंक्वादिः इत्यादुक्तं अंहो दुःखव्यसनेषु पापजन्ममरणमृगव्यसनद्यूतरागद्वेषादिकेषु अघंस्यात् २७ अघ्यतेनेन अघिगत्याक्षेपे घञ् आगमशासनित्यत्वान्नुमन् इष्टेऽभिलषिते अल्पेसुरौ त्रिषु लघुःस्यात् लघ्यते लघिगतौ लंघिबंह्योर्नलोपश्चेत्युः कृष्णागुरुणिशीघ्रेचलघुक्लीबेगुरौत्रिषु निःसारेचमनोज्ञेचपृक्कायांतुलघुस्त्रियामितिरभसः॥इतिघांताः॥

शिक्यादि इयजः दुग्धदध्यादिपात्राधारार्थरज्जुविशेषमृद्दिशेषनेत्ररोगाः एतेत्रयः काचाः तच्छब्दवाच्याः स्युः कच्यतेनेनवा कचबंधे घञ्नका देशितिकुत्वंन तदुक्तंमेदि-
न्यांकाचः शिक्येमणौनेत्ररोगभेदेमृदंतरइति विपर्ययेवैपरीत्ये विस्तरेच्चइदंपाठांतरं प्रपंचः प्रपंचने पचिव्यक्तीकरणे पचाद्यच् तदुक्तंमेदिन्यां प्रपंचाः संचयेपिस्या
द्विस्तरेचप्रतारणे इति पावकेशुचिः स्यात् पुंसिच शोचत्यनेन शुचशोके इगुपधेतिइन् सचकित् तदुक्तंविश्वे शुचिर्ग्रीष्माग्निशृंगारेष्वाषाढेशुद्धमंत्रिणि जेष्ठेचपुंसिधवले
शुद्धेनुपहतेत्रिषीति २८ मासिआषाढे असारेप्रधाने अत्युपधे उपधामुत्क्रोन्तंअतिक्रान्तेशुद्धचित्तइत्यर्थः पुंसिस्यात् मेध्येपूतेसितेशुक्लेत्रिषु अभिषंगेस्पृहायां
चगभस्तौचरुचिःस्यात् स्त्रियाशुचिदीप्तौ तदुक्तंहैमे रुचिःस्त्रीदीप्तौशोभायामभिषंगाभिलाषयोरिति २९ इतिचांताः केकितास्यैर्मियूरगरुडौ अहिभुजौ अहिंभुंक्ते

काचाःशिक्यमृद्भेदद्दग्रुजः विपर्यासेविस्तरेच प्रपंचःपावकेशुचिः २८ मास्यमात्येचात्युपधेपुंसिमेध्येसितेत्रिषु अभिष्वंगेस्पृहायांच
गभस्तौचरुचिःस्त्रियां २९ इतिचांताः॥ केकितार्क्ष्यावहिभुजौदंतविप्रांडजाद्विजाः अजाविष्णुहरच्छागागोष्ठाध्वनिवहाव्रजाः ३० धर्म
राजौजिनयमौकुंजोदंतेपिनस्त्रियाम् वलजेक्षेत्रपूर्द्वारेवलजावल्गुदर्शना ३१ भुजअभ्यवहारे कर्तरिक्विप् दंतविप्रांडजाः द्विजाःस्युः द्विर्जायते द्विजःस्यात्
ब्राम्हणक्षत्रवैश्यदंतांडजेषुनाइतिरभसः विप्रात्क्षत्रवैश्ययोर्ग्रहणं अंडजाः पक्षिणइति विष्णुःहरः च्छागोवस्तः त्रयःअजाः अन्येष्वपीतिडः तदुक्तंविश्वे अजोहरौहरेकामेवि
धौच्छागेरघोःसुतेइति गोष्ठाध्वनिवहाः गोस्थानकमार्गसंघाः व्रजाःस्युः व्रजगतौअच् जिनयमौ धर्मराजौस्तः धर्मस्यराजा धर्मराजोयमेबुध्देयुधिष्ठिरनृपेपुमानितिविश्वः जिनबुद्धः
करिदंतेपिकुंजः नस्त्रियां कौजायते डेपृषोदरादित्वान्मुम् कुंजोस्त्रियांनिकुंजोपिहनौदंतेपिदंतिनामितिविश्वः क्षेत्रेनगरद्वारेचवलजंस्यात् वलेजातंडः तदुक्तंमेदिन्यां वलजंगोपुरेक्षेत्रेस
स्यसंगरयोरपि वल्गुदर्शनावलजास्यात् वरस्त्रीत्यर्थः वल्गुसुंदरंदर्शनंयस्याः वलजीवरयोषायांयूथ्यामि

समेक्ष्मांशेरणेपिआजिःस्यात् अंजत्यस्यां अजगतौ नदुक्तंमेदिन्यां अथाजिः स्त्रीसमक्ष्मौसंग्रामेइति संगतौजनेचप्रजास्यात् प्रजायतेउपसर्गेचेतिडः शंखेशशांके अब्जः-स्यात् अप्सुजायते नकारात् धन्वंतरिपद्मयोर्ग्रहणंपद्मेक्लीबं स्वके स्वक्लीकृतेनित्येसत्येनिजंत्रिषुस्यात् निजायते यथानिजःपरः इतिजांता: ३२ आंतानाह आत्मनिपुरुषे क्षेत्रज्ञःस्यात् क्षेत्रंजानाति ज्ञा अवबोधने आतइतिकः प्रवीणेतुवाच्यलिंगकःस्यात् चेतनानाम्नोः चित्तेनामनिसंज्ञास्यात् हस्ताद्यैरर्थसूचनात्रापि आदिनाभ्रूलोचनादिग्रहणं नदुक्तंमेदिन्यांसंज्ञानामनिगायत्र्यांचेतनारवियोषितोः अर्थस्यसूचनायांचहस्ताद्यैरपियोषितीति इति ज्ञांता: ३३ काकेभगंडौकरटौस्यातां केतिरट

समेक्ष्मांशेरणेप्याजिः प्रजास्यात्संगतेजने अब्जोशंखशशांकौचस्वकेनित्येनिजंत्रिषु ३२ इतिजांता:॥ पुंस्यात्मनिप्रवीणेचक्षेत्रज्ञोवाच्य लिंगकः संज्ञास्याच्चेतनानामहस्ताद्यैश्चार्थसूचना ३३ इतिज्ञांता:॥ काकेभगंडौकरटौगजगंडकटीकटौ शिपिविष्टस्तुखलतौदुश्चर्मणि महेश्वरे ३४ देवशिल्पिन्यपित्वष्टादिष्टंदैवेपिनद्वयोः॥

निरट्शब्दं पचाद्यच् नदुक्तंमेदिन्यां करटोगजगंडेस्यात्कुसुंभेनिंद्यजीवने एकादशाहादिश्राद्धे दुर्दुरूढेपिवायसे करटोवाद्यभेदेइति गजगंडकटीकटौस्यातां गजगंडश्चकटिश्च तदुक्तंविश्वे कटःश्रोणौ क्रियाकारेकालिंजे निशयेशवे समयेगजगंडेपिपिल्यांतुकटीमते ति कटःश्रोणौहृयेपुंसिकलजेनिशयेशवेइति खलतौ दुश्चर्मणिमहेश्वरे शिपिविष्टःस्यात् शापिषुरश्मिषुपशुषुवाविष्टः तदुक्तंरभसे शिपिविष्टःशिवः शौरिर्दुश्चर्मखलितिस्तथेति खलितिः रुजाकेशरहितइत्यर्थः शिपिविष्टःशिविपिष्टइति विशप्रवेशनेक्तः राजमुकुटः ३४ देवशिल्पिन्यपित्वष्टास्यात् त्वक्षति त्वक्ष्यतेवत्वक्षतनूकरणे औणादिकः त्वष्टापुमान्देवशिल्पितक्ष्णोरादित्यभिद्यपीतिविश्वः दैवेपिदिष्टंस्यात् दिश्यतेस्म दिशअतिसर्जने क्तः प्राक्तनकर्मणिद्वयोः नअपितुक्लीबं तदुक्तंविश्वे दिष्टंदैवेपुमानकालइति॥

रसेनिंबादिरसेकटुः स्यात् कट्वते अकार्येकटुनपुंसकं मत्सरतीक्ष्णयोः त्रिषु कटुः स्त्रीकटुरोहिण्यांलताराजिकयोरपिनपुंसकमकार्येस्यात्पुंलिंगोरसमात्रकेइतिमेदिनी क्षे
माशुभाभावेषुरिष्टंस्यात् अभावःक्षेमस्य रिष्टंस्यादशुभेनसोरित्यजयः रिष्टंक्षेमाशुभाभावेपुंसिखड्गेचफेनिलेइतिविश्वः शुभाशुभेअरिष्टेस्यातां नरिष्टं तदुक्तंमेदिन्यां आ
ष्टेलशुनेनिंबेफेनिलेकाककंकयोः अरिष्टमशुभेतक्रेसूतिकागारआसवे शुभेमरणचिन्हेचेति ३५ मायादिसीरांगांतेषुनवसु कूटंस्यात् कूटयमदानेअच् नतस्त्रियां विपरीत
दर्शनंमाया मृगबंधनविशेषः यंत्रं आयुधविशेषः अयोघनः हलाग्रं पुंजः राशिः अन्यत्सुगमं ३६ सूक्ष्मेलायां अल्पेकालेसंशयेपित्रुटिः स्यात् त्रुटति त्रुट्यतेअनेनवा त्रु

रसेकटुः कट्वकार्येत्रिषुमत्सरतीक्ष्णयोः ३५ रिष्टंक्षेमाशुभाभावेष्वरिष्टेतुशुभाशुभे मायानिश्चलयंत्रेषुकैतवानृतराशिषु ३६ अयोघने
शैलशृंगेसीरांगेकूटमस्त्रियाम् सूक्ष्मैलायांत्रुटिः स्त्रीस्यात्कालेल्पेसंशयेपिसा ३७ अत्युत्कर्षाश्रयः कोट्योमूलेलग्नकचेजटा व्यु
ष्टिः फलेसमृद्धौचदृष्टिर्ज्ञानेक्ष्णिदर्शने ३८ इष्टिर्यागेच्छयोः स्पष्टंनिश्चितेबहुनित्रिषु कष्टेतु कृच्छ्रगहनेदक्षामंदागदेषुच ३९

टच्छेदने त्रुटिः स्त्रीसंशयेस्वल्पेसूक्ष्मेलाकालमानयोरितिविश्वः ३७ अत्युत्कर्षाश्रयः चापाग्रप्रकर्षकोणाः कोट्यः तद्यथाचकास्ः कोटयते कुटप्रतापने अचइः तदु
क्तंविश्वे कोटिः स्त्रीधनुषोग्रेसोसंख्याभेदप्रकर्षयोरिति लग्नकचेमूलेजटास्यात् जटति जटसंघाते पचाद्यच् जटालग्नकचेमूलेमांस्यांपुंक्षेपुनर्जटीइतिविश्वः-
३८ फलेसाधितार्थेसमृद्धौ व्युष्टिः व्युछनं व्युछतेवाक्तिन् ज्ञानेअक्ष्णोर्दर्शने दृष्टिः स्यात् दर्शनं दृष्टिरप्रक्षणे करणेवा ३९

यागेच्छयोः इष्टिःस्यात् इषेःक्तिन् तदुक्तंमेदिन्यां इष्टिर्मताभिलाषेपिसंग्रहश्लोकयागयोरिति ॥ निश्चिते बहुनि बहुले सृष्टंस्यात् तदुक्तंरुद्रे मुक्तनिर्मितयोःप्राज्येत्रिषु
सृष्टंतुनिश्चितेइति कृच्छ्रगहने दुःखदुरधिगमे कष्टेक्तः कष्यतेस्म कषहिंसायां क्तः दक्षामंदागदेषु अनलसस्तीक्ष्ण रोगहीनेषु ॥ पटुःस्यात् तदुक्तंमेदिन्यां पटुर्दक्षे
चनीरोगेचतुरेप्यभिधेयवदिति द्वौकष्टपट् वाच्यलिंगौक्तः ॥ इतिटांताः ॥ नीलकंठःशिवेपिच नीलःकंठोस्य अपिशब्दान्मयूरेपि अंतर्जठरं कोष्ठःस्यात् कुषेःथन्
पुंसिच जठरस्यांताः कोष्ठःकुसूलेचात्मीयेमध्येकुक्षेर्गृहस्यचेतिविश्वः अंतर्गृहंकुसूलःस्यात् गृहस्यांतः कुसूलोधान्यागारमित्यर्थः ४० निष्पत्तिनाशांताः नि
ष्पादनादर्शनप्रध्वंसाः निष्ठाःस्युः निष्ठानं ष्ठागतिनिवृत्तौ आतश्चोपसर्गेइत्यङ् तदुक्तंविश्वे निष्ठानिष्पत्तिनाशांतयांचानिर्वहणेषुचेति उत्कर्षेस्थितौदिशिच का

पटुद्वौवाच्यलिंगौच ॥ इतिटांताः ॥ नीलकंठःशिवेपिच पुंसिकोष्ठोंतर्जठरंकुसूलोंतर्गृहंतथा ४० निष्ठानिष्पत्तिनाशांताःकाष्ठो
त्कर्षेस्थितौदिशि त्रिषुज्येष्ठोतिशस्तेपिकनिष्ठोतियुवाल्पयोः ४१ इतिठांताः ॥

ष्ठास्यात् काशते काष्ठदीप्तौ काष्ठादारुहरिद्रायांकालमानप्रकर्षयोः स्थानमात्रेदिशिचस्त्रीदारुणिस्यान्नपुंसकमितिमेदिनी अतिशस्तेपिज्येष्ठःस्यात् अ
तिशयेनप्रशस्यः ज्यचेतिप्रशस्यस्यज्यादेशः त्रिषु अतिशस्तअतिप्रशस्तइत्यर्थः तदुक्तंविश्वे ज्येष्ठःश्रेष्ठेचवृद्धेचत्रिषुमासांतरेपुमान् ज्येष्ठातुगृहगोधा
रव्याजंतुनक्षत्रभेदयोरिति अतियुवाल्पयोः कनिष्ठःस्यात् युवाल्पाभ्यांइष्ठन्कनादेशः कनिष्ठोतियुवात्यल्पानुजेस्त्रीदुर्बलांगुलावितिविश्वः ४१ इतिठांताः ॥

लगुडेपिदंडः स्यात् दंडयति अच् अनेन वा घः तदुक्तं विश्वे दंडोदमे मानभेदे लगुडे यमसैन्ययोः व्यूहभेदे प्रकांडे श्वेकोणमंथानयोरपि अभिमाने ग्रहे दंडश्चंडांशोः परिपार्श्विकइति ॥ गोलेक्षुपाकयोः मृदादिगुडक इक्षुविकारयोः गुडः स्यात् गुडतिगुडवेष्टने इगुपेतिकः तदुक्तं मेदिन्यां गुडः स्याद्गोलके हस्तिसन्नाहे क्षुविकार योः गुडास्नुह्यांच कथिना गुडिकायांचयोषितीति स्नुहीगुडिकयोर्गुडेत्युक्तत्वात् सर्पमांसात्पशव्याडोस्यात् व्याडति अडउद्यमे अच् व्याडोव्याघ्रे घलेसर्पे इति रभसः मांसंअत्तीनिमांसात् सचासौ डलयोरेक्यात् व्यालश्च गोभूवाचस्तु इडाइलाः स्युः गौर्धेनुः ॥ इलति इलउत्क्षेपे डलयोरेकत्वस्मरणात् ॥ इला इडातु बुध- योषिति सौरभेय्यांचवचनेवसुमत्यामपिस्त्रियामित्युक्तत्वात् ४२ वंशशलाकापिवेणुशलाका ॥ श्वेर्पीयर्थायेत्यर्थः क्ष्वेडास्यात् क्ष्वेलति क्ष्वेल्लचलने डलयोरेकत्व-

दंडोस्त्रीलगुडेपिस्याद्गुडोगोलेक्षुपाकयोः सर्पमांसात्पशव्याडोगोभूवाचस्त्विडाइलाः ४२ क्ष्वेडावंशशलाकापिनाडीकालेपिषड्- क्षणे कांडोस्त्रीदंडबाणार्ववर्गावसरवारिषु ॥ ४३ ॥

क्ष्वेडावंशशलाकायांसिंहनादेचयोषिति लोहितार्केपर्णफलेघोषपुष्पेनपुंसकं दुरासदेचकुटिलेवाच्यलिंगः प्रकीर्तितइतिविश्वः कालेषट्क्षणेनालेचनाडी स्यात् नाडीनालेव्रणांतर इत्युक्तत्वात् तथा शिरायांगंडदूर्वायांचर्यायंकुहकस्यचेतिमेदिनीकारः षट्क्षणे षट्क्षणकालेइत्यर्थः विशेषणेतात्पर्यं दंडादिवार्यंतेषु षट्सुपदेषु कांडः स्यात् अस्त्रीच कनति कनदीप्तौ अमंताडडः अनुनासिकेतिदीर्घः अर्वाकुत्सितः वर्गः परिच्छेदः अवसरः प्रस्तावः तदुक्तं धरिण्यां कांडंचावसरेबाणेनाले स्कंधेचशाखिनां स्तंबेरहसिवर्गेचेति ४३ ॥

अश्वाभरणे अमत्रे मूलवणिग्धने भांडंस्यात् भण्यते भणशब्दे भांडंभूषणमात्रेस्यादितिधरणिः तदुक्तंविश्वेन भांडंपात्रेवणिङ्मूलधनेभूषाश्वभूषयोरिति अमत्रेपात्रे इ तिडांताः ॥ भृशाप्रतिज्ञयोः अत्यर्थस्वीकारयोः बाढंस्यात् ऊह्यतेस्म वहप्रापणे क्षुब्धस्वांतेतिसाधुः भृशकृच्छ्रयोः अत्यर्थदृढयोः प्रगाढंस्यात् प्रगाह्यतेस्म गाहूविलोड ने तदुक्तंधरिण्यां प्रगाढंस्याद्दृढे कृच्छ्रेइति ४४ शक्तस्थूलौ समर्थबलवंतौ दृढौस्याता त्रिषुच दृंहति दृह्यतिस्मवा दृहदृहिवृद्धौ दृढः स्थूलबलयोरितिसाधुः तदुक्तंमेदिन्यां दृढः स्थूले नितांतेच प्रगाढेबलवत्यपि विन्यस्तसंहतौ व्यूढौस्यातां विशेषेणोह्यतेस्म गत्यर्थेक्तः तदुक्तंविश्वे व्यूढः संततविन्यस्तेपृथुलेप्यभिधेयवदिति इतिढांताः ॥ अर्भ केस्त्रैणगर्भे भ्रूणः स्यात् भ्रूण्यते भ्रूणआशायां कर्मणि घञ् स्त्रियाअयंस्त्रैणः स्त्रैणश्चासौगर्भश्च भ्रूणः स्त्रीगर्भडिंभयोरिस्कृकलात् बलिस्कृते शरे बाणः स्यात्

स्याद्भांडमश्वाभरणेमत्रेमूलवणिग्धने ॥इतिडांताः ॥ भृशप्रतिज्ञयोर्बाढंप्रगाढंभृशकृच्छ्रयोः ४४ शक्तस्थूलौत्रिषुदृढौव्यूढौ- विन्यस्तसंहतौ ॥इतिढांताः॥ भ्रूणोर्भकेस्त्रैणगर्भेबाणोबलिस्कृतेशरे ४५ कणोतिसूक्ष्मेधान्यांशेसंघातेप्रमथेगणः॥ पणोद्यूतादि

बाणयति बाणशब्दे स्वार्थेण्यंतात्पचाद्यच् तदुक्तंमेदिन्यां बाणः स्याद्गोस्तनेदैत्यभेदेकेवलकांडयोः बाणातुबाणमूल्येस्त्रीनीलझिंट्यांपुनर्द्वयोरिति ४५ अतिसूक्ष्मेपदा र्थेधान्यांशेच कणः स्यात् कणति कणनिमीलने पचाद्यच् कणाजीरककुंभीरमक्षिकापिप्पलीषुच कणोतिसूक्ष्मेधान्यांशेइतिमेदिनी संघातेप्रमथेगणः स्यात् गण्यते गणसंख्याने घञ् गणः स्यात्प्रमथेसंघे संख्यासैन्यप्रभेदयोरिति विश्वः रुद्रपार्षदेपि ॥ द्यूतादिधनांतेषुपंचसु पणः स्यात् पणतेअनेनवा तत्रद्यू तांतर्गतादिनामेषकुक्कुटादिनाद्युद्धादिकं द्यूतमक्षादिक्रीडनं ॥

उत्कृष्टंन्यस्तार्थं भृतिःवेतनं मूल्यंविक्रेयवस्तुद्रव्यंधनं काकणिकाचतुष्टयं तदुक्तंधरिण्यां पणोमानेवराटानांमूल्येकार्षापणेधने ग्लौनेविक्रय्यशाकादौबद्धमुष्टौ ग्लहेभृतावपीति ४६ मौर्व्यांद्रव्याश्रितेसत्वशौर्यसंध्यादिकेगुणःस्यात् गुण्यते गुणआमंत्रणे घञ् गुणोमौर्व्यामप्रधानेरूपादौसूदइंद्रिये त्यागेशौर्यादिकेसं-ध्यासत्वाद्यावृत्तिरज्जुषु शुक्लादावपिवृध्यांचेतिमेदिनी द्रव्याश्रितादिसंध्यादिकांतेषुपदेषु पर्यायानाह रसगंधादौ सत्वरजआदौ शौर्यचातुर्यादौ संधिविग्र हादौ प्रत्येकंआदिशब्दस्यसंबंधः निर्व्यापारस्थितौ व्यापाराभावस्थितौ कालविशेषजातकर्माद्युत्सवयोः क्षणःस्यात् क्षणोति क्षणुहिंसायां तदुक्तंरुद्रे क्षणो व्यापारशून्यत्वमुहूर्तोत्सवपर्वस्वित्ति ४७ द्विजादौब्राम्हणक्षत्रियवैश्यशूद्रेषु शुक्लादौ शुक्लपीतनीलादिषु स्तुतौनुत्यांवर्णःस्यात् वर्ण्यतेवर्णवर्णने तदुक्तंमेदि न्यां •

श्रूत्कृष्टेभृतौमूल्येधनेपिच ४६ मौर्व्यांद्रव्याश्रितेसत्वशौर्यसंध्यादिकेगुणः निर्व्यापारःस्थितौकालविशेषोत्सवयोःक्षणः ४७
वर्णोद्विजादौशुक्लादौस्तुतौवर्णंतुवाक्षरे अरुणोभास्करेपिस्याद्वर्णभेदेपिचत्रिषु ४८ स्थाणुःशर्वेप्यथद्रोणःकाकेप्याजौरवेरणः

न्यां वर्णोद्विजादिशुक्लादियशोगुणकथासुच स्तुतौनानस्त्रियांभेद रूपाक्षरविलेपन इति अक्षरे वर्णंतुवापुंसि भास्करे वर्णभेदेकपिले अरुणःस्यात् अपि शब्दाच्चांमेदिनीस्थपदसंग्रहः तदुक्तंमेदिन्यां अरुणोव्यक्तरागेर्केसंध्यारागेर्कसारथौ ॥ निःशब्देकपिलेकुष्ठभेदेनागुणिनित्रिषुविति अरुणातिविषाश्यामात्रं जिष्ठात्रिवृतास्वपीतिविश्वः ४८ शर्वेपिस्थाणुःस्यात् तिष्ठतीति तदुक्तंस्थाणुःकीलेहरेपुमानिति काकेपिद्रोणःस्यात् द्रवतिद्रुगतौ नप्रत्ययेगुणः तदुक्तं मेदिन्यां द्रोणोस्त्रियामाढकेस्याद्दाढकादिचतुष्टये पुमान्कृपीपतौकृष्णकाकेस्त्रीनीवृद्दंतरइतिरवेशब्देरणःस्यात् रणति रणशब्दे तदुक्तंमेदिन्यां रणःक्वाणेक्वणः पुंसिसमरेनत्रपुंसकमिति ॥ ७ ७

नापितेपुंसिश्रेष्ठेग्रामाधिपेत्रिषु ग्रामणीः स्यात् ग्रामंनयति णीञ्प्रापणेसत्सूइतिक्विप् अग्रग्रामाभ्यांइतिणत्वं ग्रामणिर्भोगिकेपत्योप्रधानेनापितेपिच ग्रामणीर्नीलिका यांचग्रामीणापण्ययोषितोरितिविश्वः ४९ मेषादिलोम्निऊर्णास्यात् ऊर्णोतिऊर्णञ्आछादने आदिनाशशोष्ट्रमृगादीनांगृह्यं तल्लोमभिःऊर्णाभवतीत्यर्थः हेमप्रतिमा यान्त्र हरिता हरिद्वर्णा हरिणीस्यात् हरिणस्यस्त्री तदुक्तंमेदिन्यां हरिणीहरिताचांचनारीभीहृत्तभेदयोः सुवर्णप्रतिमायांचेति पांडौ पांडुरवर्णे हरिणःस्यात् हरति त दुक्तंमेदिन्यां हरिणःपुंसिसारंगेशबलेत्वभिधेयवदिति वेश्मनः गृहस्यस्तंभेस्थूणास्यात् तिष्ठति अपिशब्दात्लोहप्रतिमा तदुक्तंविश्वे स्थूणास्यात् सूर्म्यांस्तंभेपिवेश्मनोरि नि स्पृहापिपासेइच्छापानेछे तृष्णेस्यातां तर्षणं जुगुप्साकरणे निंदारूपेघृणे घर्णनं घृणुदीप्तौ ५० वणिक्पथे विपणिः विपण्यते अस्यांवा पणव्यवहारे आपणेपण्य

ग्रामणीर्नापितेपुंसिश्रेष्ठेग्रामाधिपेत्रिषु ४९ ऊर्णामेषादिलोम्निस्यादावर्तेचांतराभ्रुवोः हरिणीस्यान्मृगीहेमप्रतिमाहरितानचया-
५० त्रिषुपांडौचहरिणःस्थूणास्तंभेपिवेश्मनः तृष्णेस्पृहापिपासेद्वेजुगुप्साकरुणेघृणे ५१ वणिक्पथेचापिविपणिःसुराप्रत्यक्चवारुणी
करेणुरिभ्यांस्त्रीनेभेद्रविणंतुबलंधनम् ५२ शरणंगृहरक्षित्रोःश्रीपर्णंकमलेपिच विषाभिमरलोहेषुतीक्ष्णंक्लीबेखरेत्रिषु ५३ वीथ्यांच पण्येन्वि

पणिःस्त्रियामितिरुद्रः सुरामद्यं प्रत्यक् प्राग् दिक्वारुणीस्यात् वरुणस्येयं तदुक्तंविश्वे वारुणीगंडदूर्वायांप्रतीचीसुरयोःस्त्रियामिति इभ्यांहस्तिन्यांकरेणुःस्यात् स्त्रीकरोति इभेहस्ति नास्यात् बलंधनंचद्रविणंस्यात् द्रूयते द्रवतिवा द्रुगतौ द्रविणंनद्वयोर्वित्तेकांचनेचपराक्रम इतिविश्वः ५२ गृहरक्षित्रोः शरणं शृणाति शृहिंसायां तदुक्तंकोशांतरे शरणंगृह-क्षित्रोर्वधरक्षणयोरपि कमलेश्रीपर्णंस्यात् श्रीपर्णाकुंभिगंभार्योःक्लीबेपप्राग्निमंथयोरितिरभसः विषाभिमरलोहेषु अभिमरःयुद्धं तीक्ष्णंस्यात् क्लीबे तेजयति तेजनिशानने त दुक्तंमेदिन्यां ॥

तीक्ष्णंसामुद्रेलवणेविषलोहाजिमुष्कके क्लीबंयवाग्रजेपुंसितिग्मात्यागिनोस्त्रिर्षाति भवेदभिमरोयुद्धेवधेस्वबलसाध्वसेइति स्वरेत्रिषु हेत्वादिर्यमात्रांतेषुपंनस्क प्रमाणं-स्यात् प्रमीयते प्रमिमीतेनेनवा पर्यायानाह धूमादिः सीमा परिच्छेदः ज्ञाता तदुक्तंमेदिन्यां प्रमाणंनित्यमर्यादाशास्त्रेषुसत्यवादिनि इयत्तायांचहेतौन्वक्लीबेकर्तेप्रमात मिइति ५३ क्षेत्रादिषुत्रिषु साधकतमंकरणंस्यात् अतिशयेनसाधकं क्षेत्रं बीजोप्तस्थानं तदुक्तमजये करणंकारणेकायेसाधनेंद्रिय कर्मसु कायस्थेव्रतबंधेचनाट्य गीतमभेदयोः पुमानूशूद्राविशोः शुत्रेवानराद्येवकीर्त्यतइति प्राण्युत्पाते प्राणिजन्मनि असंबाधचमूगतौ निरुपद्रवसेनागमने घंटापथे संसरणं सम्यक्सरत्यनेन मूग तौ वांतान्नेउन्नयेनसमक्षिरणंस्यात् समुध्रियते तदुक्तंविश्वे भुक्तोद्गिनोन्मूलितयोः स्यादुध्दरणमुन्नयेइतिरभसः ५५ अतःपरंवक्ष्यमाणांनशब्दास्तेत्रिषु पश्चाशृंगं

विषाभिमरलोहेषुतीक्ष्णंक्लीबेस्वरेत्रिषु ५३ प्रमाणंहेतुमर्यादाशास्त्रेयत्ताप्रमातृषु करणंसाधकतमंक्षेत्रगात्रेंद्रियेष्वपि ५४ प्राण्युत्पादे संसरणमसंबाधचमूगतौ घंटापथेथवांतान्नेसमुद्भिरणमुन्नये ५५ अलस्त्रिषुविषाणंस्यात्पशुशृंगेभदंतयोः प्रवणंक्रमनि म्नोर्व्यांमिव्हेनातुचतुष्पथे ५६ संकीर्णेनिचिताशुद्धावीरणंशून्यमूषरम् ॥ भदंतयोः विषाणंस्यात् तदुक्तंविश्वे विषाणीक्षीरकाकोल्यामजशृंग्यां चयोषिति ॥कुष्ठनामौषधौक्लीबंत्रिषुशृंगेभदंतयोरिति ॥ क्रमनिम्नोर्व्यांक्रमेणनिम्नाचासौउर्वीच ॥ प्रवणंस्यात् मव्हेचतुष्पथेचनापुल्लिंगः॥प्रवणःक्रमनिम्नोर्व्यांमव्हेचस्याच्च तुष्पथे॥आपत्तेचतथाक्षीणेप्रगुणेसमुदाहृत इतिधरणिः ५६ निचिताशुद्धौ मिश्रौ संकीर्णेस्यातां संकीर्यतेस्म तुविक्षेपे संकीर्णंसंकटेव्यासेकुत्रचिद्दूर्णसंकरे ॥ संकीर्णंनिचितेपि स्यादशुद्धेचाभिधेयवदित्याजयः॥शून्यंनिर्जनस्थलं उषरं स्थलभेदः ईरणंस्यात् ऋतियस्मिन् ऋगतौ ईरणंतूषरेशून्ये इत्यनेकत्वात् इदादिरपि इतिणांताः ॥

अथतांतानाह ॥ देवसूर्यौविवस्वंतौस्यातां विवस्तेजोस्यास्ति मतुप् तदुक्तंविश्वे ॥ विवस्वांस्तुसुरेसूर्येतन्नगर्यां विवस्वती ॥ नदार्णवौ सरस्वंतौस्यातां सरोगमनमस्यास्ति मतुप् सरस्वांस्तुनदेवाद्धौनान्यवद्रसिकेस्त्रियामितिविश्वः ५७ पक्षितार्क्ष्यौगरुत्मंतौ गरुतः संत्यस्य भासपक्षिणौ शकुंतौस्यातां शक्नोति भासः गोष्टकुक्कुटः पक्षिमात्रंवा तदुक्तं-विश्वे ॥ भासोभासिसमाख्यातोगोष्ठकुक्कुटगृध्रयोरिति ॥ अग्न्युत्पातौ धूमकेतूस्यातां धूमः केतुश्चिन्हमस्य तदुक्तंविश्वे ॥ धूमकेतुः स्मृतोवन्हावुत्पातगृहभेदयोरिति मे घपर्वतौजीमूतौस्यातां ॥ जीवनंमुंचति पृषोदरादिः जीमूतौ । ऽथ्री भृतिकरेदेवतारेपयोधरइतिमेदिनी ॥ पाणिनक्षत्रेहस्तौ हसति हसेहसने तन् तदुक्तंमेदिन्यां ॥ हस्तःक रेकरिकरेसप्रकोष्ठकरेपिच ॥ ऋक्षेइति पवनामरौमरुतौ मरुद्देवेसमीरेनाद्यंथिपर्णेनपुंसकमितिमेदिनी ॥ हस्तिपकेमहामात्रेसूतौसारथी ॥ यंतास्यात् यछति यमउपर

**देवसूर्यौविवस्वंतौसरस्वंतौनदार्णवौ ५७ पक्षितार्क्ष्यौगरुत्मंतौशकुंतौभासपक्षिणौ अग्न्युत्पातौधूमकेतूजीमूतौमेघपर्वतौ ५८ हस्तौ तुपाणिनक्षत्रेमरुतौपवनामरौ यंताहस्तिपकेसूतेभर्ताधातरिपोष्टरि ५९ यानपात्रेशिशौपोतःप्रेतःप्राण्यंतरेमृते गृहभेदेध्वजेकेतुः पार्थिवेतनयेसुतः ६०**

मे तच् धातरिपोष्टरि भर्ता बिभर्तीति भरतिवा डुभृञ्धारणपोषणयोः तदुक्तंविश्वे भर्तास्वामिनिधारकइति ॥ भर्तास्वामिनिपुंसिस्या त्रिषुधातरिपोष्टरीतिमेदिनी ५९ यानपात्रेवहित्रे शिशौपोतःस्यात् पुनातिपूयतेवा पूञ्पवने तदुक्तंविश्वे पोतःशिशौवहित्रेचगृहस्थानेचवाससीति प्राण्यंतरेमृतां तरे मृतेप्रेतःस्यात् प्रकर्षेणइतः प्रेतोभूतांतरेपुंसिमृतेस्याद्वाच्यलिंगकइतिमेदिनी ग्रहभेदेध्वजे केतुःस्यात् तदुक्तंविश्वे ॥ केतुर्नारुग्पताकारिग्रहोत्पातेषुलक्ष्मणीति पार्थिवेतनयेसुतः सूयतेस्म सौतिस्मवा षुञ्अभिषवे षुप्रसवैश्वर्ययोः सुतःस्यात्पार्थिवेपुत्रेस्त्र्यपत्येतुसुतास्मृतेति ६०

७ ७ ७ ७

कारुभेदेस्थपतिःस्यात् तिष्ठत्यस्मिन् पत्यर्थेकः स्थश्चासोपतिश्च स्थपतिः कंचुकिन्यपीत्युक्तत्वात् जीवेष्टियाजकेशिल्पिभेदेनास्तत्रमेत्रिषितिमेदिनी भूमिधरेनृपे भू
भृत् भुवंबिभर्ति डभृञ् भूपेमूर्धाभिषिक्तः मूर्ध्निअभिषिच्यतेस्म षिचक्षरणे तदुक्तंमेदिन्यां मूर्धाभिषिक्तोभूपालेमंत्रिणिक्षत्रियेपिचेति ॥ स्त्रीकुसुमे ऋतुःस्या
त् स्त्रीरजसि तदुक्तंधरिण्यां ॥ ऋतुर्मासिवसंतादौ धीरेस्त्रीकुसुमेपिचेति ६१ विष्णावपिअजिताव्यक्तोस्यातां अजितश्चाव्यक्तश्चेति नव्यज्यतेस्म अंजूव्यक्त्या
दौक्तः तदुक्तंविश्वे ॥ अव्यक्तःशंकरेविष्णावव्यक्तंमहदादिषु आत्मन्यपिस्यादव्यक्तं अस्फुटेत्वभिधेयवदिति ॥ त्वष्टरिसारथौसूतः सूयते सूयतेस्म षूप्रेरणे सू
तस्सूतसारथौतक्ष्णिक्षत्रियात्तुब्राह्मणीसुतेबंदिपारदयोःपुंसि प्रसूतेप्रेरितेत्रिषिति ॥ प्राज्ञेपिस्फुटेव्यक्तःस्यात् ॥ व्यज्यतेस्म अंजू व्यक्तःस्फुटमनीषिणोरित्युक्तत्वा

**स्थपतिःकारुभेदेपिभूभृद्भूमिधरेनृपे मूर्धाभिषिक्तोभूपेपिऋतुःस्त्रीकुसुमेपिच ६१ विष्णावप्यजिताव्यक्तौसूतस्त्वष्टरिसारथौ**
**व्यक्तःप्राज्ञेपिदृष्टांतावुभौशास्त्रनिदर्शने ६२ क्षत्तास्यात्सारथौद्वास्थेक्षत्रियायांचशूद्रजे वृत्तांतस्यात्प्रकरणेप्रकारेकार्त्स्न्यवार्तयोः ६३**

त् उभौदृष्टांतौशास्त्रनिदर्शनेस्यातां शास्त्रंतर्कादिउदाहरणंच ॥ दृष्टंअंतोत्र नदुक्तंविश्वे अंतःप्रांतेंतिकेनाशइति ६२ सारथौद्वास्थेक्षत्रियायांचशूद्रजे ॥ क्ष
त्ता तदुक्तंविश्वेक्षत्ताशूद्रात्क्षत्रियाजेप्रतिहारेचसारथौ भुजिष्यातनयेक्षत्तानियुक्तेचप्रजासृतीति ॥ प्रकरणेप्रस्तावे ॥ प्रकारेभावे कार्त्स्न्येवार्तयोः साकल्य
प्रवृत्तयोः वृत्तांतः वृतोंतोस्य वृतस्यांतइतिवा ॥ वृत्तांतोवासरेभावेकार्त्स्न्येवार्ताविशेषयोः ॥ वृत्तांतःप्रक्रियायांचेति ॥६३

७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७

समरेनृत्यस्थाननीवृद्विशेषयोः आनृत्यंत्यत्र नृतीगात्रविक्षेपे ॥ आनर्तोनृत्यशालायांजनेजनपदांतर इत्यजयः आनर्त्तोदेशभेदेपिनित्यस्थानेजनेरणेइतिविश्वप्र
यमादधाकुशलकर्मांतेषुचतुर्षुपदेषु ॥ कृतांतःस्यात् कृतःअंतोयेन ६४ पर्यायानाह दैवं दिष्टं अकुशलकर्मपापं रसरक्तादि श्लेष्मादिस्यात् रसःप्रथमाहारस्य
विकारःआदिशद्वात्वसामज्जाशुक्रादिश्लेष्मादिधातुशद्ववाच्यं आदिनापित्तादिग्रहणं महाभूतानिपृथ्वीव्यादिनी तद्गुणाःगंधादयःस्युः इंद्रियाणि चक्षुरादी
नि ॥ अश्मविकृतिःमनःशिलादिस्यात् धातवःशद्वयोनिः दधाति धीयतेवाधातुन् भूसत्तायामित्यादिः भूवादयोधातवइतिसूत्रात् ६५ नृपस्यअसर्वगो
चरेकक्षांतरेशुद्धांतःस्यात् शुद्धःअंतोस्य असर्वेतिकक्षांतरविशेषणं तदुक्तंअजये ॥ शुद्धांतोंतःपुरेराज्ञःकक्षाभेदेचभूपतावितिकासूसामर्थ्ययोःशक्ति

आनर्तःसमरेनृत्यस्थाननीवृद्विशेषयोः कृतांतोयमसिध्दांतदैवाकुशलकर्मसु ६४ श्लेष्मादिरसरक्तादिमहाभूतानितद्गुणाः इंद्रि
याण्यश्मविकृतिःशद्वयोनिश्चधातवः ६५ कक्षांतरेपिशुद्धांतोनृपस्यासर्वगोचरे कासूसामर्थ्ययोःशक्तिर्मूर्तिःकाठिण्यकाय
योः ६६ विस्तारवल्ल्योर्व्रततिर्वसतीरात्रिवेश्मनोः क्षयार्चयोरपचितिःसातिर्दानावसानयोः ६७

शक्यतेनया शक्लृशक्तौ स्त्रियांक्तिन् शक्ति
रस्त्रांतरेगौर्यामुत्साहादौबलेस्त्रियां कासूर्विकलवाचीस्यात् कासूःशक्त्यायुधेपिचेतिविश्वः काठिन्यकाययोःमूर्तिः मूर्च्छ्यते मूर्च्छामोहादौक्तिन् ६६ विस्तारव
ल्ल्योः ॥ व्रततिःव्रजंतीततिरस्याःपृषोदरादिः ॥ रात्रिवेश्मनोः ॥ वसतिःवसंत्यस्यां वसनिवासे अतिः वसतिःस्यात्स्त्रियांवासेयामिन्यांचनिकेतनइतिविश्वः ॥ क्षया
र्चयोः ॥ अपचितिःअपचीयते अपचाय्यतेस्म चायृपूजादौ तदुक्तंमेदिन्यां भवेदपचितिःपूजाव्ययनिष्कृतिहानिषुइति ॥ दानावसानयोःसातिःसननं सानंच ष
णुदाने षोंतकर्मणि अवसानंसमाप्त्यंनयोः ६७

पीडाधनुष्कोट्योः अर्तिः अर्द्दनं अर्द्दहिंसायां सामान्यजन्मनोः ॥जातिः जननंअनयावा तदुक्तं जातिछंदसिसामान्येमालत्यांगोत्रजन्मनोः जातिर्जातीफलधात्र्यां
चुल्लीकंपिल्लुयोरपीतिविश्वात् प्रचारस्पंदयोः लोकाचारप्रश्रवणयोः ॥ रातिः रीयतेरिणातिवारयणंवारीश्रवणेरीगतिरेषणयोः तदुक्तंविश्वे ॥रितिः प्रचारेस्पंदेच
लोहकेदारकूटयोरिति डिंबेप्रवासेचईतिः ईयतेनेनयाईङ्गतौ डिंबोविप्लवः तदुक्तंविश्वे ॥ईतिर्डिंबेप्रवासेतिवृष्ट्यादिषट्कस्चस्त्रियामिति ६८ सचससप्तप्रकारः अति
वृष्टिरनावृष्टिः शलभाःमूषकाः शुकाः स्वचक्रंपरचक्रंचससैताईतयःस्मृताइति ॥उदये अभ्युदये अधिगमेलाभे प्राप्तिःस्यात् त्रेताअग्नित्रयेदक्षिणगार्हपत्याहव
नीयाख्ये ॥युगेस्यात् त्रीन्भेदानिता त्रेताशद्वःआवंतः वीणाभेदेपिमहती महते महपूजायां ॥ महतीवल्लकीभेदेराज्येतुस्यान्नपुंसकं ॥तत्वभेदेपुमान्श्रेष्ठेवाच्यवदितिवि

अर्तिःपीडाधनुष्कोट्योर्जातिःसामान्यजन्मनोः प्रचारःस्पंदयोरीतिरीतिर्डिंबप्रवासयोः ६८ उदयेधिगमेप्राप्तिस्त्रेतात्वग्नित्रयेयुगे ॥
वीणाभेदेपिमहतीभूतिर्भस्मनिसंपदि ६९ नदीनगर्योर्नागानांभोगवत्यथसंगरे संगेसभायांसमितिःक्षयवासावपिक्षिती ७०वृ
रचिश्वशस्त्रंचवन्हिज्वालाचहेतयः जगतीजगतिछंदोविशेषेपिक्षितावपि ७१

श्वेः भस्मनिसंपदिच भूतिः भवतिअनया भूतिर्भस्मनिसंपत्ति हस्तिशृंगार
योः स्त्रियामितिविश्वः ६९ नागानां नदीनगर्योः भोगवती भोगोस्त्यस्यां मतुप् अथभोगवतीनागपुरीनद्योरहौपुमानितिविश्वः संगरेसंगेसभायांच समितिःस्यात् समयनंस
मीयतेवास्यां इगतौक्तिन् क्षयवासावपिक्षितीस्यात् क्षयणं क्षीयतेस्यांवा क्षिक्षये क्षिनिवासगत्योः तदुक्तंमेदिन्यां क्षितिर्निवासेमेदिन्यांकालभेदेक्षयेस्त्रियामिति ७०रवेः
अर्चिः शस्त्रंवन्हिज्वाला एतेहेतयः हंतिहिनोतिवा हन्यतेनयावा जगतिलोके छंदोविशेषे द्वादशाक्षरपादे क्षितौ अपिशद्वात् जने जगतीस्यात् गच्छति तदुक्तंविश्वे जगत्याहि
ष्पंक्तौवनावायोजगमेविष्णु जगतीभवेक्ष्मायांछंदोभेदजनेपिचेति ७१ ७ ७

दशम छंदः दशाक्षरपादकं पंक्तिःस्यात् पङ्क्तिर्दशाक्षरं छंदो दशसंख्यालिषु स्त्रियामिति मेदिनी ॥प्रभावेआयतिःस्यात् आयम्यतेनया आयमनंवा यमउपरमे उत्तर-
कालेपि तदुक्तं विश्वे ॥आयतिः संयमे दैर्घ्ये प्रभावागामिकालयोरिति ॥गतौ पतिःस्यात् ॥वीरसैन्य भेदयोरपि ॥पतति पत्लृगतौ पत्तिर्नापदगे स्त्रियामित्यक्तत्वात्
तदेवोक्तं मेदिन्यां ॥गलावेकरथैकेभैकत्र्यश्व पंच पदातिकइति ॥पक्षभेदयोः शुक्लकृष्णाख्ययोः खगावयवयोश्च मूले प्रतिपदि पक्षिपक्षमूलेच पक्षतिः॥पक्षस्यमूलं ७२ये
नौलिंगेच प्रकृतिः योनिलिंगेद्वंद्वैक्यं तदुक्तं रभसे॥प्रकृतिर्गुणसाम्येस्यादमात्यादिस्वभावयोः योनौलिंगेपौरवर्गेइति ॥कैशिक्याद्याः॥वृत्तमः वृत्तिर्विवरणे॥आदिना कौशी
क्तग्रहणं तदुक्तं भरतेन॥भारतीसात्वतीचैव कैशिक्यारभटीतथा॥चतस्रोवृत्तयश्चैषयासुनाट्यंप्रसंभितमिति ——॥तदुक्तं विश्वे वृत्तिर्विवरणेजीव्येकैशिक्यादिषुचेष्य

पंक्तिश्छंदोपिदशमंस्यात्प्रभावेपिचायतिः पत्तिर्गतौचमूलेतुपक्षतिःपक्षभेदयोः ७२ प्रकृतिर्योनिलिंगेचकैशिक्याद्या-
श्चवृत्तयः सिकताःस्युर्वालुकापिवेदेश्रवसिचश्रुतिः ७३ वनिताजनितात्यर्थानुरागायांचयोषिति शुषिःक्षितिच्छुदासेपिधृतिर्धा
रणधैर्ययोः ७४ तद्वति ७३ वालुकाः सिकताःस्युः सिकतेत्यत्रषिचेरतन्कुत्वं पृषोदरादित्वात् सिकताशब्दोबहुवचनांतः वालुकायांस्त्रियां तदुक्तं मेदिन्यां
सिकताःस्त्रीसिकतिलेवालुकायांतुभूम्नीइति ॥वेदेश्रवसिचश्रुतिः श्रूयतेनयावा श्रुश्रवणे स्त्रियांक्तिन् तदुक्तं विश्वे॥श्रुतिःश्रोत्रेतथाम्नाये वार्तायांश्रोत्रकर्मणीति ७२
जनितात्यर्थानुरागायांयोषितिच ॥वनितास्यात् वन्यतेस्म वनुयाचने क्तः यस्येत्यस्यांनित्यत्वादिट् ॥जनितोऽत्यंतानुरागोयस्यां चकारात्योषिन्मात्रेपि तदुक्तं विश्वे वनिताजनि
तात्यर्थरागयोषितियोषितीति क्षितिच्छुदासे भूविवरेशुषिः शुष्यतेगोपनंच शुषिःकारागृहेप्रोक्ता भूगर्तेरक्षणे ।धर्मेइतिविश्वः॥धारणाधैर्ययोः धृतिःस्यात् धरणं धृञ्धार
णे धारणायोगः तदुक्तं विश्वे धृतिर्योगांतरे धैर्ये धारणाध्वरतुष्टिषिति ७४ ७

क्षुद्रवार्त्ताकी बृहती स्यात् वर्तमाने इत्युणादिसूत्रेण साधुः सा छंदोभेदं महत्यपि स्यात् तदुक्तं विश्वे बृहती क्षुद्रवार्त्ताक्यां कंटकार्यां च वाचिके वारिधान्यां महत्यां च छंदोवसनभेदयो रिति क्षुद्रवार्त्ताकी आषधिविशेषः स्त्रीकरिण्योः हस्तिन्योः वासिता वासयति वसनिवासे वासउपसेवायां वा क्तः तदुक्तं विश्वे वासिता करिणी नार्यो वासितं सुरभीकृते ध्यानमात्रे खगाराव वासितं वस्त्रवेष्टितं इति ॥ गमस्वामी तु तालव्यमध्यपाठमाह तत्र वाश्शब्दे वृत्तौ उपजीविकायां जनश्रुतौ प्रवृत्तौ वार्त्ता स्यात् मत्वर्थेण वार्त्तावातिंगणे वृत्तौ वार्त्ताकुष्यां कृत्तं तयोरिति विश्वः ७६ फल्गुनि असारे अरोगे वार्त्तं त्रिषु घृतामृते अक्षं च स्यातां ॥ वार्त्तं फल्गुन्यरोगे स्यादारोग्ये हनिमत्स्वपीति धरणिः घ्रियते ॥ ङ्घृ क्षरणदीप्त्योः अंजिघृसिभ्यः क्तः ॥ तदुक्तं विश्वे घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवदिति ॥ नमृतं मरणमत्र तदुक्तं विश्वे अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते अया

बृहती क्षुद्रवार्त्ताकी छंदोभेदे महत्यपि वासिता स्त्रीकरिण्योश्च वार्त्ता वृत्तौ जनश्रुतौ ७५ वार्त्तं फल्गुन्यरोगे च त्रिषु स्यात् घृतामृते
कलधौतं रूप्यहेम्नोर्निमित्तं हेतुलक्ष्मणोः श्रुतं शास्त्रावधृतयोर्युगपर्याप्तयोः कृतम् अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ७७

चितेच मोक्षेच नाधन्वं नरिदेवयोरिति रूप्यहेम्नोः कलधौतं स्यात् कलः मलः धौतोऽस्य तदुक्तं मेदिन्यां ॥ कलधौतं स्वर्णे स्याद्रजते च नपुंसकमिति हेतुलक्ष्मणोः निमित्तं स्यात् निमिद्यते निमिदा स्नेहने अनात्मने पदनिमित्तेइतिनिर्देशानन्तं लक्ष्म चिन्हमित्यर्थः ७८ शास्त्रावधृतयोः श्रुतं स्यात् श्रूयते स्म श्रवणं च श्रु श्रवणे क्तः अव धृतमाकर्णितमित्यर्थः युगपर्याप्तयोः कृतं स्यात् कृञः क्तः तदुक्तं मेदिन्यां कृतं युगे लमर्थे च विहिते हिंसिते त्रिषु इति ॥ जीवानपेक्षि जीवस्य असहनं कर्म महाभीतिः म हद्भयं अत्याहितं स्यात् अतीवापीयते स्म मनसि डुधाञ् क्तः दधातेर्हिः ७७ ७ ७ ७

पुंक्तेन्याय्येक्ष्मादौक्षित्यादि पंच के ऋते सत्ये प्राणिनि जंतौ अतीते वृत्ते समे सदृशां भूतं स्यात् भूधातोः क्तः प्राप्यतीतइति समाहारद्वंद्वः तदुक्तं मेदिन्यां भूतं क्ष्मादौ पिशाचादौ जंतौ क्लीबं त्रिषूचिते ॥ प्राप्ते वृत्ते समासत्येदेवयोन्यंतरे तु ना इति भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोरिति विश्वश्च ॥ पद्ये श्लोके अतीते भूते दृढनिस्तले गाढ वर्त्तुले दृढे द्वयं अतीतादिके त्रिलिंग्यां वृत्तं स्यात् वृतु वर्तने क्तः ७८ राज्यं महत्स्यात् मह्यते मह पूजायां वर्त्तमाने पृषदिति साधुः तदुक्तं मेदिन्यां महती वल्लुकी भेदे राज्ये तु स्यान्नपुंसकं तत्त्वभेदे पुमान् श्रेष्ठे वाच्यवदिति ॥ जन्ये जनापवादे गर्हिते निंदिते अवगीतं अवगायतेस्म गै शब्दे क्तेईत्वं ॥ अवगीतस्तु निर्वादे दुष्ट गर्हितयोरपीति विश्वः रूप्ये श्वेतं स्यात् श्वतते श्विता वर्णे पचाद्यच् तदुक्तं विश्वे श्वेतं रूप्ये । न्यवच्छु क्लेश्वेतो द्वीपाद्रिभेदयोरिति हेम्नि रूप्ये सितेच रजतं ॥ रजति रज्य

युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ७८ महद्राज्यं चावगीतं जन्ये स्याद्गर्हिते त्रिषु श्वेतं रूप्येपि रजतं हेम्नि रूप्ये सिते त्रिषु ७९ त्रिष्वितो जगदिंगेपि रक्तं नील्यादि रागि च अवदातः सिते पीते शुद्धे बद्धार्जुनौ सितौ ८०

ते नेन वा रंज रागे अतन्चः क्त्वान्न लोपः रजतं रंजने रूप्ये शोणि तेन्हदहारयोरित्यजयः ७९ अतः रजनात् परेतां ताः शब्दास्त्रिषु इंगे जंगमे विष्टपे च जगत् गमेः क्विपि द्वित्वं मलोपे तुक् तदुक्तं मेदिन्यां जगत्स्याद्विष्टपे क्लीबं वायौ ना जंगमे त्रिष्विति नील्यादि रागि च रक्तं स्यात् रंज रागे क्तः रक्तो ऽनुरक्ते नील्यादि रंजिते लोहिते त्रिषु क्लीबं तु कुंकुमे ताम्र इति मेदिनी सितादि त्रिके अवदातः अवदायतेस्म दैप् शोधने आतेक्तः अघुत्वादित्वं न बद्धे अर्जुने सितं सीयतेस्म षिञ् बंधने सिनम् वा सितेच बध्दे धवले त्रिषु शर्करायां स्त्री इक्तत्वात् ८०

७ ७ ७ ७

युक्तेन्याय्येअतिसंस्कृते अतिप्रशस्ते मर्षिणी क्षंतरि अभिनीतः स्यात् अभिनीयतेस्म॥ कृत्रिमे॥ घटादौ लक्षणोपेते पाणिन्यादिसूत्रव्युत्पादिते॥ संस्कृतं संस्क्रियतेस्म तदुक्तं कोशांतरे संस्कृतः कृत्रिमेशस्ते भूषितेप्यन्यलिंगकः क्लीबंतुलक्षणोपेतेइति॥ अनवधौ अनंतः नअंतोस्य अनंतः केशवेशेषेपुमान्निरवधौ त्रिषितिमेदिनी अनंतंखेनिरवधाविति हैमश्च ८१ ख्याते प्रसिद्धे हृष्टेचप्रतीतः प्रतीयतेस्म इणूगतौ प्रतिपूर्वादिणः क्तः प्रज्ञातज्ञातहृष्टेषुप्रतीतःसादरेत्रिषितिरभसः तदेवोक्तं हेमे प्रतीतःसादरेप्राज्ञेप्रथितेज्ञातहृष्टयोरिति कुलजे कुलीने बुधे पंडिते अभिजातः अभिजायतेस्म गत्यर्थेतिक्तः जनेरात्वं न दुक्तं मेदिन्यां अभिजातःकुलीनेस्यान्न्याय्यपंडितयोस्त्रिषिति पूतविजनौ पवित्रजनाभावस्थले विविक्तौस्यातां विविज्यते विजिर्पृथग्भावे विचिर्विरे

युक्तेतिसंस्कृतेमर्षिण्यभिनीतोथसंस्कृतम् कृत्रिमोलक्षणोपेतेप्यनंतोनवधावपि ८१ ख्यातेहृष्टेप्रतीतोभिजातस्तुकुलजे-
बुधे विविक्तौपूतविजनौमूर्च्छितौमूढसोच्छ्रयौ ८२ द्वौचाम्लपरुषौशुक्तौशितौधवलमेचकौ सत्येसाधौविद्यमानेप्रशस्तेभ्यर्हितेचसत् ८३

चनेवा विविक्तंस्यादसंपृक्ते रहः पूतविवेके त्रिषिति हेमः मूढसौ छयौ द्वौ मूर्छितौस्यातां मूर्छतिस्म मूर्छामोहसमुच्छ्राययोरित्युक्तत्वात् मोहंगतवृद्धियुक्तावित्यर्थः अम्लपरुषौ शुक्तौस्यातां ईशक्तिर्पूतिभावेक्तः तदुक्तं मेदिन्यां पूताम्लनिष्ठुरेशुक्तमिति मृन्मयादिशुचौभांडेसगुडंक्षौद्रकांजिकं॥ धान्यराशौत्रिरात्रस्थंशुक्तंशुक्तंतदुच्यतइत्युक्तत्वात् धवलमेचकौ शितौस्यातां शीयते शिनोतिस्मवा शिञ्निशाने क्तिन्क्तिजवा निशितेपिशितिर्भूर्जेवासितासितयोस्त्रिषितिमेदिनी मेचकोकृष्णवर्णःस्यादित्यर्थः सत्यादिष्यर्हितांतेषुपंचसुसत्स्यात् अस्ति अंसभुवि लटःशतृश्नसोरल्लोपः तदुक्तंमेदिन्यां सन्साधौधीरशस्तयोरिति ८३

अरात्यभियुक्ते अरातिना अभियुक्ते क्रांते अग्रतः कृते पूजिते पुरस्कृतः पुरोकारि कृञः क्तः पुरोव्ययेतिगतित्वं नमस्पुरसोरिति सः आश्रयावातौ निवासवातवर्जितौ॥ एतौ निवातौ निवृत्तो वातोऽस्मात् यच्छस्त्राभेद्यं वर्म कवचं तदपि निवातमेव स्यात् निवातो दृढसन्नाहे निवासे वातवर्जिते इत्यजयः ८४ जातोन्नद्धप्रवृद्धाः उत्पन्नदृढसमृद्धाः उच्छ्रिताः स्युः उच्छ्रयन्ति उच्छ्रीयते स्मवा श्रिञ् सेवायां गत्यर्थेति कर्त्तरि कर्मणि वा क्तः उच्छ्रितं त्रिषु संजाते समुन्नद्धप्रवृद्धयोरिति मेदिनी अमी वक्ष्यमाणा वृद्ध्यादयः॥ उत्थिताः उत्तिष्ठन्तिस्म गत्यर्थे इति क्तः तदुक्तं मेदिन्यां उत्थितं स्यात्त्रिषूत्पन्ने प्रोद्यते वृद्धिमत्यपीति वृद्धिमत्प्रोद्यतोत्पन्नौ सादरार्चितौ आदृतौ आद्रियते स्म दृङ् आदरे क्तः प्रोद्यतश्च उत्पन्नश्च वृद्धिमांश्च ८५ ॥इति तान्ताः॥ ॥अभिधेयरैवस्तुप्रयोजननिवृत्तिषु अर्थः

पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ८४ जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी वृद्धिमत्प्रोद्यतोत्पन्ना आदृतौ सादरार्चितौ ८५ ॥ इति तान्ताः॥ ॥अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ ८६

स्यात् अर्यते ऋच्छति वा ऋगतौ थन्प्रत्ययः यद्वा अर्थ्यते अर्थ उपयाच्ञायां पर्यायानाह वाच्यं राः धनं वस्तु तत्त्वं निवृत्तिर्निवर्त्तनं तदुक्तं मेदिन्यां अर्थो विषयार्थनयोर्धनकारणवस्तुषु इति तदुक्तं च हैमे अर्थो हेतौ प्रयोजने निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु इति निपानागमयोः जलकूपशास्त्रयोः ऋषिजुष्टे जले गुरौ उपाध्याये तीर्थं स्यात् तीर्यतेऽनेन वा तॄ प्लवनतरणयोः थक् ईत्वं तदुक्तं मेदिन्यां तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजः सु च अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु इति निदानागमयोरित्यपि पाठः निदानमुपाय इति मुकुटः ८६

शक्तिस्थेशक्तमिति संबद्धार्थेसमर्थपदविधौ हितेऽनुकूले समर्थः त्रिलिंग्यां समर्थयते समर्थ्यतेवा अर्थउपयांच्यायां पचाद्यच् घञ्वा क्षीणरागवृद्धौ दशमी स्थौस्तः दशाम्यांतिष्ठति सुपिस्थइतिकः दशामीस्थोनष्टजीवेस्थ विरेप्यन्यलिंगकइतिविश्वः क्षीणोरागोरसोस्य पदवी वीथीस्यात् विथ्यतेनया विथृयाच-ने करणे घञ्पृषोदरादित्वात्वीत्यस्यदीर्घः तदुक्तंमेदिन्यां वीथीपंक्तौगृहांगेचरूपकांतरवर्त्मनोरिति ८७ आस्थानीयत्नयोः सभाप्रयत्नयोः आस्था आति ष्ठंत्यस्यां आतश्चोपेत्यङ् तदुक्तंमेदिन्यां आस्थात्वालंबनस्थानयत्नापेक्षासुयोषितीति सानुमानयोः शिखरपरिमाणभेदयोः प्रस्थः प्रतिष्ठत्यस्मिन् अनेन वा घञर्थेकः अस्त्री प्रस्थोस्त्रियांमानभेदेसानावुन्मितवस्तुनीतिमेदिनी शास्त्राद्रविणयोः ग्रंथःसंस्थाधारेस्थितौमृताविस्यन्यत्र॥ इतिथांताः॥

समर्थस्त्रिषुशक्तिस्थेसंबद्धार्थेहितेपिच दशामीस्थौक्षीणरागवृद्धौवीथीपदव्यपि ८७ आस्थानीयत्नयोरास्थाप्रस्थोस्त्रीसा नुमानयोः॥ इतिथांताः ॥अभिप्रायवशौछंदावद्दौजीमूतवत्सरौ ८८ अपवादौतुनिंदाज्ञेदायादौसुतबांधवौ पादारश्म्यं घ्रितुर्यांशाश्चंद्राग्न्यर्कास्तमोनुदः ८९ अभिप्रायवशौआशयाधीनौछंदौ छंद्यते छदिसंवरणे घञ् तदुक्तंहेमे छंदोवशेऽभिप्रायेचहृषत्पाषाणमा त्रके निषेधणार्थपद्दे। पीति जीमूतवत्सरौ अद्दौस्यातां अपोददातीतिआतानुपेतिकः तदुक्तंविश्वे अहू:संवत्सरेमेघेगिरिभेदेचमुस्तकइति ८८ निंदाक्षेकुत्सा शासने अपवादौ वदेःकर्मणिभावेवाघंञ् अववादइत्यपिपाठः तदुक्तंविश्वे अपवादस्तुनिंदायामाज्ञाविश्रंभयोरपीति सुतबांधवौ दायादौस्तः दायमत्ति अदभक्षणे क र्मण्यण् दायादस्तुभवेत्पुंसि सपिंडे तनयेपिचेतिविश्वः रश्म्यंघ्रितुर्यांशाः पादाः पद्यते पद्गतौ पदरुजेतिघञ् रश्मितुर्यांशौ किरणचतुर्थभागावित्यर्थः पादोबुध्नेतुरीयांशेशै लप्रत्यंतपर्वते चरणेचमयूखेचेतिविश्वः तदुक्तंचहैमे पादोमूलास्तुतुर्यांशांघ्रिषुप्रत्यंतपर्वतेइति चंद्राग्न्यर्काः तमोनुदः तमोनुदतितीतमोनुन् णुदप्रेरणे कर्त्तरिक्विप् गुणाभावः८

जनवादे जनापवादे निर्वादः निर्वदनं वदव्यक्तायांवाचि भावेघञ् निर्वादःस्यात्परीवादपरिनिश्चितवादयोरितिविश्वः जंबालशष्पयोः पंकघासयोः शादः शद्यते अनेनवा शद्लृशातने करणेभावेवाघञ् आरांवादिरणांतेषुचतुर्षुपदेषु आक्रंदः आरावः आर्तध्वनिः त्रातारक्षकः आक्रंदनं आक्रंदते आक्रंद्यतेऽस्मिन्वा आक्रंदयतिवा क्रदिआह्वाने रोदनेच घञ्पचाद्यच्वा तदुक्तंमेदिन्यां॥ आक्रंदः क्रंदनेह्वानेमित्रदारुणयुध्दयोरिति १० अनुरागेप्रसादःस्यात् प्रसदनमनेनवा- शद्लृविशरणादौ घञ्भावेकरणेवा॥अनुरागः अनुग्रहइत्यर्थः तदुक्तंमेदिन्यां प्रसादोऽनुग्रहेकाव्यप्राणस्वास्थ्यप्रसत्तिषिति व्यंजने सूदः स्यात् सूद्यते सूदयतिवा षूदक्षरणे सूदस्तुसूपवत्सूपकारेचव्यंजनेपिचेतिविश्वः गोष्ठाध्यक्षेगोविंदः गांविंदति विद्लृलाभे तदुक्तंविश्वे गोविंदोवासुदेवेस्याद्गवाध्यक्षेबृ

निर्वादोजनवादेपिशादांजंबालशष्पयोः आरावेरुदितेत्रातर्य्याक्रंदोदारुणेरणे १० स्यात्प्रसादोनुरागेपिसूदःस्याद्व्यंजनेपिच गोष्ठा ध्यक्षेपिगोविंदोहर्षेप्यामोदवन्मदः ११ प्राधान्येराजलिंगेचवृषांगेककुदोस्त्रियां स्त्रीसंविज्ज्ञानसंभाषाक्रियाकाराजिनामसु १२

हस्पतावितिगोष्ठस्यगोस्थानस्य अध्यक्षेगोपालादावित्यर्थः हर्षेआमोदवन्मदःस्यात् आमोदोगंधहर्षयोरित्युक्तत्वात् मदोरेतसिकस्तूर्यांगर्वेहर्षेभदानयो रितिविश्वः ११ प्राधान्येप्रधानमेवप्राधान्यंतत्र राजलिंगेछत्रचामरादौ वृषांगेककुदःस्त्रियां कंसुखंकौति कुशब्दे क्विप्तुक्पृषोदरादिः ज्ञानादिनामांतेषुपंचसु संवित् स्त्रीस्यात् संवेदनं संविद्यतेनयावा विदज्ञानेविदचेतनादौच संपदादिः क्रियायाः कारोनियमः पणबंधोवा आजिर्युद्धं अन्यत्सुगमं तदुक्तंहैमे संवित्संभाषणे ज्ञाने संयमेनाम्नितोषणे क्रियाकारेप्रतिज्ञायांसंकेताचारयोरपीति संविन् स्त्रियांप्रतिज्ञायामाचारेज्ञानसंगरे संभाषणेक्रियाकारेसंकेतेनाम्निवोषणे इतिविश्वश्च १२

धर्मेरहसि उपनिषत्स्यात् उपनिषदनं उपनिषीदन्निश्रेयोस्यांवा षट्ठविशारणादी संपदादिः तदुक्तं मेदिन्यां भवेदुपनिषद्धर्मे वेदान्ते विजने स्त्रियामिति ऋतौ वत्सरे शरत्स्यात् श्रृणाति शृहिंसायां आदिप्रत्ययः शरत्स्त्री व्यवसितादिवस्त्वं तेषु षट्सु पदेषु पदंस्यात् पदति पद्यते पदंस्थैर्ये पदं गतौ वा पचाद्यच् भावकर्मकरणेषु घञ् तदुक्तं हेमे पदंस्थाने विभक्त्यं तेशब्दे वाक्येऽकवस्तुनोः त्राणे पदे पादचिन्हे व्यवसायापदेशयोरिति १३ संविते गोसेवितप्रदेशे माने खुरमाने गोष्पदंस्यात् गावः पद्यंते स्मिन्देशे गोःपदं तन्मात्रं क्षेत्रं प्रतिष्ठाकृत्यं आस्पदंस्यात् आपद्यते स्मिन् आस्पदं प्रतिष्ठायां इति साधुः प्रतिष्ठास्थानं कृत्यंकार्यं इतः परं वर्गसमासे दांताक्त्रीषु इष्टमधुरे स्वादु स्वद आस्वादने उण् तदुक्तं विश्वे स्वादुमिष्टमनोज्ञयोरिति इष्टो मनोहर इत्यर्थः अतीक्ष्णकोमलौ मृदू

धर्मे रहस्युपनिषत्स्यादृतौ वत्सरे शरत् पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु १३ गोष्पदं सेविते माने प्रतिष्ठाकृत्यमास्पदम् त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ १४ मूढाल्पापटुनिर्भाग्या मंदाः स्युर्द्वौ तु शारदौ प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ विशारदौ १५ इति दांताः

स्यातां म्रदमर्दने कुः संप्रसारणं तदुक्तं विश्वे मृदुःस्यात्कोमलेस्वरइति १४ मूढाल्पापटुनिर्भाग्याः एते मंदाः स्युः मदी हर्षे मदिस्तुत्यादौ वा पर्यायानाह मूर्खः असमर्थः भाग्यहीनः प्रत्यग्राप्रतिभौ अभिनवाप्रगल्भौ एतौ द्वौ तु शारदौ संधिवेलेत्यण् तदुक्तं विश्वे शारदो हे स्त्रियां तोये पिप्पलीसप्तपर्णयोः सस्ये क्लीबं शरज्जातनूतनाप्रतिमे त्रिषु इति विद्वत्सुप्रगल्भौ विशारदौ उक्तः विशिष्टो विपरीतो वा शारदः विशारदः पंडित इत्यर्थः विशारदो बुधे धृष्ट इति हेमः ॥ इति दांताः १५ ॥ ७ ७ ७ ७ ७ ३

व्यामः वटश्च न्यग्रोधोऽस्त्रः न्यक्करुणद्धि रुधिर आवरणे कर्मण्यण् तदुक्तं विश्वे न्यग्रोधो व्यामवटयोर्न्यग्रोधश्च शमीतराविति व्यामः प्रसारित कुंडला-कार भुजद्वयमित्यर्थः ॥ कायेउन्नतिः उत्सेधः पर्याहारः परिनः आन्हियतेऽनेन उभयतोबद्धशिक्यंस्कंधेचार्द्धकावडी तिरव्यातमित्यर्थः ॥ मार्गः पंथाः एनौ विवध संज्ञकोस्यातां विविधः वधः हननंगमनंवा अनेनवा मादिभ्योधालुइतिसाधुअन्येषामितिदीर्घः तदुक्तंविश्वे ॥ विवधोवीवधश्चापिपर्याहारेध्वभारयो रिति ॥ यज्ञियतरोः पलाशादिकस्यशाखायांसमिधियांउपसूर्यकेसूर्यसमीपेपरिमंडल इत्यर्थः ॥ परिधिः परिधीयते डुधाञ् उपसर्गेघोः किः बंधकंव्यसनं आपत्तिः चेतःपीडा अधिष्ठानं अध्यासनं एते आधयःआधिशब्दवाच्याः स्युः तदुक्तंविश्वे ॥ आधिःपुमांश्चित्तपीडाप्रत्याशाबंधकेपिच ॥ व्यसनेचाप्यधिष्ठा

**व्यामोवटश्चन्यग्रोधावुत्सेधःकायउन्नतिः पर्याहारश्चमार्गश्चविवधौवीवधौचतौ १६ परिधिर्यज्ञियतरोःशाखायामु पसूर्यके बंधकंव्यसनंचेतःपीडाधिष्ठानमाधयः १७ स्युःसमर्थननीवाकनियमाश्चसमाधयः दीर्षोत्पादेऽनुबंधःस्यात्प्र कृत्यादिविनश्वरे १८**

ने इति आधानं अनेन अस्मिन्वा अधिकरणेकरणेकिः उत्तमर्ण सद्मनि ऋणमुक्तिपर्यंतंविश्वासाययन्निक्षिप्यते तद्बंधक-मित्यर्थः १७ समर्थननीवाकनियमाः समाधयः स्युः पर्यायानाह बोधपरिहारः वननाभावः मूल्योत्कर्षार्थधान्यादिसंग्रहोवा ॥ अंगीकारः समाधानंअनेनवा भावेक रणेवाकिः तदुक्तंसमसे समाधिर्ध्याननीवाकनियमेषुसमर्थनइति दीर्षोत्पादे प्रकृत्यादिः विनश्वरेप्रकृत्यादिषुप्रकृतिप्रत्ययागमादेशेषुयत् विनश्वरं इत्संज्ञा लोपाभ्यामदर्शनशीलमक्षरंतस्मिन्अनुबंधःस्यात् अनुबध्यते बधबंधने घञ् अकर्तरीतिशास्त्रेण कर्मणीतिभावः १८

मुरव्यानुयायिनि मुरव्यंपित्रादिकं अनुयातीतितस्मिन् शिशौ प्रकृतस्यआरब्धस्य अनुवर्त्तने । निवर्त्तने सएवस्यात् तदुक्तंमेदिन्यां अनुबंधीतुहिक्कायांत्तृ ष्णायामपियोषिति विनश्वरेप्रकृत्यादेः प्रकृतस्यानिवर्त्तने मुरव्यानुयायी बालेच दोषस्योत्पादनेपुमा निति विष्णौचंद्रमसिविधुः विध्यति विरहिणं व्य धताडने कुप्रत्ययेसंप्रसारणं विधुःशशांकेकर्पूरेत्हृषीकेशेचराक्षसइतिविश्वः परिच्छेदे सीम्नी विले अवधिः अवधानं उपसर्गेघः किः अवधिस्त्ववधा ने स्यात्सीम्निकालेविलेपुमानितिविश्वः ९९ विधानेक र्त्तव्ये दैवेप्राक्तन कर्मणि अपिशद्वात् परमेष्ठिनि विधिः भावेप्रथाकरणेकिः तदुक्तंमेदिन्यां विधि र्नानियतौ कालेविधानेपरमेष्ठिनीति विधानंअनेनवा प्रार्थनेचरेप्रणिधिः स्यात् प्रणिधानं प्रणिधीयतेवा अत्रापिकिः प्रणिधिर्नारवलेचरे इत्युक्तत्वात् ॥

मुरव्यानुयायिनिशिशौप्रकृतस्यानुवर्त्तने विधुर्विष्णौचंद्रमसिपरिच्छेदेबिले ऽवधिः ९९ विधिर्विधानेदैवेपिप्रणिधिः प्रार्थनेचरे॥
बुधवृद्धौपंडितेपिस्कंधः समुदयेपिच १०० देशेनदविशेषेब्धौसिंधुर्नासरितिस्त्रियाम् विधाविधौप्रकारेचसाधूरम्येपिचत्रिषु १०१

प्रणिधिरवधानेषि बुधवृद्धौएतौधातौशद्वौपंडितेपिस्यातां बुध्यते बुधअवगमने इगुपेतिकः तदुक्तंविश्वे बुधः कवौरौहिणेयइति वर्ध्दतेस्म वृधुवृध्दौ गत्यर्थेतिक्तः तदुक्तंविश्वे वृध्दोजीर्णेप्रवृध्देज्ञेत्रिषुक्लीबंतुशैलजे इति अपिशद्वात्सौम्येस्कंधविरेच समुदयेसमुहेपिस्कंधः स्यात् कंशिरोदधाति पारस्करादिः तदुक्तंविश्वे स्कंधः स्यान्नृपतौवंशेसंपरायसमूहयोः कायेतरुप्रकांडेचभद्रादाविति तदुक्तंच हेमे स्कंधः प्रकांडे कायें ऽसेविज्ञानादिषुपंचस नृपेसमूहेचेति १०० देशेनदविशेषेअ ब्धौसिंधुः स्यात् पुंसि सरितिस्त्रियांसएवस्यात् स्यंदते स्यंदूप्रस्रवणे उप्रत्ययेसंप्रसारणंधादेशश्च तदुक्तंविश्वे सिंधुःसमुद्रेनद्यांचनददेशेभदानयोरिति ॥

विधौविधानेप्रकारेच विधास्यात् विधानं डुधाञ् आतङ्त्यङ् यथाहि विधं किंविधमित्यादि धूर्त्ये रम्येपिसाधुः स्यात् त्रिषु साध्नोति साधसंसिध्दौ उण् तदुक्तं विश्वे साधुर्वार्धुषिकेचारौ सज्जनेचाभिधेयवदिति १०१ जायाभार्यास्यात् स्नुषापुत्रस्यपत्नीस्यात् स्त्रीमात्रेचवधूः स्यात् वहति वहप्रापणे वहोधश्चेत्यूः वधूः स्नुषानवोढास्त्रीभार्यापृक्कांगनासु चेतिविश्वात् सर्वत्रापिसमः लेपः चूर्णविशेषः सुधास्यात् सुष्ठुधीयते डुधाञ् आतङ्त्यङ् सुधागंगेष्टकाचूर्णस्नुहीचामृतस्वर्वयोः इत्यजयः तदुक्तं मंजर्यां सुधामासाद्यप्राकुत्त्वं सुधाविद्युत्सु धामृतं सुधाहिभोजनं ज्ञेयं सुधाधात्रीसुधास्नुहीति लिप्यतेअनेनेतिदेवालयमित्यर्थः करणेघञ् अमृतं स्नुहीस्यात् प्रतिज्ञास्वीकारः संधा आतङ्त्यङ् मर्यादाश्रद्धासंप्रत्ययः आदरः स्पृहा कांक्षा १०२ मद्येपुष्परसेक्षौद्रेमाक्षिकेमधुमद्येपुष्परसेक्षौद्रेप्येधंतमस्यपि अतस्मिन्नुसमुन्नद्धोपंडितंमन्यगर्वितौ ३ ब्रम्हबंधुरधिक्षेपेनिर्देशेथावलंबितः

१ वधूर्जाया स्नुषास्त्रीच सुधालेपोमृतंस्नुहि संधाप्रतिज्ञामर्यादाश्रद्धासंप्रत्ययः स्पृहा २

प्रवर्त्तते तदुक्तं विश्वे मधुक्षौद्रेजलेक्षीरे मद्येपुष्परसेमधुः दैत्येचैत्रे वसंतेचजीवाशोकेमधुद्रुमइति तमस्यपिअंधंस्यात् अंधयति अंधदृष्ट्युपघाते पचाद्यच् अंधस्तु तिमिरेक्लीबंचक्षुर्हीनेभिधेयवदितिविश्वः अतःपरंधांतवर्गपर्यंताःस्त्रिषुस्युः पंडितंमन्यगर्वितौ समुन्नध्दो समुन्नह्यतेस्म णह बंधने आत्मानंपंडितंमन्यतेसौ तदुक्तं विश्वे समुन्नद्धः समुद्धूतेपंडितंमन्यदृप्तयोरिति ३ अधिक्षेपेनिर्देशेब्रम्हबंधुः ब्रम्हेव ब्राम्हणः जातिः बंधुरस्य निंदापरत्वात् हेब्रम्हबंधोदुष्टोसीति प्रयोगोपि तदुक्तं विश्वे ब्रम्हबंधुरधिक्षेपेनिर्देशेचद्विजन्मनामिति अवलंबितः आश्रितः अपिशद्बात् बद्धोपि ॥

अविदूरश्च सन्निहितश्च अवष्टब्धः अवष्टभ्यतेस्म ष्टभिस्तंभे स्तंभरोधनेवा प्रत्ययेअवाच्चेतिषः तदुक्तंमेदिन्यां अवष्टब्धोविदूरेस्यादाक्रांतेचावलंबितइ
ति स्व्यातभूषितौ प्रसिद्धोस्तः प्रसिस्थति प्रसिध्यतेस्मवा षिधुसंराद्धौगत्यांवा कर्त्तरिकर्मणिवा क्तः ४ इतिधांताः सूर्यवन्हीचित्रभानूस्तः चित्रा
भानवोरश्मयोयस्य रश्मिर्दिवाकरोभानूः भाति भादीप्तौ दाभाभ्यांनुः धातृदेहौभूतात्मानौस्तः भूतानांआत्मा भूतानिआत्मास्वभावोस्यवा मूर्खनीचौ पृथ-
ग्जनौ पृथक्कार्येजनः शाकपार्थिवादिः ५ शैलपाषाणौ ग्रावाणौ ग्रसते ग्रसुअदने ग्रश्चासौआवाच आवनति वनसंभक्तौशाद्वा शरपक्षिणौ पत्रिणौ पत्रा-
णिसंत्यस्य मत्वर्थेइनिः तदुक्तंविश्वे पत्रीश्येनेरथेकांडेखगद्रुरथिकाद्रिषु नगरुशैलौशिखरिणौ शिखरिमस्तियस्य वन्हिबर्हिणौशिखिनौस्तः शिखाःसं

अविदूरोप्यवष्टब्धः प्रसिद्धोस्व्यातभूषितौ ४ ॥इतिधांताः॥ सूर्यवन्हीचित्रभानूभानूरश्मिदिवाकरौ भूतात्मानौधातृदेहौमूर्खनीचौपृथग्जनौ ५ ग्रावाणौशैलपाषाणौपत्रिणौशरपक्षिणौ नगरुशैलौशिखरिणौशिखिनौवन्हिबर्हिणौ ६ प्रतियत्नावुभौलिप्सोपग्रहावथसादिनौ द्वौसारथिहयारोहौवाजिनोश्वेषुपक्षिणः ७

त्यस्य अतइनिः तदुक्तंहेमे शिखीवन्हौवलीवर्देशरेहेतुग्रहेद्रु
मे मयूरेकुक्कुटेपुंसिशिखावत्यन्यलिंगकेइति ६ लिप्सोपग्रहो वांछानुकूलनेउभौप्रतियत्नौस्तः यजयाचेतिनङ् तदुक्तंमेदिन्यां प्रतियत्नस्तुसंस्कारलि-
प्सोपग्रहणेषुचेति सारथिहयारोहौद्वौसादिनौ अवश्यंसीदति सादयतिवा षद्लृविशरणादौ नंद्यिग्रहीतिणिनिः तदुक्तंहेमे सादीतुरंगमारोहेनिषादिरथिनो
रपीति अश्वेषुपक्षिणः वाजिनः वाजाः पक्षाः संत्यस्य ७ ७ ७ ७ ७ ७ ७ ७

कुले जन्मभूम्यां जननस्थाने अभिजनः अभिजायतेऽस्मिन् हलश्चेति घञ् अभिजनः कुलेऽप्याप्तो जन्मभूम्यां कुलध्वजइतिविश्वः वर्षार्चिर्व्रीहिभेदाः हायनाः जहा-
ति जिहीतेवा हश्चेतिण्युट् अहूरश्मिपर्यायौ तदुक्तंमेदिन्यां हायनोनस्त्रियांवर्षेपुंस्यर्चिर्व्रीहिभेदयोरिति व्रीहिभेदः षष्टिक इत्यर्थः चंद्राग्न्यर्काः विरोचनाः विरोच-
ते रुचिर्दीप्तौ अनुदात्तेतियुच् प्रह्लादतनयोपि ८ क्लेशे वृजिनः वृज्यते वृजीवर्जने वृजेः किच्चेतिनन् अपिशब्दात् कल्मषे क्लीबं तदुक्तंहेमे वृजिनः केशेवृजिनं
कल्मषेऽघेरक्तचर्मणीति वृजिनकल्मषेक्लीबंकेशेनाकुटिलेत्रिष्विति रभसश्च अर्कसुरशिल्पिनोः विश्वकर्मा विश्वंकर्मास्यास्त्येतिवा विश्वकर्मासहस्रांशौ
मुनिभिर्देवशिल्पिनोरितिमेदिन्यां यत्नादिवर्ष्मांतेषुषट्सुपदेषु आत्माशब्दःस्यात् अतति अतसातत्यगमने मनिन् तदुक्तंधरिण्यां आत्माकलेवरेयत्ने स्वभावे

कुलेप्यभिजनोजन्मभूम्यामप्यथहायनाः वर्षार्चिर्व्रीहिभेदाश्च चंद्राग्न्यर्काविरोचनाः ८ क्लेशेपिवृजिनोविश्वकर्मार्कसुरशिल्पिनोः
आत्मायत्नोधृतिर्बुद्धिःस्वभावोब्रह्मवर्ष्मच ९ शक्रोघातुकमत्तेभोवर्षुकाब्दोघनाघनः घनोमेघेमूर्तिगुणेत्रिषुमूर्तेनिरंतरे १० अभिमा
नोर्थादिदर्पेज्ञानेप्रणयहिंसयोः इनःसूर्येप्रभौराजामृगांकेक्षत्रियेनृपे ११

परमात्मनि चित्तेधृतौचबुध्दौच परव्यावर्त्तनेपिचेति ९ घातुकमत्तेभः श-
क्रः स्यात् हंति हनहिंसागत्योः उकञ् घातुकश्चासौमत्तेभश्च वर्षुकाब्दः घनाघनः पचाद्यतर्गणवचनेनसाधुः अन्योन्यघट्टतेचैवंधातुकेचघनाघनइतिधरणि
अर्थादिदर्पे ज्ञानेप्रणयहिंसयोः अभिमानः अभिमननं मनज्ञाने मीञ्हिंसायां आदिशब्दात् कुलपशुगुणादिग्रहः १० मेघेमूर्तिगुणेकाठिन्येच घनःस्यात् पुंसिमू
र्तेकठिणेनिरंतरेसांद्रेचत्रिषुस्यात् तदुक्तंधरिण्यां घनंसांद्रंघनंवाद्यंघनोमुस्तोघनोंबुदः घनःकाठिन्यसंघातेविस्तरेलोहमुद्गरेचेति मूर्तौघनइतिसाधुः सूर्येप्रभौइनः
एतिईयतेवा मृगांकेचंद्रेक्षत्रियेनृपेच राजा राजति राजृदीप्तौ कनिन् राजाप्रभौचनृपतौक्षत्रियेरजनीपतौ यक्षेशक्रेचपुंसिस्यादितिमेदिनी ११

नर्तकीदूत्यौ वाणिन्यौस्तः अवश्यंवणति वणशब्दे आवश्यकेतिग्रहिइतिवाणिनिः वाणिनीनर्त्तकीमत्ताविदग्धा वनितास्त्रचेतिमेदिनी स्रवंत्यां वाहिनीस्यात्
अपिशब्दात् सेनायामपिवहति ग्रह्यादित्वाण्णिनिः तदुक्तंविश्वे वाहिनीस्यात्तरंगिण्यांसेनासैन्यप्रभेदयोरिति वज्रतडितौ ह्रादिन्यौस्तः ह्रादतेवश्यं ह्राद
अव्यक्तेशब्दे आवश्यकेणिनिः ह्रस्वेअपिशब्दात् विजातीयप्ररोहेच वंदाया कामिनीस्यात् आवश्यंकाम्यते कमुकांतौ णिनिः पूर्ववत् कामिनीभीरुवंद्योर्भिल्क
कत्वात् योषिन्मात्रेविलासिन्यामपिवंदाकामिन्यामपि १२ त्वग्देहयोरपितनुः तनोतितन्यतेवा तनुविस्तारे उप्रत्ययः तदुक्तंमेदिन्यां तनुःकायेत्वचिस्त्री
त्यान्त्रिषुल्पेविरलेकृशइति अधोजिह्विकासूनास्यात् सवनंसूयतेवा षूमाणिगर्भविमोचने क्तेनत्वं तदुक्तंमेदिन्यां सूनापुत्र्यांवधस्थानेगलकंठिकयोर-

वाणिन्यौनर्त्तकीदूत्यौस्रवंत्यामपिवाहिनी ह्रादिन्यौवज्रतडितौवंदायामपिकामिनी १२ त्वक्देहयोरपितनुःसूनाधोजिह्विका
पिच क्रतुविस्तारयोरस्त्रीवितानंत्रिषुतुच्छके १३ मंदेथकेतनंकृत्येकेतावुपनिमंत्रणे वेदस्तत्वंतपोब्रह्मब्रह्माविप्रःप्रजापतिः १४

पइति क्रतुविस्तारयोः तुच्छकेंचशून्ये मंदे वितानंत्रिषुस्यात् वितननं वितन्यतवा उभयत्रघञ् वितानोयज्ञविस्तारोल्लोचेषुक्रतुकर्मणि वृत्तभेदावसर
ोर्वितानंतुच्छमंदयोरितिविश्वः तदुक्तंचमेदिन्यां वितानोयज्ञउल्लोचेविस्तारंपुंनपुंसकं क्लीबंवृत्तविशेषेस्यात्रिलिंगोमंदतुच्छयोरिति १३ कृत्येकेतौध्वजे
पनिमंत्रणेकेतनंस्यात् कितेर्भावादौल्युट् तदुक्तंहेमे केतनंतुध्वजेकार्येनिमंत्रणनिवासयोरिति वेदः तत्वंचेतन्यं तपःब्रह्मस्यात् बृंहति बृहि वृद्धौ मनि
[ तदुक्तंमेदिन्यां ब्रह्मतत्वंतपोवेदेनद्वयोः पुंसिवेधसि ऋत्विग्योगभिदोर्विप्रेइति विप्रप्रजापत्योः ब्रह्मा १४

उत्साहनेहिंसायांसूचनेचगंधनंस्यात् गंधअर्दने भावादौल्युट् तदुक्तंविश्वे गंधनंसूचनोत्साहहिंसनेषुप्रकाशनइति प्रतीवापः दुग्धादौदध्यादिभावा
र्थंतक्रादिप्रक्षेपः जवनं वेगः आप्यायनंतर्पणं एतदर्थकमासेचनं ल्युट् १५ लांछनेश्मश्रुनिष्ठानावयवेषु व्यंजनंस्यात् निष्ठानंतेमनमित्यर्थः
व्यज्यतेनेनवाल्युट् तदुक्तंमेदिन्यांव्यंजनंतेमनेचिन्हेश्मश्रुण्यवयवेपिचेति लोकवादेपश्वहिपक्षिणांयुद्धेकौलीनंस्यात् कुलीनस्यकर्मभावोवा यु-
वायण् तदुक्तंधरण्यां कौलीनंपशुभिर्युद्धेकुलीनत्वापवादयोरिति १६ निःसरणेबहिर्गमनेवनभेदेउपवनेप्रयोजनेच उद्यानंस्यात् उद्यान्त्यने
नास्मिन् यात्रापणेकरणेधिकरणेल्युट् उद्यानंवनभेदेस्यान्निःसृतौचप्रयोजनइतिधरणिः अवकाशेस्थितौस्थानंस्यात् स्थीयतेत्र अधिकरणेमा

उत्साहनेचहिंसायांसूचनेचापिगंधनं आतंचनंप्रतीवापजवनाप्यायनार्थकम् १५ व्यंजनंलांछनंश्मश्रुनिष्ठानावयवेष्वपि स्या-
त्कौलीनंलोकवादेयुद्धेपश्वहिपक्षिणां १६ स्यादुद्यानंनिःसरणेवनभेदेप्रयोजने अवकाशेस्थितौस्थानंक्रीडादावपिदेवनं १७
उत्थानंपौरुषेतंत्रेसंनिविष्टोद्गमेपिच व्युत्थानंप्रतिरोधेचविरोधाचरणेपिच १८

तदुक्तंमेदिन्यां स्थानंसादृश्येवकाशेस्थितौवृद्धिक्षयेतरेइ-
ति क्रीडादौदेवनंस्यात् दीव्यतेनेनेतिभावादौल्युट्अनादेशः तदुक्तंविश्वे देवनंव्यवहारेस्याज्जिगीषाक्रीडयोरपि अक्षेषुदेवनः प्रोक्तइति १७ पौरुषेतं
त्रेसन्निविष्टोद्गमेउत्थानंस्यात् उत्पूर्वात्स्थाधातोर्ल्युट् तदुक्तंमेदिन्यांउत्थानमुद्यमेतंत्रेपौरुषेपुस्तकेरणे प्रांगणेोद्गमहर्षेषुमलरोगेपिनद्ध्योरितिनंत्रं
कुटुंबकृत्येस्यात्सिद्धांतेचौषधोत्तमे प्रधानेतंतुवायेचशास्त्रभेदेपरिच्छदे श्रुतिशाखांतरेहेताभुभयार्थप्रयोजने इतिविश्वः स्वतंत्रताचउत्थानमितित्रि
कांडशेषः सन्निविष्टस्योद्गमेऊर्ध्वीभवने विरोधाचरणे प्रतिरोधेतिरस्कारे व्युत्थानंअपिशब्दात् स्वातंत्र्यकृत्येपि विरुध्दमुत्थानं प्रादयतिसमासः

मारणाद्यानुव्रज्यांतेषु पदेषु साधनंस्यात् साध्नोतेर्भावादौल्युट् निर्वर्तनं अर्थनिष्पादनं उपकरणं साधनसामग्री तदुक्तंमेदिन्यां साधनंमृतसंस्कारेसैन्येसिद्धौषधेगतौ निर्वर्तनोपायमेढ्रदापनेषुगमेधनेइति अनुव्रज्याअनुगमनमित्यर्थः उपायेपि १९ वैरशुद्धौदानेन्यासार्पणेनिर्यातनंस्यात् यतधातोर्ण्यंतात् भावादौल्युट् निक्षिप्तद्रव्यस्यार्पणइत्यर्थः विपदिभ्रंशेस्थानच्युत्यांपतनेवा व्यसनंस्यात् विपूर्वादस्यतेर्भावादौल्युट् कामजे कोपजे दोषेतदेवस्यात् तदुक्तंमेदिन्यां व्यसनंत्वशुभेसक्तौ पानस्त्रीमृगयादिषु दैवानिष्टफलेपापेविपत्तौनिष्फलोद्यमइति कामजदोषः मृगयाक्षपानादौ इतरस्तुवा क्पारुष्यदंडपारुष्यार्थदूषणादौ अक्षि

मारणेमृतसंस्कारेगतौद्रव्योपपादने निर्वर्तनोपकरणानुव्रज्यासुचसाधनं १९ निर्यातनंवैरशुद्धौदानेन्यासार्पणेपिच व्यसनंविपदिभ्रंशेदोषेकामजकोपजे २० पक्ष्माक्षिलोम्निकिंजल्केतंत्वाद्यंशेप्यणीयसि तिथिभेदेक्षणेपर्ववर्त्मनेत्रच्छदेध्वनि २१

लोम्नि किंजल्के तत्वाद्यंशेसूत्रादिसूक्ष्मांशेअणीयसी पक्ष्मस्यात् नातंच २० पक्ष्यतेनेनवा पक्षपरिग्रहे कर्मकरणादौमनिन् तदुक्तंविश्वे पक्ष्मसूत्रादिसूक्ष्मांशेकिंजल्केनेत्रलोमनीति तिथिभेदेक्षणेउत्सवेपर्व पर्वति पर्व्यतेवा पर्वपूरणे बाहुलकात्कनिन् तदुक्तंधरण्यां पर्वस्यादुत्सवेग्रंथौप्रस्तावेविषुवादिषु दर्शप्रतिपदोः संधौस्यातिथेः पंचकांतरइति पर्वप्रस्तावोत्सवयोर्ग्रंथौविषुवदादिषु दर्शप्रतिपत्संधौच तिथिग्रंथविशेषयोरिति हैमश्च नेत्रच्छदे नेत्राच्छादकचर्मपुटे अध्वनिवर्त्म वर्त्तते नेनास्मिन्वा हृतुवर्त्तिनेमनिन् २१

अकार्यगुह्येअकरणार्हेउपस्थे कौपीनेस्तः कूपपतनमर्हति कौपीनंपापंनत्साधनत्वात्तद्वत् गोप्यकौपीनंस्यादकार्येपिचीरगुह्यप्रदेशयोरितिविश्वः वस्त्रभेदेपित्वात्पुं-
लिंगमपितदाछादनत्वात्वस्त्रमपि संगतोभार्यादिसंबंधे रतेक्रीडायां मैथुनंस्यात् मिथुनमेव मिथुनस्येदंवा तस्येदं संबंधेस्त्रतेयुग्मेराशौमिथुनमिष्यतइतिव्याडिः
परमात्माधीः प्रधानंस्यात् प्रधानंस्यान्महामात्रेप्रकृतौपरमात्मनि प्रज्ञायामपिचक्लीबमेकत्वेतूत्तमइतिमेदिनी प्रकृतिःप्रज्ञा प्रधत्ते प्रधीयतेनेनवाभिन्वा कर्तृकर-
णादौ ल्युट् बुद्धिचिन्हयोःप्रज्ञानंस्यात् प्रज्ञाप्रज्ञायतेनेनवा भावादौल्युट् २२ पुष्पफलयोःप्रसूनंस्यात् प्रसूयते षूञ्अभिषवे नमत्ययोदीर्घश्च प्रसूनंवाच्यवज्जाते-
क्लीबंतुफलपुष्पयोरितिमेदिनी कुलनाशयोः निधनं कुलंवंशइत्यर्थः रोदनाव्हानेक्रंदने क्रदिआव्हानेरोदनेच भावेल्युट् देहप्रमाणयोः वर्ष्म वर्षते दृष्यतेवा वृषुसेचनेम

अकार्यगुह्येकौपीनंमैथुनंसंगतौरते प्रधानंपरमात्माधीःप्रज्ञानंबुद्धिचिन्हयोः २२ प्रसूनंपुष्पफलयोर्निधनंकुलनाशयोः क्रंदनेरोद
नाव्हानेवर्ष्मदेहप्रमाणयोः २३ गृहदेहत्विट्प्रभावाधामान्यथचतुष्पथे सन्निवेशेचसंस्थानंलक्ष्मचिन्हप्रधानयोः २४

निन् तदुक्तंमेदिन्यां वर्ष्मदेहप्रमाणानिस्कंदराकृतिषुस्मृतमिति २३ गृहदेहत्विट्प्रभावाबलेनानिचत्वारिधामशब्दसंज्ञकानि दधाति धीयतेवा डुधाञ् मनिन्
तदुक्तंधरण्यां धामशक्तौप्रभावेचतेजोमंदिरजन्मस्विति धामरश्मौगृहेदेहेस्थानेजन्मप्रभावयोरितिहैमश्च चतुष्पथे सन्निवेशेशृंगाटके अवयवविभागे सं-
स्थानंस्यात् भावादौल्युट् संस्थानंत्वाकृतौस्मृतामित्युक्तत्वात् चिन्हप्रधानयोः लक्ष्म लक्ष्यतेनेनवा लक्ष्यदर्शने कर्मादौमनिन् २४

७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७

संपिधानापवारणे तिरोधानवस्त्रादिपरिवृत्तिर्ता एते उभे आच्छादनवाचके आच्छाद्यतेनेन छदअपवारणे चुरादिः भावादौल्युट् आच्छादनसंपिधानेवस्त्रेपवृत्ति मात्रकइतिधरणिः साधनेनिष्पादने अवाप्तौलाभे तोषणेतुष्टौ आराधनंस्यात् आराध्यतेनेन राधसंसिद्धौ प्राग्वत् २५ चक्राद्याध्यासनांतेषु अधिष्ठानंस्यात् अधिष्ठीयतेनेनवा तिष्ठतेभावादौल्युट् अधिष्ठानंरथस्यांगेप्रभावेध्यासनेपुरइत्यजयः स्वजातिश्रेष्ठेरत्नं रमयति रमक्रिडायां रमेस्त्नचेतिसाधुः रमतेस्मिन्वा तदुक्तंमेदिन्यां रत्नंस्वजातिश्रेष्ठेपिमणावपिनपुंसकमिति सलिलकानने एतेउभेवनेस्तः वन्यतेवनसंभक्तौ वनुयाचनेवा घञिसंज्ञापूर्वकत्वान्नवृध्दिः तदुक्तं रभसे क्लीबंस्यान्नकाननेनीरे निलयेवनमितिवनंप्रस्रवणेगेहे प्रवाहेंभसिकाननइतिहेमश्च २६ विरले सांतरे स्तोके। त्येतलिनं तदुक्तंविश्वे तलिनंविरलेस्तो

आच्छादनेसंपिधानमपवारणमित्युभे आराधनंसाधनेस्यादवाप्तौतोषणेपिच २५ अधिष्ठानंचक्रपुरप्रभावाध्यासनेष्वपि रत्नंस्वजातिश्रेष्ठेपिवनेसलिलकानने २६ तलिनंविरलेस्तोकेवाच्यलिंगंतथोत्तरे समानाःसत्समेकेस्युःपिशुनौखलसूचकौ २७ हीनन्यूनावूनगर्ह्यौवेगिशूरौतरस्विनौ॥ केस्वच्छेपिवाच्यलिंगकमिति तलति तल्यतेवा तलप्रतिष्ठायां मिनन् तथातलिनवदुत्तरे आनांतात् वाच्यलिंगकाःसत्समेके- समानाःस्युः सन् अर्हः समः तुल्यः एकश्च एतेसमानशब्दवाचकास्युरित्यर्थः यथाएकोदरौसमानोदरौ समतिषमवैक्लव्ये चानश् समानसत्समेकेष्वित्यमरत्वात् मानेनसहइतिवा खलसूचकौदुर्जनकर्णजपौ उभौपिशुनौ पिंशति पिशिअवयवे उनन् सचकित् पिशुनंकुंकुमंस्मृतं कपिवक्त्रेचकाकेनासूचकक्रूरयोस्त्रिष्विति मेदिनी पृक्कायांपिशुनास्त्रीस्यादिति २७ ऊनगर्ह्यौअल्पनिंद्यौ हीनन्यूनौस्तः तच्छब्दवाच्यौइत्यर्थः जहाति हीयतेस्मवा आदिकर्मणिकर्मणिवाक्तः नत्वं न्यूनयतिन्यू न्यतेस्मवाऊनपरिहाणे अचूघञ्वा वेगिशूरौतरस्विनौस्तः अस्मोतिविनि

लरोबलंजवोस्यास्ती सस्य मद्कार्येननसौमत्वर्थेइतिमत्वात् अपराद्धअपराधवति अभिग्रस्तेशत्रुणाव्यापद्गतौजातविपत्के अभिपन्नःस्यात् अभिपद्यतेस्म पद्गतौग
त्यर्थेतिक्तः कर्मणिवानिष्ठानत्वं तदुक्तंविश्वे अभिपन्नोपराद्धे ऽभिद्रुतेंग्रस्तेविपद्गतइति ॥ २८ इतिनांताः ॥ भूषणे बर्हे तूणीरे संहतौसमुदाये कलापोवर्तते कला-
माप्नोति आप्लृव्याप्तौ कर्मण्यण् कलाआप्यतेनेनवा घञ् तदुक्तमजये कलापःसंहतौबर्हेकाञ्च्यांभूषणतूणयोरिति परिच्छदेपटमंडपाद्युपकरणे पर्युप्तौसर्वतो
वपने डुवप्बीजसंतानेसलिलस्थितौजलाधारे परीवापः परिवपनं अनेनात्रवा भावादौघञ् उपेतिदीर्घः २९ गोधुक् गोष्ठपतीगोपौ स्यातां गांदोग्धीति क्विप्
तदुक्तंविश्वे गोपोग्रामौघगोष्ठाधिकृतयोर्बल्लवेनृपइति गांपाति पारक्षणे आतइतिकः हरिविष्णू वृषाकपीतत्संज्ञकौस्यातां वृषंधर्मंनकंपयति कपिकिंचिच्चल

अभिपन्नोपराद्धेभिग्रस्तेव्यापद्गतावपि २८॥ इतिनांताः ॥ कलापोभूषणबर्हेतूणीरेसंहतावपि परिच्छेदेपरीवापः पर्युप्तौसलिल-
स्थितौ २९ गोधुग्गोष्ठपतीगोपौहरिविष्णूवृषाकपी बाष्पमूष्माश्रुकशिपुत्वन्नामाच्छादनंद्वयम् ३० तल्पंशय्याट्टदारेषुस्तंबेपिविटपोस्त्रियां॥
मासरूपस्वरूपाभिरूपाट्टु

ने अहिकंप्योर्नलोपश्चेतिसाधुः वृषाद्धर्मादाकंपयतिदुष्टानितिवा यद्वा वर्षतिकामान् वृषुसेचने इगुपधेतिकः
आकंपयतिपापानि इप्रत्ययेनलोपः वृषश्चासौआकपिश्च यद्वावृषाइंद्रोनकंपतेयस्मात् अपादानेड्ः यद्वावृषइंद्रोवृषोधर्मोवाकपिरिव वशोस्य इत्याद्यूह्यं तदुक्तंमेदि
न्यां वृषाकपिःपुमान्कृष्णेशंकरेजातवेदसि ऊष्माश्रुतप्तनेत्रोदकंबाष्पं औणादिकः वायति ओवैशोषणे बातिवा वागत्यादौ अन्नंभोजनंआच्छादनंवस्त्रं एतत्द्वयं कस्य
पुस्यात् कष्टेदुःखंमृगय्वादिः तदुक्तंविश्वे एकोक्त्याकशिपुर्भक्त्याच्छादनेचद्वयोःपृथगिति वक्ष्यमाणभक्त्याभिरितिकशिपुतल्पाभ्यामितिसंबध्यते ३० शय्याट्टदारेषु शय्याट्टालिकास्त्री
षु तल्पस्यात् तल्पतेऽस्मिन् तलप्रतिष्ठायां शाकबाद्यजेनसाधितः स्तंबेयवसादिस्तबके विटपः वेटतिविट्यतेवा विटआक्रोशे शाहेच तदुक्तंविश्वे विटपःपल्लवेषिंगेविस्तारेस्तंबशाखयो
रिति विटाधिपेपि मासरूपस्वरूपाभिरूपाः एतेत्रयः॥

बुधमनोज्ञयोः वर्तते प्राप्तोरूपं गत्यर्थैतिक्तः प्राप्तंरूपंयेनवा स्वयमेवरूपंयस्य अभिलक्ष्यंरूपंअस्य अभिरूपोबुधेरम्ये ३१ अमीभेद्यलिंगाः विशेष्यनिघ्नाः पूर्वभर्शिनः
कूर्मी कमठी वीणाभेदः कच्छपीस्यात् कच्छंपिबति रुपीतिकः जातेरितिङीष् कच्छेनवापाति तदुक्तंविश्वे कच्छपीवल्लकीभेदे ञ कोलकूर्मगदांतरइति ॥ इतिपांताः ॥
रवर्णेराक्षरेरेफःस्यात् पुंसि कुत्सितेरेफः वाच्यलिंगकः रिप्यते रिफतिवा रिफहिंसायां घञ् अचूवा ३२॥ ॥इतिफांताः॥ ॥ अथबवयोःसावर्ण्यात् बांतान्वां
तांश्चाह अंतराभवसत्वे जन्ममरणयोरंतरामध्येभवंसत्वंनरस्थान् प्राणिनि अश्वेदिव्यगायनेगंधर्वः गंधंअर्वति अर्वगतौ कर्मण्यण् कध्वादिः तदुक्तंविश्वे गंधर्वः
पशुभेदेस्यात्पुंस्कोकिलतुरंगयोः अंतराभवसत्वेच गायनेखेचरेपिचेति विश्वावस्वादीनामेवदिव्यगानमित्यर्थः वलयेशंखेकंबुःस्यात् पुंसि कंबति कंबगतौ कुमत्यय

बुधमनोज्ञयोः३१॥ भेद्यलिंगाअमीकूर्मीवीणाभेदश्चकच्छपी॥ ॥इतिपांताः॥ ॥रवर्णेपुंसिरेफःस्यात्कुत्सितेवाच्यलिंगकः॥३२॥
इतिफांताः॥ ॥अंतराभवसत्वेश्वेगंधर्वोदिव्यगायने कंबुर्नावलयेशंखेद्विजिह्वौसर्पसूचकौ ३३ पूर्वोन्यलिंगःप्रागाहपुंबहुत्वेपिपूर्वे
जान्॥इतिबांताः॥कुंभौघटेभमूर्द्धांशौडिंभौतुशिशुबालिशौ ३४

तदुक्तंमेदिन्यां कंबुः शंखेस्त्रियांपुंसिशंबूके वलयेगजइति सर्पसूचकौ द्विजिह्वौ द्वेजि
ह्वेयस्य ३३ पूर्वः पूर्वशब्दः प्राग्वाचकः वाच्यलिंगकः सदेवपूर्वोगौः पूर्वश्रमः यदापूर्वजान्पितामहादीनाहतदापुंबहुत्वेस्यात् पूर्वयति पूर्वनिकेतने पचाद्यच् त-
दुक्तंधरण्यां पूर्वैस्युःपूर्वजाः पूर्वैज्ञालयइति प्राकूपूर्वमग्रतइत्यपि ॥ इतिबांताः॥ घटेभमूर्द्धांशौकलशगजमस्तकभागौ कुंभौ कुंम्रमिंकुत्सितौवाउंभति उंभपूर
णे कर्मण्यण् कुंभःस्यात्कुंभकर्णस्यसुतेवेश्यापतौघते राशिभेदेद्विपांगेचेतिविश्वः शिशुबालिशौडिंभौ डिंभयति डिभिसंघाते पचाद्यच् ३४

स्थूणाजडीभावौ स्तंभौ स्तभ्नाति स्तंभुरोधने पचाद्यच् स्थूणागृहस्तंभइत्यर्थः ब्रह्मत्रिलोचनौ शंभू शंभवति भूसत्तायां मासौ वा डुः तदुक्तं हेमे शंभुः पुंसि महादेवे परमेष्ठिनिचार्हति विष्णौ च कुक्षिभ्रूणार्भकाः गर्भाः स्युः गिरति गृणाति वा गॄ निगरणे गॄ शब्दे वा भन् प्रत्यये गुणः गर्भः कुक्षौ शिशौ दर्भौ भ्रूणे पनसकंटक इति हेमः भ्रूणः गर्भस्थजंतुरित्यर्थः प्रणये विश्वासादौ विस्रंभः विस्रंभणं विस्रभ्यते नेन वा स्रंभु विश्वासे घञ् तदुक्तं विश्वे विस्रंभः केलिकलहे विश्वासे प्रणये वधइति परिचयमार्गनयोरपि प्रणयः ३५ भेर्यां दुंदुभिः स्यात् पुंसि अक्षे दुंदुभिः स्त्रियां दुंदु इति शब्देन उभति उभ पूरणे पररूपं तदुक्तं मेदिन्यां दुंदुभिः पुमान् वरुणे दैत्यभेदे भेर्यां स्त्री च्यक्षाविंदुत्रिकद्वयइति महारजने पुष्पभेदे क्लीबं कुसुंभं स्यात् कुस्यते अनेन वा अंभ् घञ् वा पृषोदरादिः तदुक्तं विश्वे कुसुंभं कुंकुमे

स्तंभौ स्थूणाजडीभावौ शंभू ब्रह्मत्रिलोचनौ कुक्षिभ्रूणार्भका गर्भा विस्रंभः प्रणयेपि च ३५ स्याद्भेर्यां दुंदुभिः पुंसि स्यादक्षे दुंदुभिः स्त्रियाम् स्यान्महारजने क्लीबं कुसुंभं करके पुमान् ३६ क्षत्रियेपि च नाभिर्ना सुरभिर्गवि च स्त्रियाम् सभा संसदि सभ्ये च त्रिष्वध्यक्षेपि वल्लभः ३७ ॥ इति भांताः ॥

महारजने नाकुसुंभं स्याविति करके कमंडले पुमान् स्यात् येन महारजनेन रक्तं वस्त्रं कौसुंभं स्यादित्यर्थः ३६ क्षत्रियेपि नाभिः नास्यात् तदुक्तं मेदिन्यां नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदइति प्राणिप्रतीके शरीरेद्वयो रित्यर्थः सुरभिर्गवि स्त्रियां च सुरभिः स्त्रियां च शब्दे ... सुरभिस्त्रियां तदुक्तं पर्वके च वसंते च तथा जातीफले पुमान् स्वर्णे गंधोत्पले क्लीबं सुगंधिकांतयोस्त्रिष्विति सभा संसदि सभ्ये सभायां साधुः सभ्यः सभासदि सभायां सभ्यः सामाजिके गोष्ठ्यां द्यूतमंदिरयोः सभेति अध्यक्षे वल्लभः त्रिष्वपि वल्लते वल्ल्यते वा वल्ल संवरणे संचरणे च रासिवल्लिइत्यभच् तदुक्तं विश्वे वल्लभो दयिते अध्यक्षे सल्लक्षणतुरंगमइति ३७ ॥ इतिभांताः ॥ ॥

किरणप्रग्रहौरश्मीस्यातां अश्नुतेऽनेन अश्नुव्याप्तौ मिश्रत्ययेअशोरशः तदुक्तंमेदिन्यां रश्मिःपुमान्दीधितौस्यात्सूक्ष्मप्रग्रहयोरपीति अश्वादिबंधनरज्जुःप्रग्रहइत्यर्थः कपिप्लवंगमौ प्लुवेनप्लुत्यागच्छति गमश्चेतिखच्मुम् इच्छामनोभवौकामौ कमनंकम्प्यतेवा कमुकांतौ घञ् तदुक्तंविश्वे कामःस्मरेच्छयोःपुमान् रेतस्यपिनिकामेचकाम्येधिस्यान्नपुंसकमिति शक्त्युद्योगौपराक्रमौ क्रमुपादविक्षेपे घञ् तदुक्तंमेदिन्यां पराक्रमःस्यात्सामर्थ्येविक्रमोद्योगयोरपीति ३८ पुण्यादिसोमपांतेषु षट्सुधर्मशब्दः धरतिध्रियतेवा धृञ्धारणे मन् तदुक्तंमेदिन्यां धर्मोस्त्रीपुण्यआचारेस्वभावोपमयोःक्रतौ अहिंसोपनिषन्न्यायइति तत्र यमस्तु अंतकेपि न्यायेयथा धर्माध्यक्षः स्वभावेयथाक्रूरधर्मा आचारे धर्मशास्त्रोक्ते सोमंपिबति यःउपायपूर्वः सःआरंभः भावे घञ् उपधाउपक्र

किरणप्रग्रहौरश्मीकपिप्लवंगमौ इच्छामनोभवौकामौशौर्योद्योगौपराक्रमौ ३८ धर्माःपुण्ययमन्यायस्वभावाचारसोमपाः उपायपूर्वआरंभउपधाचाप्युपक्रमः ३९ वणिक्पथःपुरंवेदोनिगमोनागरोवणिक् नैगमौद्वौबलेरामोनीलचारुसितेत्रिषु ४०

मःस्यात् उपक्रमणमनेन वाभावेकरणेवाघञ् तदुक्तंविश्वे उपक्रमःस्यादुपधाचिकित्सारंभविक्रमइति अमात्यशीलपरिक्षोपायउपधेत्यर्थः ३९ वणिक्पथः वाणिज्यं पुरं नगरं वेदः आम्नायः एतेनिगमाः निगमवाच्याः निगम्यतेऽत्रानेनवा घञ् तदुक्तंविश्वे निगमोवाणिजेपुर्यांकटेवेदेवणिक्पथइति नागरः वणिक् एतौद्वौ नैगमौ निगमेभवः तत्रभवइत्यण् तदुक्तंविश्वे नैगमस्यादुपनिषद्वणिजोनागरोपिचेति नगरेभवः अण् बले पुंसि नीलचारुसिते त्रिषुरामशब्दः रमतेऽनेनवा रमक्रीडायां ज्वलितिइतिणः घञ्वा तदुक्तंविश्वे रामःपशुविशेषेस्याज्जामदग्न्येहलायुधे राघवेचासितश्वेतमनोज्ञेषुतुवाच्यवदिति बलोबलदेवइत्यर्थः

शब्दादिपूर्वः ग्रामः वृंदे ग्रसते ग्रस्यतेवा ग्रसु अदने ग्रसेराच्चेतिसाधुः तदुक्तंविश्वे ग्रामः स्वरेसंवसथे वृंदेशब्दादिपूर्वकइति यथाशब्दग्रामः क्रांतौविक्रमणे विक्रमः घञ् तदुक्तंधरण्यां विक्रमःशक्तिसंपत्तिः क्रांतिमात्रंचविक्रमइति स्तोत्रेअध्वरे वृंदेस्तोमः स्तूयतेनेनवा ष्टुञ्स्तुतौ अत्तिस्तुइतिमः कुटिलेअलसेजिम्हः जहाति हीयतेवा जहातेःसन्वदालोपश्चेतिमः ४१ उष्णोघर्मः अपिशब्दात्स्वेदांभसिच चेष्टालंकारेहावेभ्रांतौच विभ्रमः केचित् अमूलंपद्यार्द्धमिति गुल्मशब्दः गुडप्रकृतिकःमगंतः रुक्सेनास्तु रुक्स्त्रीहास्य्यः स्तंबः कुशादिगुच्छः तदुक्तंमेदिन्यां गुल्मःसेनाघट्टभिदोः सैन्यरक्षणकृत्भिदोः स्तंबइति जामिःजसुअदनेइण्दीर्घश्च स्वसृकुलस्त्रियोः स्वसाभगिनीइत्यर्थः तदुक्तंरभसे प्रहरेसंयमेयामो जामिस्वसृकुलस्त्रियोरिति यामिः कुलस्त्रीस्वस्रोः स्त्रीतिकोशांत

शब्दादिपूर्वेवृंदेपिग्रामःक्रांतौचविक्रमः स्तोमस्तोत्रेध्वरेवृंदे जिम्हस्तुकुटिलेलसे ४१ उष्णोपिघर्मश्चेष्टालंकारेभ्रांतौचविभ्रमः ॥
गुल्मारुक्स्तंबसेनाश्चजामिःस्वसृकुलस्त्रियोः ४२ क्षितिक्षांत्योःक्षमायुक्तेक्षमंशक्तेहितेत्रिषु त्रिषुश्यामौहरित्कृष्णौश्यामास्याच्छारिवानिशा ४३

तराच्च अंतस्थादिरपि यामापणे क्षितिक्षांत्योः भूमितितिक्षयोः क्षमावर्त्तते क्षमणं क्षमूष्सहने षित्वादङ् क्षमतेक्षम्यतेवा क्षमूसहने अच्पच्वा क्षमातितिक्षापृथ्वीच योग्येशक्तेहितेक्षममितिधरणिः क्षमंशक्तेहितेत्रिषु ४२ हरित्कृष्णौश्यामौ श्यायते श्यैङ्गतौ मक् तदुक्तंमेदिन्यां श्यामोवटेप्रयागस्य वारिदेवृध्ददारकेपिकेच कृष्णहरितोःपुंसिस्यात्तद्वतित्रिषु मरीचेसिंधुलवणेक्लीबंस्त्रीशारिवौषधौ अप्रसूतांगनायांचप्रियंगावपिचोच्यते यमुनायांत्रियामायां कृष्णात्रिवृत्कौषधौ नीलिकायामिति शारिवाशतावरीनिशाच श्यामास्यात् पुच्छादिकेत्वंतेषुषट्सु ललामंस्यात् ललमति अमगत्यादौ कर्मण्यण् तदुक्तंरुद्रे प्रधानध्वजश्रृंगेषुपुंड्रवालधिलक्ष्मसु भूषावाजिप्रभावेषु ललामंस्याल्ललामचेति बाहुलकात्तुमिनांतोपि अश्वादीनां ललाटचित्रंपुंड्रमित्यर्थः अश्वस्यैवभूषासामीप्यात् प्रधानमेवप्राधान्यं ४३

अध्यात्मंसूक्ष्मंस्यात् सूच्यतं सूचयेत्तव्ये सूचेःस्मन् तदुक्तंमेदिन्यां सूक्ष्मंस्यात्कैतवे:ध्यात्मेपुंस्यणौविभुचाल्पकइति आत्मन्यधिकृतलिंगदेह इत्यर्थः आद्येआ
दौप्रधानेमुख्येप्रथमःस्यात् आमांतंप्रिचिति प्रथते प्रथविस्तारे प्रथेरमन् तदुक्तंविश्वे प्रथमस्तु भवेदादौ प्रस्थानेपिचवाच्यवदिति वल्गुमतीपे सुंदरविपरीतेवा
मौस्यात्सा वमतिवम्य तेवा ज्वलितिइतिणः तुवम्उगिरणे तत्रउक्तं वामस्त्रीमतीपिच द्रविणेचालिसुंदरे पयोधरेहरे कामेविधाहामातुयोपिति वामीशृगालीवड
वाना सभीकरभीषुचेतिविश्वात् न्यूनकुत्सितेहीअधमो अवति अवरक्षणादौ अवद्यावमाधम्योतिसाधुः यद्वानधम्यते धमतिवा धमध्यानेसौत्रःपद्वअन्त
वा ४४ जीर्णअतिपरिणामं परिभुक्तंभुक्तोज्झितइत्यर्थः यातयामं द्वयं यातःगतः यामउपभोगकालोयस्य तदुक्तंहेमे यातयामोन्नवज्जीर्णपरिभुक्तोज्झिते-

सूक्ष्मामध्यात्ममप्याद्येप्रधानेप्रथमस्त्रिषु वामौवल्गुप्रतीपौद्वावधमोन्यूनकुत्सितौ ४४ जीर्णंचपरिभुक्तंचयातयाममिदं
द्वयं॥ इतिमांताः॥ ॥तुरंगगरुडौताक्ष्यौंनिलयापचयौक्षयौ ४५ श्वशुर्यौदेवरस्यालौभ्रातृव्यौभ्रातृजद्विषौ॥ ४५

पिच्वेति॥ ॥इतिमांताः॥ ॥तुरगगरुडौ ताक्ष्यौं ताक्ष्यस्यापत्यंकृष्यण् तदुक्तंहेमे ताक्ष्यस्त्स्यंदनेवाहेगरुडे गरुडाग्रजे अ
श्वकर्णीक्षयेतरौस्यादिति निलयापचयौगृहह्रासौ क्षयौ क्षयणं क्षयतेत्रवा क्षिक्षये क्षिनिवासगत्योः एषच्च उक्तंक्षयोरोगांतरेवेश्मकल्पांतोपचव-
येषुचेतिदेवरश्यालौ श्वशुर्यौ श्वशुरस्यापत्यं राजश्वशुराद्यत् भ्रातृजद्विषौ भ्रातृव्यौ भ्रातुरपत्यं भ्रातुर्व्यच्चव्यन्सपत्ने इतिसाधुत्वं ४५

रसदहेंद्रौ ध्वनदंबुदशक्रौ पर्जन्यौ पर्जन्यइतिसाधुः तदुक्तंविश्वे पर्जन्योमेघशद्वेपिध्वनदंबुदशक्रयोरिति पिपर्ति पर्षतिच पृपालनपूरणयोः पृषुकेचनेस्या मिवैश्ययोः अर्यः अर्यतेऋगतौ अर्यः स्वामीतिसाधुः पुष्यनक्षत्रेकलियुगे तिष्यः त्वेषति त्विषदीप्तौ अघ्न्यादिः तिष्यः कलियुगे ऋक्षेतिष्याधात्रीचकथ्यत इतिधरणिः अवसरेप्रस्तावे क्रमे पर्यायः पर्ययणं इणगतौ परावनुपेतिघञ् तदुक्तंविश्वे पर्यायस्तुप्रकारेस्यान्निर्माणेवसरेक्रमइति ४६ अधीनादिहेत्वंतेषुसप्तसु प्रत्ययः प्रत्ययशद्वःस्यात् प्रत्ययनंप्रतीयतेनेनवा प्रत्येतीवा इणगतौएरच् अच्वा पचादित्वात् तदुक्तंविश्वे प्रत्ययःशपथेरंध्रेविश्वासाचारहेतुषु प्रथितत्वेचसज्ञादावधी नज्ञानयोरपीति सचरंध्रेछिद्रे शद्वेच शद्वेयथा अंशकरेत्यंशःकइत्यत्रकन्प्रत्ययः दीर्घद्वेषानुतापयोः अनुशयः अनुशयनमेनेनवा शीङ्स्वप्ने एरच्घोवा भवे

पर्जन्यौरसदहेंद्रौस्यादर्यःस्वामिवैश्ययोः तिष्यःपुष्येकलियुगेपर्यायोवसरेक्रमे ४६ प्रत्ययोधीनशपथज्ञानविश्वासहेतुषु रं-
ध्रेशद्वेथानुशयोदीर्घद्वेषानुतापयोः ४७ स्थूलोच्चयस्त्वसाकल्येनागानांमध्यमेगते समयाः शपथाचारकालसिद्धांतसंविदः ४८

दनुशयोद्वेषेपश्चात्तापानुबंधयोरितिविश्वः ४७ असाकल्ये कार्त्स्न्ये नागानांगजानांमध्यमेगतेशीघ्रमंदाभावगमने स्थूलोच्चयः उच्चयनं चिञ्चयने एरच् स्थूलस्योच्चयः तदुक्तंविश्वे स्थूलोच्चयस्त्वसाकल्येगंडोपलकरंडयोरिति शपथादयः पंच समयाः स्युः समीयतेत्रानेनवासमेतिवा इणगतौ इगतौवा एरच् घोवा पचाद्यच्वा तदुक्तंहैमे समयः शपथेभाषासंपदोः कालसंविदोः सिद्धांताचारसंकेतनियमावसरेषुच क्रियाकारेचनिर्देशेचेति संवित्भाषेत्यर्थः ॥

४८ ७ ७ ७ ७ ७ ७ ७ ७

व्यसनानिधूतादीनि अशुभंदैवंविशेषणं विपत् इतित्रयः अनयाः ननयनंअनेनवा अत्रवा णीञ्प्रापणे एरच् यद्वा अयात् शुभावहविधेरन्यः तदुक्तंवि श्वे अनयस्त्वविपद्दैवाशुभयोर्व्यसनेपिचेति अतिक्रमेउल्लंघने कृच्छ्रे दोषे दंडे अत्ययः अत्ययनमनेनवा इण्गतौएरच् अत्ययोतिक्रमेकृच्छ्रेप्युत्सातेनाश दंडयोरितिधरणिः आपदि युद्धायत्योः संपरायः संपरायणं इणगतौ एरच् संपरायःसमीकेस्यादापदुत्तरकालयोरितिकोशांतरात् ४९ आयतिःउत्तरकालः श्वशुरे पूज्यः अर्हार्थेयत् पूज्योश्वशुरपूजार्हाविति धरणिः पश्चात् अवस्थायिसेनापृष्ठभागस्थितं बलं समवायश्च समूहः एतौसन्नायौ सन्नयनं सन्नीयतेवा सन्नयनेवा णीञ्प्रापणे एरच् ५० संघाते संनिवेशे संस्त्यायः स्त्यायतेर्घञ् युक् तदुक्तं संस्त्यायः संनिवेशेचसंघातेविस्तृतावपि अमीवस्तंभादयः त्रयः प्र

व्यसनान्यशुभंदैवंविपदित्यनयाःस्त्रियः अत्ययोतिक्रमेकृच्छ्रेदोषेदंडाप्यथापदि ४९ युद्धायत्योःसंपरायः पूज्यस्तुश्वशुरेपिच ॥
पश्चादवस्थायिबलंसमवायश्चसन्नयौ ५० संघातेसन्निवेशेचसंस्त्यायः प्रणयास्त्वमी विस्रंभयाच्ञाप्रेमाणोविरोधेपिसमुच्छ्रयः
५१ विषयोयस्ययोज्ञातस्तत्रशब्दादिकेष्वपि निर्यासेपिकषायोस्त्रीसभायांचप्रतिश्रयः ५२ णयाः प्रणयनं णीञ् एरच् तदुक्तंकोशांतरे प्रणयः

प्रसरेप्रेम्णिविरोधेपि समुच्छ्रयः एरच् वैरोन्नत्योः समुच्छ्रयइतिरभसः ५१ यस्यमत्स्यादेर्योजलादिर्ज्ञातोनित्यसेवितस्तस्यतत्रशब्दादिकेष्वपिविषयः अपिशब्दात् स्पर्शरूपरसगंधादीनांग्रहणं विसिनोति षिञ्बंधने एरच् तदुक्तंविश्वे विषयोगोचरेदेशेतथाजनपदेपिच प्रबंधाद्यस्ययोज्ञातस्तत्ररूपादिकेपुमान् निर्यासेपि कषायः कषतिकंठं कषहिंसायांबाहुलकादायः अस्त्री तदुक्तंविश्वे कषायोरसभेदेस्यादंगरागेविलेपने निर्यासेचकषायोथसुरभौलोहितेन्यवदिति निर्यासः क्वाथइत्यर्थे सभायांप्रतिश्रयः प्रतिश्रयणमत्रश्रिञ्सेवायांएरच् पोवासेचकषायोथसुरभौलोहितेन्यवदिति ५२

भूम्नि बाहुल्ये अंतगमने मृत्यौ च प्रायः स्यात् इण् एरच् तत्रेत्यं प्रायेण बाहुल्येन घटोदृश्यते प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोरिति विश्वात् अंतोनाशोगम्यते ऽनेन दैन्येकृतो क्रुधि मन्युः मन्यते मनज्ञाने मृगय्वादिः रहस्योपस्थयो गुंत्यं गूहनं गुत्यतेवा गुहसंवरणे क्यप् तदुक्तं विश्वे गुह्यंरहस्युपस्थेच गुह्यः कमठदंभयोरिति शपथ तथ्ययोः सत्यं सतिसाधुः यत् सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वतीति विश्वात् ५३ बले प्रभावे च सामर्थ्ये तेजोविशेषे च विर्यं वीर्यते ऽनेन वा वीरकांतौ अचो यत् तत्र साधुरिति वा तदुक्तं विश्वे वीर्यं प्रभावे शुक्रे च तेजः सामर्थ्ययोरपि भव्ये सत्त्वे गुणाश्रये पृथिव्यादौ द्रव्यं स्यात् द्रोरिदं द्रव्यं द्रव्यं च भव्ये तदुक्तं विश्वे द्रव्यं स्याद्द्रविणे भव्ये पृथिव्यादौ च पित्तले भेषजे च विलेपे च जतुद्रुमविशेषयोरिति स्थाने गृहे ऽग्नौ धिष्ण्यं धिष्ण्यते धृष्णोतिवा धिषशब्दे निपातनात् धिष्ण्यं-

**प्रायो भूम्न्यंतगमने मन्युर्दैन्येकृतौ क्रुधि रहस्योपस्थयोर्गुह्यं सत्यं शपथतथ्ययोः ५३ वीर्यं बले प्रभावे च द्रव्यं भव्ये गुणाश्रये धिष्ण्यं स्थाने गृहे ऽग्नौ भाग्यं कर्म शुभाशुभम् ५४ कशेरुहेम्नोर्गांगेयं विशल्या दंतिकापि च वृषाकपायी श्रीगौर्यो**

स्थानाभिसत्ययस्त्रक शुभाशुभं कर्म भाग्यं भज्यते ऽनेन भज सेवायां ण्यत् भाग्यं शुभात्मक वियोस्यात् शुभे कर्मणीति भंनसंत्रमित्यर्थः ५४ कशेरुहेम्नोः गांगेयं गंगायाः अपत्यं शुभ्रादित्वाढक् तदुक्तं विश्वे गांगेयः स्यात् सुभान्भीष्मेक्लीबं स्वर्णकशेरुणोः कशेरुतुस्तनाम्नाख्यातं दंतिका विशल्या स्यात् विगतशल्याय स्याः विगतं शल्यं यस्य वा तदुक्तं हेमे विशल्याग्निशिखा दंतागुडूची त्रिपुटा स्रुचेति श्रीगौर्योः वृषाकपायी वृषाकपेः स्त्री वृषाकपायी श्री गौरी च शि जिवंतिका स्रुचेति ५ ५ ५ ५ ५ ५ ५ ५

नामशोभयोः अभिख्याता अभिख्यानं ख्याप्रख्याने कथ आतश्चेत्यङ् तदुक्तंकोशांतरे अभिख्यात्वभिधानेस्याच्छोभायांचयशस्यपि ५५ आरंभादयोनवशब्दाः क्रियाशब्दवाच्या कृञ् शश्चेतिसाधुः स्त्वारंभे सर्वाः क्रियामंत्रमूलानृपाणां निष्कृतौप्रायश्चित्तेयथा महापातकिनांपुंसांप्राणांतिकक्रियास्मृता शिक्षायांयथा क्रियावत्सूपहिताप्रसीदति पूजनेयथा देवक्रियापरस्तपस्वी संप्रधारणंविचारः तत्रयथा क्रियांविनाकोहिजानातिकृत्यं उपायेयथा सप्तसामादिकाः क्रियाः कर्मणियथा निष्क्रियस्यकुतःस्वर्गं चेष्टायांयथा मृतःकिंनिष्क्रियोयतः चिकित्सायांयथा पूर्वज्वरेसमुत्पन्ने क्रियापूर्वज्वरातुरा क्रियाकर्मणिचेष्टायांकरणेसंप्रधारणेइतिविश्वः सूर्यप्रियादिचतुष्कं छाया शब्दः छ्यति छोछेदने आदतत्वाण्णः तदुक्तंविश्वे छायास्यादातपाभावेप्रतिबिंबार्कयोषितोरि

रभिख्यानामशोभयोः ५५ आरंभोनिष्कृतिः शिक्षापूजनंसंप्रधारणम् उपायःकर्मचेष्टाचचिकित्साचनवक्रियाः ५६ छायासूर्यप्रियाकांतिःप्रतिबिंबमनातपः कक्ष्याप्रकोष्ठेहर्म्यादेःकांच्यांमध्येभबंधने ५७ कृत्याक्रियादेवतयोस्त्रिषुभेद्येधनादिभिः

ति तदुक्तंचमेदिन्यां छायासूर्यप्रियाकांतिःप्रतिमायामर्कयोषित्यनातपे उत्कोचेपालनेकांतौशोभायांचतमस्यपीति हर्म्यादेःराजगृहादेः प्रकोष्ठे कांच्यांमध्येभबंधने कक्ष्या स्यात् कक्षेभवा शरीरावयववाचित्वात् तदुक्तंहेमे कक्ष्याग्रहप्रकोष्ठेस्यात्साहश्येयोगकांचिषु बृहतिकेगजाड्योश्चेति ५७ क्रियादेवतयोः कृत्या कृत्यते कृतीछेदने कृदुपेतिक्यप् कर्मणिदेवतयोरित्यर्थः धनादिभिः भेद्ये कृत्याशब्दः आदिशब्दात् स्त्र्यादीनांग्रहणं भेत्तुंयोग्यः भेद्यः पराभूतपुरुषादिस्तत्रेत्यर्थः त्रिष्वपि

जनवादे निंदितवाँदे अन्येभ्यान् मनजनेतियत् जनानांवादः इत्यादि अन्यामातृवयस्यास्याज्जन्याजनवरप्रिया जननीजनयित्रोश्चजन्यं निर्वादयुद्धयोरिति-
धरणिः अंत्ये धर्मेच जघन्यः जघनेभवः शरीरेतियत् यद्वाकुटिलंहन्यते तदुक्तंविश्वे जघन्यंचरमेशिश्नेजघन्यंगर्हिते ऽन्यवदिति ५८ गर्ह्याहीनौ वक्तव्यो
वचनार्हौ वचपरिभाषणे तदुक्तंमेदिन्यां वक्तव्यंकुत्सिते हीनेवचनार्हेचकांच्यवत् सज्जनिरामयो बद्धसन्नाहनीरोगौ कल्यो कलाम्कसाधुः तत्रसाधुः-
तदुक्तंमेदिन्यां कल्यंप्रभातेक्लीबंस्यात्कल्यो वाक्श्रुतिवर्जिते सज्जेनीरोगदक्षेषुकल्याणावचनेपिच उपायवचनेपिस्यादिति आत्मवान् ज्ञानी अर्थात्प्र
नपेतः सचार्थ्यः स्यात् अर्थेसाधुः तत्रसाधुरितियत् अर्थादनपेतः धर्मेतियत् तदुक्तं अर्थ्योविज्ञार्थशालिनोरित्यजयात् अर्थ्यंशिलाजत्वन्यर्थ्योबु

जन्यंस्याज्जनवादेपिजघन्योंत्यधमेपिच ५८ गर्ह्याहीनौचवक्तव्यौकल्यौसज्जनिरामयौ आत्मवाननपेतोर्थादर्थ्योपुण्यंतु
चार्वपि ५९ रूप्यंप्रशस्तरूपेपिवदान्योवल्गुवागपि न्याय्येपिमध्यः सौम्यंतुसुंदरेसोमदेवते ६०

धेन्याख्येतुवाच्यवदितिविश्वाच्च
चार्वपि संदरमपि पुण्यंस्यात् पुनाति पुञ् पवने यद्वापुणतेरिगुपेतिकेयत् पुण्यस्त्रीपुमनोज्ञेस्यात्क्लीबंसुकृतधर्मयोरितिविश्वः ५९ प्रशस्तरूपेपि अहतंप्र
शस्तंवारूपमस्यास्तिगच रूप्यंस्यात् रूपादाहतेतियप् तदुक्तंविश्वे रूप्यंस्यादाहतस्वर्णरजतेरजतेपिच रम्येप्रशस्तरूपेतुवाच्यवदिति वल्गुवागपि वदा
न्यः वदति वदेरान्याः वदान्योदातृवाग्मिनोरित्यजयः न्याय्येउचिते मध्यः मांख्यायति ध्यैचिंतायां आतोनुपेतिकः यद्वामतह्यते महपूजायां तदुक्तंन्याय्या
वलग्नयोर्मध्यमंतरेचाधमेत्रिषुविनिग्भसान् सुंदरे सोमदैवते सौम्यं सोमोदेवतस्य हविरित्यर्थः तदुक्तं सौम्योबुधेमनोज्ञेस्यादनुभेसोमदैवतइतिविश्वात् सो
मइवसोमः ६०

इतियांताः निवहावसरो संदप्रस्तावोवारो वारयति व्रियतेवा वृञ्वरणे अच्घञ्वा तदुक्तंविश्वे वारः सूर्यादिदिवसेवारोवसरवृंदयोः कुब्जवृक्षेहरेवारोवारंम- द्यस्यभाजनइति प्रस्तराध्वरौ दर्भशय्याकृत् संस्तरो संस्तीर्यते स्तृञ् आच्छादने ऋदोरप् प्रस्तरः दर्भमुष्टिरपीत्यर्थः तदुक्तंविश्वे संस्तरप्रस्तरावेतौप्रस्तराध्व- रयोरपि मणिपाषाणयोरपीति गीष्पति पित्राद्यो गुरू गृणाति गृशब्दे गृणाति अवबोधयति आद्यशब्देन वेदशास्त्राध्यापकश्च तदुक्तंकोशांतरे गुरु- स्त्रिलिंग्यांमहतिदुर्जरलघुनोरपि पुमान्निषेकादिकरेपित्रादौस्करमंत्रिणि युगसंशयो द्वापरो द्वाभ्यांपरः द्वौपरावत्रवा पृषोदरादिः ६१ भेदसादृश्ये प्रकारः भावेघञ् तदुक्तं प्रकारस्तुल्यभेदयोः भेदस्तुब्राह्मणादीनां सादृश्यं मुखचंद्रयोरित्यर्थः इंगिताकृति आकारो आकरणं घञ् आकृतिरवयवसंस्था

निवहावसरौवारौसंस्तरौप्रस्तराध्वरौ गुरूगीष्पतिपित्राद्यौद्वापरौयुगसंशयौ ६१ प्रकारौभेदसादृश्ये आकाराविंगिताकृती
किंशारूसस्यशूकेषुमरूधन्वधराधरौ ६२अद्रयोद्रुमशैलार्काःस्त्रीस्तनाब्दौपयोधरौ ध्वांतारिदानवावृत्राबलिहस्तांशवःकराः६३

नमित्यर्थः सस्यशूकेषुकिंशारुः किंचित्कुत्सितंश्रृणाति श्रृहिंसायां किंजरेत्युण् तदुक्तंमेदिन्यां किंशारुर्नासस्यशूकेवि शिखेकंकपक्षिणोति धन्वधराधरौ निर्जलदेशपर्वतौ मरुः म्रियंतेजंतवोस्मिन् मृङ्प्राणत्यागे उप्रत्ययः मरुर्नागिरिधन्वनोरित्युक्तत्वात् मरुस्थलीप्रदेशसंबंधत्वात् मरुशब्दवाचकपर्वतइत्यर्थः ६२ द्रुमशैलार्काः अद्रिवाचकास्युः अत्ति अद्यतेवा अदभक्षणे अदिशदीतिक्रिन् स्त्रीस्तनाब्दौ स्त्रीकुचमेघौ पयोधरौ धरति धृञ् धारणे पयसोधरः तदुक्तं मेदिन्यां पयोधरः कोशकारेनारिकेलेस्तनेपिच कशेरुमेघयोःपुंसीति ध्वांतारिदानवाः वृत्राः वृणोति वृञ्वरणे बाहलकात् क्रन् तदुक्तंहैमे वृत्रोरिपोघने ध्वां- तेशैलभेदेचदानवेइति बलिहस्तांशवः कराः कीर्यंते कृविक्षेपे ऋदोरप् करोतिवाप्चाद्यच् बलीराजभाग्यभागइत्यर्थः ६३

भंगनारीरुक्बाणाः प्रदराः प्रदीर्यते प्रदरणं अनेनवा दृविदारणे ऋदोरप् प्रदरोरोगभेदेस्याद्दिदारेशरभंगयोरित्युक्तत्वात् नारीरुक्स्त्रीरोगभेदइत्यर्थः कचा अपि अस्राःस्युः अस्यते असुक्षेपणे बाहुलकाद्रः अस्रः कोणेकचेपुंसिक्लीबमश्रुणिशोणितइतिकोशांतराच्च अजातशृंगः गौः कालेपिश्मश्रु स्थानसमयेपि अश्मश्रुः नाचएतौतूबरौतुइतिसौत्रोधातुः बाहुलकादरः दीर्घश्च कालसंबंधः उभयत्र तूबरोऽश्मश्रुपुरुषेप्रौढाशृंगारकेपिच पुरुषेव्यंजनत्यक्ते स्यात्कषायरसेपिचेतिमेदिनी ६४ स्वर्णेपि राः राति सुखं रायतेवा रादाने रातेर्डैः टिलोपः राःपुंसिस्वर्णवित्तयोरितिकोशांतराच्च पर्यंकपरीवारयोः परिकरः परिकीर्यते कृ विक्षेपे अप् यद्वा परिक्रियतेनेन पुंसीतिघः नडुक्तंविश्वे भवेत्परिकरोव्रातेपर्यंकपरिवारयोः प्रगाढगात्रिकाबंधेविवेकारंभयोरपीति यत्नारंभोपरिकरावि-

प्रदराभंगनारीरुक्बाणाअस्राःकचाअपि अजातशृंगोगौःकालेप्यश्मश्रुर्नाचतूबरौ ६४ स्वर्णेपिराःपरिकरःपर्यंकपरिवारयोः
मुक्ताशुद्धौचतारःस्यात्सारोवायौसतुत्रिषु ६५ कर्बुरेथप्रतिज्ञाजिसंविदापत्सुसंगरः वेदभेदेगुप्तवादेमंत्रोमित्रोरवावपि ६६

तित्रिकांडशेषः मुक्ताशुद्धौ तारः तारयति ण्यंतादच् यद्वा तार्यतेअनेनवा करणेघञ् तारोमुक्तादिसंशुद्धौतरणेशुद्धमौक्तिके तारंचरजतेत्युच्चस्वरेप्यभिवदी-रितमितिविश्वः वायौ शारः शृणाति शॄहिंसायां शृवायुवर्णइतियञ् शारःस्याच्छबलेवाच्यलिंगेपुंसिसमीरणेइति सतुत्रिषुकर्बुरेपिशबलवर्णेपि ६५ प्रतिज्ञाजिसंपदापत्सु संगरः संगरणं गॄशब्देअप् संगीर्यतेवानेन पुंसीतिघः संगरोयुधिचापदीत्युक्तत्वात् क्रियाकारेविषेचांगीकारेक्लीबंशमीफलइतिमेदिनी कारः वेदभेदे गुप्तवादेच मंत्रः मंत्र्यतेमंत्रणंवा मंत्रिगुप्तभाषणे घञ् नडुक्तंविश्वे मंत्रोवेदविशेषेस्याद्देवादीनांचसाधने गुप्तवादेपिचपुमानिति गुप्तवादस्तु प्रच्छन्नकर्तव्यावधारणइत्यर्थः रवावपि मित्रः मेद्यति ञिमिदास्नेहने क्त्रः अपिशब्दात्सख्योमित्रं मित्रंसुहृदिनद्वयोरित्युक्तत्वात् ६६

मखेषुयूपखंडेपि स्वरुः स्वरति स्वर्यते सृशब्दोपतापयोः शृस्वृइत्युः स्वरुर्वज्रध्वनौबाणेयूपखंडेपिचस्वरुः यूप खंडेयूपेतक्ष्यमाणेप्रथमपतितेश कले गुल्येपि उपस्करः अवस्करः अबोधःकीर्यते कृविक्षेपे अप् अवस्करोपिवर्चस्केगुल्यइत्युक्तत्वात् स्तूर्यरवे गजेंद्राणांचगर्जिते आडंबरः आडंब्यते डबिक्षे पे घञ् आडंबराणि आनद्धानिकः आडंबयन्तिवा बाहुलकादरन् तदुक्तंविश्वे आडंबरः समारंभेगजगर्जिततूर्ययोरिति ६७ अभियोगे अभिगम्यआक्रम णे चौर्ये चौरस्यकर्मतत्र सन्नहने कवचादिधारणे अभिहारः अभिहरणं हरतेर्घञ् जंगमे जंगमविशेषपरिजने खड्गकोशे परिच्छदे उपकरणे परीवा रः परिवार्यतेनेन घञ् उपेनिदीर्घः परिवारः परिजनेखड्गकोशेपरिच्छदेइत्युक्तत्वात् ६८ विटपी दर्भः दर्भमुष्टिः विष्टरः विस्तीर्यते स्तृञ् आ-

मखेषुयूपखंडेपिस्वरुर्गुल्येप्यवस्करः आडंबरस्तूर्यरवेगजेंद्राणांचगर्जिते ६७ अभिहारोभियोगेचचौर्येसंनहनेपिच
स्याज्जंगमेपरिवारःखड्गकोशेपरिच्छदे ६८ विष्टरोविटपीदर्भमुष्टिःपीठाद्यमासनम् द्वारिद्वास्थेप्रतीहारःप्रतीहार्यप्यनं
तरे ६९ विपुलेनकुलेविष्णौबभ्रुर्नापिंगलेत्रिषु

-च्छादने वृक्षासनेतिसाधुः दर्भमुष्टिस्तु पंचाशताभवेद्ब्रह्मातदर्धेनतुविष्टरइत्युक्तत्वा त् पीठाद्यं आसनंचविष्टरः आद्यग्रहणात् कृष्णाजिनादि पीठंतु काष्ठादिमयमासनं द्वारि द्वास्थे द्वारपाले प्रतीहारः प्रतिह्रियतेननावा अंतरो तेप्रतीहारे प्रतीहारीत्यपिशब्दः सत्रपुल्यस्तावपिस्त्रियां उपसर्गस्येतिदीर्घः गौरादिङीष् तदुक्तंमेदिन्या प्रतिहरोद्वारिद्वास्थेद्वास्थितायांचयो- षितीति ६९ विपुले नकुले विशल्ये विष्णौचबभ्रुः ना पिंगलेत्रिषुस्यात् बिभर्ति भरतिवा कुः जहवा कुक्षश्चेतिसाधुः तदुक्तंबलस्वामिना बभ्रुर्नानकु लेविष्णौविपुलेपिंगलेत्रिषिति बभ्रुर्विशालेनकुलेकृशानावजितेमुनौ शालिनीपिंगलेचेतिविश्वः

बले स्थिरांशे वृक्षादीनां कठोरभागे न्याय्ये. सारः सरति सः स्थिरे वरे श्रेष्ठे क्लीबं त्रिषु स्यात् तदुक्तं विश्वे सारो बले स्थिरांशे च मज्जि पुंसि जले धने न्याय्ये क्लीबं त्रिषु वर इ-
ति ७० द्यूतकारे पणे च दुरोदरः द्यूते दुरोदरं दुःखं उदरमस्य दुरोदरो द्यूतकारे द्यूताक्षपणयोः पुमानिति. पणस्तु ग्लह इत्यर्थः महारण्ये दुर्गपथे कांतारं पुंनपुंसकं स्यात् कांतं
मनोज्ञं मृच्छति इयर्ति ऋधातोः कर्मण्यण् तदुक्तं मेदिन्यां कांतारो स्त्री महारण्ये बिले दुर्गमवर्त्मनि पुंसि स्यादिक्षुभेदे चेति ७१ अन्यशुभद्वेषे परसंपत्त्यसहने मत्सरः पुंसि
स्यात् माद्यति परवृद्धे मदी हर्षे कृभूमदीति साधुः तद्वत्कृपणयोः तद्वति कृपणे च त्रिषु मत्सरः अभिधेयलिंगकः तदुक्तं कोशांतरे मत्सरो मक्षिकायां स्यान्मा
त्सर्यक्रोधयोः पुमान् असह्यपरसंपत्तौ कृपणे चाभिधेयवदिति देवात् वृते अभीष्टे वरः पुंसि श्रेष्ठे त्रिषु मनाक्प्रिये ईषदिष्टे क्लीबं व्रियते वरणे वा वृञ् वरणे ग्रहर-

सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ७० दुरोदरो द्यूतकारे पणे द्यूते दुरोदरं महारण्ये दुर्गपथे कांतारं पुंनपुंसकम् ७१ मत्सरोऽन्यशुभ-
द्वेषे तद्वत्कृपणयोस्त्रिषु देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ७२ वंशांकुरे करीरोऽस्त्री तरुभेदे घटे च ना नाच मूजघने हस्तसूत्रे प्रतिसरो
ऽस्त्रियाम् ७३

इत्यप् यद्वा वृणोति वरति वा पचाद्यच् वरो जामातरि वृतौ देवतादेरभीप्सिते षिंगे पुंसि त्रिषु श्रेष्ठे कुंकुमे तु नपुंसकं वरी प्रोक्ता शतावर्यां वरा च स्यात्फलत्रिके
मनागिष्टे वरं क्लीबं केचिदाहुस्तदव्ययमिति मेदिनीकारः ७२ वंशांकुरे वंशस्य वेणोरंकुरे करीरः कृणाति किरति कीर्यते वा कॄ हिंसायां कॄ विक्षेपे वा ईरन् करिणि ईर्यति ईर गतौ
कर्मण्यण् तदुक्तं विश्वे वंशांकुरे करीरोऽस्त्री स्त्री घटश्च दयोः पुमान करीरा चीरिकायां च दंतमूले च दंतिनामिति अस्त्री तरुभेदे घटे च ना चमूजघने सेनायश्चाद्भागे प्रतिसरः ना प्र
तिसरति अच् प्रतिस्त्रियते नेन वा यः हस्तसूत्रे अस्त्रियां तदुक्तं मेदिन्यां भवेत्प्रतिसरो मंत्रभेदे माल्ये च कंकणे व्रणशुद्धौ च मूः पृष्ठे पुंसि न स्त्री तु मंडले आरक्षे करसूत्रे च नियोज्ये त्व
न्यलिंगक इति हस्तसूत्रं तु मंगलार्थं मंत्राभिमंत्रितकरबंधनसूत्रमित्यर्थः ७३

यमादि षेकांतेषु त्रयोदशस्वर्थेषु हरिशब्दः स्यात् हरति हृञ् अचइः हरिर्वातार्कचंद्रेंद्रयमोपेंद्रमरीचिषु सिंहाश्वकपिभेकाहिशुकवल्लोकांतरेषुच हरिर्वाच्यावदाख्यातोहरिरल
पिलवर्णयोरितिविश्वात् कपिले कपिलवर्णे हरिशब्दः त्रिलिंगः ७४ कर्परांशेपि शर्करास्यात् शृणाति शीर्यतेवा शॄहिंसायां श्रः करंन् सिकतास्वपि तदुक्तंमेदि
न्यां शर्करारवंडविकृनावूपलाकर्परांशयोः शर्करान्वितदेशेपिरुग्भेदेशकलेपिचेति यापने याप्यतेनेनतत्र गातो यात्रावर्तते यानं अनयावा याप्रापणे त्रन्प्रत्ययः तदु
क्तंविश्वे यात्रातुयापनोपायेगतोदेवार्चनोत्सवइति भूवाक्सुराः प्रकृ इरा वर्तते प्रकृरामद्यमित्यर्थः निद्राप्रमीलयोः तंद्रीस्यात् कृञ्जेतिसाधुः अत्यंतश्रमादिनाप्रमो
हमायाप्रमीलेत्यर्थः तंद्रेत्यपि ७५ उपमातृक्षित्यामलक्यास्वपि धात्रीस्यात् तदुक्तंमेदिन्यां धात्रीजनन्यामलकीवसुमत्युपमातृषुइति धीयते धेट्पाने-

यमानिलेंद्रचंद्रार्कविष्णुसिंहांशुवाजिषु शुकाहिकपिभेकेषुहरिर्नाकपिलेत्रिषु ७४ शर्कराकर्परांशेपियात्रास्याद्यापनेगतौ इराभूवा
क्सुरास्वप्सुस्यात्तंद्रीनिद्राप्रमीलयोः ७५ धात्रीस्यादुपमातापिक्षितिरप्यामलक्यपि क्षुद्राव्यंगानटीवेश्यासरघाकंटकारिका ७६ त्रिषु
क्रूरेधमेल्पेपिक्षुद्रंमात्रापरिच्छदे अल्पेचपरिमाणेसामात्रंकार्त्स्न्येवधारणे ७७

धः कर्मणीतिसाधुः दधातिवा डुधाञ् सर्वधातुइतिसाधुः
व्यंगादिकंटकारिकांतेषुषत्सु व्यंगा अंगहीना नटीनर्त्तनशीला सरघा मधुमक्षिका कंटकाबृहती तदुक्तंहैमे क्षुद्राव्याघ्रीनटीव्यंगाबृहतीसरघासुच चांगेरेकायांहिंस्रा
यांमक्षिकामात्रवेश्ययोरिति क्षुद्यतेक्षुदिरसंचूर्णनेरक् ७६ क्रूरेअधमेअल्पेक्षुद्रंस्यात्त्रिषु तदुक्तंहैमे क्षुद्राहस्वेद्रेकृपणेनृशंसेऽल्पनृशंसयोरिति परिच्छदे अल्पेचपरिमाणे
मात्रा स्त्रियां मीयतेअनयावा मामाने माङ्मानेवात्रन् तदुक्तंहैमे मात्राकर्णविभूषायांवित्तेमाने परिच्छदे अक्षरावयवेस्वल्पेक्लीबंकार्त्स्न्येवधारणइति कार्त्स्न्ये अवधारणे मात्रं
स्यात् परिच्छदेयथा महामात्रः अल्पेयथा शाकमात्रा परिमाणेयथा किंहस्तिमात्रोंकुशः कार्त्स्न्येयथा जीवमात्रंनहिंस्यात् अवधारणेतुपयोमात्रंभुक्तं ७७

आलेख्याश्चर्ययोः चित्रंस्यात् चिनोति चीयतेवा अनिच्चीतिक्रः तदुक्तंहैमे चित्रारवुपर्णीगोडुंबासभद्रादंनिकासच मायायांसर्पनक्षत्रनदीभेदेषुचस्त्रियां –
तिलकालेख्ययोः क्लीबंकर्बुराद्भुतयोरपीति श्रोणिभार्ययोः कलत्रंस्यात् कलंत्रायते त्रैङ्पालने सुपीतिकः कडति कड्यतेवा कडशासने बाहुलकाद्त्रन् श्रो
णिः कटिरित्यर्थः तदुक्तंरभसे दुर्गस्थानेनृपादीनांकलत्रंश्रोणिभार्ययोरितिरभसः योग्यभाजनयोः पात्रंस्यात पाति पायतेवा पीयतेनेनवा पारक्षणे पापाने
वाष्ट्रन् तदुक्तंविश्वे पात्रंतुभाजनेयोग्येपात्रंतीरद्वयांतरे पात्रंस्रुवादौपर्णेचराजमंत्रिणिचेष्यतइति दानपात्रंश्रोत्रियइत्यर्थः वाहनपक्षयोः पत्रं पत्यंत्यनेन
दाम्नीशसेतिसाधुः तदुक्तंविश्वे पत्रंतुवाहनेपर्णेपक्षेचशरपक्षिणोरिति ७८ निदेशग्रंथयोः आज्ञाव्याकरणादिग्रंथयोः शास्त्रंस्यात् शासेः ष्ट्रन् शिष्य

आलेख्याश्चर्ययोश्चित्रंकलत्रंश्रोणिभार्ययोः योग्यभाजनयोःपात्रंपत्रंवाहनपक्षयोः ७८ निदेशग्रंथयोःशास्त्रंशस्त्रमा
युधलोहयोः स्याज्जटांशकयोर्नेत्रंक्षेत्रंपत्नीशरीरयोः ७९ मुखाग्रेक्रोडहलयोःपोत्रंगोत्रंतुनाम्निच

तेनेन इत्याद्यूह्यं आयुधलो
हयोः शस्त्रंस्यात् शस्यतेनेन शसुहिंसायां शासन् तदुक्तंहैमे शस्त्रंलोहास्त्रयोः क्लीबंछुरिकायांचयोषितीति जटांशकयोः वृक्षमूल वस्त्रभेदयोः नेत्रं –
नयति नीयतेऽनेनवा नीयते णीञ्प्रापणे दाम्नीतिप्रत्ययः तदुक्तंविश्वे नेत्रंनेतरिभेद्यवदिति नेत्रंमथिगुणेवस्त्रभेदेमूलेद्रुमस्यच रथेचक्षाषिनद्यांचने
त्रीनद्यांचयोषितीतिरभसः पत्नीशरीरयोः क्षेत्रं क्षयति क्षियते क्षीयतेनेनवा क्षिनिवासादौष्ट्रन् इत्याद्यूह्यं क्षेत्रंशरीरेकेदारेसिद्धस्थानकलत्रयोरितिविश्वमेदिन्यौ–
७९ क्रोडहलयोः मुखाग्रे पोत्रं पूयतेनेन पूञ्पवने हलसूकरयोःपुवः तदुक्तंविश्वे पोत्रंवस्त्रेमुखाग्रेचसूकरस्यहलस्यचेतिक्रोडसूकरइत्यर्थः नाम्निच गोत्रं गांत्रा
यते आतोनुपेतिकः तदुक्तंमेदिन्यां गोत्राभूगव्ययोर्गोत्रः शैलेगोत्रंकुलाख्ययोः संभावनीयेबोधेचकाननक्षेत्रवर्त्मस्विति

आच्छादनादिबनांतेषुसत्रं तदुक्तंविश्वे सत्रंयज्ञेसदादानाच्छादनारण्यकैतवइति सीदंत्यत्रानेन षद्लु विशरणे अपिशब्दात्कैतवे ८० विषयेरूपसादौ — काये अजिरं अजंत्यत्रानेनवा अजगतौ अजिरेतिसाधुः तदुक्तंहेमे अजिरंदर्दुरेकायेविषयेप्रांगणेनिलेइति अपिशब्दात्चत्वरमपि व्योम्न्याकाशे वाससिवस्त्रे अं वरं अंबंते अव्यतेवा अविशब्दे बाहुलकादरः तदुक्तंविश्वे अंबरंवाससिव्योम्निकार्पासेचसुगंधकेइति ८१ राष्ट्रेपि चक्रंस्यात् क्रियतेनेन घञर्थेकः द्वित्वप्रकरणे रूआदीनामितिद्वित्वं तदुक्तंहेमे चक्रः काकेपुमान्क्लीबंव्रजेसैन्यरथांगयोः राष्ट्रेदंभांतरेकुंभकारोपकरणास्त्रयोरिति अपिनाजलावर्त्तेपि मोसे अक्षरं नक्षरति क्ष रसंचलने पचाद्यच् अपिवर्णब्रह्मणोः तदुक्तंहेमे अक्षरंस्यादपवर्गेपरमब्रह्मवर्णयोः गगनेधर्मतपसोरंबरेमूलकारणइति क्षीरं अप्सु चकारात्दुग्धे तदुक्तंमे

**सत्रमाच्छादनेयज्ञेसदादानेवनेपिच ८० अजिरंविषयेकायेप्यंबरंव्योम्निवाससि चक्रंराष्ट्रेप्यक्षरंतुमोक्षेपिक्षीरमप्सुच ८१ स्वर्णेपिभूरिचंद्रौद्वौद्वारमात्रेपिगोपुरं गुहादंभौगव्हरेद्वेरहोंतिकमुपव्हरे ८२**

दिन्यां क्षीरंदुग्धेजलेपिचेति द्वौभूरिचंद्रौशब्दौ स्वर्णेपि स्तः भवति भूयतेवा भूसत्तायां भूमासोवा अदिशदीतिक्रिन् तदुक्तंमेदिन्यां भूरिर्निवासदेवेचहरेच्चपरमेष्ठिनि नपुंसकंसुवर्णेचप्राज्येस्याद्वाच्यलिंगकइति स्व र्णभूरिरूपभेदान्नपुंसकमित्यर्थः चंदति चदिआल्हादने स्फायितंचीतिरक् तदुक्तंमेदिन्यां चंद्रःकर्पूरकांपिल्लसुधांशुस्वर्णवारिषिति द्वारमात्रेतु गोपुरं पुरं ति पुरअग्रगमने गवांपुरं तदुक्तंमेदिन्यां गोपुरंद्वारिपूर्द्वारिकैवर्त्तीमुस्तकेपिचेति द्वारमात्रेपिगोपुरमितिकेचित् गव्हरे गुहादंभौ स्यातां गात्यते गाहू विलोडने गव्हरस्तुगुहादंभनिकुं जगहनेष्वपीतिविश्वः रहः विजनं अंतिकं समीपं द्वेउपव्हरसंज्ञे उपव्हरंत्यत्रव्हृकौटिल्येपुंसीतियः उपव्हरंसमीपेस्यादेकांतेचनपुंसकमि तिहैमः ८२

पुरः अधिकं उपरि एतानिअग्रशब्दवाच्यानिस्युः अग्यते अगतिवा अगकुटिलायांगतौ औणादिकः प्रत्ययः तदुक्तंमेदिन्यां अग्रंपुरस्तादुपरिपरिमाणेपलस्य च आलंबनेसमूहेचप्रांतेनचस्यान्नपुंसकं अधिकेचप्रधानेचप्रथमेचाभिधेयवदिति अधिकंयथा साग्रंशतं उपरियथा वृक्षाग्रं पुरंमंदिरंचेतिद्वयं अगारे नगरेऽच-स्यात् पिपर्ति पृपालनपूरणयोः मूलविभुजादिः उत्वंरपरः यद्वा पुरति पुरअग्रगमने इगुपधेतिकः तदुक्तंभरतेवयां पुरंशरीरमित्याहुर्गेहोपरिगृहं पुरमिति पुरं शरीरे नगरे गृहे पाटलिपुत्रयोरितिहेमेच मंदतेऽत्र मदिरकत्यादौ इषिमदीकिरच् तदुक्तंमेदिन्यां मंदिरंनगरेक्लीबमिति विषयेजनपदे उपद्रवेमरणादौ राष्ट्रः स्यात् अस्त्री राजति राजृदीप्तौ औणादिकः प्रत्ययः ८३ श्वभ्रे गर्ते भयेच दरः स्यात् दृभये विदारणे वा अप् अस्त्रियां दरोऽस्त्रीसाध्वसेगर्तेकंदरेतुद-

पुरोधिकसुपर्यग्राण्यगारेनगरेपुरम् मंदिरंचाथराष्ट्रोऽस्त्रीविषयेस्यादुपद्रवे ८३ दरोऽस्त्रियांभये
श्वभ्रेवज्रोऽस्त्रीहीरकेपवौ तंत्रंप्रधानेसिद्धांतसूत्रवायेपरिच्छदे ८४ औशीरश्चामरदंडेथौशीरंशयनासने

रीस्मृता दरावयंमनागर्थइतिविश्वः हीरके मणिभेदे पवौ भिदुरे वज्रः वजति वजगतौ रन्प्रत्ययः वज्रंस्यादालकेधान्येक्लीबंयोगांतरेपुमानितिविश्वः प्रधाने स्वतंत्रे सि-द्धांते तांत्रिके सूत्रवाये परिच्छदे तंत्रंस्यात् तन्यते तनुविस्तारे तन्त्रिकुटुंबधारणेभावेकर्मणिवा यज् इत्यादृत्वं तदुक्तंमेदिन्यां तंत्रंकुटुंबकृत्येस्यात्सिद्धांतेचौ-षधोत्तमे प्रधानेतंतुवायेचशास्त्रभेदेपरिच्छदे श्रुतिशाखांतरेहेतावुभयार्थप्रयोजने इतिवत्प्रान्नायां चेति ८४ चामरे चमरस्यायं दंडे औशीरं उश्यते वश कांतौ वशेः किलित् इति ईरन् ततः प्रज्ञाद्यण् औशीरंचामरेदंडे औशीरंस्वाधपीठयोरित्यजयः औशीरे शयनासनेरक्तः शयनासनयोः समुदितयोरौशीरसंज्ञेतिस्वामी
रुभूतिस्तुपृथगेवव्याख्यातवान्

करिहस्ताग्रे वाद्यभांडमुखे जले व्योम्नि खड्गफले खड्गमध्ये पद्मे तीर्थौषधिविशेषयोश्च पुष्करंस्यात् पुष्णाति पुष्यतेऽनेनवा पुषपुष्टौ पुषःकिदितिकरन् त-
दुक्तंहैमे पुष्करंपंकजेव्योम्निवयःकरिकराग्रयोः ओषधिद्वीपविहगतीर्थरागोरगांतरे पुष्करंतुर्यवक्त्रेचकांडेखड्गफलेपिचेति ८५ अवकाशादित्रयोदशशब्देषु अं
तरशब्दःस्यात् अंतरानिरादाने आतोनुपेतिकः अवकाशादिषुयथा अंतरेहिमं अवधौमासांतरेदेयं परिधानेपरिधानीये अतर्धौपर्वतांतरितोरविः भेदेयदंत
रंसर्षपशैलराजयोः तादर्थ्येंखदंतरेणाभ्रपामेतत् छिद्रेपरांतरेप्रहर्तव्यं आत्मीयेअयमत्यंतरोमम विनार्थेअंतरेणापुरुषकारमिति बहिःअंतरेचंडालगृहाः अ
वसरेअंतरंगःसेवकः मध्येआनयोरंतरेजातःपर्वतः अंतरात्मनिरदृशोंःतरेज्योतीरूपः चकारात्सादृश्येहकारस्यघकारांतरतमइत्यर्थाः ८६ सुस्ते पिवरंस्यात्

**पुष्करंकरिहस्ताग्रेवाद्यभांडमुखेजले "व्योम्निखड्गफलेपद्मेतीर्थौषधिविशेषयोः" ८५ अंतरमवकाशावधिपरिधानांतर्द्धि**
**भेदतादर्थ्ये छिद्रात्मीयविनाबहिरवसरमध्येंतरात्मनिच ८६ सुस्तेपिपिठरंराजकशेरुण्यपिनागरम् शार्वरंत्वंधतमसेघा**
**तुकेभेद्यलिंगकम् ८७** पेठति पिठ्यतेवां पिठहिंसासंक्लेशयोः बाहुलकादरः गुणाभावश्च अपिनामंथाने तदुक्तंमेदिन्यां पिठरस्थाल्यांनाक्लीबंमु-
स्तमंथानदंडयोरिति राजकशेरुणिजलजतृणमूले नागरं नगरेभवं तत्रभवइत्यण् तदुक्तंमेदिन्यां नागरंमुस्तकेशुण्ठ्याविदग्धेनगरोद्भवइति राजकशेरुः कंदवि-
शेषइतिकेचित् नागरमोथाइत्यार्वाचीनाः अंधतमसेगाढांधकारे शार्वरं शर्वर्यांभवं तत्रभवइत्यण् धातुके भेद्यलिंगकं स्वामीतु घातुकेभेद्यलिंगकमिस
पिपाठः घातुकश्चासाविभश्चेत्यलिंगकंपुल्लिंगमितिव्याख्यत् ८७ ५ ५ ५ ५

अरुणे सिते पीतेच गौरः गौरतिगवतेवामनोन्नइत्याद्युत्यं गुरीवुद्यमने गुड्गतौवा तदुक्तंमेदिन्यां गौरःपीतेरुणेश्वेतेविशुद्धेचाभिधेयवत् नाश्वेतसर्षपे-
चंद्रेनद्वयोः पद्मकेसरइति व्रणकार्यरुष्करः अरुः करोति दिवाविभेतिटः अपिशब्दात् भल्लातकफलग्रहणं तदुक्तंमेदिन्यां अरुष्करोव्रणकृतिः त्रिषुभल्ला
तकेपुमानितिमेदिनी कठिनेपि जठरः जायतेअस्मिन् जनेररः पृषोदरादि. तदुक्तंहेमे जठरः कुक्षिवद्धयोरिति उदरेपि अधस्तादपि अधरः नधर
ति धृञ्धरणे पचाद्यच् ओष्ठहीनयोरपि अधरस्तुपुमानोष्ठेहीनेनूर्ध्वेपिवाच्यवत् ८८ अनाकुलेपिस्वस्थेपि एकाग्रः एकमेकत्ववाअग्रमस्य तदुक्तंर-
भसे एकाग्रमन्यलिंगस्यादेकतानेष्वनाकुलइति अपिशब्दात्एकतानेपि व्यासक्तेद्विधाव्यापृते आकुलेनेककार्यव्यग्रचित्ते व्यग्रः विविधंविविधेवाअ

गौरोरुणेसितेपीतेव्रणकार्यरुष्करः जठरःकठिनेपि स्यादधस्तादपिचाधरः ८८ अनाकुलेपिचैकाग्रो व्यग्रोव्यासक्तआकुले
उपर्युदीच्यश्रेष्ठेष्वप्युत्तरःस्यादनुत्तरः ८९ एषांविपर्ययेश्रेष्ठदूरानात्मोत्तमाःपराः

ग्रमस्य उपर्युदीच्यश्रेष्ठेषुत्रिषु उत्तरः वर्तनेउत्तरति तृप्लव
नतरणयोः पचाद्यच् उपरी इतउत्तरं उदीच्येयथा रत्नानांशतरोहारः तदुक्तंमेदिन्यां उत्तरं प्रतिवाक्येस्यादूर्ध्वोदीच्योत्तमे ऽन्यवत् उत्तरस्तुविराटस्यत-
नयेदिशिचोत्तरइति एषां उपर्यादीनां विपर्ययेवैपरीत्येश्रेष्ठेचानुत्तरः श्रेष्ठेतुनउत्तरः श्रेष्ठोयस्मादितिविग्रहः ८९ दूरानात्मोत्तमाः एतेत्रयः-
पराः परशब्दवाच्याः पिपर्तिपूर्यतेअनेनवा अप्योवा तदुक्तंमेदिन्यां परःश्रेष्ठारिदूरान्योत्तरेक्लीबंतु केवलइति ॥

स्वादुप्रियोतु मधुरो मधुमाधुर्यरानिकः अस्त्यत्रेतिवा उषशुषिइतिमत्वर्थेरः तदुक्तंविश्वे मधुरंमधुवत्स्यादुप्रियेषुमधुरान्यवदिति कठिननिर्दयौ क्रूरौ कृंतति कृतीच्छेदने रप्रत्यये क्रूआदेशः तदुक्तंविश्वे क्रूररक्तकठिनेघोरेनृशंसेत्वभिधेयवदिति १० दातृमहतोः उदारः उदुच्चैरासमंतादृच्छति पचाद्यच् तदुक्तंरभसे उदारोदातृमहतोर्दक्षिणेचाभिधेयवत् अन्यनीचयोः इतरः इनाकामेनतरति स्वमस्वातंत्र्येईर्तेईरतिवा ईरगतौकपनेच ईरप्रेरणेवा पचाद्यच् मंदस्वच्छंदयोः स्वैरः उद्दामशक्रयोः शक्रा शोभते शक्रदीप्तौ स्फायितंचीतिरक् शक्रंस्यादत्रकेक्लीबउद्दामशक्रयोस्त्रिषुइतिमेदिनी ११ इतिरांताः चूड शिखा किरीटंमुकुटं संयताकेशाश्चएतेत्रयःमौलयः मूलस्यादूरभवः सुतंगमादिभ्यइञ् तदुक्तंरभसे किरीटेमौलिरक्लीबेचूडासंयतकेश

स्वादुप्रियौतुमधुरौक्रूरौकठिननिर्दयौ १० उदारोदातृमहतोरितरस्त्वन्यनीचयोः मंदःस्वच्छंदयोःस्वैरःशक्रमुद्दामशक्रयोः ११
इतिरांताः चूडाकिरीटंकेशाश्चसंयतामौलयस्त्रयः द्रुमप्रभेदमातंगकांडपुष्पाणिपीलवः १२ कृतांतानेहसोःकालश्चतुर्थेपियुगे
कलिः

योरिति मौलिःकिरीटेधम्मिल्लेचूडायामनपुंसकं अशोकपादपेपुंसीतिमेदिनीकारश्च द्रुमप्रभेदमातंगकांडपुष्पाणि एतेचत्वारःशब्दाः पीलुवाच्याः स्युः पीलति पीलप्रतिष्टंभे मृगयुवत्कुः तदुक्तंमेदिन्यां पीलुःपुमान्प्रसूतेस्यात्परमाणौमतंगजे अस्थिखंडेचतालस्यकांडपादपभेदयोरिति मातंगकांडौजगवाणावित्यर्थः १२ कृतांतानेहसोः कालस्यात् कालयति कलशब्दसंख्यानयोः कलप्रेरणे ण्यंतादच् इत्याधूत्यं कृतांतः यमः अनेहः समयः तदुक्तं मेदिन्यां कालोमृत्यौमहाकालेसमयेयमकृष्णयोरिति चतुर्थेपि युगे कलिः कलयति कल्यतेवा कलगतौसंख्यानेच ण्यंतादचेइःअदंतत्वादुपधावृद्धिर्न तदुक्तंविश्वे कलिःस्त्रीकलिकायांनाशुराजिकलहेयुगेइति

कुरंगेपि कमलः कमुकांतौपिंड्याचेकलच् कमलंसलिलेताम्रेजलजेव्योम्निभेषजे मृगभेदेतुकमलः इत्युक्तः० प्रावारेपि कंबलः कंकुसितंशिरोंबुवावलने बल संवरणे संचरणेच मुलविभुजादिः तदुक्तंरभसे कंवलोनागराजेस्यात्सास्नाप्रावारयोरपि क्रमावप्युत्तरासंगेसलिलेतुनपुंसकं १३ करोपहारयोः राजदेयो पचारयोः पुंसि बलिः स्यात् प्राण्यंगजेत्वक्संकोचे स्त्रियां बलिः बलत्ते वल्यतेवा बलप्राणने बलसंवरणे औणादिकइः तदुक्तं रभसे वलिर्दैत्यप्र भेदेचकरचामरदंडयोः उपहारेपुमान्स्त्रीतुजरयाश्लथचर्मणि ग्रहदारुप्रभेदेचजठरावयवेपिचेति स्थौल्य सामर्थ्यसैन्येषु बलं बल्यते बलतिवा यञ् अन्वा इत्याद्यूत्यं तदुक्तंमेदिन्यां बलंवन्दरसेरूपेस्थामनिस्थौल्यसैन्ययोः बलोहलायुधेदैत्यभेदेवलिनिघायसइति ना काकसीरिणोः १४ वात्या

**स्यात्कुरंगेपिकमलः प्रावारेपिचकंबलः १३ करोपहारयोःपुंसिवलिःप्राण्यंगजेस्त्रियाम् स्थौल्यसामर्थ्यसैन्येषुबलंनाकाकसी रिणोः १४ वातुलःपुंसिवात्यायामपिवातासहेत्रिषु भेद्यालिंगः शठेव्यालः पुंसिश्वापदसर्पयोः १५ मलोस्त्रीपापविट्किट्टान्यस्त्री शूलंरुगायुधम्**

यां वातसमूहे वातुलाः वातंसहते वातासहे वातमासहते वातासमूहेचेत्यकः चादसहने प्राणिनिवातूलस्त्रिषु वातूलोवातुलोपि स्यादितिद्विरूपकोशात्हस्वमध्योपि शठे वाच्यलिंगः व्यालः स्यात् विरुद्धंआसमंतादलति अडतिवा अलभूषणादौ अडउद्यमेवा डलयोरेकत्वं पचाद्यच् तदुक्तंरभसे व्यालोदुष्टगजेसर्पेखलेश्वापदसिंहयोरिति १५ पापविट्किट्टानि मलवाच्यानिस्युः मलोऽस्त्री मलयति मलतस्कंनौ मलधारणेच इत्याद्यूत्यं विट् वि ष्ठा किट्टं तैलाद्यधोभागस्थं मलोस्त्रीपापविट्किट्टकृपणेत्वभिधेयवदितिकत्वात् वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविड्नखाः श्लेष्माश्रुदूषिकास्वेदोद्वादशैतेनृणांमलाः रुग् आयुधं शस्त्रं स्यात् शूलति शूलसंजायां इगुपेतिकः तदुक्तंविश्वे शूलोऽस्त्रीरोगआयुधे मृत्युकेतनयोगेपिति

शंकावपिलोहकीलकेपि कीलः द्वयोः स्त्रियांतुकीला कीलति कील्यतेऽनेन अनेनवा कीलबंधे कः यन्त्रवा तदुक्तंधरण्यां कीलः कफोणिकाघातेस्थाणौचज्वल नार्चिषिइति कीलोग्नितेजसीप्रोक्तःकफोणिस्तंभयोस्तथानिहेराश्च आश्रयांशकोणोवा अंकउत्संगः चिन्हंवा पंक्तिःश्रेणिःएतेषुपदेषु पालिः पालयति पाल्य तेवा पालरक्षणे अच्इः पालिः कर्णलतायांस्यात्प्रदेशेपंक्तिचिन्हयोरित्यजयः सश्मश्रुयुवतीपाल्यिः पंक्तिः कर्णलतापिचेतित्रिकांडशेषः पालिः कर्णे लताग्रे श्रीपक्तावंकप्रभेदयोः छात्रादिदेयस्त्रीपालीयूकासश्मश्रुयोषितोरितिमेदिनी १६ शिल्पगीतवाद्यादिनैपुण्ये कालभेदे त्रिंशत्काष्ठात्मकेकाले कला कलय- ति कलतेवा कलशब्दसंख्यानयोः पचाद्यच् इत्याद्यूत्यं तदुक्तंमेदिन्यां कलास्यान्मूलरेवृद्धौशिल्पादावंशमात्रके षोडशांशेचचंद्रस्यकलनाकालमानयोरि

शंकावपिद्वयोःकीलः पालिस्त्र्यश्र्यंकपंक्तिषुः १६ कलाशिल्पेकालभेदेप्यालिःसख्यावलीअपि अब्ध्यंबुविकृतौवेलाकालमर्याद योरपि १७ बहुलाः कृत्तिकागावोबहुलोग्नौशितौत्रिषु

ति सख्यावली आलीस्यात् आअलति अल्यतेवा अनयावा अवभूषणादौ स र्वधातुभ्यइन् कृदिकारादितिङीष् तदुक्तंमेदिन्यां स्यादालिर्विशदाशये त्रिषुस्त्रियांवयस्यायांसेतौपंक्तौचकीर्तिइ ते अब्ध्यंबुविकृतौ इंदुदर्शनात्सिंधुज लरक्षौ कालमर्यादयोरपि वेलास्यात् वेल्यति वेल्गतौ पचाद्यच् इत्याद्यूत्यं तदुक्तंविश्वप्रकाशे वेलाकालेचजलधेस्तीरनीरविकारयोः अक्लिष्टमरणेरोगसी म्निवाच्चिबुधस्त्रियां भोजनेपाश्वराणांस्यादिति १७ कृत्तिकागावः बहुलाख्याःस्युः बहुलाति आतोनुपसर्गेकः अग्नौबहुलःपुंसि शितौकृष्णावर्णे त्रिषु- तदुक्तंमेदिन्यां बहुलानीलिकायांस्यादेलायांगविधीयोधाति कृत्तिकायांस्त्रियांभूम्निविहायसिनपुंसकं पुंस्यग्नौकृष्णपक्षेचवाच्यवत्प्राज्यकृष्णयोरिति

विलासक्रिययोः लीला लीडः श्लेषणे बाहुलकाल्लोगुणाभावश्च लीलां विंदुक्तेऽविलासः सर्वेलास्यगारभावप्रभवक्रियास्विति शर्कराऽपिच उपलास्यात् सिकताः स्वं
इवि कृतिवा उपलाति लादाने आतश्चोपसर्गे डंशांमृप्रति ओशंभीलापलाति पलगतोऽच् शर्कराशकलेज्ञेयासितोपलरजस्यपीत्यजः उपलः प्रस्तरेरत्ने
शर्करायांस्मृतोपला १८ शोणिते अंभसिच कीलालं कीलंप्रतिबंधनमल्यतेवार्यते अलभूषणादौ कर्मणियज् कीलंप्रतिबंधंअलतिवा कर्मण्यण्–
आद्येप्रथमे शिफाभयोः वृक्षजटानद्यांविशेषयोः मूलं मूलति मूलप्रतिष्ठायां मूलरोहणेवा इगुपधेतिकः समूहःजालं स्यात् आनायः शणसूत्रादिकृतोरज्जु
संघः गवाक्षक्षारकावपि घातायनास्फुटकलीकावपि एतेत्रयोपि जालवाचकाः स्युः जलति जलघातने ज्वलादित्वाण्णः इत्यादुक्तं जालंगवाक्षआनायेसार

लीलाविलासक्रिययोरुपलाशर्करापिच १८ शोणितेऽम्भसिकीलालंमूलमाद्येशिफाभयोः जालंसमूहआनायगवाक्षक्षारकाव
पि १९ शीलस्वभावेसद्वृत्तेसस्येहेतुकृतेफलम् छदिर्नेत्ररुजोःक्लीबेसमूहेपटलंनना २००

केदंभवृंदयोः जालोनीपद्रुमेइतिविश्वः

१९ स्वभावेप्रकृतौ सद्वृत्तौ सच्चरिते शीलं शील्यतेनेन शीलसमाधौ घञ्घोवा सस्येधान्ये फलंस्यात् हेतुकृतेहेतुनाघटितेपि यथाद्रव्यस्यफलंयत्नः त
दुक्तंविश्वे फलंहेतुकृतेस्यात्फलकेव्युष्टिलाभयोः जातीफलेपिककोलेसस्यबाणाग्रयोरपीति छदिर्नेत्ररुजोः गृहाच्छादननेत्ररोगयोः समूहेच क्लीबं–
पटलंस्यात् नना समूहेल्वयः पटंविस्तारंलाति लाआदाने आतोनुपेतिकः अथपटलंपिटकेच परिच्छदे छदिर्दृग्रोगतिलके क्लीबंवृंदेपुनर्ननेति:
मेदिनी २००

अधः स्वरूपयोः रसातलवक्षस्तलयोः अस्त्रीसलंस्यात् तलति तलप्रतिशयां पचाद्यच् तदुक्तंमेदिन्यां तलंस्वरूपेनूर्ध्वेस्त्रीक्लीबंज्याघातवारणे काननेकार्य बीजेचपुंसितालमहीरुहे चपेटेचत्सरौतंत्रीघातेसव्येनपाणिनेति तलंस्वरूपाधरयोः स्वड्गमुष्टिचपेटयोरिति आमिषे पलं पलति पलगतौ पचाद्यच् तदुक्तं रुद्रे पलमून्मानमांसयोरिति और्वानलेपि पातालं पततिअत्रवा पत्लृगतौ चडिपतिश्यामालच् इत्याद्युत्वं पातालंनागलोकेस्याद्विवरेवाडवानलइत्यू० वस्त्रे चैलं अधमेत्रिषु चैलः स्त्रियां चैला चेलमित्यपि चिलति चिल्यतेवा चिलवसने अच् यत्रवा पचेतु चेलतिचेल्यतेवा चेलृगतौ प्रज्ञाद्यणिरक्षिः २०१ शंकुभिः कीर्णेश्वभ्रेगर्ते कुकूलं कोर्ध्वमेःकूलं कुत्सितंवाकुलं केवते कवृसेवने केशिरसिवलतिवा वलप्राणने पचाद्यच् तुषानले नातुकुकूलः तुष-

**अधःस्वरूपयोरस्त्री तलंस्याच्चामिषेपलम् और्वानलेपिपातालंचैलंवस्त्रेधमेत्रिषु २०१ कुकूलंशंकुभिःकीर्णेश्वभ्रेनातुतु पानले निर्णीतेकेवलमितित्रिलिंगंत्वेककृत्स्नयोः २०२ पर्याप्तिक्षेमपुण्येषुकुशलंशिक्षितेत्रिषु प्रवालमंकुरेप्यस्त्रीत्रिषुस्थूलं जडेपिच २०३**

ज्वलने निर्णीतेनिर्णीतार्थे केवलं जलमित्यर्थः एककृत्स्नयोरपित्रिलिंगंस्यात् केवलः कुलालः कृत्स्नेतु केवलायटाः तदुक्तंमेदिन्यां केवलः कुहनेपुमानिति २०२ पर्याप्तिक्षेमपुण्येषु कुशलं कौभूमौशलति शलचलने पचाद्यच् कुशानू-लातिइत्याद्यू० शिक्षितेछात्रे चत्रिषु तद्यथा शिक्षितोशिष्यः शिक्षितागौः पर्याप्तिःसामर्थ्यमित्यर्थः अंकुरेपिअस्त्री प्रवालं प्रवलति वलप्राणने ज्वलादित्वाण् तदुक्तंमेदिन्यां प्रवालोस्त्रीकिसलयंवीणादंडेचविद्रुमइति जडेपित्रिषुस्थूलं स्थूलयति स्थूलपरिबृंहणे पचाद्यच् स्थलंकूटेचनिघ्नत्तेपीवरेचान्यलिंगकमि

दंतुरेउन्नतदंतयुक्तेपुंसि तुंगे करालः करेणालाति यद्वाकरमलति अलभूषणादौ कर्मण्यण् करालंदंतुरेतुंगेभीषणेन्वाभिधेयवत् दंतुरस्तून्नतरदंतथोन्न तत्तरेविषमितिमेदिनी चारोदक्षेचपेशलः पशंलाति पिश अवयवेघञ् इत्याद्यूह्यं मूर्खेअर्भकेपि वालः वलति वलप्राणने ज्वलितिइतिणः इत्यासूत्थं तदुक्तं विश्वे वालः कचेशिशौमूर्खेन्हीबेरेश्वेभपुच्छयोरिति वालोनाकुंतलेश्वस्यगजस्यापिचवालधौ वाच्यलिंगोभवेदज्ञेन्हीबेरेपुनपुंसकंभित्यमरुक्तत्वा० चलसतृष्णायोः लोलः लोडति लोडृउन्मादे पचाद्यच् डलयोरेकत्वं लोलश्वलसतृष्णेचेत्यरुक्तत्वात् २०४ इतिलांताः बनारण्यवन्ही दवदावौ दुनोति दवतिवा टुदुपतापे दुगतौवा दुन्योरनुपसर्गेइतिणः पक्षअन् जन्महरौ भवौ भवति अन् तदुक्तंमेदिन्यां भवः क्षेमेचसंसारेसत्तायांप्राप्तिजन्मनोरिति मंत्रीसहायश्च प्रधानसखायौ सचि-

करालोदंतुरेतुंगेचारोदक्षेचपेशलः मूर्खेर्भकेपिबालःस्याल्लोलश्चलसतृष्णयोः २०४ इतिलांताः दववदावौवनारण्यवन्हीजन्महरौ भवौ मंत्रीसहायःसचिवौपतिशाखिनराधवाः २०५ अवयःशैलमेषार्का आज्ञाव्हानाध्वराहवाः भावःसत्तास्वभावाभिप्रायचेष्टात्मजन्मसु २०६

वौ सख्यः सहअयते अयतिवा अयगतौ इगतौवा सचनंषच्चसवाये सचिंयाति वागत्यादौ पतिशाखिनरः धवाःस्युः धवति धुवति धुनोतिधुनातिवा धूञ्धुञ्कंपने धूञ्धूनने पचाद्यच् तदुक्तंहैमे धवःपुमान्नरेधूर्तेपत्यौवृक्षांतरेपिचेति २०५ शैलमेषार्काः अवयः अवति अव्यतेवा अवरक्षणे इन् तदुक्तंमेदिन्यां अविर्नाथेरवौमेषेशैलेमूषिककंबलइति आज्ञाव्हनाध्वराः हवाःस्युः व्हेञः संप्रसारणं सत्तादिजन्मांतेषुषट्सु भावः भावयति पचाद्यच् भावःसत्तास्वभावाभिप्रायचेष्टात्मजन्मसु क्रियालीलापदार्थेषुविभूतिबुधजंतुष्वित्यरुक्त० इत्यादावपि आत्मनिचस्वभावमाचरेत्सुमान् २०६ ॥ राम

उत्पादादिगर्भमोचनांतेषुपंचस्. प्रसवः प्रसूयते सूङ्प्राणिप्रसवे अप् प्रसवोगर्भमोचने उत्पादेस्यादपत्येपिफलेपिकुसमेपिचे त्यक्तः० उत्पादःउत्पत्तिः अविश्वासे अपन्हवे अपलापे निकृतौशाठ्ये निन्हवः न्हुङ् अपनयनेअप् तदुक्तंविश्वे निन्हवःपुंसिनिकृताववि‌श्वासापलापयोरिति २०७ उत्सेकामर्षयोः इच्छाप्रसरे महे उत्सवे एतेषु उत्सवःस्यात् उत्सेकः उद्रेकः प्रसरः वेगः उत्सवोमहउत्सेकइच्छाप्रसवकोपयोरित्यक्तत्वात् प्रभावे सतांचमतिनिश्चये अनुभावः अनुभावयति पचाद्यच् तदुक्तंविश्वे अनुभावः प्रभावेस्यान्निश्चयेभावसूचकइति २०८ जन्महेतुःजनकः प्रभवः प्रभवत्यस्मात्अप् आद्योपलब्धये प्रश्रमज्ञानाय वस्थानमपि स्थानवाचकोपि प्रभवःस्यात् आद्योपलब्धिर्यथा कुलालचक्रप्रभवोघट इत्यर्थः प्रभवत्यस्मात् तदुक्तंमेदिन्यां प्रभवोजन्मसूलेस्या-

स्यादुत्पादेफलेपुष्पेप्रसवोगर्भमोचने अविश्वासे ऽपन्हवेपिनिकृतावपिनिन्हवः २०७ उत्सेकामर्षयोरिच्छाप्रसरेमहउत्सवः अनुभावःप्रभावेचसतांचमतिनिश्चये २०८ स्याज्जन्महेतुःप्रभवःस्थानंचाद्योपलब्धये शूद्रायांविप्रतनयेशस्त्रेपारशवोमतः २०९ ध्रुवोभभेदेक्लीबंतुनिश्चितेशाश्वतेत्रिषु

ज्जन्महेतौपराक्रमे ज्ञानस्यचादिमस्थानइति शूद्रायांविप्रतनये विप्राज्जाते शस्त्रे परश्वधाख्ये पारशवः परान्शृणाति शृहिंसायां उप्रत्ययस्यडित्वंततः स्वार्थेण् परस्त्रियाअपत्यंवा परस्त्रीपरशुचेत्यण् तदुक्तंरभसे पुंसिपारशवःप्रुमान् परस्त्रीतनेशस्त्रे द्विजाच्छूद्रासुतेपिचेति २०९ भभेदे नक्षत्रभेदे ध्रुवःपुंसि क्लीबंतुनिश्चिते शाश्वतेनित्येत्रिषुध्रुवः ध्रुवति ध्रुवगतौ पचाद्यच् तदाहविश्वे ध्रुवः कीलेशिवे शंकौ वटेचोत्तानपादजे ध्रुवामूर्वाशालपर्ण्योर्गीतिस्रुक्भेदयोरपि ध्रुवंतुनिश्चितेतर्केनिश्चलेशाश्वतेन्यवदिति ७ ७

ज्ञातौ आत्मनिस्वेत्रह्रे एतयोः द्वयोः पुंसि स्वः स्वनति स्वन्यतेवा स्वनशब्दे अन्येभ्योपीतिडः तदुक्तंविश्वे स्वःस्यात्पुंस्यात्मनिज्ञातौत्रिष्वात्मीयेस्त्रियांध
नेइति आत्मीये स्वसंबंधिनि स्वंत्रिलींगं धनेअस्त्रियांस्वः २१० स्त्रीकटीवस्त्रबंधेपि परिपणे राजपुत्रादेर्बंधके वणिजांमूलधनेपि नीवीस्यात् निव्ययति नि
वीयतेवा व्येञ्संवरणे गौरीफेरवयोः शिवापार्वतीसृगालयोः शिवा शिवमस्त्यस्याः पुंडरीकद्रुमेचापिशिवाज्ञाटामलौषधौ अभयामलकीगौरीक्रोष्टुप्रस
कुफलास्त्वितिविश्वः द्वंद्वंकलहयुग्मयोः स्यात् द्वंद्वंरहस्येतिसाधुः तदुक्तंविश्वे द्वंद्वंरहस्येकलहेतथामिथुनयुग्मयोरिति चार्थेद्वंद्वइतिनिर्देशात्पुंस्त्वमपि
२११ द्रव्यासुव्यवसायेषु वित्तप्राणानिश्चयेषु सत्वं स्यात् सीदंत्यस्मिन् गुणाद्याः षद्लृविशरणादौ अन्येभ्यइतिसाधुः सत्वंद्रव्येगुणेचित्तेव्यवसायस्व

स्वोज्ञातावात्मनिस्वंत्रिष्वात्मीयेस्वोस्त्रियांधने २१० स्त्रीकटीवस्त्रबंधेपिनीवीपरिपणेपिच शिवागौरीफेरवयोर्द्वंद्वंकलहयुग्म
योः २११ द्रव्यासुव्यवसायेषुसत्वमस्त्रीतुजंतुषु क्लीबंनपुंसकंषंढेवाच्यलिंगमविक्रमे २१२ इतिवांताः द्वौविशौवैश्यमनुजौद्वौ
चराभिमर्शस्पर्शौ

भावयोः पिशाचादावात्मभावे बलेप्राणेषु जंतुष्वितिहेमचंद्रः जंतुषुअस्त्रियां सत्वंस्यात षंढेतृतीयप्रकृतौ नपुंसकं क्लीबंस्यात् क्ली
बते क्लीबृआधार्ष्ट्ये इगुपेतिकः अविक्रमे वाच्यलिंगं स्यात् तदुक्तंरुद्रे अस्त्रीनपुंसके क्लीबवाच्यलिंगमविक्रइति क्लीबोऽपौरुषषंढयोरितिहेमः क्लीबंस्यात्षंडकेन
स्त्रीवाच्यलिंगस्त्वविक्रम इतिमेदिनी२१२इतिवांताः वैश्यमनुजौ द्वौविशौ वर्तेते विशति विशप्रवेशने कर्तरिक्विप् तदुक्तंविश्वे विट्स्त्रियां वैश्यमनुजप्रवेशेषुमनीषि
भिरिति चराभिमर्शौयुद्धपूर्वयुद्धे स्पशौ स्पशति स्पशबाधनस्पर्शनयोः पचाद्यच् ६१ ६२ ६३ ६३ ६३

पुंजमेषाद्यौ एतौद्वौ राशिस्तः रश्यते रशानवा रशतेः सौत्रात्‌णिः अचइः आदिनात्‌पणादयः कुलमस्करौ अन्ववयेणू वंशः स्यात वमति॰वम्यतेवा दुवमु
⁻द्गिरणे रूत्तवमिभ्यःशक वंशोवेणौकुलेवर्गेपृष्ठाद्यवयवेचभिन्वेतिहेमः २१३ रहःप्रकाशौ एतौद्वौ वीकाशौ विकाशनमस्मिन् काशृ दीप्तौ अधिकरणेघञ् वि
काशइत्यपि विकाशोविजनेव्यक्तेइतिविश्वः॰ विकाशःपुंसिविजनेप्रकाशेसदृशागमेइत्यत्तत्वात् भृतिभोगयोः वेतनोपभोगयोः निर्वेशः निर्विश्यते
यत्र निर्वेशस्तत्पुमाभोगेवेतनेमूर्च्छनेपिचेत्यक्तं॰ कृतांतेयमे पुंसि कीनाशः क्षुद्रकर्षकयोरकृपणात्कृषीवलयोरपित्रिषु कीनाशः स्यात् क्लिश्नाति क्लिश्य
तेव क्लिशविबाधनेक्लिशेरिन्चोपधायाइतिसाधुः इत्याद्युत्यं तदुक्तंमेदिन्यां कीनाशःकर्षकक्षुद्रोपांशुघातिषुवाच्यवत् २१४ पदे व्याजे लक्ष्ये निमित्ते अ

हौराशीपुंजमेषाद्यौद्वौवंशौकुलमस्करौ २१३ रहःप्रकाशौवीकाशौनिर्वेशोभृतिभोगयोः कृतांतेपुंसिकीनाशःक्षुद्रकर्षकयोस्त्रिषु २१४
पदेलक्ष्येनिमित्तेपदेशः स्यात्कुशमप्सुच दशावस्थानेकविधाप्याशातृष्णापिचायता २१५

पदेशः भावेकर्मणिवाघञ् तदुक्तंविश्वे अपदेशः
पुमान्लक्ष्येनिमित्तव्यपदेशयोरपीतिविश्वः अप्सुच कुशंस्यात् कौशेतेतिष्ठति अन्येभ्योपीतिडः कुश्यतिवा कुशश्लेषणे इगुपेतिकः कुपंपश्यतिवा शीत
नुकरणो कः तदुक्तंविश्वे कुशोरामसुतेदर्भेयोक्त्रेद्वीपेकुशंजलइति अनेकविधा अवस्था दशास्यात् दशति दंशदशने मुलविभुजादिः दहदशेतिनि
र्देशान्नलोपोर्च्यपिवा दशाबाल्यादिरूपेत्यर्थः तदुक्तंविश्वे दशावस्थादीपवर्त्योर्वस्त्रांतेभूम्नियोषितीति आयता दीर्घा तृष्णापि आशा स्यात्
आसमंतादश्नुते अशुव्याप्तौ पचाद्यच् चकारादिग्प्याशा २१५

स्त्रीकरिण्योः योषाहस्तिन्योर्वशा इति वशाकांतौ अच् वशावंध्यासुतायोषास्त्रीगवीकरिणीषुचेतिमेदिनी ज्ञानेबुद्धौ ज्ञातरि त्रिषु दृक् स्यात् दृ
शिरप्रक्षणेक्विप् तदुक्तंमेदिन्यां दृक्स्त्रियांदर्शनेनेत्रेबुद्धौचत्रिषुवीक्षकइतिमेदिनी साहसिकः विवेकरहितः कर्कशः कृणोति कृञ्हिंसायां वि-
च् कशति कशशब्दे अच् . कर्चासौकशश्च कठोरामसृण्योरपि क्रूरदुःस्पर्शयोरपि तदुक्तंविश्वे कर्कशःपरुषेक्रूरेकृपणेनिर्दयेदृढे दृक्षोसाहसिके
कासमर्दकांपिल्ययोरपीति २१६ प्रसिद्धेपि प्रकाशः प्रकाशते प्रकाशनंवा काशृदीप्तौ अच्घञ्वा अपिशब्दात् प्रकाशोनिप्रसिद्धेस्यात्प्रहासा
तपयोःस्फुटइतिविश्वः शिशावज्ञेच बालिशः बालिश्यति शीतनूकरणे आतइतिकः कुड्मलेमुकुले खड्गपिधाने अर्थौघेधनसमूहे दिव्ये शप-

वशास्त्रीकरिणीचस्याद्दृग्ज्ञानेज्ञातरित्रिषु स्यात्कर्कशःसाहसिकःकठोरामसृणावपि २१६ प्रकाशोतिप्रसिद्धेपिशिशावज्ञे
पिबालिशः कोशोस्त्रीकुड्मलेखड्गपिधानेर्थौघदिव्ययोः २१७ इतिशांताः स्त्रस्मत्स्यावनिमिषौपुरुषावात्ममानवौ काक
मत्स्यात्बकोध्वांक्षोकक्षोतुतृणवीरुधौ २१८

थभेदे कोशःस्यात् कुशधातोरच्घञ्वा २१७ इतिशांताः रुरमत्स्यौ अनिमिषो
ननिमिषति मिषस्पेषणे इगुपेतिकः नञ्समासः आत्ममानवौ पुरुषौ पुरति पुरअग्रगमने पुरःकुषन् तदुक्तंहेमचंद्रे पुरुषश्चात्मनिनरेपुन्नागेदृ
ति आत्माक्षेत्रज्ञइत्यर्थ काकमत्स्यात्बकौ मत्स्यानत्ति क्विप् मत्स्याच्चासौरवगश्चबकादिः ध्वांक्षो ध्वांक्षिघोरवाशितेच पचाद्यच् तदुक्तंविश्वे
ध्वांक्षस्तुकाकबकयोस्तर्कुटेभिक्षुकेगृहइति कार्पासबीजनिष्कासनयंत्रतर्कुटमित्यर्थः तृणवीरुधौ कक्षो कषति कष्यतेच कषहिंसायां ओणा

पुंजमेषाद्यौ एतौद्वौ राशिस्तः रश्यते रशानिवा रशतेः सौत्रात्‌णिः अचइः आदिनादृषभादयः कुलमस्करौ अन्वक्वेणू वंशः स्यात वमति॰वम्यतेवा तुवमु द्गिरणे रृष्वविभयःशक वंशोवेणौकुलेवर्गेपृष्ठाद्यवयवेवपिन्वेतिहेमः २१३ रहःप्रकाशौ एतौद्वौ वीकाशौ विकाशनमस्मिन्‌ काश्रृ दीप्तौ अधिकरणेघञ्‌ वि काशइत्यपि विकाशोविजनेव्यक्तेइतिविश्वः॰ विकाशःपुंसिविजनेप्रकाशेसदशागमेइत्यक्तत्वात्‌ भृतिभोगयोः वेतनोपभोगयोः निर्वेशः निर्विश्यते यत्र निर्वेशस्तुपुमान्भोगेवेतनेमूर्च्छनेपिचेत्युक्तः॰ कृतांतयमे पुंसि कीनाशः क्षुद्रकर्षकयोरकृपणकृषीवलयोरपित्रिषु कीनाशःस्यात्‌ क्लिश्नाति क्लिश्य तेव क्लिशविबाधनेक्लिशेरिच्चोपधायाइतिसाधुः इत्याद्युक्तं तदुक्तंमेदिन्यां कीनाशःकर्षकक्षुद्रोपांशुघातिषुवाच्यवत्‌ २१४ पदे व्याजे लक्ष्ये निमित्ते अ

होराशिपुंजमेषाद्यौद्वौवंशौकुलमस्करौ २१३ रहःप्रकाशौवीकाशौनिर्वेशोभृतिभोगयोः कृतांतेपुंसिकीनाशःक्षुद्रकर्षकयोस्त्रिषु २१४
पदेलक्ष्येनिमित्तेपदेशःस्यात्कुशमप्सुच दशावस्थानेकविधाप्याशातृष्णापिचायता २१५ पदेशः भावेकर्मणिवाघञ्‌ तदुक्तंविश्वे अपदेशः पुमान्लक्ष्येनिमित्तव्यपदेशयोरपीतिविश्वः अप्सुच कुशंस्यात्‌ कौशेतेतिष्ठति अन्येष्वपीतिडः कुश्यतिवा कुशश्लेषणे इगुपधेतिकः कुंपापंश्यतिवा शोत नूकरणे कः तदुक्तंविश्वे कुशोरामसुतेदर्भेयोक्त्रेद्वीपेकुशंजलइति अनेकविधा अवस्था दशास्यात्‌ दशति दंशदशने मुलविभुजादिः दहदशोतिनि र्देशान्नलोपोच्यपिवा दशाबाल्यादिरूपेत्यर्थः तदुक्तंविश्वे दशावस्थादीपवर्त्योर्वस्त्रान्तेष्वपियोषितीति आयता दीर्घा तृष्णापि अशा स्यात्‌ आसमंतादश्नुते अशुव्याप्तौ पचाद्यच्‌ चकाराद्दिग्प्याशा २१५

स्त्रीकरिण्योः योषाहस्तिन्योर्वशा इष वशकांतौ अच् वशावंध्यासुतायोषास्त्रीगवीकरिणीषुचेतिमेदिनी ज्ञानेज्ञुर्ज्ञो ज्ञातरि त्रिषु दृक् स्यात् दृ शिरप्रसृणेक्विप् तदुक्तंमेदिन्यां दृकुस्त्रियांदर्शनेनेत्रेबुद्धौचत्रिषुयोक्षकइतिमेदिनी साहसिकः विवेकरहितः कर्कशः कृणोति कृञ्हिंसायां बि-च् कशति कशशब्दे अच् करचासौकशश्च कठोरामसृणयोरपि क्रूरदुःस्पर्शयोरपि तदुक्तंविश्वे कर्कशःपरुषेक्रूरेक्रपणेनिर्दयेदृढे दक्षोसाहसिके कासमर्दकांपिल्ययोरपीति २१६ प्रसिद्धेपि प्रकाशः प्रकाशते प्रकाशनंवा काशृदीप्तौ अच्घञ्वा अपिशब्दात् प्रकाशोतिप्रसिद्धेस्याप्रहासा तपयोःस्फुटइतिविश्वः शिशावज्ञेच बालिशः बालिश्यति शोतनूकरणे आतइतिकः कुड्मलेमुकुले खड्गपिधाने अर्थोघेधनसमूहे दिव्ये शप-

वशास्त्रीकरिणीचस्याद्दृग्ज्ञानेज्ञातरित्रिषु स्यात्कर्कशःसाहसिकःकठोरामसृणावपि २१६ प्रकाशोतिप्रसिद्धेपिशिशावज्ञे पिबालिशः कोशोस्त्रीकुड्मलेखड्गपिधानेर्थौघदिव्ययोः २१७ इतिशांताः सरमत्स्यावनिमिषौपुरुषावात्ममानवौ काक मत्स्यात्खगौध्वांक्षौकक्षौतुतृणवीरुधौ २१८

थभेदे कोशः स्यात् कुशधातोरच्घञ्वा २१७ इतिशांताः सरमत्स्यौ अनिमिषौ ननिमिषति मिषस्पर्धायां इगुपधेतिकः नञ्समासः आत्ममानवौ पुरुषौ पुरति पुरअग्रगमने पुरःकुषन् तदुक्तंहेमचंद्रे पुरुषश्चात्मनिनरेपुन्नागेद्रृ ति आत्मासेवज्ञइत्यर्थः काकमत्स्यात्खगौ मत्स्यानत्ति क्विप् मत्स्याच्चासौखगश्चबकादिः ध्वांक्षौ ध्वांक्षिघोरवाशितेच पचाद्यच् तदुक्तंविश्वे ध्वांक्षस्तक्षकबकयोस्तर्कुटेभिक्षुकेगृहइति कार्पासबीजनिष्कासनयंत्रंतर्कुटमित्यर्थः तृणवीरुधौ कक्षौ कषति कष्यतेच कषहिंसायां ओणा

दिकः तदुक्तं धरण्यां कक्षः स्मृतो भुजामूले कक्षोरण्येच वीरुधि कक्षः शुष्कतृणे प्रोक्तः कक्षः कच्छउदात्ततः काशास्पर्द्धापदेकांच्यांरथगेहप्रकोष्ठयोः गज रज्जोपरीधानपश्चादंचलपल्लवइति २१८ प्रग्रहे अश्वादिरज्जौ रश्मौकिरणे अभिषुः ईषते इष्यतेवा इषगतिहिंसादर्शनेषु ईषेःकिच्चेत्युः अभिगतइषु प्रा दिसमासः प्रेषणमर्दने प्रैषः प्रपूर्वात्‌ईषेर्घञ्‌ प्रादूहोतिवृद्धिः तदुक्तमजये प्रैषः प्रेषणपीडयोरिति प्रेषःस्यात्प्रेषणेक्लेशमर्दनोन्मादयोरपीतिविश्वश्च सहाये पि पक्षः पक्षते पक्ष्यतेवा पक्षपरिग्रहे अचपचूवा अपिनायतद्येः तदुक्तंमेदिन्यां पक्षोमासार्द्धकेपार्श्वेग्रहसाध्यविरोधयोः केशादेःपरतोवृंदेबलेसखिसहाययोः चुल्लीरंध्रेपतत्रेचराजकुंजरपार्श्वयोरिति शिरोवेष्टकिरीटयोः उष्णीषः उष्णमीषतेहिनस्ति ईषगत्यादौ इगुपधेतिकः पररूपं तदुक्तंविश्वे उष्णीषंतुशिरोवे

अभीषुःप्रग्रहेरश्मौप्रैषः प्रेषणमर्दने पक्षः सहायेप्युष्णीषः शिरोवेष्टकिरीटयोः २१९ शुक्रलेमूषिकेश्रेष्ठेसुकृतेवृषभेवृषः द्यू तेक्षेशारिफलकेप्याकर्षोथाक्षमिंद्रिये २२०

ष्टेकिरीटेलक्षणांतरइति २१९ शुक्रलादिषुपंचसुवृषः वृषः वर्षति वृषुश्रेष्ठेसेचनेन्च शुक्रंलातीति शुक्रलोवृषणः तदुक्तंहैमे वृषोधर्मेबलीवर्दे शृंग्यांपुंराशिभेदयोः श्रेष्ठेस्यादुत्तरस्थेचवासिमूषकशुक्रले बहुशुक्रेवानितवीति द्यूते अक्षे पाशके शारिफलके शा रीणांद्यूतोपकरणानांफलकंपीठिकातस्यां आकर्षः आकृष्यते आकर्षत्यस्मिन्वा कृषविलेखनेघञ्‌ लघूपधगुणः तदुक्तंमेदिन्यां नाकर्षोद्यूतइंद्रिये पाशेशा रिफलेचैवक्कोदंडाभ्यासवस्तुनि आकर्षणेपिपुंसिस्यादिति इंद्रिये अक्षः अश्नोत्यक्ष्यतेवा अनेनात्रवा अक्षूव्याप्तौ अचपचूवा तदुक्तंमेदिन्यां अक्षोज्ञा तार्थशकटव्यवहारेषुपाशके रुद्राक्षेंद्राक्षयोः सर्पेबिभीतकतरावपि चक्रेकर्षेपुमानिति अक्षंसौवर्चलेतुत्थेहृषीकइति द्यूतांगादिकेतुपुंसिस्यात्‌ २२०

द्यूतांगेपाशे कर्षचक्रेकर्षेमानभेदेचक्रेरथावयवे व्यवहारेअयव्यये कलिद्रुमे बिभीतके अक्षः तदुक्तंविश्वे अक्षः कर्षेतुषेचक्रेशकटव्यवहारयोः आत्मज्ञेपा
शकेचासंतुत्थेसौवर्चलेंद्रियइति वार्ताजीविका करीषाग्निश्चकर्षूः कर्षणं कृष्यते कर्षतिवा कृषविलेखने भावादौकषिचमीत्यू कुल्याभिधायिनीकर्षूःस्या
त् तदुक्तंरभसे करीषाग्निःपुमान्कर्षूः कुल्यायामपिस्त्रियामिति कुल्यानदीइत्यर्थः करीषाग्निःशुष्कगोमयानलइत्यर्थः २२१ पुंभावेतत्क्रियायांच पौरुषं पुरुष
स्यकर्मभावोवा तदुक्तंमेदिन्यां पौरुषंपुरुषस्येस्याद्भावेकर्मणितेजसि उर्ध्वविस्तृतदोःपाणिनृमानेत्वभिधेयवदिति अक्ष्वंविषं चातुगरलेपि वेवेष्टि विष्
व्याप्तौ इगुपेतिकः विषंतुगरलेतोयेइतिविश्वः उपादानेप्यामिषंस्यात् भिषेर्यज् तदुक्तंमेदिन्यां आमिषंतुन्नपुंसके भोग्यवस्तुनिसंभोगेप्युत्कोचेपल

नाद्यूतांगेकर्षचक्रेव्यवहारेकलिद्रुमे कर्षूर्वार्ताकरीषाग्निःकर्षूःकुल्याभिधायिनी २२१ पुंभावेतत्क्रियायांचपौरुषंविषमप्स्वच उ
पादानेप्यामिषंस्यादपराधेपिकिल्बिषम् २२२ स्याद्वृष्टौलोकधात्वंशेवत्सरेवर्षमस्त्रियाम् प्रेक्षानृत्येक्षणप्रज्ञाभिक्षासेवार्थनाभृतिः २२३

लेपिचेति पापेपिकिल्बिषं किलसेपेकिलेर्वुकचेतिसाधुः किल्बिषंपापरोगयोरित्यक्त० २२२ वृष्टौमेघवर्षावे अवधातुरक्षणादौ प्रकृतोपयुक्तोयस्य लोकधात्वंशो
लोकंधत्तेलोकधातुर्जंबुद्वीपादितदंशोभारतादिखंडे वत्सरे वर्षं अस्त्रियां वर्षतिवर्षयतिवा पचाद्यच् तदुक्तंरभसे वर्षोस्त्रीभारतादौचजंबूद्वीपाब्दवृष्टि
षु वर्षाकालेस्त्रियांभून्नाइति नृत्येक्षणंप्रज्ञेतिचद्वयंप्रेक्षासंज्ञं० प्रेक्षणमनया ईक्षदर्शने गुरोरित्यकारः प्रेक्षाधीनृत्यदर्शयोरित्यजयः प्रेक्षानृत्येक्षणेबुद्धावित्य
मरमाला० सेवार्थनाभृति भिक्षास्यात् अर्थनायांचेत्यर्थः भृतिर्वेतनमित्यर्थः तदुक्तंविश्वे भिक्षाभृतौचयाञ्चायांसेवाभिक्षितवस्तुनोरिति २२३ राम

शोभापि त्विड्स्यात् त्वेषणमनया संपदादिः तदुक्तं रभसे कांतौवाचिरुचौत्विट्स्त्रीति परेवक्ष्यमाणास्त्रयः शब्दास्त्रिषुवाच्यलिंगाः का त्स्न्यनिकृष्टयोः साक ल्याधनयोः न्यक्षंस्यात् नियतानिकृतानिवाअक्षाणियस्मिन्यस्यवा समासांतः तदुक्तंविश्वे न्यक्षः परशुरामेस्यात् न्यक्षःकात्स्न्यनिकृष्टयोरिति प्रत्यक्षेसा क्षात्प्रमिते अधिकृतेनियुक्ते अध्यक्षः अक्षेषुव्यवहारेषुअधिकृतः अधिकृतान्यक्षाण्यस्येतिवा समासांतः इत्याद्युक्तं अक्षव्यासो पचादयन्त् अप्रेम्णि निःस्नेहे अचिक्कणेअमसृणे रूक्षः रूक्षयति रूक्षपारुष्ये अच् २२४ इतिषांताः रविश्वेतच्छदौहंसौ हंतिगच्छति हनहिंसागत्योः पचाद्यच्निभवेदुर्णागा मात्यंसः तदुक्तंविश्वे हंसोविहंगभेदेस्यादर्केविष्णौहयांतरे योगिमंत्रादिभेदेषुपरमात्मन्यमत्सरे निर्लोभनृपतौहंसःशरीरमरुदंतरइति सूर्यवन्ही विभाव

त्विट्शोभापित्रिषुपरेन्यक्षंकात्स्न्यनिकृष्टयोः प्रत्यक्षेधिकृतेध्यक्षोरूक्षस्त्वप्रेम्ण्यचिक्कणे २२४ इतिषांताः रविश्वेतच्छदौहंसौसूर्यव
न्हीविभावसू वत्सौतर्णकवर्षौद्वौसारंगाश्चदिवौकसः २२५ शृंगारादौविषेवीर्येगुणेरागेद्रवेरसः पुंस्युत्तंसावतंसौद्वौकर्णपूरेचशेखरे २२६

सू विभाप्रभावसुधनमस्य विभावसुः पुमान्सूर्येहारभेदेचपावके इत्युक्तत्वा० तर्णकवत्सौ गोवत्सपुत्रौ द्वौवत्सौ वसत्यस्मिन् वसनिवासे सप्रत्ययःससीतितः तदुक्तंमेदिन्यां वत्सःपुत्रादिवर्षयोः तर्णकेनोरसिक्लीबमिति दिवौकसः सारंगः शकंध्वादिः चातकाः देवाश्च सारंगायति गैशब्दे गापोष्टक् तदुक्तंद्विरूपकोशे- दिवौकाश्चदिवौकाश्चपुंसिदेवेचचातकइति २२५ शृंगारादौ शृंगारवीरकरुणादौनवविधे विषेगरले वीर्येतेजसि गुणेस्वाद्वादौ रागे द्रवे रसः रस्यते रसआस्वादने- कर्मणिघञ् तदुक्तंमेदिन्यां रसोगंधरसेस्यादेतिक्तादौविषरागयोः शृंगारादौद्रवेवीर्येदेहेधातौबुपारदेइति उत्तंसावतंसौउत्तंसश्चावतंसश्च द्वौ कर्णपूरे कर्णाभरणे शेखरे च शिरोभूषणे वर्तेते तसिभूषेत्यस्यादन्तघञ्वा तदुक्तंविश्वे उत्तंसः कर्णपूरेपिशेखरेचावतंसवदिति २२६ राम

देवभेदेनलेरश्मौ वसुः वसतिसर्वत्रोष्यतेनेनवा वसनिवासे उप्रत्ययः रत्नंधनेचवसुक्लीबं तदुक्तंमेदिन्यां वसुर्नादेवभेदाग्निभावोक्षवकराजसु क्लीबंस्वर्णयोष-
धेश्यालेरेरत्नमधुरेत्रिषिति विष्णोश्चवेधाः स्यात् विधातिविधविधाने असुन् इत्यादि चानविरंचोपि तदुक्तंरभसे वेधाःपुंसित्हृषीकेशेबुधेचपरमेष्ठिनि हि
ताशंसाहिदंष्ट्रयोः आशीः स्त्रियां आशास्ते आङःशासुहिंसायां कर्तशिक्षिप्रसंपदादिर्वा इत्यादि हितस्याशंसा २२७ प्रार्थनौत्सुक्ययोश्चोद्युक्ते उभेलाल
से लालसनं लसदीसौ यंङःतादकारः तदाह तृणातिरेकेचलालसा लालसौत्सुक्यतृ भूनिरेकयांचासुचद्वयोरितिमेदिन्यां चौर्यादिकर्मच हिंसास्यात् हिंस
नं हिसिहिंसायां अकारः चात्वधेपि आदिनाद्वत्तिनाशादिकर्म अस्त्रापि मसूः मसूते षूङ्प्रसवे सत्सूद्वितिक्विप् आश्वावडवेत्यर्थः तदुक्तंमेदिन्यां प्रसू

देवभेदेनलेरश्मौवसूरत्नेधनेवसु विष्णोश्चवेधाः स्त्रीत्वाशीर्हिताशंसाहिदंष्ट्रयोः २२७ लालसेप्रार्थनौत्सुक्येहिंसाचौर्यादिकर्मच प्र
सूरश्वापिभूद्यावोरोदस्योरोदसीचते २२८ ज्वालाभासोनपुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु

रम्भाजनन्योश्चकंदलीवीरुधोः स्त्रियामिति भूद्यावौ
रोदसी रोदस्यौ स्यातां रोदितिसर्वमस्मिन् रुदिर् अश्रुमोचने असुन्गौरादित्वा ङीष् रोदसी रोदस्योन्वेतिसांतद्विवचनांतेस्यातामेकयोक्त्याभूमिद्यावो-
द्वे अप्युच्येतइत्यर्थः रोदसीत्यव्ययमप्यस्ति यदाहद्यावापृथिव्योरोदस्योरोदसीरोदसीतिचेति प्रथगपिप्रयोगोस्ति तदुक्तंविश्वे रोदश्चरोदसीचापिदिविभू
मौपृथकपृथक् सहप्रयोगेप्यनयोरोदस्यावपिरोदसीति २२८ ज्वालाभासोः कीलदीप्त्योः अर्चिः अर्च्यते अर्चपूजायां इसिः नपुंसि भद्योतदृष्टिषु ता
रामकाशकनीनिकामध्यभागेषु ज्योतिः द्योतते द्योतनंवानेन द्युतदीप्तौ इसिःगुणः आदेश्चजः ज्योतिरग्नौदिवाकरे इत्युक्तत्वात्

पापापराधयोरागः इणआगअपराधेनेत्यसुन् खगबाल्यादिनोः वयः आदिनायौवनादिवयः वयगतौअसुन् तदुक्तंविश्वे वयःपक्षिणिबाल्यादौवयोयौवन-मात्रकइति २२९ तेजःपुरीषयोः वर्चः वर्चते वर्चदीप्तौ असुन् तदुक्तंमेदिन्यां वर्चोनपुंसकंरूपेविष्ठायामपितेजसि पुंसिचंद्रस्यतनयइति उत्सवतेजसोः महः मह्यते महपूजायां असुन्गुणे गुणभेदे स्त्रीपुष्पे आर्तवे रजः रज्यतेनेन रंजरागे असुन् रजःक्लीबंगुणांतरे आर्तवेचपरागेचरेणुमात्रेचदृश्यतइत्युक्तत्वात् अदंतोपि पञ्चर्थकः रजोथरजसासार्द्धंस्त्रीपुष्पगुणधूलिषित्यजयः राहौध्वांतेगुणे तमः तम्यतेनेन तमुग्लानौ असुन् तमोध्वांतेगुणेशोकेक्लीबंवा नाविधुंतुदे २३० पद्ये ऽभिलाषेच छंदः चंद्यतेन चदि आल्हादेनेदीप्तौच असुन्चस्यच्छः पद्येअनुष्टुभादाविन्त्यर्थः छंदःपद्येचवेदेचस्वैराचाराभिलाषयोरित्युक्त-

पापापराधयोरागः खगबाल्यादिनोर्वयः २२९ तेजःपुरीषयोर्वर्चोमहउत्सवतेजसोः रजोगुणेचस्त्रीपुष्पेराहौध्वांतेगुणेतमः २३०
छंदः पद्येभिलाषेचतपःकृच्छ्रादिकर्मच सहोबलसहामार्गौ नभःखंश्रावणोनभाः २३१ ओकःसद्माश्रयश्चौकाः

त्वात् कृच्छ्रादिकर्मच तपः तप्यतेनेन तपसंतापे असुन् आदिनाचांद्रायणादि तदुक्तंरभसे तपोलोकांतरेपिच चांद्रायणादौधर्मेचपुमान् शिशिरमाघयोरिति बलं सहः क्लीबं मार्गः सहाः सहते सह्यतेनेनात्रवा षहमर्षणे असुन् तदुक्तंमेदिन्यां सहोबलेज्योतिषिचपुंसिहेमंतमार्गयोरिति खं नभः नभ्यतेनेनात्रवा णभहिंसायां असुन् तदुक्तंविश्वे-नभोव्योम्निनभोमेघेश्रावणेचपतद्ग्रहे घ्राणेमृणालसूत्रेच वर्षासुचनभाःस्मृत इति २३१ सद्म गृहं ओकः स्यात् उचसमवाये असुन् न्यक्वादिः अदंतोपि ओ-कउचः कइतिनिपातनात् आश्रयः ओकाः तदुक्तंहैमे ओकास्त्वाश्रयमात्रेचमंदिरेत्वनपुंसकमिति श्रीसितारामप्रसन्न ॥ ६७ ॥ ॥ ६७ ॥

क्षीरं पयः पीयते पायतेवा पीङ्पाने पयगतौच असुन् पयोंबुनस्यात् उब्जत्यनेन उब्जआर्जवे असुनिबलोपःगुणः दीप्तौबले ओजः ओजोदीप्तावबष्टंभेप्रकाश बलयोरपीतिउक्तत्वा० यश्चाह ओजोदीप्तिप्रकाशयोः अवष्टंभेबलेधातुतेजसीतिहैमे इंद्रिये निम्नगारये स्रोतः स्रुवतिस्रुगतौ असुन् स्रोतोंबुवेगइंद्रियइत्य क्त० २३२ प्रभावे दीप्तौ बले शुक्रेच तेजः तेजयति तेज्यतेनेनवा तिजनिशातने असुनिगुणः तेजोदीप्तौप्रभावेचस्यात्पराक्रमरेतसोरित्युक्तत्वात् यच्चाह ते जोधाम्निपराक्रमइति अतःपरंसांतसमाप्तिपर्यंतावाच्यलिंगाःवक्ष्यमाणाः त्रिलिंगाः विद्वान् ज्ञाता स्यात् वेत्ति विदज्ञाने विदन्पंडितः शतृस्थानेवसुरादे शः पक्षे तदुक्तंविश्वे विदंनात्मविदिप्राज्ञेपंडितेचाभिधेयवदिति चात् आत्मज्ञोपि बीभत्सः बीभत्सते बीभत्स्यतेनेनवा बधेःसन्नंतादच् तदुक्तंहैमे बीभ-

पयःक्षीरंपयोंबुन ओजोदीप्तौबलेस्रोतइंद्रियेनिम्नगारये २३२ तेजःप्रभावेदीप्तौच बलेशुक्रेप्यतस्त्रिषु विद्वान्
विदन्श्चबीभत्सोहिंस्रोप्यतिशयेत्वमी २३३ वृद्धप्रशस्ययोर्ज्यायान्कनीयांस्तुयुवाल्पयोः वरीयांस्तूरुवरयोःसाधीयो
न्साधुबाढयोः २३४ इतिसांताः

त्सोविकृतेक्रूरेरसेपार्थेघृणात्मनीति हिंस्रः क्रूरः हिंसिहिंसायांरक् २३३ अमीवक्ष्यमाणाज्याय-आदयःसाधीयःपर्यंताः सांतास्तद्धितांतावा पर्यंतानां अतिशयेद्वयोः वृद्धप्रशस्ययोः अतिशयेनवृद्धप्रशस्यौ ज्यायान् उभयोःस्थानेज्यादेशः अतिशय ज्येष्ठः युवाल्पयोः कनीयान् अतिशयेन उरुवरयोः वरीयान् अतिशयेनवरिष्ठः साधुबाढयोः साधीयान् अतिशयनइष्ठनईयसुन्भ्यांइमेसर्वेसाध-
नः अतिशयितंबाढंसाधीयः २३४ इतिसांताः ५ ५ ५ ५ ५

दलेपिबर्हं बर्हति ग्रहस्दो अत्तइत्याद्यूत्यं अपिशब्दात्पिच्छेपि तदुक्तंहेमे बर्हंपर्णे परीवारेकलापइति निर्बंधोपरागार्कादयः ग्रहाः ग्रा स्त्राति ग्रहउपादाने-अप् अथवा निर्बंधआग्रहविशेषः उपरागश्चंद्रार्कग्रहणमित्यर्थः ग्रहोनिग्रहनिर्बंधग्रहणेषुरणोद्यमे सूर्यादौपूतनादौचसैंहिकेयोपरागयोरितिविश्वः हार आपीडे शिरोभूषणे क्वाथरसेक्वथितद्रव्यरसे नागदंतके भित्तिस्थकीलके निर्व्यूहः निर्व्यूहति व्यूहतर्कोकिकोधातुः इगुपेतिकः तदुक्तंविश्वे निर्व्यूहःशे खरेद्वारेनिर्यासेनागदंतकइति २३५ तुलासूत्रे अश्वादिरश्मौ प्रग्राहः प्रग्रहोपिच प्रवणिजारश्मौच्चवायज्पक्षेग्रहवृइत्यप् प्रगृह्यते प्रग्रहस्तुतुलासूत्र पादीनांचबंधने हयादिरश्मौरश्मौचसुवर्णस्यचपादपइतिविश्वः पत्नीपरिजनादानमूलशापाः परिग्रहः परिगृह्यते परिग्रह्यतिवा अचग्रहेत्यप् परिजनादा

दलेपिबर्हंनिर्बंधोपरागार्कादयोग्रहाः हार्यापीडेक्वाथरसेनिर्व्यूहोनागदंतके २३५ तुलासूत्रेश्वादिरश्मौप्रग्राहःप्रग्रहोपिच पत्नीपरिज नादानमूलशापाः परिग्रहाः २३६ दारेषुचगृहाःश्रोण्यामप्यारोहोवरस्त्रियाः व्यूहोवृंदेप्यहिर्वृत्रे

नेतु परिवारस्वीकारौज्ञेयौ शापःशपथइ त्यर्थः तदुक्तं अजये परिग्रहः कलत्रेचसूत्रस्वीकारयोरपि शपथेपरिवारेचराहुवक्त्रस्थभास्करइति २३६ दारेषुकलत्रे गृहाः गृह्णाति धान्यादिगृहंतास्थ्या त्गृहादाराः इत्याद्यूत्यं चात् सद्मनिग्रहः पुंभूम्नि गृहंगृहाश्चपुंभूम्निकलत्रेपिचसद्मनिइत्याद्युं वरस्त्रियाः श्रोण्यामपि कट्यामपि आरोहः अपिश ब्दात्गजारोहे आरुह्यते आरोहादैर्घ्यउच्छ्रायेस्त्रीकट्यामानभिदापि आरोहणेगजारोहइतिहेमचंद्रः वृंदेपि व्यूहः व्यूहते ऊहवितर्के इगुपेतिकः व्यूहःस्या द्वलविन्यासेनिर्माणेवृंदतर्कयोरितिविश्वः वृत्रेपि अहिः आहंति हनहिंसागत्योः आङिहस्वः इणप्रत्ययोडित् अहिर्वृत्रासुरेसर्पेइतिविश्वः

अग्नींद्वर्काः तमोपहाः तमोपहंति अपेक्लेशतमसोडइतिडः तदुक्तंविश्वे तमोपहः सहस्रांशुमृगांकाजिनवह्निषिति २३७ परिच्छदे नृपार्हेर्थेराजयोग्यद्रव्ये परि वर्हः परिवर्हते परिवर्ह्यतेवा वर्हप्राधान्ये अच्घञ्वा तदुक्तंविश्वे परिवर्हस्तुराजार्हवस्तुन्यपिपरिच्छदइति परिवर्हः परिवारइत्यर्थः इतिहांताः इतः परेअनेकार्थाः वक्ष्यमाणाआङादिशब्दाअव्ययाउच्यंते ईषदर्थेआपिंगलईषत्पिंगलाः अभिव्याप्तौ आजन्मव्यभिचारी सीमार्थे पाडुमर्यादिकृत्यइति आपांडु धातुयोगजे क्रियायोगजेर्थे यथाआहरति आक्रामतीत्यादि आङित्यव्ययंईषदादिषट्चतुष्टयेवर्त्ततेतस्यङकारोऽनुबंधः २३८ स्मृतोस्मरणे वाक्येवाक्यपूरणेच अप्रगृह्यः आइतिनिपातः सःस्यात् आप्नोति क्विपिपृषोदरादित्वात्पलोपः स्मृतोयथा आएवंकिलतत् वाक्येतुआएवंमन्यसे तदुक्तंमेदिन्यां आप्रगृह्यस्मृ-

> प्यग्नींद्वर्कास्तमोपहाः २३७ परिच्छदेनृपार्हेर्थेपरिबर्हो इतिहांताः व्ययाःपरे आङीषदर्थेभिव्याप्तौसीमार्थेधातुयोगजे २३८ आप्र-
> गृह्यः स्मृतोवाक्येप्यास्तुस्यात्कोपपीडयोः पापकुत्सेषदर्थेकुधिङ् निर्भर्त्सननिंदयोः २३९

तौवाक्ये ऽनुकंपायांसाधुच्यइति कोपपीडयोः आःइतिनिपातःवर्त्तते आस्ते आउपवेशने आग्वत्साधुः पीडायांयथा आःशीतं कोपेतु आःपापकिंजल्पसि आःस्मरणे ऽप्राकरणेकोपसंतापयोरपीत्युक्तत्वात् पापकुत्सेषदर्थेपापाद्यार्थत्रये कुशब्दः कवति कूयतेवा कुङ्शब्दे डुप्रत्ययः तदुक्तंविश्वे कुकुत्सायां निवारणइ कुपापीयसिकुत्सायामिषदर्थे निवारणइतिमेदिनीकारश्च पापेकुःकर्म कुत्सायांकापुरुषः ईषदर्थे कवोष्णमित्यादि निर्भर्त्सननिंदयोः धिक्शब्दः धक्कयति धक्कनाशने बाहुलकात्डिकः अपकारशब्दैर्भयोत्पादनंभर्त्सनमित्यर्थः दोषप्रकीर्तनंनिंदेत्यर्थः २३९ राम

अन्वाचयसमाहारेतरेतरसमुच्चये चशब्दः स्यात् चंदते चदिआल्हादे अन्येभ्योपीतिडः तत्रोदाहरणं भिक्षामटगांचानय समाहारेसमूहे घटश्चपटश्चघटपटं मिलितानामन्वयेइतरेतरयोगे हरिश्चहरश्चहरिहरौ परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयेसमुच्चये मातरंपितरंभजस्वेपि चपादपूरणे पक्षांतरेहेतौविनिश्चयइतित्रिकांडकोशः आशीःक्षेमपुण्यादौ स्वस्तिस्यात् असधातोः क्तिच् स्वस्तिमंगलाशीर्वादपापनिर्णोजनादिष्विति भागुरिः तत्रोदाहरणं दातुःस्वस्त्यस्तु क्षेमेउपद्रवाभावे स्वस्त्यास्व पुण्ये स्वस्तिमंतः स्वर्गच्छत तदुक्तंमेदिन्यां स्वस्तिस्यान्मंगलेपुण्येप्याशीसायामपिक्वचिदित्या विग्रहणं प्रकर्षे लंघनेपि अति अतति इन्प्रत्ययः तत्रोदाहरणं अत्युत्तमोविष्णुदासः तदुक्तंविश्वे अतिशब्दः प्रशंसायांप्रकर्षेलंघनेपिचेतिविश्वः –

चान्वाचयसमाहारेतरेतरसमुच्चये स्वस्त्याशीः क्षेमपुण्यादौप्रकर्षेलंघनेप्यति २४० स्विस्प्रश्नेचवितर्केचतुस्याद्भेदेवधारणे सकृत्सहैकवारेवाप्यारादूरसमीपयोः २४१

लंघनेतु अतिवेलंजलधितलं २४० प्रश्ने वितर्केच स्वित् स्यात् सुष्ठुएति इणगतौक्विप् स्वित्प्रश्नेचवितर्केचतथैवपदपूरणइत्युक्तः० प्रश्नेउदाहरणं किंस्वित्कुशलमस्ति वितर्के ब्रह्मविष्णुशिवानांमध्येआद्योच्चारणंविष्णोराहोस्विदन्यतरस्य तदुक्तंमेदिन्यां स्वित्प्रश्नेचवितर्केचतथैवपदपूरणइति भेदे अवधारणे तुशब्दःस्यात् तुदति तुदव्यथने डुप्रत्ययः तुपादपूरणे भेदेसमुच्चयेवधारणे पक्षांतरेनियोगेचप्रशंसायांविनिग्रहइतिमेदिनी सहार्थे एकवारेच सकृच्छब्दः सकृदित्यर्थे सकृद्वाजनंकुरु सकृदपिगोदावर्यांदत्तपिंडोभव सकृत्सहैकवारयोरित्यजयः दूरसमीपयोः आरात् तत्रउदाहरणं यथा आराच्छत्रोःसदावसेत् समीपेतु सखायंस्थापयेदारात् आङ्पूर्वात्रादानेइत्यतः बाहुलकादातिः २४१

मतीच्यां पश्चिमदिशि चरमेंत्ये पश्चाच्छब्दः पश्चादित्यनेनावरस्यसप्तमीपंचमीप्रथमांतस्यनिपातः अवरस्यपश्चभावः आतिप्रत्ययः तत्रोदाहरणं-
तिष्ठसुंदरिमकेहेपश्चादस्तंगतोरविः पश्चिमेवयसिप्राप्तेविष्णोराराधनंकुरु अप्यर्थविकल्पयोः उतशब्दः उंयतेस्म उङ्शब्देक्तः अप्यर्थे समुच्चयार्थः उतश
ब्देयथा उतगागंउतस्वर्गः विष्णुरुतशिवःसेव्यः उतप्रश्नवितर्कयोः समुच्चयेविकल्पेचेतिहेमः उतापीद्वौचवार्थौ इत्यजयः पुनरर्थेपीनःपुन्ये सहार्थे
च शश्वत् स्यात् शश्वति शशप्लुतगतौ शश्वत्सहसहार्थयोरितिमेदिनी तत्रयथा शश्वद्विष्णुस्मरदासीपुत्रोभागवतसमइति शिष्यैः शश्वत्कृतोद्रोणः कुरु-
पांडवसंज्ञकैश्चेत्यादि प्रत्यक्षतुल्ययोः साक्षाच्छब्दः सहाक्षेणसाक्षाद्भवतीति क्विप् साक्षात्तुल्यसमक्षयोरित्यजयः तत्रोदा० साक्षाद्दृष्टोमयाहरिः-

मतीच्यांचरमेपश्चादुताप्यर्थविकल्पयोः पुनःसहार्थयोःशश्वत्साक्षात्प्रत्यक्षतुल्ययोः २४२ खेदानुकंपासंतोषविस्मयामंत्रणेब
त हंतहर्षेनुकंपायांवाक्यारंभविषादयोः २४३ तदात्मत्वेनगच्छन्मनप्राप्तोनिर्वाणजंसुखं साक्षाल्लक्ष्मीरियंवधुः संसारगह्वरेतिष्ठन् निर्मुक्तः-
स्वर्गजंसुखं साक्षात्तुल्यसमक्षयोरित्यजयः २४२ खेदादिविस्मयामंत्रणांतेषुपंचस्सु बतशब्दः बयगतौक्तः बतखेदेनुकंपायांहर्षेसंबोधनेद्भुतइतिदं
त्योप्यावाक्यजयः बतेतियथा अहोबतमहत्कष्टंपीतंहालाहलंविषं बतसंसारतापतप्तोसि बतपतिमुखचुंबनलंबितान्नसखी अहोममसुदेबाला-
श्चमतकुर्वतवेबत एहिहंजेबतममलेख्यमापय हर्षे अनुकंपायां वाक्यारंभविषादयोः हंतशब्दः तत्रउ० पुर्वस्मादंतमेप्राप्तंशतदीनारकंनिशि हंत
दीनोरक्षितव्यः प्राणैरपिधनैरपि हंततेकथयिष्यामि चरमेविषादेतु हंतजातमजातारेः प्रथमेनत्वयारिणा हंतदानेनुकंपायां वाक्यारंभविषादयोः निश्चये
चप्रमोदेचेतिहेमः २४३ राम

मुख्यसदृशे प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतश्च प्रतिशब्दः प्रातिप्रथतेवा प्राधूरणे प्रथप्रख्याने बाहुलकात्डतिः प्रतिशब्दोयथा शिवंप्रतिविष्णुः अभि मन्युंप्रतिपरीक्षित् व्याप्तुमिच्छावीप्सातस्यांयथा ब्राह्मणंब्राह्मणंप्रति ददातीत्यर्थः लक्षणायांयथा वृक्षशाखांप्रतिविद्योततेविद्युत् आदिनाइत्थंभूताख्याना दौ प्रयोगतइतिशिष्टप्रयोगानुसारेणप्रतिशब्दस्यप्रक्षेपः प्रतिस्थंभूतभागयोः प्रतिदानेप्रतिनिधौवीप्सालक्षणयोरपीतिहैमः हेतुप्रकरणप्रकाशादिसमाप्तिषु— इतिशब्दः एति अयतिवा क्तिन् तदुक्तंविश्वे इतिप्रकरणेहेतौप्रकाशादिसमाप्तिषु निदर्शनेप्रकारेस्यादनुकर्षेचसंततमिति हेत्वर्थेइतिशब्दोयथा वालिहंती- तिस्फ्रीवोऋश्यमूकंपलायते प्रकरणेप्रकारे विप्रक्षत्रियाविट्शूद्राइतिभेदाः इतिपाणिनिः पाणिनिशब्दोलोकेप्रकाशतेइत्यर्थः प्रकर्षइतिपाठः आदिनाएवं

प्रतिप्रतिनिधौवीप्सालक्षणादौप्रयोगतः इतिहेतुप्रकरणप्रकाशादिसमाप्तिषु २४४ प्राच्यांपुरस्तात्प्रथमेपुरार्थेग्रतइत्यपि याव त्तावच्चसाकल्येवधौमानेवधारणे २४५

क्रमादमुंनारदइत्यबोधि समाप्तोअवसानेयथा धर्ममाचरेदिति तदुक्तंहैमे इतिस्वरूपेसान्निध्येविवक्षानि यमेपिच हेतौप्रकारप्रत्यक्षप्रकर्षेष्ववधारणे एवमर्थेसमाप्तौस्यादिति २४४ प्राच्यांप्रथमे पुरार्थे अग्रेइत्यग्रतःपुरस्तात् पूर्वस्मिन् अस्तातिप्रत्ययेपूर्वशब्दस्य पुरादेशः प्रथमेयथापुरस्ताद्भुक्ते पुरार्थेअतीते यथापुरस्ताद्दासोभूत अग्रतोग्रेपुरस्तात् दृश्यतेरविः पुरस्तात्पुस्तकंयद्वाग्रतइत्यर्थः अपिप्राच्याद्यर्थे साकल्यादि चतुष्के यावत्तावच्छब्दौ तद्धिताइतिबहुवचनेनानुक्तज्ञापनात्डावतुरिति अमरटिप्पणे यावद्दत्तंतावद्भुक्तं अवधौ मूलाच्छाखांयावत्स्कंधः मानेपरिमाणे याव त्सुवर्णंतावद्रजतं अवधारणेनिश्चये ओन्नियंतावदामंत्रयस्य तदुक्तंमेदिन्यां यावत्कात्स्न्येवधारणे प्रशंसायांपरिच्छेदेमानाधिकारसंभ्रमे पक्षांतरेचेति २४५

अथोअथइमौशब्दौमंगलादिषुवर्त्तेते अर्थउपायां च्वायां बाहुलकात् डोअर्थेत्यनडेपृषोदरादित्वात् रलोपः मंगलेयथा अथातोब्रह्मजिज्ञासा अनंतरे स्नानंकृ त्वाऽथभुंजीत आरंभे अथशब्दानुशासनंक्रियते प्रश्ने अथवक्तुंसमर्थोऽसि कार्त्स्न्ये अथधातून्ब्रूमः तदुक्तंहैमे अथोअथसमुच्चये मंगलेसंशयारंभाधि कारानंतरेषुच अन्वादेशेप्रतिज्ञायांप्रश्नसाकल्ययोरपीति निरर्थकाविध्योः वृथाशब्दः वृणोति वृणीतेवाव्रुञ्वरणे निरर्थके वृथाकुर्धोनद्वान् अविधौविधिहाने-वृथादानं वृञोबाहुलकात्थाक् तदुक्तंविश्वे वृथानिष्कारणेवंध्येवृथास्याद्विधिवर्जितइति अनेकोभयार्थयोः नानाशब्दःस्यात् नेतिनाना विनञ्भ्यांइति आना ञ् नानाशब्दोविनार्थोपितथानेकोभयार्थयोरित्यमरकृतत्वात् अनेकार्थे नानाविधंफलं उभयार्थे नानाविधंनगृह्णीयात् २५६ पृच्छायां विकल्पेचनु नुदतिनौतिवा

मंगलानंतरारंभप्रश्नकार्त्स्न्येष्वथोअथ वृथानिरर्थकाविध्योर्नानानेकोभयार्थयोः २५६ नुपृच्छायांविकल्पेचपश्चात्सादृश्ययोर नु प्रश्नावधारणानुज्ञानुनयामंत्रणेननु २५७

णुदप्रेरणे णुस्तुतौवा डुप्रत्ययः पृच्छायां कोनुकुर्यात् विकल्पे अयंघटोनुपटोनु तदुक्तंविश्वे नुस्यात्प्र श्नेविकल्पार्थेप्यतीतानुनयार्थयोरिति पश्चात्सादृश्ययोरनुस्यात् अनिति अनप्राणने बाहुलकादुः पश्चादर्थे मातरमनुयाति सादृश्ये कृष्णमनुकरोति तदुक्तंहैमे-अनुलक्षणवीप्सेत्थंभूतभागेषुसंनिधौ सादृश्यायामहीनेषुपश्चादर्थसहार्थयोरिति अनुहीनेसहार्थेचपश्चात्सादृश्ययोरपि आयामेचसमीपेचलक्षणादावनुस्मृता दितिविश्वश्च प्रश्नादिष्वामंत्रणांतेषुषट्सु ननुशब्दः ननुदति नुदप्रेरणे प्रश्ने ननुकिमानीतं अवधारणे नन्वियंगौः अनुज्ञायां नन्वोदनंकुरु अनुनये सांत्वने ननुकोपंसंवरयांकुरु आमंत्रणेसंबोधने यथा ननुमांपश्यन् तदुक्तंहैमे नन्वाक्षेपेपरिप्रश्नेप्रत्युक्तावधारणे वाक्यारंभेऽनुनयामंत्रणानुज्ञयोरपीति २५७ श्रीरामप्रसे

गर्हादिसंभावनांतेषुपंचसु अपिशब्दः स्यात् नपियाति पिगतौ ड्डिप् आगमोनित्यः तदुक्तंविश्वे अपिसंभावनाप्रश्नशंकागर्हासमुच्चये तथायुक्तपदार्थेचकाम चारक्रियासुचेति सत्वयथा अपिजल्पाशिपतिरंडे समुच्चये विष्णुंभजशिवमपि प्रश्ने अपिजानासिकिंमारंविद्दलोस्मित्वदागमे शंकायां अपिमेसखीभवेत् संभा वनायां अपिकामंजयेत्स्थाणुःउपमायां विकल्पे वाशब्दः वातिवागत्यादौ तदुक्तंविश्वे वास्यादिकल्पोपमयोरेवार्थेचसमुच्चय इति आशीर्विशेनासंकुचः विकल्पेयथा शिवंवायदिवाविष्णुंयोजानातिसपंडितः अर्द्धे जुगुप्सिते साचि षामसांत्वप्रयोगेअव्ययः अर्धे सामिसामिताक्षी जुगुप्सितेयथा सामिकृतमकल्याणकारि- २४८ सहसमीपे अमानमातिपामानेड्डिप् सहार्थेयथा पुत्रैरमाभुंक्ते समीपेतु अमात्यः अमाभवइत्यर्थेत्यप् समीपवर्तीत्यर्थः वारिणि मूर्द्धनिच कं कम्यते क

गर्हासमुच्चयप्रश्नशंकासंभावनास्वपि उपमायांविकल्पेवासामित्वर्धेजुगुप्सिते २४८ अमासहसमीपेचकंवारिणिचमूर्द्धनि इ वेत्थमर्थयोरेवंनूनंतर्कर्थनिश्चये २४९ तूष्णीमर्थेसुखेजोषं

सुकांतौ णिङभावेविच् तदुक्तंमेदिन्यां कंशिरः सुखवारिष्विति इवेत्थमर्थयोः एवं शब्दः इवेयथा इवार्थेयथा अग्निरेवंमाणवकाः अग्निरिवेत्यर्थः इत्थमर्थेप्रकारे एवंवादिनिदेवर्षौ एवंप्रकारोपमयोरंगीकारेऽवधारणेद्दृतिधरणिहेम चंद्रौ वमतेर्विच् तदान्नूनंशब्दः स्यात् नुवास्तत्यानमति विच् नूनमयतियज्वनांमिव : अर्थनिश्चयेतु क्षुद्रेपिनूनंशरणंप्रपन्ने तदुक्तंविश्वेनूनंनिश्चिततर्कयोरिति २४९ तूष्णीमर्थेमौने सुखेच जोषंशब्दः स्यात् जुष्यतेजुषसेवी बाहुलकादम् जोषंसुखेप्रशंसायांतूष्णीलैयनयोरपीत्युक्तत्वात् जोषंस्थितास्म सुखे तु जोषंवैभोजनंकुरु ॥राम॥ ॥७॥ ॥७॥ ॥७॥ ॥७॥ ॥राम॥

पृच्छायां जुगुप्सनेच किंशब्दः चौरस्यचौर्यंकिमुतप्रतितं जुगुप्सनेतु सकिंराजायःप्रजांनरक्षति कृथते कुशब्दे बाहुलकात्डिम् तदुक्तंविश्वे किंवित केंपरिप्रश्नेक्षेपनिंदाप्रकारयोरिति किंकुत्सायांचतर्केचनिषेधप्रश्नयोरपीत्क० प्राकाश्ये प्रसिध्यां नामशब्दः सयथा मुकुंदंभजतुनामसुक्तिदातृत्वात सं भाव्येकथंचिदर्थे भविष्यतियुधंनाम क्रोधेनामशब्दस्त्क नामयति नाम्यतेवा पामप्रन्हले ममवैरीशाखोनामपापः उपगमे सद्दोषीकार सयथा शत्रोःसकाशाद्गृण्हातिनाम कुत्सने यथा कोनामायं प्रलपतिमेविशतःसभायां तदुक्तंमेदिन्यां नामकोपेभ्युपगमेविस्मयस्मरणेपिच संभाव्यकुत्सा प्राकाश्यविकल्पेष्वपिदृश्यते २५० भूषणस्य अलंकारस्य पर्याप्तेः परिपूर्णतायाः शक्तेःसामर्थ्यस्य वारणस्यनिवारणस्यच वाचकं अलं स्यात् अल

किंपृच्छायांजुगुप्सने नामप्रकाश्यसंभाव्यक्रोधोपगमकुत्सने २५० अलंभूषणपर्याप्तिशक्तिवारणवाचकम् हुंवितर्केपरिप्रश्नेसमयांतिकमध्ययोः २५१

ति अलंभूषणादौ बाहुलकादम् ,तदुक्तंविश्वे अलंभूषणपर्याप्तिवारणेषुनिरर्थके अलंशक्तोचनिर्दिष्टमिति तत्रेत्थं अलंकृतवती अलंशिशोःस्तन्यं सचभलंभुक्तवान् अलंसमोरावणाय अलंयहीपालतवश्रमेण अलंनिरर्थकेइतिहेमश्च वितर्के परिप्रश्नेच हुंकारशब्दः हुयते हुदानादौ बाहुलकात्मः यथा हुंनरःनारायणोहं हुंघटोयं तदुक्तंत्रिकांडशेषे हुंवितर्केचानुमतावित्ति हुंवितर्केपरिप्रश्नेहुंरुषोत्त्यनुनीतिषु हुंवितर्केपरिप्रश्ने — हुंलज्जायांनिवारणइतिविश्वहैमयोश्च अंतिकमध्ययोः समया समेति इणगतौ आः अंतिकेयथा समयाकुलालंदंडः यथाच समयामातृपित्रोः शिशुः २५१ सम

॥श्रीरिनारामचंद्रायनमः॥

अप्रथमे भेदेन्व पुनः पनते पनस्कृतौ बाहुलकादरुः अस्यउः यथा पुनर्देहि पुनरप्रथमेमतं अधिकारेन्व भेदेस्व तथापक्षांतरेपिचेतिमेदिनी भेदेयथाकिंपुनर्-
गौःपुण्या निश्चयनिषेधयोः निशब्दः नृणाति नृनयेत् क्विपृईत्वं निर्गतभयः निषेधेन्नयथा निर्धनःपुरुषः शवसमानः तदुक्तंविश्वे निर्निश्चयेक्तातायर्थेनिः-
शेषप्रतिषेधयोरिति प्रबंधे चिरातीते निकटे अगामिकेच पुरा पुरति पुरअग्रगमने बाहुलकात्काकित्वात्लघूपधगुणाभावः सयथा पुराधीते चिरातीते
तेतु इतिहासपुराणादीत्यर्थः सन्निहितेपि आगामिके भाविनीत्यर्थः तदुक्तंविश्वमेदिन्योः पुरापुराणेनिकटेप्रबंधातीतभाविषुइति २५२ उररी उरी उररीचेति
शब्दत्रयं विस्तारे अंगीकृतोन्वहेयं उयते उयतंतुसंताने बाहुलकात् ररीकृरीक् वयतेरीकःसंप्रसारणं उररीचोररीचोरीविस्तारेंगीकृतत्रयमित्यजयः ऊ

पुनरप्रथमेभेदेनिर्निश्चयनिषेधयोः स्यात्प्रबंधेचिरातीतेनिकटागामिकेपुरा २५२
ऊररीउरीचोररीचविस्तारेंगीकृतेत्रयम् स्वर्गेपरेचलोकेस्ववार्तासंभाव्ययोःकिल २५३

ररीकरोतीत्यादीत्यर्थः स्वर्गेपरेलोके स्वः स्वरति स्वृशब्दोपतापयोः विच्गुणः स्वर्गेयथा स्वर्गे दर्शनान्मुक्तोनजानेस्नानजंफलमिति परइतिलोकविशेषणं-
परेलोकेतु स्वर्गताअपिइच्छंतिसुधिजन्मसदलसं तदुक्तंविश्वे स्वःस्वर्गपरलोकयोरिति वार्तासंभाव्ययोः किलशब्दः किलति किलश्वैत्ये इगुपधत्किः
वार्तायांयथा जघानकंसंकिलदेवदेवः संभाव्येतु द्रोणांकिलातिक्रांतौसोशिष्येषुतवचार्जुनः तदुक्तंविश्वे किलशब्दस्तु वार्तायां संभाव्यानुन-
यार्थयोरिति वार्तायामरुचौकिलेतित्रिकांडशेषश्च २५३ राम ६४ ६५ ६६ ६७

निषेधे वाक्यालंकारे जिज्ञासायां अनुनयेच खलुशब्दः खलति खलसंचये बाहुलकादुः निषेधेसयथा खल्वपदुरयंराजा भजंतिलोकाःखलुरामचंद्रं म-न्त्रित्तहारकोजारश्चौवैपारदारिकः जानासिखलुभोरंदे देहिमेखलुवाचकं एवंचत्वार्युदाहरणानि तदुक्तंमेदिन्यां खलुस्याद्वाक्यभूषायांजिज्ञासायांच सांत्वने वीप्सायामाननिषेधेषुपूरणेपादवाक्ययो रिति समीपाद्याभिमुख्यांतपदपंचके अभितः अभिशब्दात्तसिल् समीपेसयथा वल्लवीम भितस्तिष्ठन्कृष्णा-एवसमेरिषुः उभयार्थे अग्रतोमेंथलीगच्छेदभितोरामलक्ष्मणौ शीघ्रार्थे अभितोधीष्वेवेगुरोः साकल्येयथा अभितोयातिवेजलं अभिमुखेचयथा प्रत्यर्थी त्वभितोहंतियदिनस्यात्पलायनं २५४ नामप्राकाश्ययोः माद्रुः स्यात् प्रादंति अधिबंधने बाहुलकाद्रु स्आगमानित्यत्वान्नुम्न नाम्नियथा प्रादुर्नम्नवहारिणी

निषेधवाक्यालंकारजिज्ञासानुनयेखलु समीपोभयतःशीघ्रसाकल्याभिमुखेभितः २५४ नामप्राकाश्ययोःप्रादुर्मिथोन्योन्यंर हस्यपि तिरोंतर्धौतिर्यगर्थेहाविषादशुगार्तिषु २५५

गयामेपुरस्तात् प्रादुरासीज्जगन्नाथइतिच प्राकाश्येयथा प्रादुर्भावोधियोमेस्यात् अन्यो न्यार्थे रहसिच मिथः मेथति मेथृसंगमे पृषोदरादिः हस्वः असुन् बाहुलकात् ओःसांतओदंतयोतन्न अन्योन्यार्थेयथा वत्सार्षिषेणविदानामिथोसागोत्र्यं र हसिमिथोयथा मिथोमहर्षिभिस्तासां तदुक्तंविश्वे मिथोन्योन्यंमिथोरहइति अंतर्द्धौ अंतर्धाने तिर्यगर्थे च तिरःशब्दः तरति तृ असुन् क्वचिदपवादविष ये प्युत्सर्गोभिनिविशतइतिगुणाविषइर् अंतर्धानेसयथा शकुंतलांसमादायकण्वशिष्यास्तदंतिके तिरोबभूवुरिति तिर्यगर्थेतु तिरोगच्छतिवैखलः विषादे शुचि-अर्त्तौहाशब्दः जहाति अन्येभ्यइतिडेपृषोदरादित्वाल्लोपेन तदुक्तंविश्वे हाविषादेच शोकेचकुत्सादुःखार्थयोरपीति विषादेयथा मारःकालेहाभिडयति शोकेयथा हाचंद्र

नतापतसोस्मिस्पृशमांकरैः पीडायांहाहतोस्मीति २५५ अद्भुते खेदेच अहहेति अहंजहातिजिहीतेडेमलोपः पृषोदरादित्वात् अद्भुतेसयथा अहहप्रज्ञाप्रकर्षोस-
मः खेदेयथा अहहनीतंवयोम याव्यर्थं अहहादार्थांतिमपीतिनवच्छिबोध्यः तदुक्तंमेदिन्यां अहहेत्यद्भुतेखेदेपरिक्लेशप्रकर्षयोः संबोधनेपीति हेतौअवधार
णेच हिशब्दः हिनोतिहिगतौविच्छिपितुगभावोवा हेतौयथा पर्वतोवन्हिमानत्रधूमोहिपरिदृश्यते निश्चयेन् धर्मोहिरक्ष्यतेमित्रनत्वन्यादिति हिपादपूरणे-
हेतौविशेषेप्यवधारणे प्रश्नेहेत्वपदेशेचसंभ्रमासूययोरपि हीडः खहेतावास्यानो विषादेविस्मयेपिवेतिदीर्घांतपाठोप्यस्ति इतिनानार्थवर्गः चिराय -
चिरमयते अयगतौ कर्मण्यण् चिररात्राय चिररात्रानयने रात्रेरन् अग्रे कर्मण्यण् चिरस्य चिरमस्य असुक्षेपणे ण्यत् शकंध्वादित्वात् पररूपंआद्यायेषां

अहहेत्यद्भुतेखेदेहिहेतावधारणे इतिनानार्थवर्गः चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाः मुहुःपुनःपुनःशश्वदभीक्ष्ण
मसकृत्समाः १

शाद्येषांतेशब्दाः तेचिरार्थकाः दीर्घकालवाचकाः स्युः क्रमेणैकैकस्योदाहरणं चिरायमांरुगजांनर्वाक्षते वामलोचना चिररात्रायमेमा
बालश्यामोज्वलितंगृहं सखेसवकटासेनचिरायममसंचित्तमिति अशीविषमुखज्वालेर्गोपीगोपगवांगणः चिरस्यकृष्णरक्षैवामृतोपानात्सगुस्थितः आ
द्यशब्दात्चिरेण चिरात् चिरमित्यपिज्ञेयं मुहुः पुनः पुनः शश्वत् शशीबहुलत्वात् अभीक्ष्णं असकृत् एतेपंचसमाः अर्थतः नेपांविग्रहस्त्वेवं मोहनं
मुहर्वैचित्ये बाहुलकादुस् नित्यंवीप्सयोरितिपुनःशब्दस्याद्विवचनं शशाति शशप्लुतगतौ अभिक्ष्णोति क्ष्णुणतेजने बहुलंडग् नसकृत् अजयस्तु अभी-
क्ष्णशब्दमनव्ययमप्याह अभीक्ष्णंतुपौनःपुन्येसर्वदार्थेचदृश्यतइत्यनव्ययपाठात् वारंवारंशश्वदर्थेवारंवारेणचेष्यतइतिस्त्रिकांडशेषः १ राम

स्राक् स्वामकति अकक कुटीलायांगतो स्रैपाकेसंपदादिः क्विप् झटति झटमेति झटसंघाते इणः क्विन् अंजसा अंजूव्यक्तयादौ अजूस्यतेक्विप् अन्हाय-न्हुङ् अपनयने घञ्आवादेशवरयसः द्राक् द्राति द्राकुत्सायांगतो बहुलंकः मंक्षु मज्जाति टुमस्जोशुद्धौ बहुलंसुः मस्जि इनिनुम् सपदि समीलोपः प दौशति एतेसप्तशब्दाः शीघ्रवाचकाःस्युः बलवत् बलमस्यास्ति मतुप् सुष्ठु सुतिष्ठति अपीतिकुः किमुत किंचतदुतच स्रु सूयते षुगतौ क्विप्तुगभा वः अति अतइन्तीव षव्निर्भरस्य २ पृथक् पृथप्रक्षेपे बहुलंकक् विना वर्ना इणोणः ऋते केहिगतोरुकक् नञोआनास्र अंतरेण ऋते हिरुक् ना-ना एतेषट्शब्दाःवर्जने विप्राहास्त्कएवंतेयथा पर्थयति पृथप्रक्षेपे अंतरेति ऋतीयते ऋतिःसौत्रोधातुः हिनोति हिगतौ रुकक्प्रत्ययः नञोविनञ्भ्या

स्राक्झटित्यंजसान्हायद्राङ्मंक्षुसपदि द्रुते बलवत्सुष्ठुकिमुतस्वत्यतीवचनिर्भरे २ पृथग्विनांतरेणर्तेहिरुङ्नानाचवर्जने यत्त
द्यतस्ततोहेतावसाकल्येतुचिच्चन ३

मितिनाप्रत्ययः तत्क्रमेणोदाहरणानि किंचिच्चपृथुकाद्वत्सापृथक्कबाधिहितेचल्ल इतियावत् विनाकृष्णेनय-हृतंविनाकृष्णेनयत्हृतमिति अंतरेणाच्युतंनास्तिपदं तद्दाचकंनृणामिति त्वांऋतेमेगतिर्नास्तिरोदीमिकस्वेपुरः हिरुक्हरिंनप्लवःस्यात्संसारार्णवविभ्रमइ ति सर्वंनानानास्तिश्रेष्टोमहेषु एतादृशानिद्वेयानि यत् यच्छति यमउपरमे क्विप् मलोपतुक् तत् तनोति तनुविस्तारे शाग्व तसाधु यतः यस्मात् ततः तस्मात् पंचम्यापंचम्यास्तसिल् त्यदाद्यत्वं चत्वारि हेतौकारणे तत्रोदाहरणानि यत्पवित्रंमनोहारिशिववर्णनमुच्यतइति तदिदंविजहाहिकामुकमिति यतो स्तिधन्यधन्योयंपिबन्हरिकथामृतमिति ततःप्रभातसमयोउदयंयातिभास्करः साकल्येतु चित् चेतति चितिसंज्ञाने क्विप् यथा काचिकराभ्यांभ्रमतीवपस्रं च न चनतिचनशब्देपचाद्यच् कचनइतिद्वयंस्यात् ३

कदाचित् जातु जायति जेक्षये बहुलंकुल इति द्वयं कस्मिंश्चित्काले तत्र त्थं कदाचित् मे सख्याः सहचरिस्मृतिस्तेभवतिचेत्कठोरः स्मारोवेति ज्ञानं मेस्यात्तु वैष्णवमिति सार्धंऋध्यति ऋधवृद्धौ महस्यसः बहुलकः साकं सह अकनं सचा सहभायनेक्विप् समं समति षमवैक्लव्ये बहुलंअम् सह षहमर्षणेअच् पंचसहवाचकाः आनुकूल्यार्थकं माध्वंस्यात् माध्वनति ध्वनशद्वे माङ्पूर्वात्अम् प्रत्ययः तदुक्तं माध्वंतु प्रणतेचातिदूरे वल्लीनिबंधनेइति व्यर्थके वृथामुधा च स्यात् व्रियने इङ्च्छवा थाक् मुद्यति बहुलंकाहस्यधः ४ आहो आहंति डोप्रत्ययः उताहो उतचअहोचानयोः समाहारः वयलेः क्तः किमुत किम् चउनचलयोः समाहारः वै शद्वेबहुलंडिमिः किं किमु उतं षड्विकल्पेज्ञेयाः तत्रोदाहरणानि आहोमेरांद्रांतः कनकलतिकायामिति इत्याद्यूह्यानि तुलुदति

कदाचिज्जातुसार्धंतुसाकंसचासमंसह आनुकूल्यार्थकंमाध्वंव्यर्थकेतु वृथामुधा ४ आहेउताहोकिमुतविकल्पेकिंकिमूतच तुहिस्म हवैपादपूरणेपूजनेस्वति ५ दिवान्हीत्यथदोषाचनक्तंचरजनाविति तिर्यगर्थेसाचितिरोप्यथसंबोधनार्थकाः ६

तुः हि हिनोति किपिलुगभावः च चनति चिनोतिवा ऊः स्म स्मयते धिङ्ईषद्हसने डः हडः वैवै : पद्श्लोकपादपूरणे स्तु सवतिसुगतौ ति अतति द्वेपूजने यथाअद्यमेसुदिनंजातं अत्युग्रंवर्ततेधुना उभयत्रबहुलं ५ अन्हीत्यर्थेदिवाशद्वस्यात् दीव्यतेः का दोषा दुष्यतेः आ नक्तं द्वेरात्रावित्यर्थे दुष्यंत्यत्र दुषवैकृत्ये तत्रोदाहर॰ चौरागच्छंतिवैदोषाधनिकस्यचसद्मनि क्रमस्थितासिवैनक्तं मिमिसाचि संचनं षचसमवाये इत्यघपादित्वाव् तिरः तरणं अस्तनिङर्त्तं इति द्वे तिर्यगर्थे तत्र उ॰ साची कृतहगञ्जेनवीक्षते मदिरेक्षणा तिरोगत्वाप्रपश्यंतप्रधावन्हरिणीगणः ६

प्याड् पाड् प्यैङ् वृध्धौ टप्रत्ययः पटेर्ण्यंतात् क्विप् अंगेरच् हिनोतेर्विच् हंतेर्डैः भातेर्डोस् अंग हे है भोः इत्येते संबोधनवाचकाः स्युः पाटयति पटगतौ प्यायते प्याङ् वृद्धौ अंगति अगिगतौ हंति भांति उदाह० प्याड् रामयज्ञविध्वंसकर्तारं राक्षसं जहि एवं सर्वत्र समया समयानिकटे मध्ये निष्कषीति कमध्य- योरित्यु० निकषा उभयं आः समिणिनितिसाधु हिरुक् हिनोति ततुकंरुद्रे हिरुक् मध्ये विनार्थे चेति हिरुक् युक्तं च सामीप्य इत्यमरमालाच यशोदायानंद पल्यावत्ते नैवैहिरुक् शिशुः श्रीणि सामीप्ये अतर्किते सहसा शहुः स्यात् सहते षहमर्षणे असा प्रत्ययः उदाह० सहसा विद्धीत न क्रियां पुरः पूर्वस्मिन् पूर्वस्य पुरः पुरतः पुरति पुर अग्रागमने बहुलं अनस्कक् अग्रतः अग्रे तसिः त्रयोग्रार्थाः ७ देवहविर्दाने स्वाहा स्वादते नेन स्वाद आस्वादने आ प्रत्ययः पृषोदरादित्वादस्यहः

स्यः प्याड् पाडंग हे है भोः समया निकषा हिरुक् अतर्किते तु सहसा स्यात्पुरः पुरतो ग्रतः ७ स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा धा ॥ किंचिदीषन्मनागल्ये प्रेत्यामुत्र भवांतरे ८ वयायथातथा चैवं साम्ये होहीच विस्मये ॥

श्रौषट् स्रुष्टु आहूयते नेनेन डाप्रत्ययः श्रूयते नेनेन वा श्रु श्रवणे अमुधिन्नू इति डौषट् वौषट् ऊह्यते नेनेन वह प्रापणे डौषट् वषट् उषट् स्वधा स्वद्यते नेनेन षद आस्वाद ने आद स्वधः एते पंच तत्रापि तृणां दाने स्वधा किंचित् उभयोः समाहारः ईषत् मनाक् उभयत्र अत् आक् एतानि त्रीणि स्वल्पे उदाह० किंचिद्दानेन मे तुष्टो देवदेवो जना र्दनः हालाहलमिदं प्रोक्तं ईषत् मात्रं शिवस्य तु मनाक् हस्याविवर्धय प्रेत्य इणः लोल्यप् अमुत्रेति अदसः त्रल् हे भवांतरे वनीपक जनश्चंद्रः प्रेत्य राजा महीयते इहा मुत्र च गीयते ८ व वा यथा तथा इव एवं एतेषां मक्रियाऊत्वा षड् साहश्यस्य अहो नञ् डोहाङ् धातुः हीत्यकडी प्रत्ययो हंतेः हीहे विस्मये . उदाह० अहो रूपं महो कांतीर मासहचरीतदा ॥ ७ ॥

मोहिनींनेसमालोक्येति तदुक्तं विश्वे हीविस्मयविषादयोरिति तूष्णीं तूष्णीकां एतौद्वौशब्दौमौने तुष्टतुष्टेबहुलंनाम् यथा कामवक्तव्यइतिसाधु मनोहरौसर्व- मनोहरेभुतूष्णींस्थितौपंकजकुड्मलौनदा तद्दर्शनात्वचंचललोचनायारित्यादि तूष्णीकांजलजंपश्यन्गुरुर्मेतंब्रवीत् जलजंमत्स्यमित्यर्थः सपदि पदेरिन् समोलोपः तल्लक्षणेसद्यःशब्दः सद्यःपरुदितिसाधुः हेतत्काले सचासौक्षणश्च ९ दिष्ट्या दिशैःसंपदादित्विक्प्रस्त्यायतेःक्विप् समुपजोषं हेआनंदे विद्वज्जनम नश्चंद्रहरिश्चंद्रोविराजते दीष्ट्यामेदर्शनंप्रामोविश्वामित्रादित्यादि दिशंस्त्यायति स्त्यैशब्दादौ जुषेरम् अंतरे इणोविच्डानमत्ययैःसाधवः अंतरा अंतरेण त्रयंम ध्येमसक्तोति हठार्थवाचकशब्दःस्यात् षह मर्षणेल्कोल्यप् १० सांप्रतं तनुविस्तारेड्म् रमोदीर्घः स्थाने स्थानशब्दात्ण्यंतादृप्रत्ययः एतद्द्वयं युक्तेस्यात् उदा०

मौनेतुतूष्णींतूष्णीकांसद्यःसपदितत्क्षणे ९ दिष्ट्यासमुपजोषंचेत्यानंदेथांतरांतरा अंतरेणचमध्येस्युःप्रसह्यतुहठार्थकम्
१० युक्तेद्वेसांप्रतंस्थानेभीक्ष्णंशश्वदनारते अभावेनह्यनोनापिमास्ममालंचवारणे ११

साम्प्रतंतेकरिष्यामियथालक्ष्मीःप्रसीदति भक्तिःप्रपु ज्येषुकुलोचितातेस्थानेभवानित्यादि अभीक्ष्णं शश्वत् द्वयं अनारते शश्वत्तुष्टौनेड्म् तत्र अभीक्ष्णदातुस्त्वत्तेकुलोचितमिति कुलटामानसंशश्वत्स्मरधारा यतेध्रुवं नहि नत्यति नह बंधने अनोन चत्वारिअभावे तत्रोदाह० नहिवसिधुपथ्यः परिभवः अराजकोयथाग्रामोनष्टोभवतिसत्वरमित्यादि भवांतरेकिं चनमेऽतंस्यादस्मिन्भवेबंधवनोवशश्च नजल्पसियदाकांतेप्राणत्यागंकरोम्यहमित्या अस्यादभावेस्वल्पार्थेइतिविश्वः मास्म माचस्मचानयोःसमाहारः मा संपदादिः अलं अलम्भूषणेअम् त्रीणिवारणे मास्मकुरु मामास्पृश अलमितिविस्तरेण ॥११॥ ८ ७ ७

चेत् यदि हयंपक्षांतरे सत्यंचे चिति विन् यनी इनतस्यदः भपसाचकिंशकचिमनोयद्यस्तितीर्थेनकिं अध्धा अंजसा अतं सततगमनंधयति दधातिवा विन् अं जू व्यक्त्यादौ अंजंस्यति एतद्द्वयंतत्वेतत्वार्थो अद्धासदसतः परं मामुवंतिहरिद्वारवासिनइत्यादि अंजसांजनवद्भाति मादुः आविः अदभक्षणेऽसुउङ्शदुइन् एत द्द्वयंप्राकाश्येस्पष्टार्थे उदाह० कितवस्यसभायांवैप्रादुरासीन्युधिष्ठिरः आविर्बभूवमकरंदइवारविंदइत्यादि प्रान्ति अदभक्षणेअवति अवरक्षणादौ मनूदिलोपः ओं उदा० ओमित्युक्तवचस्तेनगृण्हीयुर्ब्राह्मणाधनमिति एवं उदा० एवंयदुक्त्वाविररामरामः परमं परंमिमीतेमिनोतिमिनातिवा इम् त्रीणिमते तदुक्तंविश्वे ओमि त्यनुमतौमोक्तंप्रवणेचाप्युपक्रमइति एवंप्रकारोपमयोरंगीकारे ऽवधारणइत्युक्तत्वात् १२ समंततः तसिः समंतात् परितः तसिल् सर्वतः सर्वस्मात् विष्वक्

पक्षांतरेचेद्यदिचतत्वेत्वद्धांजसाद्वयं प्राकाश्येप्रादुराविस्यादोमेवंपरमंमते १२ समंततस्तु परितः सर्वतोविष्वगित्यपि अका मात्वनुमतौकाममसूयोपगमेस्तुच १३

विष्वंचति किन् अभितः तसिल् विश्वतः समंतादित्यादि चत्वारिसर्वतइत्यर्थे उदाह० समंततःसंचर णं नारदस्ययथारवेः परितोमेघडंबरमिति वाहिनीमुखभोगेषुसर्वतोमारणंकुरु विष्वक्प्रकाशतेपातगौगं तेइ० अकामानुमतौ अनिच्छयानुमतौ काममित्येकंनाम काम्यते णिङंतादम् तदुक्तंरुद्रे अकामात्वनुमतौकाममसूयोपगमेपिचेति आकामेत्यपिपाठः तत्राङ्बोध्यः तदुक्तंत्रिकांडेकामंकाम्याप्य नुज्ञयोरिति असूयोपगमे अस्त्वित्येकं अस्यतेस्तु चात्कामममपि असूयापूर्वस्वीकारइत्यर्थः असति अस्यति तदुक्तंमेदिन्यां अस्तुस्यादभ्यनुज्ञाते ऽसू यांगीकारयोरपि उदा० इतियथानृतमस्त्वतेतयातदपिमास्त्विति १३ ७ ७ ७ ७ ७ ७ ७

नन्वविरोधोक्तौस्यात् नन्विति समाहारः नन्विदमन्यस्मै कांते तर्हिं किं मम प्रजायते कामप्रवेदने इष्टपरिप्रश्ने कच्चिच्छद्‌ः कच्चिनृइतिसमाहारः उ० रावणस्यपु रेदृष्टा कच्चित् मे प्राणवल्लभा निःषमं निर्गतंसममत्रदुष्टंसमं दुःषमं हे गर्ह्येस्यात् कुलालरचितुं कुंभानिःषमं दृश्यतेधुना क्वप्रस्थितासि मे कांते दुःषमं व र्ततेदिनं यथास्वं यथायथं द्वे यथायोग्ये यथास्वे यथायथं इतिसाधू यथास्वमिति वीप्सायां अव्ययीभावः १४ मृषा मिथ्या द्वौ शब्दौ वितथे स्यातां मृष्यते मृ षु सहने कामत्ययः मथ्यते मथ विलोडने अप्यादिः यथार्थं यथातथं द्वयं सत्ये अर्थमनतिक्रम्य सत्यमनतिक्रम्य अव्ययीभावः नथाशद्वस्तथ शाद्वोचासत्या र्थः एवंतु पुनः वैवा एते पंच अवधारणवाचकाः निश्चय वाचकाः स्युः विवेत्यत्र वा एव इति छेदः १५ अतीतार्थकबोधकं प्रागित्येकंनाम अंचतेः क्विन् उ० प्राक्

नन्वचस्याद्विरोधोक्तौकच्चित्कामप्रवेदने निःषमंदुःषमंगर्ह्येयथास्वंतुयथायथम् १४ मृषामिथ्याचवितथेयथार्थंतुयथायथम्
स्युरेवंतुपुनर्वैवेत्यवधारणवाचकाः १५ प्रागतीतार्थकंनूनमवश्यंनिश्चयेद्वयं संवद्वर्षेऽवरेत्वर्वागामेवंस्वयमात्मना १६

जन्मनि कृतमित्यादि नूनं अवश्यं एतद्द्वयंनिश्चितेस्यात् उ० नूनंजनेनमहति पुरुषे प्रयुक्तमित्यादि अवश्यंभाविकर्मस्यात् लुउ नयति ऊनपरिहारणे अ मु अवश्यायते श्येङ्गतौ उम् नदुक्तंविश्वे नूनंनिश्चिततर्कयोरिति संवदित्येकंनाम वर्षे सवयते वयगतौ क्विप् यलोपः यद्वासंवदति विन् अपरे अर्वा- गित्येकंनाम अर्वंतं अंचति वा क्विन् अंगीकारे आं एवंचेतिद्वयं आमयति अमगत्यादौ क्विप् आमेवंशद्वौज्ञानावधारणे स्यातां आत्मनेत्यर्थे स्वयं सु- ष्टुअयते अयगतौ अम् ॥ १६ ॥ ७ ७ ७ ७ ७ ७

अल्पे नीचैरित्येकं नोदीर्घश्वेतिडेसिः उ० वानीराइवहश्यंते नीचैः मत्यर्थिनस्त्वेति महतिउच्चैरित्येकं ०उ० निकूरमेवतन्नोच्चैर्जयस्तंभंचकारसः उच्चीयते-
विन्नचयने अदिचेडैसिः भूम्नि बहुले प्रायःशब्दः अयतेरसुन् उ० प्रायोमाधस्यचक्रन्वित् नपुंसकत्वंभवतीत्येषशास्त्रनिर्णयः अद्रुतेमांद्ये शनैः शणति शान
यतिवा शणदाने ऐसुनस्यनः उ० शनैर्गमनंकुरु अतिदीर्घतरंमार्गमाशंकेति नित्ये सनेत्येकंनाम षणसंभक्तौ आप्रत्ययः उ० सनातनः बाह्येवहिरित्येकंना
म वहप्रापणेइस् उदा० सायंसंध्याबहिर्जलइति प्रतीते स्मेति षोंतकर्मणिउमनु उ० वदंतिस्म० अस्तमदर्शने अस्यतेस्तम् अस्तं उ० अस्तंयातियदाभानौ १७
सत्वे अस्ति असनं असदीमी क्तिच् उ० अस्तिपेतृकंवर्मेतिमतियस्य आस्तिकइत्यादि रुषाउक्तौ उशब्दः उनशब्देक्विप् तदुक्तंरभसे उषास्यादजनीशेषेउषइत्यपिह

अल्पेनीचैर्महत्युच्चैः प्रायोभूम्न्यद्रुतेशनैः सनानित्येबहिर्बाह्येस्मातीतेस्तमदर्शने १७ अस्तिसत्वेरुषोक्तावुऊंप्रश्नेऽनुनयेत्व-
यि हुंतर्केस्यादुषारात्रेरवसानेनमोनतौ १८ पुनरर्थेंगनिंदायांदुष्टुसुष्टुप्रशंसने ॥ श्यतइति उ० हंतुमुमागतंशत्रुमित्यादि तदुक्तंमेदि-
न्यां उपबोधनरोषोक्त्योरनुकंपानियोगयोः पादपूरणे । पिबइष्यतइति प्रश्ने ऊं ऊयतेर्डुक् उदा० बहि स्निह्यसि ऊकांतइति ह्रस्वपाठेउमित्यपि अनुन
येसांत्वने अयिशब्दः अयतेरिः यथा अयिस्निग्धसुग्धेइत्यादि वितर्केहं शब्दः हुचानादेोउम् रात्रेरवसाने उषा उ० चिकित्सकैर्ययातत्र उषापानंतथाकृत
मिति उषदाहेका ननेनमशब्दः नमतेरसुन् उ हरायनमः १८ पुनरर्थे अंगेति अगिगतौघञ् उ० "मूर्खोपिनाममन्यते किमंगविद्वान्" किंपुनरित्यर्थः निंदायां दुष्टुउ
स्खलस्यमानसंदुष्टुयथादुर्योधनस्यच प्रशंसने सुष्टु निष्ठतेः कुः सुषामादिः उ० विद्वज्जनमनोहारिसुष्टुकाव्यंप्रजायतइति ॥ ७ ७ ७ ७

सायें १८नानं साय स्यंतं णम् पूर्व० ३० अ० ... स्वाभिनेपूर्वेसायञ्चामांविधीय तइति प्रगे प्रातः इत्यभातेस्यातांउ० मगंमगायंतिचबंदिनस्तथा गेशाङ्गेप्रत्ययः क्षांर्दे वेहंकरिष्यामिप्रातःस्नानंजनार्दन अननंतरः समीपार्थे निकषा १९ पूर्वेद्दे गतवर्षे परुदित्येकंनाम उत्प्रत्ययः पूर्वस्यपरादेशः पूर्वतरे गतवर्षात्पूर्वेवर्षे परारीत्येकंना म पूर्वतरस्यपरः आरीत्प्रत्ययः उभाप न्नसंवत्सरेऽर्थ यनिवर्तमानेब्दे ऐषमइत्येकं यनिगच्छति इदमइशसमसणप्रत्ययः सद्यः परुदितिसाधवइमेत्रयः अथाणां नु "परारिगतः कालः परुन्नागतऐपमोपिनागतः यतोनिशाचनंस्यैणः समस्यांरूपं अत्रान्हि अस्मिन्नहनी अद्यशब्दः इदमोद्यश्च उ०अद्यश्वोवाकुसुमधनुषोघोवरा ज्याभिषेकइति अथपूर्वेन्हीत्यादावनंपूर्वेद्युरादयः शब्दाभवंतीत्यन्वयः पूर्वेन्हीत्यादिशब्देनउत्तरे न्हीत्यादिषद्कस्यग्रहणंस्यात् २०तेयथा पूर्वस्मिन्नहनिपूर्वेद्युः

सायंसायेप्रगेप्रातः प्रभातेनिकषांतिके १९ परुत्परार्यैषमोब्दे पूर्वेपूर्वतरेयति अत्राद्यान्ह्यथपूर्वेन्हीत्यादौपूर्वोत्तरापरात् २० तथा धरान्यान्यतरेतरात्पूर्वेद्युरादयः उभयद्युश्चोभयेद्युः परेत्वन्हिपरेद्यवि २१ ह्योगतेनागतेन्हिश्वः परश्वस्तुपरेहनि तदातदानींयुगपदे कदासर्वदासदा २२

अहनिवाच्येपूर्वशब्दात् एद्युस् एवंअन्यअन्यतरइतरअपरअधरउभयउत्तरेभ्यः उभयद्युरित्यत्रद्युः उभयद्युः नदुर्कंरुद्रे पूर्वेद्युरिष्यतेप्रा- तः पूर्वेद्युः पूर्ववासरइति उत्तरस्मिन्नहनिउत्तरेद्युः अपरस्मिन्नहनिअपरेद्युः अधरस्मिन्नहनिअधरेद्युः अधरस्त्वपुमानोष्ठेहीनेन्यूर्ध्वेचवाच्यवदित्युक्त० अन्यस्मिन्नहनि अन्येद्युः अन्यतरस्मिन्नहनिअन्यतरेद्युः इतरस्मिन्नहनीतरेद्युः उभयस्मिन्नहनिउभयद्युः उभयेद्युः द्वौशब्दौभवतः परेन्हितु परेद्यवि परशब्दादेद्यवि एतत्सर्यंताः सद्यः परु दितिसाधवः २१ गतेहनि ह्यइत्येकंनाम उभावपिपृषोदरादि अनागतेन्हि श्वइत्येकंनाम ततः परेहनि परश्वइतिशब्दः तदा तदानीं तस्मिन्कालेस्यातां तदोदाचेत्यादिना दानीतिप्रत्ययो कस्मिन्काले युगपत् एकदा सर्वेतिदा एतौशब्दौस्यातां सर्वदा सदा एतौ शब्दौसार्वकालेभवतः सर्वस्यपक्षेसादेशः २२

एतर्हि एतस्कद्दानुन्हिल्अव्वं संप्रति इदानीं अधुना इदमोन्हिल् अधुनाइदमः प्रत्ययः इशोलोपः सांप्रतं एतत्संचकं अस्मिन् कालइत्यर्थेभवति प्राग्दिशीयत्वात् साधवः उ० एतर्हिप्रत्ययोजातः तथाशब्दः समुच्चये पूर्वादौदिशि पूर्वादौदेशे पूर्वादौकालेवा प्रागादयः स्युः दिशिप्राग्दिगित्यादि देशेप्राग्देशइत्यादि कालेप्राक्कालइत्यादि पूर्वादौइ त्यादिशब्देनोत्तर पश्चिमदक्षिणाधरोर्ध्वादीनांग्रहः प्रत्यगादयइत्यादिशब्देनत्ववागित्यादिग्रहणं उत्तरात् अधरात् दक्षिणात् उत्तराधरदक्षिणादातिरितिसाधवः उत्त रेण अधरेण दक्षिणेन निष्पः एनबन्येति एनब् दक्षिणादक्षिणाहि दक्षिणादाच् आहिचदूरेतिसाधू दक्षिणतः उत्तरश्चसंगृह्यते ऊर्ध्वेतूपरिउपरिष्टादिदि उप र्युपरिष्टात् २३ ॥ ॥इत्यव्ययवर्गः॥ ॥अथलिंगसंग्रहप्रकारः॥ ॥सलिंगशास्त्रैः पाणिन्याद्युक्तलिंगविधानसूत्राणि तत्सहितैः कीदृशैः सन्नादिकृ

एतर्हिसंप्रतीदानीमधुनासांप्रतंतथा दिग्देशकालेपूर्वादौप्रागुदक्प्रत्यगादयः २३ इत्यव्ययवर्गः सलिंगशास्त्रैःसन्नादिकृ

तद्धितसमासजैः अनुक्तैःसंग्रहेलिंगंसंकीर्णवदिहोन्नयेत् १ ॥ तद्धितसमासजैः सन्नादयसंन्नादिप्रत्ययजो श्वकृतश्वपाकादयश्चतद्धिताश्चअणा-द्यंताः समासाश्च अदंतोत्तरपदोद्विगुः स्त्रियामित्यादयश्चजायंतेयेभ्योयैर्वा पुनः कीदृशैः शास्त्रैः प्रागनुक्तैः तत्रेहानुक्तमपिसलिंगशास्त्रेस्त्र्युक्तमित्यर्थः तैः इहास्मिन्सं ग्रहवर्गेलिंगंसंकीर्णवदुन्नहेदूहेत यथासंकीर्णवर्गेप्रकृत्यादिभिरुन्नेयंतथात्राप्युन्नयेदित्यर्थः तत्रप्रकृत्यर्थेयथा अर्धर्चाःपुंसिचेति प्रत्ययार्थेन यथास्त्रियांक्तिन् प्रकृ तिप्रत्ययार्थाद्यैरित्याद्यशब्दा क्रियाविशेषणानांनपुंसकत्वंएकत्वंचयथाशोभनंपचनीत्यादि यद्वासलिंगशास्त्रैः सन्नादिकृतद्धितसमासेभ्योजातैः शब्दैश्चेतिप्रत्ययकमूहेक रणत्वंबोध्यं पक्षद्वयेपिसन्नादीतिचिंत्यंकृदादिजभिन्नसन्नादिजानामलाभात् सनादिभ्योविहितकृज्जैरितिव्याख्यानेपिव्यर्थविशेषणत्वात् संकीर्णवर्गेयथाप्रकृति प्रत्ययाद्यैर्लिंगोहनमनुक्तलिंगशब्दविषयं तथात्रापि सलिंगशास्त्रादिभिः लिंगोहनमनुक्तलिंगशब्दविषयेबोध्यं ॥१॥ ॥ ॥

सन्नादिकृतद्धितसमासजविषयं पूर्वोक्तशद्बलिंगादन्यंल्लिंगंतस्यशेषः तस्यविधिः व्यापी व्याप्नोति पूर्वोक्तकांडत्रयस्यव्यापकइत्यर्थः अत्रोक्तैः प्रागुक्तैश्चविशेष-
विधिभिः नबाध्यतेचेत् अपवादविषयंविहाय सर्वत्रप्रवर्त्ततइत्यर्थः स्त्रियामित्यधिकारोयंप्रसीशद्बपर्यंतंज्ञेयः ईदूत् ईच्च ऊच्चएतौइकारोकारौविरामौ अंतौयस्य
तत् ईदूद्विरामंतच्चतदेकाच्चईदूद्विरामैकाच् उदा० धीः ह्रीः भ्रूः भूः ह्रः लवनंलूः प्रवनंप्रूः नयतिनीः लुनातिलूरित्यादौतुपरत्वात्कृतः कर्त्तरीतिप्रलिंगत्वं इदंत-
मुदंतंवायदेकस्वरंशद्बरूपंतत्स्त्रियामित्यर्थः योनिर्भगंतत्सहितानांप्राणिनांनामस्त्रियांस्यात् यथा माता दुहिता याता स्त्रीदाराःपुंभूम्नीतिशेषः२विद्युदादी
नांन्ही पर्यंतानांअष्टानांनामतत्स्त्रियां यथाविद्युत् तडित् रात्रिः रजनिः वल्लीप्रततिः वीरुत् वीणाविपंचीत्यादौड्याबूडंतमितिसिद्धेवीणाग्रहणं चिंत्यं केचित्तुवीणा

लिंगशेषविधिर्व्यापीविशेषैर्यद्यबाधितः स्त्रियामीदूद्विरामैकाच्सयोनिप्राणिनामच २ नामविद्युन्निशावल्लीवीणादिग्भूनदीन्ह्रियां
अदंतैर्द्विगुरेकार्थोनसपात्रयुगादिभिः ३

स्थानेवाणींपठंति वाक् गौः गीः दिक् हरित् भूः भूमिः कुःसरित् त्रिस्रोताः विपाट् न्हीग्रहणंचिंत्यं इदूद्विरामै
काजितित्रपादौड्याबूडंतमितिचसिध्दत्वात् केचित्तुधीयामितिपठंति संवित् चित् प्रतिपत् अदंतैर्मूलादिशद्बैः सहयोद्विगुसमासःसस्त्रियांकीदृशः एकार्थः एको
र्थोयस्य द्विगुरेकवचनमित्यनेनसमाहारेएकत्वविधानात् यथा दशमूली दशानांमूलानांसमारः पंचाक्षरी पंचानांअक्षराणांसमाहारः एवंत्रिलोकीषडध्यायी
त्यादि अदंतैरितिकिं पंचकुमारि पंचानांकुमारीणांसमाहारः दशधेनु पंचराजमित्यादौटचिअदंतत्वेसत्यपिपात्रादित्वान्नपुंसकत्वमित्येके पात्राद्यंतस्यनेतिनि
षेधात्उत्सर्गःप्रवर्त्ततेइत्यर्थः एकार्थःकिं पंचकपालः पंचसुकपालेषुसंस्कृःपुरोडाशःनसइति पात्रयुगादिभिरुत्तरपदैःअदंतैः योद्विगुःसस्त्रियांनस्यात् यथा पंच-
पंचपात्रं चतुर्युगं त्रिभुवनमित्यादि ३

तल्प्रत्ययः स्त्रियांभावाद्यर्थे विहितः तत्रभावे यथा शकुनता हंदेसमूहे ग्रामता गोता कर्मणिब्राम्हणता तलंतइतिसूत्रे सर्वेषांतल् प्रत्ययानांग्रहणं हंदइतिहंदे समूहेयइनि कल्यत्र यश्वइनिश्व कल्श्वत्रश्वतदंतंएतेचत्वारः प्रत्ययाः स्त्रियांतेचयथा पाशादिभ्योयः पाश्या पाशानांसमूहः वात्या वातानांसमूहः खल्या खलानां समूहः खलादिभ्यइनिः खलिनि शाकिनी गोत्रारथकड्या हंदेसमूहे किं पुस्वेभवोस्त्रयः दंडोस्यास्तीतिदंडी वैरेति मैथुनिका मिथुनस्यकर्म वैरमैथुनादीचयो वुन्प्रत्ययः सस्त्रियां नचवैरंविरोधार्थेयथा अश्वमहिषिका अश्वमहिषस्येदंवैरमित्यर्थः एवंकाकोलूकिका मैथुनिकायांयथा अत्रिभरद्वाजिका अत्रिभरद्वाजयोरियं मैथुनिका विवाहरूपसंबंधइत्यर्थः एवंकुत्सकुशिकाचतयो मैथुनिकाकुत्सकुशिका इहावुन्वैरमैथुनिकयोः इतिवुन् वुन्ग्रहणंवुञुपलक्षणंयथाका

तल्हंदेयेनिकल्यत्रावैरमैथुनिकादिवुन्    स्त्रीभावादावनिक्तिण्वुल्णचण्वुचूक्यबुजिजअङ्निशाः ४

शिका गार्गिकयाश्लाघते क्वचित् वैरमैथुनिकादिवुरिति पाठः आदिनावी प्सादौवुनोग्रहणं पादशतस्येतिदंडव्यवसर्गेतिविहितस्यग्रहणमित्यर्थः वैरेति किंवासुदेवकः अर्जुनकः स्त्रियांभावादिः स्त्रीभावादिस्तस्मिन् स्त्रियामित्यधिकृत्यभावादौयेविहिताः प्रत्ययाः अनिक्तिनादयस्तेस्त्रियांस्युरित्यर्थः स्त्रि यांक्तिन्इत्यधिकारात् अनिर्यथा आक्रोशेनञ्यनिः अकरणिः अजीवनिः क्तिन्यथा कृतिः गतिः ण्वुल्यथा प्रच्छर्दिका प्रवाहिका रोगाख्यामिनिण्वुल् आसिका धात्वर्थेतिण्वुल् णचूयथा व्याक्रोशी कर्मव्यतीतिणच् ण्वुच्यथा शायिकापर्यायेतिण्वुच् क्यप्यथा व्रज्याव्रजयेतिक्यप्    स्त्रीभावादौकिं वदः क्यपिक्यप्च ॥ मृषोद्यंब्रम्हभूयंनायंस्त्रियां युच्यथा कारणा आसना अयासश्रथेतियुच् इञ्यथा वापिः वासिः इञ्वपादिभ्यः काकारिकामकार्षीः इञुपलक्षणार्थत्वादिण्इक्च यथा    यथा आजिः इणजादिभ्यः कृषिः अङ्यथा पचा त्रपा भिदा षिद्भिदादिसूत्रेण निर्यथा ग्लानिः म्लानिः हानिः शप्रत्ययोयथा क्रियाकृञःशच्इच्छा

उणादिषुयेनिःऊः ईः एतेत्रयःस्त्रियांस्युः तत्रन्यंतोयथा श्रेणिःश्रोणिः द्रोणिःउणादिषुनिरितिपाठे अनिर्यथा धरणिः धमनिः सरणिःऊदंतोयथा चमूः कर्षूः अन्यप्र-
त्ययांतोधातुरितिस्त्रीत्वं इदंतोयथा तंत्रीः तरीः उणादिषुउक्ताइमेप्रत्ययाः अंतं आबंतं ऊडं तच्च चलंजंगमंस्थिरंस्थावरंवातत् स्त्रियांस्यात् जंगमंयथा नारी
शिवा ब्रम्हबधूः स्थावरंयथा कदली माला कर्कंधूः तच्छद्देना ऽत्रमुष्ट्यादिकंनिर्दिश्यते तेनायमर्थः तन्मुष्ट्यादिकंप्रहरणंयदिक्रीडायांवर्ततेतर्हितस्मिन्नर्थे
विहितोणप्रत्ययःस्त्रियां दिगित्यनेनोक्तोदाहरणोद्देशः तेन दांडामौसलेतिचोदाहर्त्तव्यं मुष्टिःप्रहरणमस्यांक्रीडायांमौष्टा पल्लवःप्रहरणमस्यांक्रीडायांपाल्ल
वा तदस्यांप्रहरणमितिक्रीडायांणः क्रीडायाविशेष्यत्वात्स्त्रीत्वं ५ सायथंतवाच्यादंडपातादिक्रीऽस्यांफाल्गुन्यादिकायामित्यर्थे घञंताद्धिहितोयोञप्रत्ययः

उणादिषुनिरूरीश्चऋ्याबूडंतंचलंस्थिरम् तत्क्रीडायांप्रहरणंचेन्मौष्टा पाल्लवाणादिकं ५
घञोयःसाक्रियास्यांचेद्दांडपाताहि फाल्गुनी श्यैनंपाताचमृगयातैलंपातास्वहेतिदिक् ६

सस्त्रियांस्यात् स्त्रियामेवञप्रत्ययप्रत्ययविधानात् उदाहरणं दंडपतोस्यांफाल्गुन्यादांडपाताफाल्गुनी एवंश्येनपातोस्यां श्यैनंपातामृगया तिलपातोऽस्यांधा-
स्वक्रियायांतैलंपाता श्येनतिलस्येतिमुम् पितृदानेस्वधामतमित्यमरमाला वररुचिनातुस्वधाक्रियाप्रवेणीतिस्त्रीलिंगत्वोक्ता इतिशद्धेनमुसलपातोऽस्यांमौसलपाता
भूमिरित्यादिसिद्धिः क्वचिद्देशेफाल्गुनपौर्णमास्यांदंडपातेनक्रीडाभवतीतिदिगित्यनेनदांडपातादिकंउदाहरणमितिसूचितं ॥ ६ ॥ ७ श्री सीतारामप्रसन्न ॥ ७

यदि अपचये ऽल्पत्वे विवक्षा वक्तुमिच्छा स्यात्तर्हि मृणाल्यादयः स्त्रीलिंगास्युः यथा अल्पं मृणालं मृणाली आदिशब्दाद्यथा ह्रस्वो वंशो वंशी गौरादित्वान्ङीप् अपचय एव स्त्रीत्वदर्शनात् एवं कुंभी प्रणाली छत्री पटी पेटिका काचिदिति किं अल्पो वृक्षो वृक्षक इत्यादि न स्त्रियां अथ ज्या बुबलमित्यादिनोक्तलिंगानामपि केषांचिन्नाम्नां सुखेन लिंग ज्ञानाय पृथक् पठकांतादिक्रमेणाह लंकेति लंका राक्षसपुरी रमंते स्यां बाहुलकात् शेफालिका पुष्पभेदः वृक्षभेदश्च सबुनिर्गुंडी इति प्रसिद्धः टीका पदविषय पदव्याख्या धातकी वृक्षभेदः धायटी इति प्रसिद्धा पंजिका निःशेष पदव्याख्या अढकी तुवरी तूर इति प्रसिद्धा ७ सिध्रका सेधति सिध्यनेवा षिधु गत्यां बहुलं रक् स्वार्थे कः क्षिपकादित्वादित्वं वृक्षभेदः सारिका सगति सृगतौ ण्वुल् तालव्यादि पाठे शॄ हिंसायां धातुः शृणाति दुःखं विरहिणी मांसासिका पक्षिभेदः साळुंकी इति प्रसिद्धा हिक्का हि

स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि लंका शेफालिका टीका धातकी पंजिकाढकी ७ सिध्रका सारिका हिक्का प्राचिकोल्का पिपीलिका तिंदुकी कणिका भंगिः सुरंगा सूचिमादयः ८

क्कनं हिक्क अव्यक्ते शब्दे गुरोरित्यः यद्वा हिक्कयते हिक्क हिंसायां अच् ऊर्ध्ववालप्रवृत्तो शब्दविशेषः उचकी इति प्रसिद्धा प्राचिका प्राचति अंचु गतौ ण्वुल् वनमक्षिका पक्षिभेद इति स्वामी उल्का ऋच्छति अर्यते वा ऋ गतौ शक् इति साधुः उल्का तेजःपुंजः पिपीलिका अपी पील्यते पील प्रतिष्टंभे वष्टि इति अलोपः मुंगी इति प्रसिद्धा शनैर्याति पिपीलिक इति पुंस्त्वमपीति स्वामी तिंदुकी वृक्षभेदः टेंभुरणी इति प्रसिद्धा तिम्यति तिम आर्द्रीभावे बहुलं दुक षु कणिका कणति कण गतौ अच् स्वार्थे कन् परमाणुरित्यर्थः भंगिः कौटिल्यभेदः विच्छित्तिर्वा तदुक्तं रभसे व्याजच्छलनिभे भंगी भंगिर्दिर्मीलनिर्मीलिकेति भंगस्य करणं क्तेनिर्ण्यंतादिच् इः सुरंगा विवरभेदः सुरुंग इति ख्यातः सुष्ठु रज्यते स्यां रंज रागे हलश्चेति घञ् कुत्वं सूचिः व्यधनी सूच्यते नया सूच पैशुन्ये चुरादेर्ण्यंतादिच् इः तदुक्तं रत्नकोशे स्त्री सूचिर्नृत्यभेदे च व्यधनी शिखयोरपीति मादिः मह पूजायां क्विन् ह्रस्वदः धत्तं धुलंदीर्घः तदुक्तं हेमे मादिर्दैन्यपत्रशिरेति मादिः स्त्री पत्रभंगे च देन्यस्यापि प्रकाश इत्युक्त

पिच्छ पिच्छयते पिच्छ बाधे गुणेरित्यकारः शाल्मलिनिर्यासः भक्तादिमंडश्च तदुक्तं हैमे पिच्छा शाल्मलिवेष्टके पंक्तिपूगत्वचष्टाकोशमंडश्वपदामये मोचायां पिच्छला इति विनंडा वालभेदः विनंडयोपरपक्षोनया नडिआघाते शुराध्वहलः काकिणीपणचतुर्थांशः तदुक्तं मेदिन्यां काकणीपणतुर्यांशे मानदंडेच दृश्यते कृष्णलेकवराट्योः स्याद् मानस्यांशकेपिचेति काकमणति अणशब्दे कर्मण्यण् पृषोदरादिः रभसस्तु नांतेष्वप्याह तत्र अन प्राणने धातुर्बोध्यः पणादमानदंडानां तुर्यांशेपिचकाकिनीति आढकस्य पंचाशत्तमो भागउद्मानं तदुक्तंच गणितावल्यां कुडवास्याद्दशमिर्द्रौणौ द्रोणपादेनचारकः अतोर्धशतिकोभागउद्मानमुदाहृतमिति चूर्णि· चूर्णयतेरिवड्

पिच्छाविनंडाकाकिण्यश्चूर्णिःशाणीद्रुणीदरत् सालिः कंथानयासह्नीनाभीराजसभापिच १

चूर्णिका शाणी शणस्यविकारः तस्यविकारइत्यण् शाणीशाणपटविशेषः निकषइतिस्वामी शाणइत्यपे द्रुणी द्रुणतिकः द्रुणजैह्म्येचधेगतौ द्रुणीकर्णजलौकेत्यर्थः तदुक्तं हैमे द्रुणीकूर्म्यांजलद्रोण्यामिति दरत् दीर्यते दृविदारणोभयेवा अदिप्रत्ययः दरत्स्त्रियांप्रपातेपिभयपर्वतयोरपीत्युक्तं॰ म्लेंच्छजातिरित्यर्थः सालिः उलिसूतीतिसाधुः सालिर्दानावसानयोरित्यु॰ म्लेच्छजातिरित्यर्थः कंथा कम्यते कमुकांतौ कंथामृन्मयभित्तौस्यात्तथा प्रावरणांतरइत्युक्तं॰ आसंदी आस्यतेस्यां आसउपवेशने अह्नादिः आसनभेदइत्यर्थः वेत्रासनमितिकेचित् नाभिः नभ्यतेनयास्यां णभहिंसायां इणजादिभ्यः अंगविशेषणइत्यर्थः नाभिर्मुख्यनृपेचक्रमध्यक्षत्रियेयोःपुमानद्वयोः द्वयोःप्राणिशरीरेस्यात्स्त्रियांकस्तूरिकामदइत्युक्तत्वात् राजसभा राज्ञःसभा तत्पुरुषः सभाराजेत्यस्यायवादोयं १ ॥ श्रीसांबसदाशिवप्रसन्न ॥ ॥ ७ ७ ७ ७ ७ ७

झल्लरी झर्वते झर्झभत्सोक्त्योः बाहुलकादरन् पृषोदरादिः तदुक्तं मेदिन्यां झल्लरी झल्लरी च हुडुक्के वालचक्रकइति वाद्यभेदइत्यर्थः चर्चरी चर्च्यते चर्चउक्तौ बहुलंअर न् गौरादिः करशब्दइत्यर्थः तदुक्तं कोशांतरे चर्चरी गीतभेदे च केशभित्करशब्दयोरिति पारी पार्यते पार्यतेवा पृपूर्तौ पचादिः तदुक्तं हैमे कर्कशीपूरयोः पारी पादरज्ज्वां च ह स्तिनः हस्तिपादरज्जुरित्यर्थः होरा होलति हुल्यते वा हुलहिंसासंवरणयोः अचू घञ्वा होरा तुलग्ने राश्यर्द्धे शास्त्रे रेखा प्रभेदयोरिति हैमः लट्वा लटति लट बाल्ये क्वन् तदुक्तं मेदिन्यां लट्वा करंज भेदे स्यात्फलेवाद्ये खगांतरइति लट्वायामचटकइत्यर्थः सिध्मला सिध्ममत्स्यस्याः मत्वर्थे क्तन् सिध्मलामत्स्यविकृतौ वाच्यवत्तु किला सिनीति मेदिनीकारः तदुक्तं च त्रिकांडशेषे सिध्मलाशुष्कमांसेस्त्री त्रिलिंग्यां तु किलासिनीति लाक्षा लक्ष्यते लक्षशिल्पयोगे बहुलं सः जतुइत्यर्थः लिक्षा लक्ष्यते

झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला लाक्षा लिक्षा च गंडूषा गृध्रसी चमसी मसी १०॥ ॥ इति स्त्रीलिंगसंग्रहः॥

लक्ष आलोचने घञ् पृषोदरादित्वात् इः लिक्षा यूकांडमित्यर्थः गंडूषा जलादिना मुखपूरणमित्यर्थः गंडयते गडि वदनैकदेशे गंडे भ्रेत्यूषन् पुंस्यपिस्यात् तदुक्तं रु द्रे गंडूषो मुखपूर्तौ स्याद्धजहस्तांगुलावपि प्रसृत्या प्रमिते पि स्यादिति उन्नताना भिस्तु गंडूषा नापि मुखपूर्तिरिति बोपालितः गृध्रसी वातरोगभेदः गृध्रं स्यति मनु ऊरुसंधौ भवति चमसी यज्ञपात्रभेदः चम्यते चमु अदने असच् गौरादिः चमसो यज्ञपात्रस्य भेदे स्त्री पिष्टकेक्लियामित्युक्तं मसी कज्ज लं मस्यति मसीपरिणामे अच् तदुक्तं त्रिकांडशेषे मेलामसीजलं पत्रांजनं च स्यान्मषिद्वयोरिति ॥१०॥ ७ ७ ७ ७

अथपुल्लिंगसंग्रहः पुंस्त्वेइतिपदहूहगइपर्यंतमधिकारः सभेदानुचराः भेदैस्तुषितसाध्यादिभिः अनुचरैः सनंदादिभिःसहिताः सुरासुराः सुराश्चासुरा
श्चदेवदैत्याः सपर्यायाः पर्यायैःसहिताःपुंसि केसुरपर्यायायथा अमरानिर्जरादेवाइत्यादयः केतद्भेदायथा तुषिताःसाध्याः इंद्रोमरुत्वान्मघवास्वरःसूर्योर्य
मा हाहाहूहूःतुंबुरित्यादि अनुचरायथा विष्णोरनुचराजयविजयप्रभृतयः रुद्रानुचरानंदिकेश्वरादयः एवं असुरपर्यायाः दैत्याः दैतेयाः दानवाइत्यादयः तद्भे
दाःदैत्यभेदाः बलिनमुचिजंभादयःदैत्यानुचराः कूष्मांडरंडमुंडादयः एवंसर्वत्रऊह्यं एतेषामपिदेवतानिपुंसिवादेवतास्त्रियामित्यादिबाधकंस्मारयिष्यति अबा
धिताइति वक्ष्यमाणेन स्वर्गादयः एकोनविंशतिःसभेदाःसपर्यायाश्चपुंसिस्युः अनुचरासंभवात्तावन्मात्रंसंबध्यते स्वर्गपर्यायोयथा स्वर्गोनाकस्त्रिदिवइत्यादिः द्यौ

पुंस्त्वेसभेदानुचराःसपर्यायाःसुरासुराः स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ ११ ॥

दिवौद्वेस्त्रियामित्यादिबाधकंबलवत्तरंतद्भिन्नापुंस्त्वं यागः यज्ञः मखः क्रतुः तद्भेदाः उक्थातिरात्राग्निष्टोमाश्वमेधादयः इष्ट्यादेर्बाधितत्वंवक्ष्य
ति अद्रिः गिरिः पर्वतः तद्भेदाः मेर्वादिहिमवत्यादयः एतेषांमध्येपवादः चेतुकः शैलवर्गे मेघोघनइत्यादिः पर्यायः भेदआवर्त्तादिः अभ्रस्यतुअभ्रं मेघइति
क्लीबपाठो बाधकः अब्धिः समुद्रइत्यादयः समुद्रपर्यायाः क्षीरोदादिभेदः द्रुर्वृक्षः शाखीत्यादिपर्यायः वटादिर्भेदः अत्रापिक्वचिद्रूपभेदादिना पाटलादि
शीपादौ अपवादाउक्ताः कालोदिष्टःसमयःएवंपर्यायः मासादयोभेदाः अदिना पक्षाः ऋतुः दिनतिथ्यादौबाधः असिः खड्गः नंदकादयोभेदाःअदिना मंडलाग्रः चंद्र
हासः करवालःइत्यादौबाधःस्यादीलिःकरपालिकारूपःशरोबाणः भेदोनाराचादि अदिना कांडःमलुःविशिखःइषुर्द्वयोरितिबाधःअरिःशत्रुःअरातिःभेदआततायादिः ११

करः राजग्राह्योभागोरश्मिः पाणिश्च मरीच्यादीनांतु पुंस्त्वं बाधितं मरीच्यस्त्रीत्युक्तत्वात् गंडः कपोलः ओष्ठोदंतच्छदः दशनवसनादित्तुरूपभेदात् बाधितं दीः प्रवेष्टः भुजादेर्द्वयोरितिबाधः दंतोरदः भेदोजंभः कंठोगलः समीपगलभेदेषुकंठंस्त्रियुविदुर्बुधाइतिशाश्वतः केशः कचः नरवः पुनर्भवः नरवरोस्त्रियामितिबाधः स्तनः कुचः पयोधरः एतेयथासंभवंसभेदपर्यायाः पुंसि अन्हः अहश्च अंतेयेषांते अन्हाहांताः पुंसिस्युः तेचयथा अन्हः पूर्वंपूर्वाण्हः अन्हः अपरंअपराण्हः द्वयोरन्होः समाहारः द्व्यहः त्र्यहः उभयत्रनसंख्यादेः समाहारेइत्यन्हादेशोन अत्रनपुंसकमितिअस्यापवादः क्ष्वेडोविषं तद्भेदाः पुंसिस्युः यथासौराष्ट्रिकः शौक्लिकेयः ब्रह्मपुत्रः अत्रगरलं विषंपुंसिक्लीबेच काकोलमित्यादिबाधितं रात्रांताः रात्रोअंतोयेषांते अन्नराभ्रो रदंतत्वंसमासांतेन प्रागसंख्यकाः प्राक्पूर्वंपदंनसंख्यायेषांते पुंसिस्युः परवल्लिंगला

करगंडोष्ठदोर्दंतकंठकेशनखस्तनाः अन्हाहांताः क्ष्वेडभेदाः रात्रांताः प्रागसंख्यकाः १२ श्रीवेष्टाद्याश्चनिर्यासाअसन्नंताअबाधिताः कशेरुजतुवस्तूनि

पवादोयं परत्वात्समाहारनपुंसकतामपिबाध्यते तेनाहोरात्रः अहश्चरात्रिश्चसर्वरात्रः अपरात्रः पूर्वरात्रः प्राक्संख्यकाइतिकिं पंचरात्रं गणरात्रं पुण्यंरात्रश्चार्धर्चादिपाठात्क्लीबत्वंच १२ श्रीवेष्टाद्याः येनिर्यासाः वृक्षद्रवाः तेपुंसिस्युः श्रीवेष्टः आद्योयेषांते श्रीवेष्टः सरलः श्रीविष्टपूइनिकृत्तिसाठः आद्यशब्दात् श्रीवासघृतधूपादीनांग्रहणंचानुग्गुलसिल्हकादयः असन्नंताः अस्च अन्च नावंतौयेषांते द्यच्छमसिन्नसन्नंतमित्यादिनावक्ष्यमाणेन अप्सरआदीनांपूर्वोक्तेनचबाधके नाबाधिताश्चेत्पुंसिस्युस्तत्र अदिनाजलौकसः समनसः तेअसंतायथा अंगिराः चंद्रमाः वेधाः पुरोधाः अन्नंतायथा कृष्णवर्मा मघवा अबाधिताइति किंइदंलोम इदंसाम इदंवर्म ॥

तुरुविरामकाः तुश्चरुश्च तुरू तौविरामौ विरामेचायेषांते एतादृशाः तुशद्बांताश्चरुशद्बांश्च पुंसिस्युः तेयथा धातुः हेतुः सेतुरित्यादि कुरुः मेरुः स्वरुः किंशारु रित्यादि कशेरुजतुवस्तूनि हित्वेतिव्यर्थं अबाधितादइत्यस्मा न्वयस्यसंभवात् वस्तुनस्त्ववाधितोइत्यपिव्यर्थं विशेषैर्यद्बाधितइत्यनेनैवनिर्वाहात् अतएवदा रुअश्वादिषुनिर्वाहः तत्रकशेरुअस्थिविशेषः तृणविशेषोवाजतुलाक्षेत्यर्थः १३ कषणपदयाः षट्वर्णउपांते अंत्यसमीपेयेषांते तथा यदीति यदिएतेकादिवर्णष ट्कोपांताअदांताः स्युस्तर्हिपुंसिभवंति यथा अंकः अर्कः लोकः स्फटिकः शल्कवल्कादिषुबाधितंपूर्वं भाषः तुषः रोषः ओषप्लोषप्लुक्षादयः षोपांताः अर्यादयस्तु पूर्वेबा धिताः पाषाणः गुणः घुणः किरणादयोणोपांताः विषाणादिबाधितं कौस्तुभांशारभगर्धभदर्भादया भोपांताः कुसुमादिबाधितं होमग्रामधूमस्तोमव्यायामगुल्मादयः॥

हित्वातुरुविरामकाः १३ कषणभमरोपांतायद्यदंताअमीअथ पथनयसटोपांतागोत्राख्याश्चरणाह्वयाः १४ ॥ ७ ॥

मोपांताः पद्मादेर्वापुंसि स्यादिनाबाधितत्वं समीरकेशरमारसीकरझर्झरादयः रोपांताः अजिरादेर्बाधः पकारादिवर्णषट्कोपांताः अबाधिताश्चेत्पुंसिस्युः अत्रयद्यंताइ तिपूर्वोक्तंनसंबध्यते अथादित्वात् पकारोपांताःयथा यूपस्तूपकूपकलापादयः कुतपादिर्बाधः थकारोपांताः सार्थस्वार्थअर्थनाथशपथादयः नोपांताःस्त इनअपघनजनमन्त्रादयः योपांताःरयधिनयतंतुवायव्ययअयादयः मृगयादिस्तुबाधितः सोपांताःमानसपनसरसहासादयः बिसादिर्बाधितः टोपांताःपटघटकरटहाटादयः किरीटादेर्बाधितः गोत्रेतिगोत्रवं शःतस्मिन्नाख्यासंज्ञायेषांतेगोत्राख्याऋषिसंज्ञकाः गोत्रस्यादिपुरुषाः येप्रवराध्यायपठिताः येप्यन्येअपत्यप्रत्ययंविनागोत्रवाचित्वेनलोकेप्रसिद्धास्तेपुंसिस्युः यथावसिष्ठः गोत्रमस्माकं एवंकश्यपवत्सादयः चरणानांवेदशाखानांआह्वयाः नामानिपुंसिस्युः यथा कठकः बह्वृचइत्यादयः १४ ७ ७ ७ ७

नाम्निसंज्ञायां अकर्त्तरि चकारकेभावभावेभचविहितास्ते घञादयः सम प्रत्ययाः पुंसिस्युः भावेचेतिचकारादसंज्ञायांनघञ्गृहीतः घञंतायथा भास्यनइतिभासः कर्मणिघञ्
विदंति अनेनवेदः प्रपतत्यस्मात्प्रपातः भावः पाकः पजिचजोरिनिकुत्वं त्यागः रोगः अच् यथा जयः चयः नयः एरच् अप् यथा करः गरः लवः लवः नङ् यथा यत्नः प्रश्नः क्यांचे
त्यवतुपुंस्त्वंवाधितं नङ्उपलक्षणार्थत्वात् स्वपोनन् स्वप्नः स्वप्नसंवेशइत्यपीतिवापुंस्त्वसिद्धिर्बोध्या णप्रत्ययोयथा न्यादः नौणचेतिसूत्रेण घप्रत्ययोयथाउरच्छदः अ
थुच् यथा वेपथुः ल्युरिनि कर्त्तरिनंद्यादित्युः पुंसिस्यात् यथानंदनः रमणः मधुसूदनः भावेपृथ्व्यादिभ्योयइमनिच् सपुंसिस्यात् यथा पृथोर्भावः प्रथिमा महिमा भावइ-
तिकिं दृणोतीतिवरिमा पृथ्वीभावेइतिशाह्वोदेहलीदीपन्यायेन पूर्वत्रपरत्रचसंवध्यते भावेकोयथा आकूत्यः सर्पातिकः ग्रस्थः पञ्थेकः प्रादितः अन्यत्तश्चपरोयोपुंसं

नाम्न्यकर्त्तरिभावेचघञजब्राङ्णघाथुच ल्युःकर्त्तरीमनिच्भावेकोघोःकिःप्रादितोन्यतः १५ द्वंद्वेश्ववडवावश्ववडवानसमाहृते॥
कांतःसूर्येंदुपर्यायपूर्वोयःपूर्वकोपिच १६ वरकश्चानुवाकश्चरल्लुकश्चकुडंगकः॥

घोधातुस्तस्माद्विहितः किप्रत्ययः पुंसिस्यात् दाप्दैपौविनादारूपोधास्
पश्चधातुर्घुसंज्ञकः प्रादितोयथा प्रधिः निधिः विधिः आदिः आङ्पूर्वोदाधातुः किप्रत्ययः अन्यतोयथाजलधिः कर्मण्यधिकेतिकिः इषुधेस्तुद्वयोरितिवाधितत्वं १५ असमाहृते समा
हारादन्यत्रद्वंद्वे द्वंद्वसमासेश्ववडवौ अश्वश्चवडवाच पुंसिस्यात् नयैवाश्ववडवान् अश्ववडवौइतिद्विवचनमनंत्वं समाहारेतुअश्ववडवंक्लीवं विभाषावृक्षमृगेतिवैकवद्भावः सूर्यचंद्रप
र्यायपूर्वकःकांतशब्दःपुंसि यथा सूर्यकांतः चंद्रकांतः अयस्कांतः अर्कत्वांतेंदुकांतलोहकांताइतिपर्यायास्युः १६ वरकः वरति वरवेष्टने माषपिष्टविकार इत्यर्थः अनुवाकः अनुउच्यतेक्व
[illegible] कर्मण्यनुकुलत्वं [illegible] रल्लुकः [illegible] लूयते लक आस्वादने पुसीतियः रल्लुचासौलकश्च पक्ष्मकंबलपर्यायवाचकोपि कुडंग
कः कुटनिकुटकौटिल्ये क्विप् कुट् अंगमस्य कुडंगकइति क्वचित्पाठः कुडगकोवृक्षलतागहनमितिगुरवः॥ ॥ ॥

पुंखः पुमांसंखनतिपुंसाखन्यतेवा खनुअवदारणे डः पुंखश्च बाणावयवइत्युक्त० न्यूंखः न्यूंख्यते उखिगतौ पुंसीतिघः सामवेदेनिपातित ओंकारः न्युंखइतिह्रस्वो कारोपि तदुक्तंमेदिन्यां न्युंखः सम्यग्मनोज्ञेचसाम्नः षड्भवर्णेपिचेति समुद्गः समुद्गम्यते गम्लृगतौ डः संपुटकपर्यायवाचकइत्यर्थः विटः वेटति विटआक्रोशे इगुपेतिकः तदुक्तंमेदिन्यां विटोद्रौखदिरेषिंगेमूषिके खदिरेपिचेति विटोधूर्तः पट्टः काष्ठादिरचितआसनविशेषः पटति पट्टतेवा पटगतौ टः तदुक्तंहैमे पट्टः पेषणपाषाणेव्रणादीनां-चबंधने चतुष्पथेपराजादिशासनांतरपीठयोरिति धटः तत्थते तस्उच्छ्राये तस्यधः धन्यतेवा धनशब्दे तदुक्तंमेदिन्यां धटोदिव्यतुलायांस्याध्द्टीचीरेचवाससइति परिक्षार्थतुलायांच धटः सूरिभिरिष्यतइतिविश्वश्च खटः खटकायांघः तदुक्तंहैमे खटोंधकूपककफयोः प्रहरांतरटंकयोरिति १७ कोट्टारः कुट्यते कुट्टः छेदने प्रतापनेवा बाहु

पुंखोन्यूंखः समुद्गश्चविटपट्टधटाःखटाः १७ कोट्टारघट्टहट्टाश्चपिंडगोंडपिचंडवत् गड्डुः करंडोलगुडोवरंडश्चकिणोघुणः ॥ १८ ॥

लकादारः शुणः तदुक्तंरभसे कोट्टारोनागरेकूपेपुष्करिण्यांश्चपाठकेइति घटः घट्यतेस्मिन् घट्टचलने हलइतिघञ् घाटेतिलोकावदंति केचित्तु कोट्ट अरघट्टइति छिलाकोट्टु गंपुरं अरघट्टः कूपभेदइति अरैश्चक्रावयवसमैः काष्ठविशेषैर्घट्यतेरच्यतेअरघट्टः कूपाज्जलनिःसारणार्थेघटीयंत्रंराहाटइत्यन्ये हट्टः हटंत्यत्र हटदीप्तौ बकुलंटः आपणइत्यर्थः पिंडः मृगादिसंघातवाचकः स्यात् पिंडते पिंड्यतेवा पिडिसंघाते अच् घञ्वा पिंडोबोलेबलेसांद्रेदेहागारैकदेशयोरित्युक्त० गोंडः गोरंडइव नाभिः गोंडोपामरजातौच हृद्धनाभौचसंमतइतिरुद्रः पिचंडः उदरं पिचिंडइत्यपि अपिचंडतेनेनात्रवा चडिकोपे घञ्अलोपः तदुक्तंमेदिन्यां शस्तेपिचंडउदरेपशोरवयवेपुमानिति पिचंडवत् गंड्वादयोपिपुंसीत्यन्वयः गड्डुः गलगंडः गडतिगड्यतेवा गडसेचने बहुलंउः गड्डुः पृष्ठगुडेकुब्ज इतिविश्वः करंडः वंशादिकृतभांडविशेषः क्रियतेडु कृञ् अंडन् तदुक्तंहैमे करंडोमधुकोशेसोकारंडवेदलाटकइति लगुडोवंशादिदंडः लगति लगसंगे उडच् वरंडोमुखरोगः वृणोति व्रियतेवा वृञ्वरणे अंडन् वरंडोप्यंतरावेदौसमूहमुखरोगयोरित्युक्त० किणः कणति कणगतौ पचाद्यच् पृ

षोदरादिः किणोमांसग्रंथिभेदः व्रणजंचिन्हंचघुणाः घोणते घुणभ्रमणे इगुपेतिकः तदुक्तंरत्नकोशे घुणःस्यात्काष्ठवेधकइति काष्ठकृमिरपि १८ हृतिः ह्रियते हृङ् आदरे तदुक्तंमे
दिन्यां हृतिश्चर्मपुटेमत्स्येनेति चर्मपुटकइत्यर्थः सीमंतः केशविन्यासः शंकंध्वादिः हरितः हरति ह्रियतेवा हृञ्हरणेइतिमत्यय: हरित्पालाशवर्णः तदुक्तंमेदिन्यां हरिद्दि-
शिस्त्रियांपुंसिहयपर्णविशेषयोःअस्त्रियांस्यात्तृणेचेति रोमंथः पृषोदरादिः परन्नांचर्वितचर्वणं उद्गीथः उद्गीयते गैशब्दे थक्ईत्वं उद्गीथः प्रवणः सामवेदध्वनिरित्यर्थः
णः बुद्बुदः जलविकारः बुदित्यव्यक्तध्वनिंबुंदतिकरोति उबुंदिरनिशाणे मूलविभुजादित्वात्कः नलोपः कासमर्दः गुल्मभेदः अर्बुदः अरंबुंदति उबुंदिर् केनलोपः अर्बुदोमांसकी
लेस्यात्तुकषेदशकोटिषुइतिमेदिनीकारः अर्दनि अर्दगतौ रम्भिः कुंदः स्कुंदते स्कुंदिआप्रवणे अच् पृषोदरादिः तदुक्तंहैमे कुंदोमाघ्येस्त्रीमुकुंदभ्रामिनिध्यंतरेषुनाइति

हृतीसीमंतहरितोरोमंथोद्गीथबुद्बुदाः · कासमर्दोर्बुदःकुंदःफेनस्तूपोसयूपकौ १९ आतपःक्षात्रियेनाभिःकुणपक्षुरकेद
राः पूरस्क्ररमचुक्राश्च ॥ फेनः जलविकारः स्फायते स्फायीवृद्धौ स्फेनमीनाविति साधुः स्तूपः वटकादिः स्तूपते ष्टुञ्स्तुतौ स्तूप्यतेवा ष्टुपसमुच्छ्राये ए
नोपूपश्च पुनाति पूयतेवा बाहुलकात्यक् गुरवस्तुयूपशब्दंपठंति यौति यूयते वा यूमिश्रणे मिश्रणेच १९ आतपः आतपति तपसंतापे अच् क्षात्रियेनाभिः
स्यात् क्षत्रियवाचीनाभिशब्दः पुंसीत्यर्थः कुणपः कुणंपातिपिबतिवा तदुक्तंमेदिन्यां कुणपःपूतिगंधोशवेपिचेति क्षुरः क्षुरति क्षुरविलेखने इगुपेतिकः वपन
शस्त्रमिति तदुक्तंमेदिन्यां क्षुरःस्यात्छेदनद्रव्ये कोकिलाक्षेचगोक्षुरइति केदरः व्यवहारपदार्थः केदृणाति दृविदारणे अच् यद्वा केदीर्यते पूरः पूरयति पूरपूरणे
पूरःस्यादंभसांवृद्धौ व्रणसंशुद्धिखाद्ययोरिति हैमः क्षुरमः बाणविशेषः क्षुरमातिक्षुरइवभातिवा मापूर्त्तौ कप्रत्ययः मुकुटस्तुक्षुरप्रइतिकवर्गादिनी यंपठति
चुक्रः शाकभेदः चक्यतेनेन चकतृप्तौ प्रतिघातेच रक् उत्वंच चक्रस्त्वम्ले स्तुलवेतसइतिहैमः ॥ ॥ ॥

गोलः वर्तुलपिंडः गुड्यते गुडरक्षायां घञ् रलयोरकत्वं गोला गोदावरीसख्योः कुर्नदी दुर्गयोः क्रियामित्यकत्त॰ हिंगुलः हिंगुंलातिकः रागद्रव्यविशेषः तदुक्तं मेदि
न्यां हिंगुलो षर्णकद्रव्येना भंदाक्यांतु हिंगुलीति हिंगुलुः स्यात्तु हिंगुलमितिमुकुटः उदंतपस्रेडुः पुद्गलः पुन्गलति गल अदने लत्वं पचाद्यच् आवेशा पृदितिकुत्सा-
पामव्ययं तदुक्तं मेदिन्यां पुद्गलः सुंदराकारेभिक्षुपुंस्यात्मदेहयोरिति मेदिनी २० वेतालः वीवायुरितो गतो भस्मात् सवेतः वेतमलति अलभूषणे कर्मण्यण् यद्वा वे
धावेतालः भतिष्ठायस्य भूताविष्टशवइत्यर्थः भलुः भलते भल्यतेवा अच् घञ्वा भल्लपरिभाषणहिंसादानेषु भलुः स्यात्पुंसि भल्लूकइति मेदिनी मल्लः मल्लते मल्लधा
रणे अच् इत्याधूत्वं मल्लः पात्रे कपाले च मत्स्य भेदे वलीयसी त्यक्त॰ मल्लोबाहुयुद्धकुशलः पुरोडाशः तदुक्तं विश्वे पुरोडाशो हविर्भेदे च भस्यापि षकस्यव रसेसोम-

गोलहिंगुलपुद्गलाः २० वेतालभल्लमल्लाश्च पुरोडाशोपिपट्टिशः कुल्माषो रभसश्चैवसकटाहः पतद्ग्रहः २१ ॥ इतिपुल्लिंगशेषः ॥

लतायाश्च कुतशोषेच कीर्तितइति पुरः भथम मंदाशौत्येतं दाशृदाने घञ् पृषोदरादित्वाद्‌डादेशः पट्टिशोस्त्रभेदः पट्टिं श्यति शोतनूकरणे आतइतिकः पट्टिस्त्री पट्टभेदे-
स्या लुलादेकुंभिकाद्रुमेइत्यक्त॰ पट्टिसइति दंत्यसांत्यइति मुकुटः कुल्माषः अर्धस्विन्नोयवः कुत्सितमाषोवा तदुक्तं मेदिन्यां कुल्माषं कांजिके यावके पुमा
निति कुल्माषोपावके भोक्तः कुल्माषं कांजिकेपि च इति विश्वः कुलंमषति मषहिंसायां कुलसंस्त्याने संपदादिः अपेअण् रभसः हर्षः रभनेनेनवा रभराभस्येअसच्
रभसोहर्षवेगयोरिति विश्वः सकटाहः कटेनातिशयेनाहन्यते गम्यते हनार्हिंसागत्योः डः कटाहो घृततैलादिपाकपात्रेपि कर्परे कटाहः कूर्मपृष्ठे च सूपे च माहिषी
शिशौ इति विश्वः पतद्ग्रहः गृह्णाति ग्रहउपदाने पचाद्यच् पतत स्तांबूलादेर्ग्रहः पीकदानीइति भोक्ता ॥२१॥ ॥इति पुल्लिंगशेषः॥ ॥

हि हीनं द्वाभ्यां स्त्रीपुंसाभ्यां हीनेन नपुंसके अधिकारोयमा वाल्हकात् श्लोकद्वये प्राधान्येन निर्दिश्य खादि शब्दाः षड्विंशति पर्यायैः सह क्लीबे अत्रान्यदिति बाधित
त् यदन्यत्तदेव क्लीबमिति सावधानार्थमुक्तं चकाराद्रूप्याभरणादि संग्रहः खमिंद्रियं व्योम च तद्यथा छिद्रं नभः वियत् इत्यादि खनति खन्यते वा खनुअव
दारणे डः खमिंद्रिये पुरे सौत्र शून्य विंदौ विहायसि संवेदने देवलोके शर्मण्यपि नपुंसकम् इत्युक्तं० अरण्यं विपिनं काननमित्यादि अर्यते ऋगतौ पर्णं पत्रं दलं प
र्णपत्रं किंशुके चेति मेदिनी पर्णयति पर्ण हरितभावे अच् श्वभ्रं श्वभ्रयति श्वभ्रो बिले पेतं केइत्युक्तं० पानालमित्यादीत्यर्थः हिमं तुषारं प्रालेयमित्यादि हंति हंतेर्हि
चेति मन् तदुक्तं मेदिन्यां हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकमिति उदकं तु जलं नीरं उनत्ति उंदी क्लेदने क्वुन् नलोपः शीतं श्यायतेस्म श्यैङ् गतौ क्तः संप्रसार

हि हीनेन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् शीतोष्णमांसरुधिरमुखाक्षिद्रविणंबलम् २२

णं तदुक्तं मेदिन्यां शीतं हिमगुणे क्लीबं शीतलालसयोस्त्रिषु इति उष्णं निगममित्यादि ओषति उषदाहे नक् तदुक्तं मेदिन्यां उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिं
गकइति शीतोष्णं गुणे क्लीबं तद्वति त्रिषु इत्यर्थः मांसं मन्यते मनज्ञाने सः मनेर्दीर्घः मांसं स्यादामिषे क्लीबं कक्कोलीजडयोस्त्रियामित्युक्तं० रुधिरं रुणद्धि रुधिर् आवरणे किरच् रुधिरोंऽगारके पुंसि क्लीबं तु कुंकुमासृजोरित्युक्तं० मुखं खन्यते खनति वा तदुक्तं मेदिन्यां मुखं निःसरणे वक्त्रे प्रारंभोपाययोरपि संध्यंतरे नाट
कादेः शब्देपि च नपुंसकमिति अक्षि अश्नुते अशू व्याप्तौ संघाते च अशेर्णित् द्रविणं द्रविणं नद्द्यौर्वित्तेकांचने च पराक्रमइत्युक्तं० अक्षिशब्दात् नयननेत्रयोर्ग्रहणं
बलं बलते बलसंवरणे बलं गंधरसे रूपे स्थामनि स्थौल्यसैन्ययोः पुमान्हलायुधे दैत्यप्रभेदे वायसेपि च बल्युक्तेन्यलिंगेपि इति रभसः २२ ॥ ७

फलं फलति फलनिष्पत्तौ पचाद्यच् फलं हेतुकृते जातौ फले फलकसस्ययोः त्रिफलायां चकंकोले शस्त्राग्रे इष्टिलाभयोरित्युक्तम्॰ क्वचित्तु हलमिति पाठः तत्र हलति हलं विलेखनं अच् हेम हिनोति हि गतौ मनिन् हेमशब्दात् सुवर्णकनकादीनां ग्रहणं शल्वं शलति शल्यते वा शल गतौ उल्बादित्वात्साधुत्वं तदुक्तं मेदिन्यां शल्वं नाम्नि यज्ञकर्मण्याचारे जलसन्निधाविति लोहं लोहयति लुत्यते वा लुह गार्ध्ये पचाद्यच् लोहो स्त्री शस्त्रकलहे जोंगके सर्वतैजसे इत्युक्तम्॰ सुखं सुखयति दुखयति सुखदुःखतत्क्रियायां अच् शर्म शातमित्यादि दुःखं तु कृच्छ्रं कष्टं शुभं शोभते शुभ दीप्तौ इगुपेतिकः शुभशब्दात् कल्याणकं शास्रयोर्ग्रहणं अशुभं

फलहेमशल्वलोहं सुखदुःखशुभाशुभं जलपुष्पाणि लवणं व्यंजनान्यनुलेपनं २३

न शुभं जलपुष्पाणि जले भवानि पुष्पाणि कुमुदकमलकल्हारोत्पलादीनि लवणं लुनाति लुञ्छेदने नंद्यादित्वात्साधुत्वं तदुक्तं रसभेदे लवणं सैंधवादीनां सिंधुरसोभिदेरसे तद्युक्ते वाच्यलिंगं स्यान्नदीभेद हृषीः स्त्रियामिति व्यंजनं व्यज्यतेनेन करणे ल्युट् अञ्जू व्यक्त्यादौ व्यंजनं तेमने चिन्हे श्मश्रुण्यवयवे हनी त्युक्तत्वात् व्यंजनं श्मश्रुचिन्हयोः तेमने ऽवयवे कादाविति हेमश्च व्यंजनविशेषाणामपि दधितक्रादीनां ग्रहः अनुलेपनं अनुलिप्यतेनेन लिप उपदेहे ल्युट् करणे कुंकुमादि अत्र बाधितादन्यत् इति किं आकाशो विहायाद्यौः अटवी अरण्यानीत्यादि कं एवमन्यदप्यूह्यं २३

कोटयाः अन्याकोटिशद्वाद्भिन्नायाशतादिसंख्यासाक्लीबेस्यात् द्विहीनेइत्यधिकारात् लक्षाशद्वःवाक्लीबे पक्षेस्त्रियां लक्ष्यते लक्षदर्शने अकारप्रत्ययः तदुक्तंमेदिन्यां लक्षानपुंसिसंख्यायां क्लीबंव्याजशरव्ययोरिति नादिनिलक्षवाचकंनियुतमुच्यते नियूयतेस्म क्तप्रत्ययः तदुक्तंरत्नकोशे शतंसहस्रमयुतंनियुतंप्रयुतंमतं स्त्रीको-टिरर्बुदमितिक्रमाद्दशगुणोत्तरमिति असंतमिसंतसुसंतमन्नंतंचयत् द्व्यच्कंद्विस्वरंतत्क्लीबे असंतंयथा पयः तेजः यशः मनः असन् नत्ययांताइमेइसंतंयथा सर्पिः हविः ज्योतिःउसंतंयथा वपुः धनुः यजुः अन्नंतंयथा चर्म शर्म सामेति इमेमनिनंताः अनेनैव क्लीबत्वेसिद्धेपरतोयन्मर्मशद्वोपादानंतदस्यानित्यत्वज्ञापनार्थं अयंग्रंथोमर्मशद्वोपरिटिप्पण्यांस्य इइतिनतएवद्रष्टव्यः नेनगुणांधकारशोकेषु नमोराह्वोपुमानयमित्याद्यपिसिद्धं अकर्तरिकर्तुरन्यत्रयदनांतंअन्येत्यंतेयस्यतत्क्लीबेयथागम

कोटयाःशतादिसंख्यान्याबालक्षानियुतंचतत् द्व्यच्कमसिसुसन्नंतंयदनांतमकर्त्तरि २४ त्रांतंसलोपधंशिष्टंरात्रंप्राक्संख्ययान्वितम् पात्राद्यदंतैरेकार्थोद्विगुर्लक्ष्यानुसारतः २५ ॥

नं भरणं दानं करणं वरणं अकर्त्तरीतिकिं कर्त्तरिनक्लीबंतदाह नंदयति नंदनःरमणः २४ त्रांतंक्लीबेयथा पात्रंवहित्रंवस्त्रंगात्रमित्यादि सकारोलकारोवाउपधा अंत्यात्पूर्वोयस्यतत् सोपधंयथा बिसं अंधतमसं अवसेत्यत्र् बुसं लोपधंयथा कूलं तूलं स्थलं मूलमित्यादि शिष्टमितियदवशिष्टंप्रागुक्तादन्यत् तच्चप्रागुक्तेयद्बाधितं तदपित्रांतादिकंक्लीबेइत्यर्थः शिष्टमितिकिं पुत्रः वत्रः हंसः कंसः पनसः शालःकालःगलःसंख्यापूर्वपदोरात्रशब्दःक्लीबे रात्रान्हाहाः पुंसीतिपुंस्त्वंप्रासेरपवादोयं त्रिरात्रं पंचरात्रं अहःसर्वैकेतिअच्एवंगणरात्रमित्यपि संख्येतिकिं अर्धरात्रः पूर्वरात्रः मध्यरात्रःअत्रापिअच् पात्रादिभिरदंतैरेकार्थोद्विगुःक्लीबेपंचरात्रं त्रिभुवनं आदिशद्वात् चतुर्युगमित्यादि लक्ष्यानुसारतः शिष्टप्रयोगानुगमेनेत्यर्थः पात्राद्यंतस्यनेतिइतिकेनेत्यर्थः अनेनपंचमूलीत्रिलोकीत्यादिरपवादः एकार्थः किंपंचकपालःपुरोडाशःद्विगुरयंतद्धितार्थः २५

द्वंद्वसमासस्यैकत्वं समाहारे अव्ययीभावश्च क्लीबे उभयं क्लीबे द्वंद्वैक्यं यथा पाणिपादं शिरोग्रीवं मार्दंगिकपाणविकं द्वंद्वश्चैत्र एकत्वं अव्ययीभावो यथा अधिस्त्री अधिहरि उपगंगं सामीप्येव्ययीभावः संख्याया अव्ययाच्च परः पथिन् क्लीबे यथा द्विपथं त्रयाणां पथां त्रिपथं चतुष्पथं अव्ययाद्यथा विपथं कापथं संख्याव्ययादिति किं धर्मपथः योगपथः संमासांतः अप्रत्ययः पथइति समासांतानुकरणं समासे षष्ठीविभक्त्यंतात्परा च्छाया क्लीबे सा चेद्बहूनां संबंधिनी तर्ह्येव तदुदाहरति वीनां पक्षिणां छाया विच्छायमिति इक्षुच्छायं छायाबाहुल्ये इति क्लीबत्वं बहूनामिति किं कुड्यस्य छाया कुड्यच्छायमिति वा स्त्रियां तु वक्ष्यते विभाषासेनेति विकल्पात् संहतौ समूहविषये सभाशब्दः क्लीबे अत्रापि षष्ठ्या इत्यनुवर्त्तते अशाला चेति शास्त्रेणेत्यर्थः यथा दासीनां सभा दासीसभं स्त्रीसभमित्यादि संहताविति किं दासीनां सभा

**द्वंद्वैकत्वाव्ययीभावौ पथः संख्याव्ययात्परः षष्ठ्या छाया बहूनां चेद्विच्छायं संहतौ सभा २६ शालार्थापि परा राजामनुष्यार्थादराजकात्**
**दासीसभं नृपसभं रक्षःसभमिमा दिशः २७**

दासीसभा दासीगृहमित्यर्थः सभा राजामनुष्यपूर्वा इत्यत्र अमनुष्यशब्देन रक्षःपिशाचादीनां ग्रहणान्न क्लीबत्वं २६ शालार्था गृहार्था अपिशब्दात् संहत्यर्था च या सभा सा अराजकात् राजशब्दविवर्जितात् राजामनुष्यार्थात् राजपर्यायात् अमनुष्यार्थात् रक्षआदिशब्दात् षष्ठ्यंतात्परा चेत् क्लीबे शाला गृहं अर्थो ऽभिधेयो यस्याः सा शालार्था अराजकराजपर्यायात् यथा इनसभं प्रभुसभं अमनुष्यार्थाद्यथा रक्षःसभं पिशाचसभं अमनुष्यो ऽत्र रूढ्या रक्षःपिशाचादीनां ग्रहणं इति कौमुद्यां स्पष्टं राजकात्किं राजसभा राजपर्यायग्रहणात् नेह चंद्रगुप्तसभा राजविशेषो ऽयं पर्यायस्यैव ग्रहणं ष्यते इति वचनात् इदं सिद्धं षष्ठ्या इति किं नृपतिविषये सभा नृपतिसभा नृणां पतिर्यस्यां सा चासौ सभा चेति वा नृपतिसभा अमनुष्यार्थादिति किं दासीसभा दासीनां शालेत्यर्थः सभाशब्दस्य शालावाचित्वं संघातवाचित्वं च सभा राजेत्यत्र शालावाची अशाला चेत्यत्र संघातवाची इदं दृष्टिग्रंथे स्पष्टं इमा दिश इति दासीसभमित्यादि भिक्रमेण त्रीण्युदाहरणानीत्यर्थः तत्र दासीसभमि

त्यादितुसंहताविल्यस्यैवद्नरेतुशालासंहतिसाधारणे इदंक्लीबत्वंनञ्कर्मधारयसमासेनभवतितत्पुरुषोनञ्कर्मधारयइत्यधिकारात् २७ तदादित्वप्रकाशने तयोःउपज्ञो
पक्रमयोःआदित्वंप्राथम्यंतत्प्रकाशनेद्योतनेउपज्ञांतउपक्रमांतश्चतत्पुरुषःसमासःक्लीबेस्यात् उपज्ञोपक्रमंतदाद्येति अनुशासनात् तत्रोदाहरणमाह उपज्ञाय
तइत्युपज्ञा कर्मण्यण् कोब्रह्मा तस्योपज्ञाकोपज्ञं प्रजा कस्योपक्रमः कोपक्रमंलोकः प्रजापतिनाप्रथमंसृष्टत्वात्तेनादावुपज्ञाताप्रजेत्यर्थः तदादित्वेतिकिं देवदत्तोपज्ञामृ
त्पृयःप्रकारःमृत्प्रकारस्यानेककारणत्वात् देवदत्तेतिसामान्यशब्देनचतदादित्वप्रतिपादनाभावेक्लीबत्वाभावःएवंदेवदत्तोपक्रमोरथःअत्रापिषष्ठ्याइत्यनुवर्त्तते
उशीनराणांनामसकमध्येषष्ठ्यंतात्पराकंथाक्लीबे संज्ञायांकंथोशीत्यनुशासनेनेत्यर्थः सौशमीनांकंथासौशमिकंथं उशीनरादन्यत्रदाक्षिकंथा नामसकइतिकिंवीर

उपज्ञोपक्रमांतश्चतदादित्वप्रकाशने कोपज्ञकोपक्रमादिकंथोशीनरनामसु २८ भावेनणकचिन्भ्योन्येसमूहे भावकर्मणोः अदंत
प्रत्ययाःपुण्यसुदिनाभ्यांत्वहःपरः २९

णकंथा २८ नणकचिन्भ्योन्येनञ्णञ्वकञ्चनिच्चतेभ्यःअन्येयेतव्यदादयो । दंताधातुप्रत्ययाःभावेविहिता
तेक्लीबे तत्रधातुप्रत्यायथा भवितव्यं भाव्यंसहितं भक्तं भवनीयमित्यपिनणकचिन्भ्योन्यइतिकिं प्रश्नःयजयाचेतिनङ् न्याद्ःनौणचेतिणःआखूत्थः रूपीति
कःसामर्थ्याद्भावेनणकेतिघञ् उपलक्षणंपाकः भावेकिं कर्त्तव्योधर्मसंग्रहःमूलतोवैरी समूहार्थेयथा भिक्षाणांसमूहोभैक्षं गाभिणंउभयत्राण् औपगवं गोत्रोक्षे
तिवुञ् काकमित्यादि समूहेण् भावेदंतायथा गोर्भावः गोत्वं शुचेर्भावःशौचंइगंताच्चलघुपूर्वात् इत्यण् कर्मणियथा शौक्ल्यं राज्ञःकर्मराज्यं चौर्यं तत्प्रत्ययस्यसु
स्त्रीत्वमुक्तं तत्रतलंतःअर्धस्त्रियांस्यात्इतिप्रमाणं पुण्यसुदिनाभ्यांपरोविहितसमासांतोहन्शब्दःक्लीबे पुण्यसुदिनाभ्यामन्हःक्लीबतेष्टेतिप्रमाणं अन्हाह्
ताइतिसूत्रस्यापवादोयं पुण्याहं उत्तमैकातिनिषेधात् अन्हादेशोनतत्रोत्तमशब्देनपुण्यस्यग्रहणंसुदिनाहं सुदिनशब्दःप्रशस्तार्थः २९ ॥

क्रियाव्ययानां क्रियाणां अव्ययानांच भेदकानि विशेषणानि अपिशब्दात्क्लीबे एकवचनेचस्युः क्रियाविशेषणंयथा मृदुपचति सुखंतिष्ठतिगृही सलीलं क्रीडति कृ
ष्णः अव्ययविशेषणंयथा कमनीयंप्रातः रम्यंस्वः कंठरवेणाह उक्थं उच्यते वचभाषणे थक्संप्रसारणं सामविशेषः तोटकं तुटति तुटकलहकर्मणि ण्वुल् अका
देशः तोटकं वृत्तभेदोरूपकभेदश्च चोचं उपभक्तफलावशिष्टं तालफलमिति केचित् कदलीफलमित्यन्ये चोच्यते चुपमंदायांगतौ यद्वाचंचति चच्यतेवा चंचुगतौ
अच् घञ्वा पृषोदरादिः पिच्छं बर्हमित्यर्थः पिच्छ्यते पिच्छखंडे मुक्तामिति पाठे मुच्लृ मोक्षणे मुच्यतेस्म गृहस्थूणं गृहस्तंभः गृहस्यस्थूणा तिरीटं तरतितर्यते
वातॄ प्लवनतरणयोः कीटन् वेष्टनमिति शिरोभूषणमित्यन्ये मर्मसंधिस्थानं म्रियतेनेन मृङ् प्राणत्यागे सर्वधातुभ्योमनिन् योजनं क्रोशचतुष्टयं युज्यते युजिर

क्रियाव्ययानांभेदकान्येकत्वेप्युक्थतोटके चोचंपिच्छंगृहस्थूणंतिरीटंमर्मयोजनम् ३० राजसूयंवाजपेयंगद्यपद्येकृतौकवेः मा
णिक्यभाष्यसिंदूर

योगे कर्मणिल्युट् अनादेशः योजनंपरमात्मनि चतुःक्रोश्यांचयोगेच ३० राजसूयं राज्ञासोतव्योभिषेकद्रवाणि आदिर्यस्य क्र
तूराजालतात्मकः सोमः सूयतेत्र षुञ् अभिषवे राजसूयेतिनिपातनात्साधुः वाजपेयं वाजंपेयं स्त्रीस्वरापेयमत्र अर्धर्चादित्वात्पुंस्यपि लिंगत्वं कवेः कृतौ वर्तमानं गद्यं
गद्यतेगद व्यक्तायांवाचि गदमदेतियत् पदसमूहइत्यर्थः पद्यं पादाः संत्यस्य मत्वर्थेयत् पदः संत्यस्येतिवातद्युक्तमेदिन्या पद्यंश्लोकेप्रमान् प्रैपद्यादर्ह्यानिर्विभाले
तेति कवेः कृतावितिकिं गद्यावाक् पद्यापद्धतिः माणिक्यं मणिशद्वेनकायतिजनोयं केशादि मन्वित्युजादिः मणिकेमणिपुराख्येनगरेभवमितिवा शौंडिकादित्वात्
ण्यः रत्नभेदइत्यर्थः भाष्यं भाष्यतेसूत्रार्थोयेन भाषव्यक्तायांवाचि बहुलंकरणेल्युट् तदुक्तं सूत्रार्थोवर्ण्यते यत्रवाक्यैः सूत्रानुकारिभिः स्वपदानिचवर्ण्यंते भाष्यंभा
ष्यविदोविदुरिति सिंदूरं स्यंदतेस्यंदू प्रस्रवणे ऊरन् संप्रसारणंच सिंदूरस्तरुभेदेस्यात्सिंदूरं रक्तवर्णके सिंदूरोरो चयानक्त्वेक्लिकापालकीपु चेतिविश्वप्रकाशः रक्तवर्णभेद

इत्यर्थः चीरं वस्त्रभेदः चीयते चिञ् चयने रक् दीर्घः तदुक्तं मेदिन्यां चीरी झिल्ल्यां नपुंसकं गोस्तने वस्त्रभेदे च रेखालिखनभेदयोरिति चीवरं मुनिवासः शाक्यभिक्षुप्रावरणमिति स्मृतिः पिंजरं कायास्थिवृंदं पक्ष्यादिबंधनगृहं च पिंज्यते पिजि संपर्के बाहुलकाद् अरः पंजरमिति केचित् तदुक्तं कोशांतरे पिंजरो ऽस्त्री तरे पीते क्लीबं स्वर्णे च पीतकद्रति ३१ लोकायतं लोके आयतं तन्यते प्रयत्ने अचुड् दमर्थे अण् संज्ञापूरणीति न वृद्धिः चार्वाकशास्त्रं हरितालं हरितेन आलं ने अलंभूषणादौ अच् तदुक्तं मेदिन्यां हरितालं धातुभेदे स्त्री दूर्वाकाशरेखयोरिति विदलं विदलति दलविदारणे पचाद्यच् वंशकृतपात्रभेदः स्थालं भांडभेदः स्थलत्यत्र शलस्थितौ हलश्चेति घञ् स्थालं भाजनभेदेपि स्थाली स्यात् पाटलेखयोरित्यक्तः बाल्हिकं बल्हुदेशे भवं अध्यात्मादिः कुंकुमादीत्यर्थः

चीरचीवरपिंजरम् ३१ लोकायतंहरितालंविदलस्थालबाल्हिकं ॥ ॥इतिनपुंसकसंग्रहः॥ ॥पुन्नपुंसकयोः शेषोर्धर्चपिण्याककंटकाः ३२

बाल्हवमित्यपि तत्र भवइत्यण् इति क्लीबशेषवर्गः॥ अथ चिक्कसपर्यंताः पुंसि क्लीबे च स्युः उक्तादन्यः शेषः यथा शंखपद्मौ निधिवाचकौ पुंसि कंबुनलिनवाचनौ तु पुंनपुंसकयोः तथा ऽन्यशब्दोपि यत्पर्याये बाधितस्तत्पर्यायाद् भिन्नश्चेत्पुंन्नपुंसकयोरित्यर्थः अर्चो धर्म अर्धर्चः पिण्याकं तिलकल्कं पण्यते पणव्यवहारे पिनाकादयश्चेति साधुः पिण्याको ऽस्त्री तिलकल्के हिंगुबाल्हीकसिल्हके इति मेदिनी कंटकं कंटति कटि गतौ ण्वुल् रोमहर्षादित्यर्थः कंटकः क्षुद्रशत्रौ च कर्मस्थानिकदोषयोः रोमांचे च द्रुमांगे च कंटको मस्करेपि चेति विश्वः तदुक्तं च मेदिन्यां कंटको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे नैयोगिकादिदोषेक्तोस्याद्रोमांचद्रुमांगयोरिति ३२ ७ ७ ७ ७

मोदकं मोदयते मुद हर्षे ण्वुल् तदुक्तं मेदिन्यां मोदकः खाद्यभेदे स्त्री हर्षके पुनरन्यवत् इति मोदको हर्षुले खाद्य इति हैमः कः तंडते तडि आघाते ण्वु
ल् उपतापविशेष इत्यर्थः तदुक्तं मेदिन्यां तंडकः खंजने फेने समासप्रायवाचि च गृहदारु तरुस्कंधमायाबहुलके पर्याति न कड इत्यपि दंड एव स्वार्थे क
न् टंकः टंकयति टकि बंधे अच् अश्मदारण इत्यर्थः तदुक्तं मेदिन्यां टंको नीलकपित्थे च खनित्रे टंकने स्त्रियां जंघायां कु पुमान्कोपे कोशासि अविदा
रण इति शाठकः पटभेदः शटति शट गतौ ण्वुल् कर्पटं स्थानभेदः वस्त्रभेदो वा खर्वटमित्यपि तत्रेत्थं खर्वति खर्व दर्पे अटन् प्रत्ययः यत्रैकतो भ

मोदकस्तंडकष्टंकः शाठकः कर्पटोऽर्बुदः पातको रोगचरकतमालामलकानडः ३३

वेद्ग्रामयो नगरं चैकतः स्मृतं मिश्रं तु खर्वटं नाम नदीगिरिसमाश्रयमिति अर्बुदं संख्याभेदः अर्वति अर्व हिंसायां बाहुलकादुदच् अर्बुदो मांसपरूषि दृशा
कोटिषु न स्त्रियां महीधरविशेषेनाइस्फक ० पातकं ब्रह्महत्यादि पातयति पत्लृ गतौ ण्वुल् उद्योगः उद्योजनं युजिर् योगे घञ् उत्साह इत्यर्थः चरकः वै
द्यशास्त्रभेदः चरति चर गतौ कुन् करक इत्यपि तत्रस्यूतवल्कलं तमालः ताम्यति तमु ग्लानौ कालन् तदुक्तं मेदिन्यां तमालस्तिलके खड्गे तापिच्छे वंश पानुमे
इति आमलकः आमलक्याः फलं नित्यं वृद्धेति मयट् फले लुक् इति लुक् धात्रीफलमिति नडः अंतर्विवरं तृणभेदश्च नडति नड भ्रंशे पचाद्यच् ॥३३॥ 

कुष्ठं कुष्णाति कुषनिष्कर्षे क्थन् कुष्ठंरोगेपुष्करे ।स्त्रीतिमेदिनीकारः कुष्ठंभेषजरोगयोरितिहैमः मुंडं मुंडितखंडनेघञ् शिरः शीधु मद्यं शेतेनेनेन धुक् बुस्तं बुसबुत्सर्गे भृष्टं मांसं पनसादिफलासारभागश्च क्वचित्पुस्तमितिपाठः श्वस्तमितिकश्चित् क्ष्वेडितं क्ष्वेड्यते ञिक्ष्विडास्नेहमोचनयोः क्तः वीरकृतसिंहनाद इत्यर्थः क्षेमं कुशलं क्षिपति क्षपतिवा क्षिनिवासगत्योः क्षिक्षयेवा मन् जानीयान्मंगलं क्षेमं क्षेमं लब्धार्थरक्षणमित्यक्तं० कुट्टिमं भित्तिभेदः कुट्टनं कुट्टछेदे घञं तात्इमप् कुट्टेननिर्वृत्तं कुट्टिमोस्त्रीनिबद्धाभूरित्यक्तं० संगमं संयोगः गम्लृगतौ गृहवृदृस्त्यप् शतमानं मानभेदः अर्मअक्षिरोगः ऋगतौमन् शबलं शवत्यनेन शवगतौ अलच् पाथेयं चशबलो।स्त्रीसंबलवत्कूलपाथेयमसरइतिमेदिनीकारः अव्ययं तदुक्तंमेदिन्यां अव्ययोस्त्रीशब्दभेदेनाविष्णौनिर्व्ययेत्रिषिति तांडवं तंडुनाप्रोक्तं तेनमो

कुष्ठंमुंडंशीधुंबुस्तंक्ष्वेडितंक्षेमकुट्टिमम् संगमंशतमानार्मशबलाव्ययतांडवम् ३४ कवियंकंदकार्पासंपारावारंयुगंधरम् ॥ ॥

कंइत्यण् ओर्गुणः अवादेशः नृत्यभेद इत्यर्थः ३४ कवियं कवते कुङ्शब्दे बहुलं डयः महाराष्ट्रभाषयाकडियाळीतिप्रसिद्धं नार्यां कविरवलीनकवियंवा नातुरंगमुखभांडमितिबोपालितः कंदं कंदति कदिआल्हादने पचाद्यच् पद्ममूलादि तदुक्तंमेदिन्यां कंदो।स्त्रीसूरणे सस्यमूले जलधरेपुमानिति क्वचित्क्रमेतिपाठः कार्पासं वस्त्रयोनिभेदः करोतिक्रियतेनेवा कृञः पास पारयति पारकर्मसमाप्तौ अच् यद्वापार्यतेसमाप्यतेकर्मानेन पुंसीतिघः पारावारं नवारयति वृञ्वरणे पारावारः पयोराशौपारावारं तटद्वय इतिहैमः युगंधरं युगंधारयति धृञ्धारणे संज्ञायांभृदतिखच् कूबरमित्यर्थः ॥ ॥

७ ७ ७ ७ ७ ७ ७ ७ ७

यूपं यज्ञांगभेदः श्रुवत्यस्मिन् श्रुमिश्रणं पःदीर्घश्च प्रग्रीवं प्रगताग्रीवायस्मिन् द्रुमशीर्षकमित्यर्थः वातायन मुखशालावा पात्रीवं पात्रींवातिकः यज्ञपात्रभेदः धूपं मंड इतिप्रसिद्धं यूषंन यूषबंधे इगुपनिकः मुद्गामलकयूषस्तुग्राहीपित्तकफेहितइत्युक्तं वैद्यकात् चमसश्चिक्कसो पात्रभेदो तत्रचमत्यनेन चमुअदने असच् चेतत्यनेन चिती संज्ञाने बाहुलकात्कसः तकारस्यकः चिक्कणं चिक्कयतिवा चिक्कंस्यतिवा इत्याद्युह्यं ३५ अर्धर्चादौ अस्मिन्वर्गे पुंन्नपुंसकाधिकारेइतिवा यत् घृतादीनां पुंस्त्वा द्यं पाणिन्यादिभिरुक्तं तत्तुवैदिकं वेदंप्रसिद्धमित्यर्थः अतस्तदिहनोक्तं तल्लोकेप्यस्ति चेत्शेषवत् उक्तादन्यःशेषस्तद्वदस्तु शिष्टप्रयोगतोग्राह्यमित्यर्थः पाणिनिनापुं नपुंसकयोरित्यधिकारं कृत्वा घृतभूतमस्तइत्याद्यनुशासनंप्रणीतं तेनअयंघृतः इदंघृतंइत्यादिप्रयोगद्वयंसाधितं तेचप्रयोगावेदेसंति अतोत्रसविचारेनक्रुतः लोके-

यूपंप्रग्रीवपात्रीवेयूषं चमसचिक्कसौ ३५ अर्धर्चादौघृतादीनांपुंस्त्वाद्यंवैदिकंध्रुवं तन्नोक्तमिहलोकेपितच्चेदस्त्यस्तुशेषवत् ३६ इति पुंन्नपुंसकसंग्रहवर्गः॥ ॥ स्त्रीपुंसयोरपत्यांताःद्विचतुःषट्पदोरगाः॥ पिसंतिचेत् लिंगमशिष्यंलोकाश्रयत्वात् इतिमहाभाष्यात् शिष्टप्रयोगादे वसर्वलिंगनिर्णयइतितात्पर्यं ग्राह्यमित्यर्थइत्यस्याग्रेलेख्यमिदं इतिपुंनपुंसकसंग्रहवर्गः॥३६ ॥अपत्यार्थेविहितायेणादयस्तदंताःसर्वेस्त्रीपुंसयोःस्युः यथा उपगोः अपत्यंपुमान् औपगवः उपगोरपत्यंस्त्री औपगवी एवमेववैदेहि गार्ग्यःगार्गी स्त्रियांपुंसिचप्रयोगार्थंस्त्रीपुंसयोरित्यधिकृत्यअपत्यार्थेतद्धितेइत्युक्तं औपगवःऔप गवीइत्युदाहरणंप्रदर्शितंकोसुद्यां द्विपदचतुष्पदषट्पदवाचिनः उरगवाचिनश्च जातिविशेषाःस्त्रीपुंसयोः तत्रद्विपदजातिभेदोयथा मानुषःपुमान् मानुषीस्त्री ब्राह्म णःब्राह्मणी शूद्रःशूद्री अजादित्वाट्टाप् षट्पदभेदोयथा भृंगःभृंगी उरगोयथा उरगःउरगी नागःनागी स्त्रीयोगेःसहक्षुमाख्याःपुन्नामानिस्त्रीपुंसयोः॥ ॥

यथा इंद्रः इंद्राणी मातुर्भ्रातामातुलः तस्यस्त्री मातुली आनुगविकल्पः पुंसिवर्तमानोमातुलः स्त्रीयोगात्स्त्रीत्वेपिवर्तते शूद्रस्यस्त्री शूद्री मल्लुकादयश्चस्त्रीपुंसयोः मल्लुकः पुष्पवल्लीभेदः मल्लुते मल्लुधारणे ण्वुल् स्त्रियांतुमल्लिका मल्लिकातृणशून्येपिमीनमृत्पात्रभेदयोरित्युक्तः० ३७ मुनिः मन्यते मनज्ञाने मनेरुच्चेतिसाधुः मुनिःपुंसि वसिष्ठादौवंगसेनतरौजिनेइत्युक्तः० मुनिर्यतींगुदीबुद्धपिलायागस्तिकिंशुकइतिविश्वः ऊर्मिरितिपाठः वराटकः वरमटति अटगतौ क्वुन् कपर्दकइत्यर्थः स्त्रियांतुवराटिका स्वातिः शोभनमतति अतसातत्यगमने इण् हृदिः नक्षत्रभेदइत्यर्थः वर्णकः चंदनं वर्णयति वर्णवर्णक्रियादौ ण्वुल् तदुक्तंरभसे विलेपनंचंदनेचवर्णकंपुंनपुंसकमिति ॥ वर्णकश्चारणेस्त्रीतुचंदनेचविलेपने इयोर्नीत्यादिषुस्त्रीस्यादुत्कर्षेकांचनस्यचेतिमेदिनीच झारलिः झरंलाति लादाने बहुलंडिः इत्याद्युक्तं किंशुकवृक्षसदृशः मोरवाइति

जातिभेदाःपुमाख्याश्चस्त्रीयोगेःसहमल्लुकः ३७ मुनिर्वराटकःस्वातिर्वर्णकोझारलिर्मनुः मूषासृपाटीकर्कंधूर्यष्टिःशाटीकटीकुटी ३८॥ इ तिस्त्रीपुंसंग्रहः॥ ॥स्त्रीनपुंसकयोर्भावक्रिययोःष्यञ्क्वचिच्चवुञ् औचित्यमौचितीमैत्रीमैत्र्यंवुञ्प्रागुदाहृतः ३९ प्रसिद्धः मनुः स्वायंभुवादिःमन्य ते मनज्ञाने श्रृइत्युः मैत्रीवा मूषा तैजसावर्तनी मूषति मूषस्तुठने पचाद्यच् स्वर्णादिविलयनभांडमित्यर्थः सृपाटी परिमाणभेदः सर्पति सृप्लृगतौ बहुलंकाटः कित्वाद्गुणाभावः कर्कंधूः क र्कंदधाति अंदुइतिसाधुः बदरीफलमिति यष्टिः यसते यसप्रजायां क्तिच्कलोपः शाटी पटभेदः शास्यते घञ् कटी देहावयवः कटतिकटेवर्षादौ अच्जातिङीष् कुटी गृहकोष्ठकः कुट तिकुटकौटिल्ये इगुपेतिकः अत्रमूषाआकारांताःटाबंतत्वात् ३८ इतिस्त्रीपुंसंग्रहः॥ ॥भावक्रिययोः भावेकर्मणिचवर्तमानःष्यञ्प्रत्ययोवुञ्प्रत्ययश्चक्वचित्स्त्रीनपुंसकयोर्वर्त ते तत्रष्यञ्प्रत्ययमुदाहरति औचित्यमितिउचितस्यभावः औचित्यंऔचितीच षित्वात्ङीष् यलोपः मित्रस्यकर्ममैत्र्यंमैत्रीवा एवंसामग्र्यंसामग्रीवा आर्हंत्यां आर्हंतिवुञ्प्रत्ययस्तु वै रंमैथुनिकादिवुञ् इत्यंप्रागुदाहृतः तथाभिथुनस्यभावःकर्मवामैथुनिकामैथुनकंच मनोज्ञादित्वात्वुञ् ३९ ॥ ॥ ॥ ॥

षष्ठ्यंतप्राक्पदाः सेनादयः तत्पुरुषे स्त्रीनपुंसकयोः स्युः षष्ठ्यंतं षष्ठीविभक्त्यंतं प्राक्पदं यासां ताः यथा नृणां सेना नृसेनं वेति विकल्पान्नृसेनापि शूनां निशा श्वनिशं गवां शाला गोशालं वृक्षस्य छाया वृक्षच्छायं यवानां सुरा यवसुरं विभाषा सेनासुराछायाशालानिशानां क्लीबत्वं बोध्यं तदभावे स्त्रीत्वं इतरइति एवमन्यत्राप्युदाहर्त्तव्यमित्यर्थः दिक् उदाहरणमिदं ५० आबंतोत्तरपदो नंतोत्तरपदश्च द्विगुसमासः अपुंसि स्त्रीनपुंसकयोः स्यात् निषिद्धलिंगं शेषार्थमिति परिभाषणात् अन्नंतोत्तरपदस्य योऽंत्यनकारस्तस्य लुप् लोपश्च स्यात् आबंतांत्य पदमुदाहरति त्रिखट्वमिति तिस्रः खट्वाः समाहृताः त्रिखट्वं त्रिखट्वी अन्नंतोत्तरपदो यथा त्रयाणां तक्ष्णां समाहारः त्रितक्षं त्रितक्षी च ततक्षन् शब्दस्यांत्यनकारो लुप्तः आबंतो वा अ-

षष्ठ्यंतप्राक्पदाः सेनाच्छायाशालासुरानिशा स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् ५० आबन्नतोत्तरपदो द्विगुश्चापुंसि नश्च लुप् त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि ५१ त्रिषु पात्री पुटी वाटी पेटी कुवल दाडिमौ ॥ इति त्रिलिंगशेषसंग्रहः ॥ परलिंगं स्वप्रधाने द्वंद्वे तत्पुरुषेऽपि तत् ५२

नो नलोपश्च वा द्विगुः स्त्रियामित्यनुशासनात् इमे साधवः ॥ ५१ इति स्त्रीनपुंसकलिंगसंग्रहः ॥ ॥ त्रिष्विति अयमधिकारः पात्र्यादिदाडिमांताः षट् शब्दाः त्रिषु लिंगेषु ज्ञेयाः यथा पात्री पात्रं पात्रः पाति पा रक्षणे तदुक्तं मेदिन्यां पात्रमत्रे त्रिषु क्लीबं स्रुवादौ राजमंत्रिणि ॥ तीरपात्रं तु कूलयोर्मध्ये पर्णेऽहृपतिमंत्रिणि ॥ योग्यभाजनयोर्यज्ञभांडे नाट्यानुकर्त्तरीति हेमः इत्यादि एवं अन्यत्रापि पुटी पुटति पुट संश्लेषणे इगुपधेति कः गौरादिः वाटी वाट्यते वट वेष्टने ण्यंतात् कर्मणि घञ् तदुक्तं हेमे वाटः पथि वृतौ वाटं वरंडे ऽगान्नभेदयोः वाटी वास्तौ गृहोद्यान कट्योरिति पेटी पिट्यते पिट शब्दसंघातयोः घञ् कुवलं बदरीफलं कौ वलति वल विस्तृतौ पचाद्यच् तदुक्तं मेदिन्यां कुवलं चोत्पले मुक्ताफलेऽपि बदरीफले कुड्मले मुकुरे पुंसि न द्वयोर्नरकांतर इति दाडिमः दलनं दालः दल विदारणे भावे घञ् दालेन निर्वृतः भावप्रत्ययांतादिमप् डलयोरेकत्वं ॥ ॥ इति त्रिलिंगशेषः ॥ ॥ ७ ७ ७

द्वंद्वैकत्वस्याव्ययीभावस्य च लिंगं प्रागुक्तं स्वप्रधाने उभयपदप्रधाने इतरेतराख्ये द्वंद्वसमासे तत्पुरुषे च तदेव परलिंगं स्यात् परपदस्य लिंगं तत्परलिंगं यत्सरमचिमपदस्थं लिंगं तदेव लिंगमित्यर्थः द्वंद्वे यथा कुक्कुटमयूर्यौ मयूरीकुक्कुटौ तत्पुरुषे यथा धान्येनार्थो धान्यार्थः सर्पाद्भीतिः सर्पभीतिः सर्पभयं अत्र प्रमाणपरवल्लिंगं तत्पुरुषयोरिति ४२ उक्तस्य तत्पुरुषलिंगस्यापवादमाह अर्थेति अर्थांताः अर्थांते येषां ते परोपगाः परगामिनः वाच्यलिंगा इत्यर्थः यथा द्विजायार्थं द्विजार्थः सूपः द्विजार्था यवागूः द्विजार्थं पयः अर्थेन नित्यसमासो विशेष्यलिंगता चेति वक्तव्यमिति वार्तिकं प्रेति प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः परं विशेष्यमुपगच्छंतीत्यर्थः तत्र प्रादिपूर्वो यथा अतिक्रांतो मालामतिमालो हारः अतिक्रांता मालामतिमालेयं अतिमालमिदं अवक्रुष्टः कोकिलया अवकोकिलः अलंपूर्वो यथा अलं कुमार्यै इत्यलंकुमारिरयं अलंकुमारिरियं अलंकुमारि इदं परप-

परंलिंगं स्वप्रधाने द्वंद्वे तत्पुरुषेपि तत् ॥ ४२ अर्थांताः प्राद्यलंप्राप्तापन्नपू-
र्वाः परोपगाः तद्धितार्थो द्विगुः संख्यासर्वनामतदंतकाः ॥ ४३ ॥ ॥

दलिंगनिषेधवार्तिके अलंग्रहणात् समासः प्राप्तजीविको द्विजः प्राप्तजीविका स्त्री प्राप्तजीविकमिदं एवमापन्नजीविकः तद्धितार्थो द्विगुर्वाच्यलिंगः पंचकपालः पुरोडाशः पंचकपालं हविः इदं सर्वं द्विगुप्राप्तापन्नालंपूर्वगतीति वार्तिकमूलकं संख्याशब्दाः सर्वनामसंज्ञकास्तदंतकाश्च परलिंगभाजः संख्या यथा एकः पुमान् एकं कुलं द्वौ पु मांसौ द्वे स्त्रियौ द्वे कुले च त्रयः पुरुषाः तिस्रः स्त्रियः त्रीणि कुलानि एवं चत्वारः चतस्रः चत्वारि षट्संज्ञकान्वक्ष्यति विंशत्यादीनां लिंगं द्वितीयकांडे उक्तं शतादिकानां तु नपुंसकसंग्रहे सर्वनाम यथा। सर्वो देवः सर्वा नदी सर्वं कुलं एवं परः पुमान् संख्यांतको यथा ऊनत्रयः ऊनतिस्रः ऊनत्रीणि सर्वनामांतको यथा परमसर्वः परमसर्वा परमस

अदिङ्नाम्नांबहुव्रीहिः अन्यलिंगभाक् तदुदाहरणंस्वयमुन्नेयं यथावृद्धाभार्यायस्यसवृद्धभार्यः बहुधनः बहुधना बहुधनं अदिङ्नाम्नामितिकं दक्षिणस्याःपूर्वस्या श्चदिशोरंतरालंदक्षिणपूर्वा दिग्नामितिबहुव्रीहिः गुणयोगेनद्रव्ययोगनक्रियायोगेनच यउपाधिर्विशेषणंतेनधर्मिणिप्रवृत्तास्तेधर्मलिंगभाजः गुणयोगेनयथा गं धवतीपृथ्वी गंधवानश्मा गंधवत्कुसुमं शङ्कुःपटइत्यादीन्युदाहरणंयोग्यंद्रव्ययोगेनयथा दंडिनीस्त्री क्रियायोगेनयथा पाचिकास्त्री ४४ असंज्ञायांकर्तरिकृत्प्रत्य याः परोपगायथा करोतीतिकर्त्री कर्त्तापुमान् कर्तृकलत्रं कर्तृलिंगंभवति असंज्ञायांकिं प्रजा हरिः कर्त्तरिकिं कृतिः कर्मणि कर्त्तरिचवर्त्तमानाः कृत्यप्रत्ययाः परगा मिनः कर्मणियथा कर्त्तव्याभक्तिः कर्त्तव्योधर्मस्त्वया कर्त्तरियथा वसतीतिवास्तव्योयं वसेस्तव्यत्कर्त्तरिणिच्चेकर्त्तरिप्रत्ययः वास्तव्यासा वास्तव्यंतत् कर्त्तरिकर्मणी-

बहुव्रीहिरदिङ्नाम्नांमुन्नेयंतदुदाहृतं गुणद्रव्यक्रियायोगोपाधिभिः परगामिनः ४४ कृतःकर्तर्यसंज्ञायांकृत्याःकर्तरिकर्मणि अणाद्यंतास्ते नरक्ताद्यर्थेनानार्थभेदकाः ४५ षट्संज्ञकास्त्रिषुसमायुष्मदस्मत्तिङव्ययं॥

ति किं भावेतु एधितव्यंत्वया औत्सर्गिकंएकवचनंक्लीबत्वंच तेनरक्तंरागादित्याद्य र्थेविहितायेअणादयस्तदंताः शब्दानानार्थानांभेदका अनेकार्थविशेषणभूताः विशिष्टत्वाद्वाच्यलिंगाइत्यर्थः यथा कौंकुमं वस्त्रं कौंकुमीशाटी कौंकुमःपटः कौंकुमंवासः रक्ता द्यर्थइत्यादिशब्दान्मथुरायाआगतोमाथुरोयं इयंमाथुरी अणाद्यंताइत्यादिशब्दाद्ग्रामेभवाग्राम्यास्त्री ग्राम्यःपुमान् अत्रयप्रत्ययः ४५ षट्संज्ञकाः षांतनांतसंख्याकतिशब्दश्चत्रिलिं ग्यांसमः सरूपानित्यंबहुषु वर्त्तमाना अतोबहुवचनांताश्चेत्यर्थः यथा षडिमे षडिमाः षडिमानि पंचभिरेताभिः कतिपुंमांसः कतिस्त्रियः कतिकुलानि किमः संख्यापरिमाणेडतिश्चे ति डतिप्रत्ययोलिंगसामान्येइतिभावः युष्मदस्मच्छब्दौतिङंतपदान्यव्ययानिच त्रिषुसमानि युष्मच्छब्दोयथा त्वंस्त्री त्वंपुमान् त्वंकलत्रं अस्मच्छब्दोयथा अवांपुमांसौ आवांस्त्रियौ

आवांकलत्रे डे-मथमयोरम् स्वमोनपुंसकादितिसूत्रस्यभाष्यात् युष्मदस्मदोर्लिंगसत्ताबोधनेपिलिंगबोधकमत्ययानुत्पत्तेर्नेरूपेभेदइतिसामआकमित्यत्रअलिंगे युष्मदस्मदीत्यस्य सलिंगभेदकंविनाकेवलंलिंगंनमतीयतेइत्यविरोधः तिङ्यथा स्थालीभवति घटोभवति पात्रंभवति एवंदाराभवंतीत्यादि आख्यातस्यकारकबोधकत्वेपिलिंगकार्यायोग्यत्वंसत्त्वाभावाच्चक्रियायाःअव्ययंयथा उच्चैःदाराः उच्चैःस्त्री उच्चैःकलत्रं उच्चैःगृहं परमिति विरोधेविमतिषेधेसतिपरंलिंगानुशासनंप्रवर्त्तते यथामानुषशब्दस्यकषणभमरोमांताइतिमागुक्तविधिनापुंस्त्वेएवमाप्तेसर्तािद्वतुःषट्पदेत्यनेनोत्तरत्रोक्तेनस्त्रीपुंसविधिर्निश्चयः यथामानुषीयं मानुषोयमिति शेषमिति शेषमत्रानुक्तं अभिधानादिकंशिष्टानांमहाकवीनां

परोविरोधेशेषंतुज्ञेयंशिष्टप्रयोगतः ४६ ॥इतिलिंगादिसंग्रहवर्गः ॥इत्यमरसिंहकृतौनामलिंगानुशासने॥ कांडस्तृतीयः

सांगोयंसामान्येनसमर्थितः ४७ इत्युक्तंव्यपहारार्थंनामलिंगानुशासनं॥शब्दानांनगतावंतंतावपींद्रबृहस्पती ४८॥ ॥

भाष्यकारादीनांप्रयोगतोज्ञेयं यद्वा अनुक्तंशब्दलिंगंशिष्टप्रयोगतोबोद्धव्यं लिंगमशिष्यं लोकाश्रयत्वाल्लिंगस्येतिभाष्योक्तेरित्यर्थः॥४६॥ उक्तंउपसंहरति इत्यमरकोशेतृतीयकांडंसमाप्तं॥ ॥अनल्पाध्वरसंपत्तिप्रख्यातयशसःकृतः॥श्रीसखारामनाम्नोग्निहोत्रिणःसुमहायशाः १ विठ्ठलाभिधयाख्यातोदत्तात्मजःकोशाविग्रहे॥ विनायकस्यपुत्रेणबालव्युत्पत्तिसिद्धये २ पंडितेत्युपनाम्नावैहरिणाकृतविग्रहःस्वकोशाइवकोशोयंशब्दजातप्रवर्तकः३ सविग्रहाख्यकोशार्कस्वशिलायंत्रकेन्यधात्॥ तेनाभूत्समहातेजाःप्रख्यातःपृथिवीतले ४ रुधिरोद्गारिनाम्न्यब्देसहस्राष्टशतोद्भवे॥मार्गशीर्षासितेपक्षेनवम्यांभानुवासरे॥ ख्यातोस्त्वाचलपर्यंतंबालकानूतर्पयंत्वयं॥५

हाअमरकोशसन१८४७-व्या२७व्याआक्टाप्रमाणेरजिष्टरकेलाउच्ये

